# सूक्ष्मागमः

प्रायश्चित्ताभिषेकश्च भूरिपान्नं च षोडश
एवं षोडश दंशेन सौभाग्यं संप्रकीर्तितम् १
बीजानां वापनं पूर्वं रक्षासूत्रं द्वितीयकम्
तृतीयं भेरिघोषं च चतुर्थं वास्तुशुद्धिदम् २
पंचमर्यास्त्रयागं च षष्ठं वै बलिदानकम्
त्रियंशं बलिदानं स्यात्सौख्यं विजयपुष्कळः ३
सप्तमं बेरयानं च परिवेषमथाष्टमम्
नृत्ताबलोकनं पश्चाद् यानार्थस्त्रपनं पुनः ४
विशेषयजनं पश्चाद् द्वादशं मृगयानकम्
तीर्थाधिवासनं पश्चाद् चूर्णकर्ममतः परम् ५
पंचादशं तीर्थकर्म षोडशं मौनयागकम्
यागकुंभाभिषेकं च दक्षिणादान तत्परम् ६
सौख्यं विंशतिरंगेन उत्सवं परिकीर्तितम्
ध्वजभेर्यं कुरात्पूर्वं मंगलं त्रिविधं स्मृतम् ७
पूर्वोक्तेन विधानेन मंगळं तु समाचरेत्
चतुर्विं शोत्सवेशेषु सौभाग्यं वक्ष्यते क्रमात् ८
बेरयात्रादिनात्पूर्वे सप्तपंचत्रियावहे
अंकुराणयर्पयेद्धीमान् पूर्वोक्तविधिना सह ९
अंकुरार्पणकार्यं च वर्जयेत्कारयेत्तु वा
यागारम्भदिनात्पूर्वं निशायामधिवासयेत् १०
विशेषेण च यात्रार्थं कुर्यात्प्रतिसरक्रिया
सौवर्णं राजतं वापि क्षौमं कार्पासकं तु वा ११

References:
Pages 1-240: *Sūkṣmāgama* Manuscript No. T0036 of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry.
Pages 240-334: Excerpts from Manuscript No. T0038 of the Muktabodha on-line digital library.
Pages 334-346: Excerpts from Manuscript No. T0191 of the Muktabodha on-line digital library.
Pages 346-399: Excerpts from Manuscript No. T0955 of the Muktabodha on-line digital library.
Pages 399-400: Excerpt from Manuscript No. T0988c of the Muktabodha on-line digital library.
Pages 401-502: Excerpts from Manuscript No. T1003 of the Muktabodha on-line digital library.
Pages 503-553: Excerpts from Manuscript No. T1016 of the Muktabodha on-line digital library.
Pages 553-607: Pt. Vrajavallabha Dwivedi, ed., *Sūkṣmāgamaḥ Kriyāpādaḥ, Translation with Notes*, Shaiva Bharati Shodha Pratishthanam: Varanasi, 1994 (168pp.).

स्थलिकां तरडुलैर्भूष्य ताम्बूलं चोपदंशकम्
तन्मध्ये विन्यसेत्सूत्रं भस्माधारासमन्वितम् १२
श्वेतताम्बूलसंयुक्तं पूकबीजसमन्वितम्
नाळिकेरफलोपेतं स्थलिकोर्ध्वे तु विन्यसेत् १३
पुरयाहं वाचयित्वाथ प्रोक्षयेद्धृदयेन तु
आत्मतत्वं न्यसेत्पत्रे विद्यातत्वाक्षतं न्यसेत् १४
भस्माधारे तु मायाख्यं भसिते लकुळीश्वरम्
अनन्तं सूत्रके न्यस्त्वा गन्धाद्यैरर्चयेत्क्रमात् १५
पात्रमाच्छाद्य वस्त्रेण माळां तदुपरि न्यसेत्
परियष्टिं समाहूय सोष्णीषं सोत्तरीयकम् १६
शिरसा बाहयित्वा तु सर्वालंकारसंयुतम्
ग्रामप्रदक्षिणं कुर्यात् प्रासादस्य प्रदक्षिणम् १७
कारयेत् द्विवेधान्त महेशं पूजयेत्ततः
पुरयाहं वाचयेद्विद्वान् रक्षासूत्रमनुं जपन् १८
त्रियम्बकेन मंत्रेण कौतुकं बन्धयेत्ततः
भसितं विन्यसेत्तत्र जनेभ्यो भसितं ददेत् १९
ताम्बूलं क्रमुकफलं दापयेत्तु सभासदाम्
उत्सवोद्दिश्य देवानां कौतुकं बन्धयेद्बुधः २०
सर्ववाद्यसमायुक्तं सर्वालंकारसंयुतम्
नववस्त्रैरलंकृत्य गन्धमाल्यादिभूषणैः २१
हर्म्यप्रदक्षिणं कृत्वा विशेदास्थानमरटपे
नीरांजमं ततो दद्यात् भस्मनां दापयेत्ततः २२
परिवेषं विनोदं च नृत्ताद्यालोकनं कुरु
तत्स्थानेषु तरंगेण वेष्टयेद्देशिकोत्तमः २३
अपरे दिवसे धीमान् प्रातस्संध्यार्चनात्पुरा
महेश्वरं समानीय पूर्वस्थाने प्रवेशयेत् २४
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु
तद्वास्तु शोभनार्थाय भक्तानामुत्सवं कुरु २५
तद्रात्रावेव कर्तव्यं यानमेकं समाचरेत्

प्रथमं सोमधारी च उमार्धं च द्वितीयकम् २६
तृतीयं वृषभारूढं संवादं च चतुर्थकम्
पंचमं गजहारी च षष्ठं शाम्भवमेव च २७
सप्तमं चैव वै बाह्यं त्रिपुरघ्नमथाष्ठमम्
नवमं कालहारी च प्रतिमा दिनं प्रति २८
देवानामप्यलाभे तु सोमास्कन्देश्वरं नयेत्
अन्येषामपि देवानां भक्तानामुत्सवं कुरु २९
तत्तद्देवेषु योग्यानां वाहनं संप्रकीर्तितम्
गण्ड कुण्डोदकं चैव वृषभं मौक्तिकप्रभा ३०
गजं च पुष्पधामं च स्यन्दनं तुरगं तथा
शिबिका च तथा प्रोक्ता वाहनानां दिनं प्रति ३१
वाहनानामभावे तु गब्लिकायां समाचरेत्
मौक्तिकं च प्रवाळं च इन्द्रनीलं तथैव च ३२
संकीर्त्य पुष्परागं च रुद्राक्षं स्वर्णमेव च
माणिक्यभूषणं चैव मौक्तकाभरणं तथा ३३
तद्वर्णाभानि पुष्पाणि सस्त्राणि च नियोजयेत्
तद्वर्णां च विभेदेन गन्धादिग्रहणं न वा ३४
कृष्णगन्धं विशेषेण षष्ठेऽहनि प्रदापयेत्
तद्वर्णाभानि नैवेद्यं दिनं प्रति दिनं प्रति ३५
सप्तपंचत्रियाहे वा एकाहे वा विशेषतः
पूर्वं न्यस्त्वा परं प्रोक्तं देवतावाहनादिकम् ३६
भूषणानामभावे तु स्वर्णेनैव समाचरेत्
पुष्पाणामप्यभावे तु करवीरमिति स्मृतम् ३७
वस्त्राणामप्यभावे तु श्वेतवस्त्रमिति स्मृतम्
तद्वर्णाभं तु नैवेद्यं अभावे शुद्धमोदनम् ३८
महेश्वरं समभ्यर्च्य वाहनस्योपरि न्यसेत्
चलासनं तु संकल्प्य धूपदीपादिकं ददेत् ३९
वीथी संमार्जनोपेतं जलसेकसमन्वितम्
नानाध्वजसमोपेतं नानावाद्यसमन्वितम् ४०

नानागानस्वरोपेतं नानानृत्तसमाकुलम्
नानाध्वजसमोपेतं पिंच चामरसंयुतम् ४१
नानादीपसमायुक्तं गणिकादिभिरावृतम्
नानाभक्तजनैस्सार्धं यानेमवं समाचरेत् ४२
यानकाले तु ताम्बूलं ददेन्नानाफलानि च
भक्ष्यापूपादिकं दद्यात् पाद्यादिकविवर्जितः ४३
शनैः प्रदक्षिणं कृत्वा सभास्थानं प्रविश्य च
रुचिरासनं संकल्प्य भक्ष्यादीनि निवेदयेत् ४४
नीराजनं ततो दद्यात् ताम्बूलं च निवेदयेत्
परिवेषक्रमेणैव नृत्तावलोकनं क्रमात् ४५
वारं प्रतिदिनं कुर्यादहर्निशि महोत्सवे
प्रतिमास्यार्चनं नित्यमुत्सवेश्वरपूजनम् ४६
तत्परं शान्तिहोमं च नित्योत्सवमतः परम्
ततो यानक्रमं चैव परिवेषकमं तथा ४७
नृत्तावलोकनं पश्चाद् यात्रार्थस्नपनं परम्
यात्रार्थस्नपनं पश्चात् ततो मध्याह्नपूजनम् ४८
पश्चात्प्रदोषयजनं अलंकारमतः परम्
उत्सवेश्वरपूजा च तत्परं शान्तिहोमकम् ४९
पश्चान्नित्योत्सवं कुर्यात् ततो ग्रामपदक्षिणम्
शक्तिस्थाने निवेद्यं च रात्र्यन्ते यानमाचरेत् ५०
त्रिपादेन त्रिनाडी च क्रियां प्रति क्रियां प्रति
निशि यानावसाने तु स्नानवर्जितपूजनम् ५१
गन्धमाल्यं विसृज्याथ पाद्यमाचमनं ददेत्
गन्धमाल्यैश्च संतोष्य पूर्वयानक्रमेण तु ५२
रात्र्यन्ते यानसर्वाणि दिनं प्रति दिनं प्रति
तीर्थाधिवासनं कुर्याच्चूर्णोत्सवमतः परम् ५३
देवाग्रे च सभास्थाने तीर्थतीरे मनोरमे
चूर्णोत्सवं तु कर्तव्यं जलक्रीडां समाचरेत् ५४
प्रायश्चित्तार्थहोमं च स्नपनैरभिषेचयेत्

आचार्यं पूजयेत्पश्चाद्भक्तांश्चैव प्रपूजयेत् ५५
प्रायश्चित्तार्थकलशै भूरिपान्नं निवेदयेत्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ५६
इति सूक्ष्मशास्त्रे श्रद्धोत्सवविधिः चतुर्दशपटलः

शक्त्युत्सवमथो वक्ष्ये श्रूयतां तत्प्रभञ्जन
उत्सवं पंचधा ज्ञेयं तद्भेदमिह कथ्यते १
नवाहं श्रीयुतं प्रोक्तं सप्ताहं तामसं भवेत्
पंचाहं सात्विकं प्रोक्तं त्रियाहं गौणमुच्यते २
एकाहं तामसं प्रोक्तं पंचधा परिकीर्तितम्
आर्द्रामासादि मासान्तमुत्सवं विधिनोच्यते ३
धनुर्मासे तु कर्तव्यं आर्द्रान्तमुत्सवं परम्
अवभृतान्ते व्रतं कुर्यात् ध्वजारोहणमन्तके ४
पुष्यमासे तु कर्तव्यं भूताष्टम्यन्तमेव च
माघे चाश्लेष कर्तव्यं दर्शद्वयं च संमतम् ५
उत्तरान्तं तु वा कुर्यात् फाल्गुने दर्शमेव च
चैत्रे मासे तु कर्तव्यं चित्रान्तं वा द्वितीयकम् ६
वैशाखे सितपक्षे तु विशाखे चोत्तरान्तकम्
ज्येष्ठे चैव प्रकर्तव्यं चतुर्दश्यन्तसंयुतम् ७
उत्तराषाढमाषाढे मासे त्रयोदशी भवेत्
श्रावणे श्रवणे वापि द्वादशी च विशेषतः ८
भाद्रे तन्मासऋृक्षं वा एकादश्या च संयुतम्
अश्वेत्वश्विसमायुक्तं कार्तिके कृत्तिके मतम् ९
तिथिप्रधानकं चेत्तु सिते वा सितपक्षयोः
अथवान्यप्रकारेण तत्तद्वेरदिकं मतम् १०
सामुदायिकऋृक्षं वा उत्सवेशीदिनं तु वा
यजमानवशात्तत्र त्रिदिने तीर्थमाचरेत् ११
एवं निश्चित्य तीर्थं तु अधिवासनमारभेत्
नवाहे वाथ सप्ताहे ध्वजारोहणमाचरेत् १२

भेरीताडनतीर्थान्तमन्यत्सर्वं समाचरेत्
त्रिचतुर्हस्तमारभ्य द्विगुणान्तं क्रमेण तु १३
तदर्धं वा त्रिपादं वा पदविस्तार उच्यते
पुच्छद्वयसमायुक्तं वेत्रद्वयसमन्वितम् १४
तत्पटं चाष्टधा भज्य शिरद्वयंशकसंमुदम्
पुंछं द्वयंशकं प्रोक्तं त्र्यंशं पद्मं च पीठकम् १५
द्व्यंशे वाहनं लिख्य एकांशं चित्रसंयुतम्
पीठपार्श्वे तु कर्तव्यं अष्टमं गळमालिखेत् १६
वाहनद्वयपार्श्वे तु दीपद्वयसमन्वितम्
छित्रपार्श्वे तु कर्तव्यं चामरद्वयमेव च १७
एतत्सर्वं समालिख्य आयादिशुभदं मतम्
पंचवर्णसमायुक्तमुक्तस्थाने प्रकल्पयेत् १८
तन्मध्ये वृषभं लिख्य सिंहं वापि प्रकल्पयेत्
स्थितं वा शयनं वापि यानं वपि समालिखेत् १९
अर्धाक्षित्रान्वितं चैव आभासन्नाम उच्यते
सुषिरं यन्त्रसंयुक्तं यंत्ररज्जुं सुबन्धयेत् २०
एवं पटं समापाद्य ध्वजदण्डमथोच्यते
यथा लोक्त वृक्षे वा त्वक्सारक्रमुकादयः २१
नवहस्तं समारभ्य द्विद्विहस्तं विवर्धनात्
एवं त्रिविधमाख्यातं त्रितलान्तं क्रमेण तु २२
एवमायाममाख्यातं अन्यत्सर्वं पुरोक्तवत्
ध्वजादिसर्वं संपाद्यमधिवासनमारभेत् २३
अर्धयामावसाने तु विघ्नेशं पूजयेद्बुधः
देव्यग्रे मण्डपे वापि चतुर्था स्थण्डिलं नयेत् २४
पश्चिमे तु पदं न्यस्य तत्पूर्वे नवकं न्यसेत्
तत्पूर्वे चास्त्रमूर्तिं च तत्पूर्वे होममेव च २५
नेत्रोन्मीलनं कृत्वा नेत्रमंत्रेण देशिकः
वृषशुद्धिं ततः कुर्यात्सकळीकरणं कुरु २६
प्राणप्रतिष्ठा कर्तव्या रक्षाबन्धः पुरोक्तवत्

मंत्रतर्पणमेवोक्तं दण्डभंगीक्रमं न्यसेत्  २७
शक्त्यादिशक्तिपर्यन्तं ध्याययेत्तु गुरूत्तमः
मध्यकुंभे वृषं पूज्य लोकपान्परितो यजेत्  २८
पश्चिमास्यो वृषं पूज्य वरुणाद्यष्टदिक्षु च
स्वस्वमंत्रैस्समभ्यर्च्य वृषविद्येश्वरान्न्यसेत्  २९
एवं कुंभान्समभ्यर्च्य नैवेद्यं धूपदीपकम्
अस्त्रं संपूज्यविधिवत्ततो होमं समारभेत्  ३०
अग्निकार्योक्तमार्गेण अग्निकार्यं समाचरेत्
वृषादिपरिवारेण तत्तद्बीजेन होमयेत्  ३१
पूर्णाहुतिं प्रकर्तव्यं प्रायश्चित्तं समाचरेत्
वह्नाद्बीजं समादाय तत्तत्कुंभेषु योजयेत्  ३२
ततो वास्तुबलिं कृत्वा वास्तुहोमं तदन्तके
पर्यग्निकरणं नीत्वा वीथ्यादिमण्डपादिके  ३३
ध्वजस्थानं पुराप्रोक्तं तत्स्थानं लेपयेत्ततः
पिष्टचूर्णैरलंकृत्य ज्वलदीपं च विन्यसेत्  ३४
पताकाद्यैरलंकृत्य सर्ववाद्यसमन्वितम्
ग्रामप्रदक्षिणे वापि वाहनं तत्र विन्यसेत्  ३५
अस्त्रं पश्चिमतो न्यस्य उत्सवेशीं च विन्यसेत्
तत्कुम्भमुत्तरे स्थाप्य ततो विघ्नेशमर्चयेत्  ३६
संकल्पं च यथापूर्वं बृहस्पतिं यजेत्ततः
वृषगायत्रिमंत्रेण ध्वजमारोपयेद्गुरुः  ३७
एवं वृषं चेत्कर्तव्यं सिंहं वापि विशेषतः
सिंहस्य मूलमंत्रेण वास्यनाधि रोपयेत्  ३८
श्वेतवर्णं बृहद्दन्तं उग्रदंष्ट्रनखान्वितम्
वक्रावक्रसमाकायमूर्ध्वपुच्छं च वक्रकम्  ३९
पूर्ववल्लक्षणोपेतं सिंहं लिख्य प्रकल्पयेत्
हृदयं च शिरश्चैव शिखा कवचमेव च  ४०
पश्चिमादिमहाशासु कल्पयेत्तु विचक्षणः
एवं क्रमेण संकल्प्य स्वस्वनाम्नेन पूजयेत्  ४१

इन्दिराण्यपि सर्वाणि कारयेद्वृषभोक्तवत्
एवं क्रमेण कर्तव्यं वीथिशोधनमुच्यते ४२
निर्माल्यधारिणीं देवीमलंकृत्य विशेषतः
सायाह्नसमये काले वीथीशोधननायकम् ४३
वीथीशोधनमेवोक्तं भेरीताडनमुच्यते
भेरीसंताडनं रात्रौ पूर्वोक्तविधिवन्नयेत् ४४
आहूयाष्टगणं चैव देशिकश्शिष्य एव वा
एवं देवान्समावाह्य पूजयेद्गन्धत्पुष्पकैः ४५
भेरीं संपूज्य विधिवदेकद्वित्रि च ताडयेत्
पश्चात्पारशिवश्चैव सर्वताळेन ताडयेत् ४६
आवाहनबलिं दद्याद् शुद्धान्नं वा गुळान्नकम्
ब्रह्माद्यैशानपर्यन्तं इन्द्राद्यैशानमेव वा ४७
ध्वजो ध्वजादिबल्यन्तं दिनदेवबलिं विना
ततोत्सवं समारभ्य मंगळांकुरपूर्वकम् ४८
विघ्नराजं च गौरीं च रक्षासूत्रं च बन्धयेत्
यागार्थयागशालां च शुद्धिं कृत्वा विचक्षणः ४९
वेदिमध्ये विशेषेण स्थण्डिलादिरलंकृतम्
कुम्भं वा करकं वापि मध्यकुंभे मनोन्मनीम् ५०
वामादिशक्तयश्चाष्टौ पूर्वादि स्थापयेद्गुरुः
निष्कमर्धं तदर्धं वा पंचादशं च निक्षिपेत् ५१
उत्तमादिषु वस्त्राढ्यं शेषं पूर्ववदुच्यते
तत्तद्ध्यानमनुस्मृत्य तत्तत्कुम्भे मनोन्मनीम् ५२
नवाग्निं वाथ पंचाग्निं एकाग्निमथवाचरेत्
वामादिशक्तयश्चापि पंचमूर्तिं मनोन्मनीम् ५३
एवं संकल्प्य विधिवत् स्वस्वमंत्रैश्च पूजयेत्
कुण्डसंस्कारमारभ्य पूर्णान्तं पूर्ववद्धवेत् ५४
नित्याग्निहोमकार्यं तु नित्यबद्धोममाचरेत्
भेरीं संताड्य विधिवद्बलिदानमुपक्रमात् ५५
द्वारादिबलिपीठान्तं गुळान्नं वा बलिं ददेत्

दिनदेवादि तत्सर्वं शिववत्कारयेद्बुधः ५६
बलिदानावसाने तु यानं सम्यक् समाचरेत्
वीथीसंमार्जनं पूर्वं प्रोक्षणं च द्वितीयकम् ५७
पताकाद्यैस्तृतीयं तु लाद्यैश्चतुर्थकम्
उत्सवेशमलंकृत्य वाद्यघोषसमन्वितम् ५८
शनैः प्रदक्षिणं कृत्वा नाना लीलासमन्वितम्
सर्वत्र याश्च नाना जातिसमाकुलम् ५९
यानान्ते परिवेषश्च सूरिबृन्दैश्च सेवितम्
यात्रार्थस्नपनं कुर्यात् शान्तिहोमं समाचरेत् ६०
नैवेद्याद्युपचारान्तं पूजयेत्तु क्रमेण तु
एवं क्रमेण कर्तव्यं वाहनं त्वधुना शृणु ६१
रंगे वा शिबिकायां व रथे वा देवियानकम्
अन्यं सर्वं समुद्दिश्य शिववत्कारयेत्ततः ६२
रथश्चक्रादिहीनश्चेत् संधानं शीघ्रमाचरेत्
यत्नेनाशक्य तं दृष्ट्वा रंगं वा शिबिकां नयेत् ६३
रथदेवान्समावाह्य रंगे वापि सुयोजयेत्
शेषयानं समानीय प्रविशेदालयं प्रति ६४
नृत्तोत्सवं विना कार्यं मृगयात्रां तथा भवेत्
पश्चात्तीर्थदिने चैव प्रातः काले विशेषतः ६५
अस्त्रतोयं च संग्राह्य अन्ते चूर्णोत्सवं कुरु
तीर्थस्थानं च संप्राप्य शुद्धिं कृत्वा महीतले ६६
तैलादिस्नपनान्तं च स्नानद्रव्यं च साधयेत्
रात्रितोयं च संग्राह्य घटं प्रति विशेषतः ६७
पुरुषो वा स्त्रियो वापि उभयोरभियत्नतः
जलक्रीडां समुद्दिश्य रजनीं तैलं च दापयेत् ६८
स्नानं चैव विशेषेण पूर्णाहुतिं च दक्षिणाम्
मूलबिम्बे विशेषेण यागकुम्भाभिषेचनम् ६९
नैवेद्यं दापयेत्पश्चात् अवरोहणमुत्तमम्
अर्धरात्रौ विशेषेण संधिदेवान्समर्चयेत् ७०

निर्माल्य धारिणीं देवीं स्नपनं पूजयेत्ततः
शुद्धस्नपनमेवं स्याद् नैवेद्यं च प्रदापयेत् ७१
अनुक्तमन्यतो ग्राह्यं उक्तं सम्यक्समाचरेत्
एवमुत्सवकार्यं च पवित्रविधिरुच्यते ७२
इति सूक्ष्मशास्त्रे शक्त्युत्सवविधिः पञ्चदश पटलः

पवित्रकमहं वक्ष्ये श्रूयतां तत्प्रकाशने
मनोन्मनीं समुद्दिश्य किंचिद्भेदं वदाम्यहम् १
न्यूनातिरिक्तं तत्सर्वं कर्मणामनसामपि
पतनात्त्रायते यस्मात्तस्मादेतत्पवित्रकम् २
आषाढादि त्रये मासे तुलावृश्चिकमेव च
न्यूनादिपूरणानां च पवित्रारोहणं कुरु ३
पूर्वपक्षे चतुर्दश्यामेवाषाढे पवित्रकम्
इतरेषु च मासेषु पक्षयोः शुक्लपक्षयोः ४
चतुर्दश्यामथाष्टम्यां पवित्रं विधिनाचरेत्
वृश्चिके दीपतः पश्चात् पवित्रं वर्जयेद्बुधः ५
क्षौमादिसूत्रमेवं तु त्रिगुणीकृत्य बुद्धिमान्
रोमाद्यं तु विसृज्याथ क्षाळयेद्घोरमन्त्रतः ६
वामाद्या नव शक्तिश्च नवसूत्राधिदेवताः
तत्सूत्रं द्विगुणीकृत्य दशवृद्ध्या नवान्तकम् ७
उत्तमोत्तममेवं स्यात् पदसंख्या च मध्यमम्
अष्टत्रिंशतसंख्याततन्तूनां कन्यसं भवेत् ८
अथवान्यप्रकारेण तन्तुसंख्या च कथ्यते
एकाध्यानेकवृद्धो तु पंचाशत्संख्ययातयः ९
ग्रन्थयस्तन्तुसंख्यात बन्धयेत्तु यथाक्रमम्
ग्रन्थयस्त्विष्टदेशे वा नानाचित्रविचित्रितम् १०
अथवान्यप्रकारेण ग्रन्थिसंख्यां शृणुष्वथ
विचित्रमेकं शिरो माला वसुग्रन्थिसमन्वितम् ११
कण्ठालम्बनमेकस्य द्वादशग्रन्थिसंयुतम्

शिरोमाला शिरोनाहं जान्वन्तं गौरीवतारकम्  १२
बाहुमाला प्रकोष्ठा च पंचग्रन्थियुतं तु वा
कृतं गन्धपवित्रं च पंचग्रन्थिसमन्वितम्  १३
अथवान्यप्रकारेण एकग्रन्थिसमन्वितम्
तद्देवि परिवाराणां पवित्रमेकं प्रदापयेत्  १४
ततो गौरीवतारं चेत् किंचिद्भेदं विशेषतः
मूर्धादि पादपर्यन्तं स्पृष्ट्वा गौरिव तारकम्  १५
युग्मदूर्वां गनाद्याय एकं शिरसि धारणम्
देवीगायत्रिमंत्रेण पूर्वद्रव्येण रंजयेत्  १६
आत्मतत्व पवित्रं च तदेकं गौरिमूर्धनि
गौरीवतारमेकं वा कण्ठे वा मूर्ध्नि वा न्यसेत्  १७
प्रासादं यागशाला च प्राकारं पचनालयम्
एकद्वित्रीणि सूत्रं वा बन्धयेत्तु यथाक्रमम्  १८
एवं क्रमेण कर्तव्यं अंकुरार्पणमाचरेत्
प्रासादस्याप्रदेशे वा महाशासु प्रकल्पयेत्  १९
यागशालां समारभ्य सर्वं  पूर्ववदुच्यते
तद्दिनस्य तु पूर्वेद्युः अधिवासनमारभेत्  २०
देवीं सम्यक् समारभ्य नैवेद्यादिषु तोषयेत्
विघ्नेश्वरं समभ्यर्च्य अविघ्नं प्रार्थयेद्गुरुः  २१
तत्र देवीं नमस्कृत्य दापयेत्तु पवित्रकम्
ततो मण्डपमाराध्य सौरादिगुरुरन्तकम्  २२
वेदिमध्ये विशेषेण मण्डळं कल्पयेत्सुधीः
राशिमण्डलवेदी स्यान्नासिमण्डलमेव च  २३
शताब्जकुण्डलं वापि पंचचूर्णैरलंकृतम्
तत्र देवीं समभ्यर्च्य भानुवारसमन्वितम्  २४
यागेशकुंभवामे तु स्थापयेत्तु पवित्रकम्
कुंभस्य दक्षिणे पार्श्वे न्यसेद्गन्धपवित्रकम्  २५
कुम्भस्य पश्चिमे भागे न्यसेद्गन्धपवित्रकम्
देवी मंत्रेण संप्रोक्ष्य नववस्त्रेण छादयेत्  २६

कर्त्रिकां दन्तकाष्ठं च तालुशोधनमेव च
सूतिका श्रोत्रशोधी च नखशोधनमेव च २७
पूर्वभागे न्यसेद्धीमान् गौळामंत्रं समुच्चरन्
रजनीं खराडवस्त्रं च तैलमामलकं तथा २८
पंचगव्यामृतं चैव दक्षिरो विन्यसेत्ततः
शुचिर्मोहमनुस्मृत्य अर्चयेद्गुरुरुत्तमः २९
पुष्पमाभरणं चैव अंजनं केशशोधनीम्
चन्दनं पश्चिमे देशे गायत्रेरा च विन्यसेत् ३०
चित्रं भसितसंयुक्तं उत्तरे वाममंत्रतः
एवं क्रमान्न्यसेद्धीमान् ततः कुराडान्तिकं विधेत् ३१
अग्निकार्योक्तवत्कुर्यादग्निकार्यं समाचरेत्
स्थालीपाकविधानेन चरुपाकं समाचरेत् ३२
चरुं त्रिधा विभज्याथ नैवेद्यांशं शिवांशकम्
होमार्थं भागमेकं तु बल्यर्थं त्वेकभागया ३३
पूर्णान्ते व्याहृतिं हुत्वा प्रायश्चित्तं हुनेत्ततः
सौरादिगुरुपर्यन्तं दद्यान्नित्यपवित्रकम् ३४
चारु देवीं समभ्यर्च्य स्वनाम्नैव प्रपूजयेत्
ततो नित्य पवित्रं च देवीं मूलेन दापयेत् ॥
परिवारामरादीनां दद्यान्नित्यपवित्रकम्
निवेदयेच्छिवांशं तु धूपदीपं ददेत्क्रमात्
प्रायश्चित्तार्थहोमं चेदस्त्रेरौव शतं हुनेत् ३५
भानुना गुरुपर्यन्तं दद्याद्गन्धपवित्रकम्
सर्ववाद्यसमायुक्तं हर्म्यप्रदक्षिरां कुरु ३६
द्वारदेवीं समभ्यर्च्य दद्याद्गन्धपवित्रकम्
स्वस्वमंत्रैस्समभ्यर्च्य गर्भगेहं प्रविश्य च ३७
वाद्यादीनि ददेत्कार्यं मूलमंत्रेरा देशिकः
दद्याद्गन्धपवित्रं तु चाष्टपुष्पेरा दापयेत् ३८
पश्चान्नित्याग्निकार्यं तु रात्रिशेषं समाचरेत्
देशिको मूर्तिपैस्सार्धं प्रातः स्नानादिकं कुरु ३९

संप्रोक्ष्य शस्त्रमंत्रेण पवित्राण्यवरोपयेत्
ऐशान्ये स्थण्डिलं कल्प्य पात्रे संरक्ष्य देशिकः ४०
अष्टपुष्पिकया देवीं समभ्यर्च्य यथा विधि
यागशालां प्रविश्याथ प्रोक्षयेदस्त्रमंत्रतः ४१
भान्वादिगुरुपर्यन्तं तत्क्रमेणैव पूजयेत्
प्रायश्चित्तं ततो हुत्वा स्पृष्ट्वा गौरीवतारकम् ४२
सर्ववाद्यसमायुक्तं पूर्णाहुतिमथाचरेत्
देवीं संपूज्य विधिवत् नैवेद्यादिक्रमेण तु ४३
भान्वादिगुरुपर्यन्तं दद्याच्छुद्धपवित्रकम्
द्वारं संपूज्य विधिवद्गर्भगेहं प्रवेश्य च ४४
पंचगव्यादिसंस्नाप्य देवीं सम्यक्समर्चयेत्
साधनद्रव्यसर्वाणि गर्भगेहं प्रविश्य च ४५
तत्तद्रव्यान्समादाय तत्तद्योग्यं च दापयेत्
तत्तन्मन्त्रसमायुक्तं तत्तत्स्थाने प्रयोजयेत् ४६
चन्दनादि समालिप्य नैवेद्यादिषु तोषयेत्
तदन्ते मण्टपं प्राप्य पूर्णाहुतिं च योजयेत् ४७
परिचारकमाहूय स्वस्तिमंगळवाचकैः
पवित्रं वाहयित्वा तु सर्वालंकारसंयुतम् ४८
द्वारदेवीं समभ्यर्च्य दद्याच्छुद्धपवित्रकम्
देविद्वारान्समाविश्य पूजयेद्धर्ममंत्रतः ४९
शंखघोषसमायुक्तं दद्याच्छुद्धपवित्रकम्
परिवारामरादीनां दद्याच्छुद्धपवित्रकम् ५०
प्रभूतहविषं दत्वा धूपदीपादिकं ददेत्
शेषद्रव्याणि तत्काले दर्शयेत्परमेश्वरीम् ५१
पूर्वस्थाने च संस्थाप्य दद्यान्नित्यपवित्रकम्
पश्चान्नित्याग्निकार्यं तु संध्याशेषं समाचरेत् ५२
माहेश्वरीं समभ्यर्च्य पूजयेत्तु विशेषतः
सर्वालंकारसंयुक्तं बल्यन्ते यानमाचरेत् ५३
नवसप्ताहपंचाह त्रिय एकाहमुच्यते

अत ऊर्ध्वं न कर्तव्यं सर्वशास्त्रेषु बुद्धिमान् ५४
दिनं प्रति विशेषेण पवित्रं विसृजेद्बुधः
अरुणोदयस्नानकाले शुद्धपात्रोपरिन्यसेत् ५५
प्रोक्षयेद्वाममंत्रेण मूलमंत्रेण होमयेत्
शतं वापि तदर्धं वा होमयेद्द्रव्यसंयुतम् ५६
होमा च स्नानकाले तु पवित्राद्यैरलंकृतम्
नैवेद्यं दापयेत्पश्चात् नित्यहोमादि पूर्ववत् ५७
अन्यतो स्नानकाले तु पवित्राण्यवरोपयेत्
अस्त्रमंत्रेण संप्रोक्ष्य पवित्राद्यैरलंकृतम् ५८
एवं दिने दिने कार्यं न वाहान्तं क्रमेण तु
अवरोहदिने चैव प्रातस्संधिर्विमिश्रितम् ५९
प्रायश्चित्तार्थहोमं च पूर्णाहुतिमथाचरेत्
कुण्डेष्वग्निं विसृज्याथ कुंभे संयोजयेत्सुधीः ६०
तत्कुंभे बीजमादाय मूळेनैव हृदि न्यसेत्
सर्वालंकारसंयुक्तं पूर्ववत्पूजयेद्बुधः ६१
मध्याह्ने स्नानकाले तु पवित्राण्यवरोपयेत्
छिष्टं तं श्वत्पवित्रेण पवित्राणि समाहरेत् ६२
चण्डीयागं ततः कृत्वा पुनर्ग्राह्य पवित्रकम्
चण्डमस्त्रेण जुहुयात् चण्डीयागं समापयेत् ६३
अन्यद्द्रव्यपवित्राणि यजमानादि दापयेत्
एवमेव क्रमेणैव पवित्रारोपणं मतम् ६४
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ६५

इति सूक्ष्मशास्त्रे शक्तिपवित्रारोहणविधिः
षोडशः पटलः

## गौरीयागः

गौरीयागमथो वक्ष्ये आषाढे पूरकर्मकम्
आयुरारोग्यजयदं पुत्रपौत्रविवर्धनम् १

सर्वपापहरं पुण्यं सर्वसिद्धिकरं शुभम्
तद्दिनात्पूर्वरात्रौ तु अधिवासनमारभेत् २
शिवेन सहितां देवीमर्चयेत्त्वा विशेषतः
नववस्त्रेण संवेष्ट्य कौतुकं बन्धयेत्सुधीः ३
सर्वाभरणसंयुक्तं गन्धपुष्पैरलंकृतम्
सर्वातोद्यसमायुक्तं नृत्तगेयसमाकुलम् ४
सुगन्धलाजचूर्णं च अष्टद्रोणोत्तमं भवेत्
तदर्धं मध्यमं प्रोक्तं अधममाढकं भवेत् ५
नवपात्रे क्षिपेत्तत्र गन्धपुष्पादिनार्चयेत्
प्रभाते विमले पश्चाद् देवीं निज्ञाप्य देशिकः ६
रंगे वा शिबिकायां वा रथे वा रोप्य भक्तितः
पंचध्वजं समाकीर्णं किंकिणीरवशोभितम् ७
अंकुरं मुद्गसंयुक्तं लवणं च प्रदापयेत्
ग्रामप्रदक्षिणं कृत्वा नदीं गच्छेत्समाहरात् ८
शंखध्वनिसमायुक्तं ताळकाहळमर्दळैः
भेरीवंशसमायुक्तं गेयनृत्तसमाकुलम् ९
स्तोत्रमंगळवाद्यैश्च जयशब्दं तु शोभने
तीरे शुद्धिं ततः कुर्यात् प्रपां कृत्वातिसुन्दरम् १०
तस्य मध्ये स्थितां देवीं आपाद्यादीनि पूजयेत्
वेद्यास्तु पूर्वदिग्भागे स्थण्डिलं कारयेद्बुधः ११
अष्टद्रोणमयं शालि पद्ममालिख्यया बुधः
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि १२
विंशत्पंचकमुत्कृष्ट नव पंचाथवा पुनः
प्रत्येकं युग्मवस्त्रेण वेष्टयेत्तु हृदा बुधः १३
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्कलशानपि
गन्धपुष्पादिनाभ्यर्च्य नवशक्त्याधिदेवताः १४
गौरीयामस्त्रमंत्रेण दापयेद्देशिकोत्तमः
लाजचूर्णं विसृज्याथ हृन्मंत्रेणैव बुद्धिमान् १५
रजनीं दापयेन्नार्या तत्तत्स्नानं सहैव तु

संवत्सरकृतं पापं स्नानेनैव विनश्यति १६
राजराष्ट्रं विवर्धन्ते तद्ग्राममभिवर्धयेत्
गन्धपुष्पादिनाभ्यर्च्य अभिषेकं तत्र कारयेत् १७
आचार्यं पूजयेत्पूर्वं वस्त्रहेमांगुळीयकैः
भक्तानां परिचाराणां वस्त्रादीनि प्रदापयेत् १८
प्रविशेदालयं पश्चात् स्वस्तिसूक्तसमन्वितम्
गोमयालेपिते भूमिं पिष्टचूर्णैरलंकृतम् १९
स्थण्डिलं षट्समाख्यातं पुण्याहं चैव बुद्धिमान्
स्थण्डिलोर्ध्वे समादाय दारुपीठेन चाम्बरम् २०
विदिशासु चतुष्कोणं अर्चयेद्धृदयेन तु
मेधा चैव श्रिया शक्तिलक्ष्मीं कीतिश्चतुष्टयम् २१
तन्मध्ये गौरिमाह्वने आधाराद्युन्मनान्तकम्
अर्चयित्वा विशेषेण गौरीमंत्रेण सुव्रत २२
अलंकृत्य विशेषेण भूषणादि सुदापयेत्
अपूपाद्यादि ताम्बूलं अंकुरं मुद्गसंयुतम् २३
लवणं भस्मरजनीं नाळिकेरफलैर्युतम्
अक्षतं पूर्णपात्रं च व्रीहिपात्रं च पूर्णकम् २४
द्रव्यं प्रति विशेषेण पृथक्पात्रं तु विन्यसेत्
दर्पणं छत्रपिंछैश्च फलपक्वे समृद्धिदम् २५
निवेदयेद्धृदा मंत्री धूपदीपं समाचरेत्
पाद्यमाचमनं चार्घ्यं देवार्घ्यं परिषेचनम् २६
वृतमाचारसंयुक्तं पाद्यमाचमनं ददेत्
पायसान्नं निवेद्यं च भूरिपान्नं निवेदयेत् २७
धूपदीपं हृदा दत्वा ताम्बूलं तु निवेदयेत्
भस्मं च चुळुकोदं च मुखवासनिषेवितम् २८
तृप्तिरर्घ्यं प्रदातव्यं वेदं स्तोत्रं च गीतकम्
नृत्तवाद्यं च तंत्री च घोषयेत्तु महाध्वनिम् २९
मध्याह्नपूजनैर्युक्तं गर्भगेहैश्च गौरिकम्
यथाशक्तिसुवर्णानि यजमानेन दापयेत् ३०

यशस्समृद्धिं पुत्रं च भार्याभ्रातृसमृद्धिदम्
यजमानफलं प्रोक्तं अन्ते सायुज्यमाप्नुयात्   ३१
इति सूक्ष्मशास्त्रे आषाढपूरविधिः सप्तदशः पटलः

५
अथ विघ्नेशयजनं शृणुष्वैतत्प्रभंजन
मार्गशीर्षकमासे तु शतभिषक् षष्टिसंयुते  १
षष्टियुक्ते वियुक्ते वा तद्दिने च समाचरेत्
विघ्नेशं पूजयेद्धीमान् गन्धपुष्पादिना सह  २
नैवेद्यं दापयित्वाथ फलभक्ष्यादिसंयुतम्
धूपदीपं ततो दत्वा नीराजनं अथाचरेत्  ३
एवं नीत्वा दिवाकाले रात्रौ पूजवसानके
अथवा तु निबोद्यान्ते भक्तेश्वरमथार्चयेत्  ४
तदाचारभ्य चामान्तं भक्तेशस्तोत्रमाचरेत्
तद्रात्रौ विघ्नराजस्य चोत्सवं तु समाचरेत्  ५
अपरे दिवसे धीमान् प्रबोधिकावसानके
अथवा कालसंध्यान्ते भक्तोत्सवमथाचरेत्  ६
रात्रौ चेदर्धयामान्ते भक्तोत्सवमथाचरेत्
एवं दिने दिने कुर्याद् आर्द्रान्तं तु विशेषतः   ७
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
विघ्नेशयजनं प्रोक्तमार्द्राव्रतविधिं शृणु  ८
इति सूक्ष्मशास्त्रे विघ्नेशयजनविधिः अष्टादशपटलः

६
भक्तोत्सवविधिं वक्ष्ये शृणुष्वैतत्प्रभञ्जन
मंगळं चैव सौख्यं च सौभाग्यं च मवश्यकम्  १
ध्वजहोमबलिं यानं युक्तं मंगळमेव च
बलिहोमेन संयुक्तं बेरयानं समाचरेत्  २
सौख्यमेतत्तु कर्तव्यं सौभाग्यं च ततः शृणु

ध्वजहोमबलिं हित्वा बेरयानं समाचरेत् ३
हीनमध्येन चोत्कृष्टं उत्सवं त्रिविधं भवेत्
देवोत्सवेन कर्तव्यं भक्तानामुत्सवं शृणु ४
यजमानेच्छया काले चोत्सवं तु समाचरेत्
ध्वजहोमबलिं हित्वा बेरयानेकसंधिषु ५
आर्द्रादि वृश्चिकान्तं च मासनक्षत्रकं नहि
देवोत्सवेन सार्धं स्यात् अन्यैश्चैव न कारयेत् ६
आर्द्रामासे तु कर्तव्यं विघ्ननक्षत्रकादिषु
ईशनक्षत्रमन्त्रैश्च भक्तोत्सवमथाचरेत् ७
आषाढस्य तु मासे तु स्वाती नक्षत्रमन्तिषु
तीर्थमादौ तु निश्चित्य क्रियापूर्वं समाचरेत् ८
नवाहे चैव सप्ताहे पंचाहे त्रियहेऽपि वा
एकाहमेकसंधिश्चेद् उत्सवं च समाचरेत् ९
तद्दिनात्पूर्वरात्रौ तु रक्षाबन्धनमाचरेत्
वास्तुशुद्धिं ततः कृत्वा गव्येन प्रोक्ष्य भूतले १०
स्नानालयमलं कृत्य नानाचित्रविचित्रितम्
प्रोक्षयेत्पुरुषेणैव पुण्याहं च ततः कुरु ११
यानमूर्तिं च दाह्वाने हरिरासनकस्थितम्
आसनं मूर्तिमावाह्य स्नानद्रव्यादि साधयेत् १२
अभ्यंगं पिष्टचूर्णं च तिन्त्रिणी दर्भभस्मकम्
पंचगव्याभिषेकं तु नाळीफलगुळैर्युतम् १३
दधिक्षीरे तु मधुना कदळीफलदर्शयेत्
शुद्धतोयाभिषेकं तु द्रव्यस्नानान्तरान्तरे १४
पंचकुम्भाभिषेकं तु पायसान्नं निवेदयेत्
वस्त्रखण्डेन संमार्ज्य चित्रवस्त्राम्बरैर्युतम् १५
स्रग्लेपनैश्च भूषित्वा सर्वाभरणभूषितम्
रुद्रपूजावसाने तु भक्तानामुत्सवं नयेत् १६
मध्याह्नपूजनान्ते तु तदन्ते यानमाचरेत्
रथे वा वाहने वापि गब्विके शिबिकेऽपि वा १७

यानारम्भस्य काले तु दीपज्वालासमायुतम्
छत्रचामरपिंछाद्यैः स्तोत्रमंगळवाचकैः १८
वेदध्वनिसमायुक्तं भक्तस्तोत्रसमन्वितम्
सर्वातोद्यसमायुक्तं सर्वभक्तेन सार्धकम् १९
शनैः प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
यात्रार्थस्नपनं पश्चात् भूरिपान्नं निवेदयेत् २०
भक्ष्यापूपादिकं दत्वा ताम्बूलं तु निवेदयेत्
तीर्थनक्षत्रदिवसे चूर्णोत्सवं समाचरेत् २१
नदीतटाकतीरे वा तीर्थकर्म समाचरेत्
आचार्यं पूजयेत्पूर्वं वस्त्रहेमांगुळीयकैः २२
भक्तानां परिचाराणां वस्त्रदानं तु दापयेत्
यजमानेन कर्तव्यं दीर्घमायुः श्रियं भवेत् २३
पुत्रपौत्रसमृध्यर्थं अन्त्ये सायुज्यमाप्नुयात्
भक्तानामुत्सवं प्रोक्तं आर्द्राव्रतविधिं शृणु २४
आर्द्राव्रतमहं वक्ष्ये शृणुष्वैतत्प्रभञ्जन
आयुः श्रियं च लभते पुत्रपौत्रविवर्धनम् २५
मार्गशीर्षकमासे तु आर्द्रायां व्रतमाचरेत्
आर्द्रायां पर्वसंयुक्तं अयुक्तं त्वार्द्र एव च २६
विशेषेण तु आर्द्रायां उत्तमं तु प्रशस्यते
आर्द्रायामष्टनाडीं वा अन्त्यर्क्षे व्रतमाचरेत् २७
अष्टनाडीं विना ऋक्षं पूर्वाह्ने व्रतमाचरेत्
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकौ २८
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम्
पंक्तित्रयसमायुक्तं पंक्तिमानमथोच्छ्रयम् २९
वितानध्वजसंयुक्तं मुक्तादामैरलंकृतम्
स्तम्भवेष्टनसंयुक्तं युगतोरणसंयुतम् ३०
नानालीलासमायुक्तं मण्टपं परिकल्पयेत्
मध्यमे वेदिकां कुर्यात् अष्टद्रोणैश्च शालिभिः ३१
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि

आचार्यः सुप्रसन्नात्मा सकळीकृतविग्रहः ३२
देवेशं पूजयेत्पश्चाद् गन्धपुष्पादिभिः क्रमात्
प्रभूतहविषं दद्याद् विज्ञाप्य व्रतमुत्तमम् ३३
अंकुरार्पर्पयेत्पश्चात्पुण्याहं वाचयेत्ततः
स्नपनं कारयेत्तत्र यात्राहोमसमन्वितम् ३४
वह्निमध्ये विशेषेण देवं शक्तिं प्रपूजयेत्
वामादीशाष्टशक्तीनां स्वनामभिरथार्चयेत् ३५
समिद्धृदयमन्त्रेण कवचेन घृतं हुनेत्
चरूणां वा शिखेनैव व्याहृतिं जुहुयात्ततः ३६
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्
गर्भगेहं प्रविश्याथ भोगशक्तिं समर्चयेत् ३७
स्नपनाद्यैर्विशेषेण स्नापयेत्परमेश्वरीम्
नववस्त्रेण संवेष्ट्य गन्धपुष्पादिभिर्यजेत् ३८
मण्टपे स्वेष्टदेशे वा स्थण्डिलं कारयेत्ततः
अष्टद्रोणैस्तदर्धैर्वा सुश्वेतैर्द्रोणशालिभिः ३९
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
दर्भैः पुष्पैः परिस्तीर्य तस्योर्ध्वे लक्षणेन तु ४०
खारित्रयं तदर्धं वा द्रोणं वापि तदर्धतः
पद्ममष्टदळं कुर्यात् केसराढ्यं सकर्णिकम् ४१
पंचचूर्णैरलंकृत्य कल्पयेत्सैंहमासनम्
तस्योर्ध्वे वस्त्रमास्तीर्य निशिचूर्णेन पूरयेत् ४२
भोगशक्तिं समादाय आलयादि प्रदक्षिणम्
निधायगीतवाद्यादि धूपदीपादिसेवितम् ४३
ब्रह्मघोषसमायुक्तं सर्वालंकारशोभितम्
सिंहासने समारोप्य कौतुकं बन्धयेद्बुधः ४४
स्थलिकां तण्डुलैः पूर्य सूत्रं तन्मध्यमे न्यसेत्
भस्मपात्रेण संयुक्तं शंखध्वनिसमायुतम् ४५
नानावाद्यसमायुक्तं नानास्त्रीपरिसेवितम्
परिचारकमाहूय सोष्णीषस्सोत्तरीयकः ४६

शिरसा वाहयित्वा तु स्वस्तिसूक्तमनुं जपन्
धामप्रदक्षिणं कुर्यात् सर्वालंकारसंयुतम्  ४७
देव्याग्रे स्थापयेद्विद्वान् पुण्याहं तत्र वाचयेत्
रक्षासूत्रं जपेद्विद्वान् सावित्रियादिकं क्रमात्  ४८
देवीं प्रोक्ष वामेन ॐ नमो ब्रह्मणेन तु
युवासुवासेति मंत्रेण वस्त्रं चैवोत्तरीयकम्  ४९
यास्ते राकेति मंत्रेण गन्धं दद्याद्विचक्षणः
त्रियम्बकेन मंत्रेण रक्षासूत्रं च बन्धयेत्  ५०
बृहत्सामेति मंत्रेण भसितं दापयेत्ततः
गन्धपुष्पादिभिः पूज्य पायसान्नं निवेदयेत्  ५१
कदळीफलसंयुक्तं अपूपं नाळिकेरकम्
ताम्बूलं दापयेद्विद्वान्गौरीगायत्रिमंत्रतः  ५२
धूपदीपैर्विशेषेण गौरीं संतोषयेद्गुरुः
ततः प्रासादपरितः पूर्वादीशानमण्टपे  ५३
निशिचूर्णं जयां देवीं प्रासादाग्रस्य मण्टपे
विजया च शका   आग्नेय्यां भवने न्यसेत्  ५४
जयन्तीमुत्ससंयुक्तं दक्षिणे भवने बुधः
शपराजिता च लवणं नैर्ऋत्यां दिशि विन्यसेत्  ५५
दूर्वाक्षतेन संयुक्तं रम्भायां वारुणे गृहे
वायव्यानिलयोश्चैव तिंत्रिणीं च तिलोत्तमाम्  ५६
भसितेन तु गंगायां उत्तरे विन्यसेद्बुधः
सरस्वतीं यजेदीशे दूर्वाक्षतसमन्वितम्  ५७
वर्धनीं द्रोणपूर्णां  वा सूत्रवस्त्रेण वेष्टितम्
विधाय कूर्चसंयुक्तं नालिकेरफलान्वितम्  ५८
पूजयेद्गन्धपुष्पाद्यैः तत्तन्मंत्रेण बुद्धिमान्
पश्चान्नित्याग्निकार्यं  च संध्याशेषं समाचरेत्  ५९
तत्काले चात्मशुध्यादीन् पूजकः संप्रपूजयेत्
आराध्य देवदेवेशं हविष्यान्तं शिवार्चनम्  ६०
देवीं संपूज्य विधिवत् गन्धपुष्पादिभिः क्रमात्

नैवेद्यं दापयेद्विद्वान् उपदंशकसंयुतम् ६१
गुळखरडसमायुक्तं आज्ययुक्तपरिप्लुतम्
निवेदयेत्तु गायत्र्या पानीयं दापयेत्ततः ६२
जया च विजया चैव जयन्ती चापराजिता
रम्भा तिलोत्तमा गंगा भारतीं च विशेषतः ६३
पूर्वादीशानपर्यन्तं अर्चयेत्तां क्रमेण तु
ततः संध्यावसाने तु देवीं संपूज्य देशिकः ६४
सर्ववस्त्रैरलंकृत्य सर्वपुष्पोपशोभितम्
सर्वैराभरणैर्भूष्य कदळीफलसंयुतम् ६५
धूपं दद्याद्विशेषेण नीराजनमथाचरेत्
रथे वा शिबिकायां वा गब्लिके यानमाचरेत् ६६
ताळकाहळझल्लर्यैः मर्दळैः पणवादिभिः
अन्यैर्नानाविधैर्वाद्यैः ब्रह्मघोषसमन्वितम् ६७
ग्रामप्रदक्षिणं कुर्यात् नानाभक्तजनैर्युतम्
नानाछत्रसमायुक्तं नानाध्वजैश्च शोभितम् ६८
मयूरव्यजनादीनां चामरादिभिः सेवितम्
देवीं प्रदक्षिणं नीत्वा शंखध्वनिसमन्वितम् ६९
पूर्वादीशानपर्यन्तं गृहं प्रतिगृहं प्रति
स्तुत्वा स्तुत्वा जयादीनां यष्ट्वा रक्षान्तिकं क्रमात् ७०
सदृश्य द्रव्यसंभारान् अभ्यर्च्य हृदयेन तु
एवं प्रदक्षिणं कुर्यात् तीर्थस्नानं समाचरेत् ७१
तीरे समतळं कृत्वा प्रपां कृत्वातिसुन्दरम्
तरंगपट्टदेवांगैः वितानाद्यैर्विभूषयेत् ७२
स्नपनं कारयेत्तत्र जलक्रीडां समाचरेत्
गन्धपुष्पादिनाभ्यर्च्य सिद्धान्नं परिकल्पयेत् ७३
प्रविशेन्मन्दिरं पश्चात् सर्वातोद्यसमायुतम्
एवं दिने दिने कुर्याद् आर्द्रान्तं तु विशेषतः ७४
आर्द्राव्रतदिनात्पूर्वे सोमनक्षत्रसंयुते
तीर्थार्थमंकुरं कुर्यात् कौतुकं बन्धयेत्ततः ७५

स्नापयेद्देवदेवेशीं द्वितीयदिवसे बुधः
बस्त्रैराभरणैर्माल्यैः अलंकृत्य विशेषतः ७६
पूर्वयानक्रमेणैव प्रदक्षिणमथाचरेत्
तीर्थतीरं समासाद्य कृत्वा चूर्णोत्सवं बुधः ७७
पुण्याहं वाचयित्वा तु तीर्थकर्म समाचरेत्
जले सूत्रं विसृज्याथ ततः स्नानं समाचरेत् ७८
देव्याया सह यत्काले स्नानं कुर्वीतयो नरः
संवत्सरकृतं पापं स्नानेनैव विनश्यति ७९
जलादुत्तीर्य देवेशीं स्नापयेत्स्नपनादिकान्
वस्त्रैरावेष्टनं देवीं अलंकृत्य विशेषतः ८०
सर्वालंकारसंयुक्तं शीघ्रं गच्छेन्निकेतने
प्रासादस्य पुरो भागे कल्पितोद्यानमण्टपे ८१
मण्डपं कारयेत्तत्र डोलस्यारोहणार्थकम्
वितानैश्च ध्वजैश्चैव तरंगैर्गात्रवेष्टनैः ८२
मुक्तास्त्रङ्मुक्तपुष्पैश्च पुष्पादामैः प्रलम्बयेत्
++ कैःश्वेतताम्बूलैः नाळिकेरफलैस्सह ८३
मातुलुंगफलैश्चैव लिकुचैर्य पक्वभिः
मृगादिरन्ययन्त्रैश्च अभितस्तस्य मध्यमे ८४
स्थण्डिलं तत्र कुर्वीत चाष्टपत्रं सकर्णिकम्
तस्योर्ध्वे लक्षणं क्षिप्त्वा वस्त्रमास्तीर्य मण्डलम् ८५
भोगशक्तिं समादाय स्थापयेद्धृदयेन तु
पाद्यमाचमनं दद्यात् गन्धपुष्पादिनार्चयेत् ८६
वामाद्यादिश्च शक्तिश्च अर्चयेद्देशिकोत्तमः
दुर्गामुत्तरतः स्थाप्य विघ्नेशं दक्षिणे न्यसेत् ८७
अश्मानं शिशुमाश्रित्य ऐशान्यां स्थाप्य देशिकः
तस्याग्रे स्थण्डिलं कृत्वा रम्भा पत्रैः परिस्तरेत् ८८
वर्धनीं तोयमादाय कूर्चाग्रेण हृदा बुधः
तत्तद्द्रव्येन संतर्प्य धूपदीपेन सेवितम् ८९
देव्याग्रे विन्यसेद्धीमान् पुण्याहं वाचयेत्ततः

प्रोक्षयेत्पुरुषेणैव अर्चयेद्धृदयेन तु ९०
धूपदीपं हृदा दत्वा नीराजनमथाचरेत्
पुष्पैरभ्यर्च्य विधिवत् +++++ बुधः ९१
आचार्योन्मयहस्तेन पानीयं त्रिः प्रदक्षिणम्
संतर्प्य भोगशक्त्याग्रे नमस्कृत्वा तदीश्वरम् ९२
एवं त्रिवारमावृत्य मुक्तादानं समाचरेत्
मूर्धानं कण्ठदेशे तु हृन्नाभ्यूरुकुजानि च ९३
पादयोरुभयोश्चैव तत्तद्द्रव्यं समर्पयेत्
हृदयादि शिखान्तं च मूर्धात्पादान्तकं न्यसेत् ९४
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत्
नानावाद्यसमायुक्तं नानागेयसमाकुलम् ९५
पुण्याहप्रोक्षणं कुर्यात् ब्राह्मणैः स्वस्तिवाचकैः
डोलायां तु विशेषेण गौरीं संस्थापयेद्बुधः ९६
ताम्बूलं दापयेत्तत्र ज्ञानिनां त्रिविधात्मिकाम्
वस्त्रभूषैरलंकृत्य गन्धपुष्पं च धूपकम् ९७
अर्चयेन्नाममंत्रेण स्वर्णज्ञानी वनस्सुखम्
गायत्र्य डोलारोहे तु शंखध्वनिसमन्वितम् ९८
गौरीमंत्रं समुच्चार्य डोलालीलां समाचरेत्
नानालंकारसंयुक्तं स्तोत्रध्वनिसमन्वितम् ९९
गर्भगेहं प्रविश्याथ देवदेवीं प्रपूजयेत्
तद्दिनस्यैव रात्रौ तु महेशप्रतिमादिकम् १००
उत्सवं कारयेद्विद्वान् प्रभूतहविषं ददेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः १०१
भक्तानां परिचाराणां यथा शक्त्या तु दक्षिणा
एवं यः कुरुते मर्त्यः सोऽन्ते सायुज्यमाप्नुयात् १०२
इति सूक्ष्मशास्त्रे आर्द्राव्रतविधिः एकोनविंशत्पटलः

७
चण्डरूपमथो वक्ष्ये शृणुष्वैव प्रभञ्जन

भिन्नाञ्जनसमायुक्तं देहं सर्वसमाद्विति १
द्विभुजं चारुवदनं भीमरूपं महाबलम्
कट्याबन्धकरं वामहस्तं वै क्रोधमुष्टिकम् २
भिरिडपालयुतं सव्ये सव्यजानुसमाश्रयम्
कुटिकासनसंयुक्तं किंचित्प्रहसिताननम् ३
जटाकररडमकुटं वृत्तकुरडलभूषितम्
हारं केयूरसंयुक्तं हेमपट्टसमायुतम् ४
चित्रवस्त्रपरीधानं चित्रमाल्यानुलेपनम्
एतल्लक्षणसंयुक्तं अरडाभरणदैवतम् ५
उद्धारमध्वना वक्ष्ये सर्वकामफलप्रदम्
पूर्णोदनीं समादाय बिन्दुनादसमन्वितम् ६
स्वनामपदसंयुक्तं चतुर्थ्यन्तं विशेषतः
सर्वसिद्धिप्रदायेति नमः षोडशाक्षरम् ७
इदं मंत्रं समुच्चार्य तस्यार्चनविधिं शृणु
स्नानं वस्त्रं विलेपं च पुष्पमाभरणं तथा ८
धूपदीपं च नैवेद्यं ताम्बूलं मुखवाससम्
दशांगमिति विख्यातं मोदकस्य विधिं शृणु ९
तरडुलं चाढकेनैव पिष्टं कृत्वा विशेषतः
चतुष्पलं गुळं चैव नाळिकेरफलैर्युतम् १०
तरडुलस्य चतुर्थां शं प्रस्थं मुद्गसमायुतम्
मरीचिजीरकैर्युक्तं ईषल्लवणसंयुतम् ११
गुळसारेण तान्पिष्ट्वा मर्दयेत्तु पुनः पुनः
एकाकारेण कृत्वा तु तन्मध्ये सुषिरं कुरु १२
पाकयित्वा विशेषेण आढकद्वयवारिणा
शुद्धपात्रे समादाय कुडुपार्धाज्य सेचयेत् १३
निवेदयेत्तु मूलेन पूर्वोक्तविधिना सह
एवं दिने दिने पूज्य शुक्रवारस्य केवलम् १४
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात् १५

इति सूक्ष्मशास्त्रे अरडेशार्चनविधिः विंशतिः पटलः

८

दीपस्यारोहणं वक्ष्ये शृणुष्वैतत्प्रभंजन
कार्तिके चाग्निनक्षत्रे आदित्यार्धास्तमयेऽपि च १
दीपस्यारोहणं कुर्यात् राजराष्ट्राभिवृद्धये
दीपं द्विविधमाख्यातं क्षुद्रं भद्रमिति स्मृतम् २
निर्वाणदीपमार्गेण क्षुद्रमेवं समाचरेत्
एवमेवं समाख्यातं कारयेद्देशिकोत्तमः ३
तदृक्षपूर्वदिवसे कारयेदंकुरार्पणम्
तद्दिनस्य तु पूर्वे तु दीपं चैवाधिवासयेत् ४
देवाग्रे मण्डपं कल्प्य पंचहस्तप्रमाणतः
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ५
वितानाद्यैरलंकृत्य मध्ये वेदीं प्रकल्पयेत्
हस्तमात्रसमुत्सेधं दर्पणोदरसंनिभम् ६
वृत्तं वा चतुरश्रं वा कुण्डमैन्द्रेषु कल्पयेत्
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः ७
पंचचूर्णै + लंकृत्य प्रोक्षयेदस्त्रवारिणा
वेद्यूर्ध्वे स्थण्डिलं कल्प्य चाष्टद्रोणेन शालिना ८
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
तन्मध्येऽब्जं समालिख्य लाजैः पुष्पैः परिस्तरेत् ९
शिवं संपूज्य विधिवत्स्नपनाद्यैर्विशेषतः
विघ्नेश्वरं समभ्यर्च्य ज्ञापयेद्दीपमुत्सवम् १०
द्वारादिगुरुपर्यन्तं द्वारस्थं संप्रपूजयेत्
दीपपात्रं समादाय क्षाळयेदस्त्रमंत्रतः ११
संधूप्य वामदेवेन स्थापयेद्धोरमंत्रतः
कवचेनावकुण्ठ्याथ नेत्रोणोन्मीलनं कुरु १२
द्रोणं वापि तदर्धं वा तदर्धं वा गवां घृतम्
दीपपात्रे समायोज्य तन्मंत्रेणैव देशिकः १३
शक्त्यादिशक्तिपर्यन्तमर्चयेदासनं क्रमात्
सदाशिवं यजेन्मध्ये पुत्तळीं च विनिक्षिपेत् १४

वामाद्याश्चाष्टदीपेषु वर्तिं संयोज्य देशिकः
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् १५
आधानादिविवाहान्तमग्निकार्योक्तमाचरेत्
अग्निमध्ये तु संकल्प्य आसनावरणादिकम् १६
सदाशिवं समभ्यर्च्य धूपदीपादिकं ददेत्
समिदाज्यचरूणां च मूलेनाष्टशतं हुनेत् १७
कुण्डेष्वग्निं समारोप्य वह्निबीजमनुस्मरन्
पुत्तरे तु समारोप्य बहुरूपमनुस्मरन् १८
निवेद्यादीनि युक्तं च संतोष्य परमेश्वरम्
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत् १९
नित्यपूजावसाने तु दीपं पूर्ववदर्चयेत्
आसनं वैणवमशोको मधूकं वकुळं तथा २०
क्रमुकं नाळिकेरं च ताळं चम्पकमर्जुनम्
तिलकं खादिरं वापि दीपदण्डं प्रगृह्यताम् २१
नाहमानं तदुत्सेधं ध्वजदण्डं विधानवत्
प्राकारमध्यसंस्थाप्य दण्डक्षुद्रमिति स्मृतम् २२
वास्तुमध्ये तु संस्थाप्य दण्डं भद्रमिति स्मृतम्
क्षुद्रदण्डं समारोप्य यष्टिं नक्षत्रसंख्यया २३
भद्रदण्डस्य परितः पंचहस्तप्रमाणतः
काष्ठाकारं तु संकल्प्य चतुर्भागांशहीनकम् २४
कूटस्योच्चमिदं प्रोक्तं कदळीक्षुदळादिभिः
निश्छिद्रं कारयेद्विद्वान् वस्त्रमाज्येन सेचयेत् २५
तद्वस्त्रं शिथिलीकृत्य तस्योर्ध्वे धारया क्षिपेत्
गोमयालेपनं कृत्वा पंचचूर्णैरलंकृतम् २६
स्नपनं कारयेच्छंभोः सायाह्नसमये बुधः
नैवेद्यं दापयेच्छंभोः पश्चाद्धोमं समाचरेत् २७
जयादिरभ्यातानं च राष्ट्रभृच्च क्रमाद्धुनेत्
सर्वदीपं समुद्धृत्य देवाग्रे तु विनिक्षिपेत् २८
महेश्वरं समभ्यर्च्य शिबिकोर्ध्वे तु विन्यसेत्

अस्त्रेश्वरं समानीय सर्वालंकारसंयुतम् २९
हर्म्यप्रदक्षिणं कृत्वा दीपदण्डान्तिकं विशेत्
पुण्याहं वाचयेत्तत्र प्रोक्षयेदस्त्रमंत्रतः ३०
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत्
पर्यष्टिं च समाहूय सोष्णीषः सोत्तरीयकः ३१
देशिकस्य नियोगेन दीपदण्डेन योजयेत्
प्राङ्मुखोदङ्मुखो भूत्वा पात्रदण्डाग्रके क्षिपेत् ३२
पश्चादाज्यं समापूर्य पुत्तळीं तु विनिक्षिपेत्
अधिवास्य दीपमादाय पुत्तळे तु सुयोजयेत् ३३
प्राकारे गोपुरोर्ध्वे च प्रासादे मण्डपेषु च
परिवारालये चैव दीपमारोप्य सर्वतः ३४
ग्रामप्रदक्षिणं कृत्वा सभास्थानं प्रविश्य च
नीरांजनं ततो दत्वा परिवेषक्रमं नयेत् ३५
यात्रार्थस्नपनं कुर्यात् पूर्वस्थानं समाविशेत्
प्रभूतहविषं दत्वा भक्त्यापूपादिकं ददेत् ३६
पश्चाद्देवाय भक्तेभ्यो भक्ष्यापूपादिकं ददेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः ३७
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ३८
इति सूक्ष्मशास्त्रे दीपारोहणविध्येकविंशतिः पटलः

वसन्तमुत्सवं वक्ष्ये शृणुष्वैतत्प्रभंजन
फाल्गुने चैत्रमासे च वैशाखे तु विशेषतः १
नवाहे वाथ सप्ताहे पंचाहे वा त्र्यहेऽपि वा
एकाहे वा प्रकर्तव्यं वसन्ताख्यं तदुत्सवम् २
तत्तन्मासर्क्षके कुर्याद् वसन्तं चोत्सवं कुरु
वसन्तोत्सबकं कुर्याद् आरामोद्यानमध्यमे ३
विस्तारं सप्तहस्तं स्याद् आयामं तद्द्वयं भवेत्
तत्र पश्चिमभागे तु भद्रासनं प्रकल्पयेत् ४
विस्तारं तन्त्रिहस्तं स्यादुत्सेधं स्यात्तदर्धकम्

परितः कल्पयेत्कुण्डं पूर्वभागे विवर्जयेत् ५
जालत्रयसमायुक्तं याम्यपश्चिमतोत्तरे
चतुरंङ्गुलमुत्सेधं तलं निम्नोन्नतं च तत् ६
वितानैश्च ध्वजैश्चैव तरंगैर्गात्रवेष्टनैः
श्वेतताम्बूलक्रमुकैः लिकुचैर्यन्त्रपक्षिभिः ७
सुगन्धपुष्पदामैश्च मुक्तादामैः प्रलम्बयेत्
कदळीस्तंभदीपैश्च मण्डपं भूषयेद्बुधः ८
गोमयालेपनं तत्र पुनः पुण्याहमाचरेत्
नदीमध्ये प्रपां कृत्वा सर्वालंकारशोभितम् ९
पुष्पपुष्करिणीं कल्प्य तदग्रे तु विशेषतः
चतुर्द्वारसमायुक्तं तीरद्वयसमन्वितम् १०
मध्ये तीरस्य परितः स्थापयेत्पुष्पमल्लिकाम्
एवं मण्डपमापाद्य पश्चात्कर्म समारभेत् ११
तद्दिनात्पूर्वरात्रे तु महेशं पूजयेद्बुधः
पंचगव्यामृतैः स्नाप्य स्नपनोरभिषेचयेत् १२
दत्वा तस्यैव नैवेद्यं धूपदीपादिकं ददेत्
वसन्तयानं विज्ञाप्य यथा वित्तानुसारतः १३
तीर्थाधिवासनं कुर्यात् पूर्वोक्तविधिना कुरु
श्वेतलाजं गृहीत्वाथ संस्थाप्य नवमृद्घटे १४
मुखं वस्त्रेण संवेष्ट्य कुम्भाग्रे तु विनिक्षिपेत्
एवं रात्रौ प्रकर्तव्यं प्रभाते स्नानमाचरेत् १५
नित्यपूजावसाने तु सर्वालंकारसंयुतम्
शिबिकोर्ध्वे समारोप्य ग्रामप्रदक्षिणं कुरु १६
वसन्तरंगमाविश्य चन्दनैर्हिमतोयकैः
वेदिकायां समालिप्य शिबगायत्रिमंत्रतः १७
वसन्तरंगं परितो जलैस्सेकं समाचरेत्
स्नानमण्डपमासाद्य स्नानवेद्युपरि न्यसेत् १८
पंचगव्यामृतेनैव स्नपनैरभिषेचयेत्
सर्वोपचारं कर्तव्यं चक्रवर्त्युपचारकैः १९

दत्वा नैवेद्यकं शंभोः धूपदीपादिकं ददेत्
द्विजादिसर्वभक्तानां भोजनं दापयेत्ततः २०
वेदिकोर्ध्वे समारोप्य तत्र सिंहासनोपरि
वसन्तं दक्षिणेऽभ्यर्च्य मन्मथं चोत्तरे यजेत् २१
अन्यमारुतमुद्वास्य तदग्रे स्थण्डिलं कुरु
तस्योर्ध्वे स्थापयेत्कुंभं जलेनापूर्य देशिकः २२
चन्दनं रात्रिचूर्णं च चन्द्रं मृगमदं तथा
काश्मीरं हिमतोयं च कुंभमध्ये विनिक्षिपेत् २३
पाटकी शतपत्री च मन्दारं बकुलं तथा
मल्लिकार्जुनपुष्पं च अस्त्रमंत्रैः प्रदापयेत् २४
भूतियोष्ठौ तु संस्थाप्य वामादीनां सुपूजयेत्
वंशाष्टकौ तु संस्थाप्य विद्येशान्संप्रपूजयेत् २५
मध्ये गंगां समभ्यर्च्य तज्जलेनैव पूरयेत्
मृतयोष्टौ समुद्धृत्य देवीहस्ते प्रदापयेत् २६
शिवगायत्रिमंत्रेण देवीलीलां समाचरेत्
वंशाष्टकान्समुद्धृत्य शिवहस्ते प्रदापयेत् २७
परिवेषक्रमेणैव स्थित्वा चोभयं ततः
वसन्तनृत्तगानैश्च संतोष्य परमेश्वरम् २८
वसन्तपुष्पर्ययने संतोष्य शिवया सह
ततो भक्तजनास्सर्वे धृतिलीलां समाचरेत् २९
एवं मध्याह्नवेलायां संतोष्य परमेश्वरम्
तथापराह्नसमये जलक्रीडां समाचरेत् ३०
शिबिकोर्ध्वे समारोप्य प्रपाम्यन्तरमाविशेत्
पुष्पपुष्करिणी मध्ये तीर्थोदैरभिषेचयेत् ३१
ततो लाजं गृहीत्वाथ शालिभिः स्थण्डिलं कुरु
सुगन्धं मध्यमे न्यस्त्वा तैलमैन्द्रे तु विन्यसेत् ३२
सुगन्धिकमलं लिप्य श्रुकेनैवाभिषेचयेत्
चन्दनेन समालिप्य पूर्ववत्स्नानमाचरेत् ३३
ततो भक्तजनान्सर्वान् शुकलीलां समाचरेत्

जलक्रीडावसाने तु स्नपनैरभिषेचयेत् ३४
संवत्सरकृतं पापं स्नपनेनैव नश्यति
नैवेद्यं दापयेच्छम्भोः धूपदीपादिकं ददेत् ३५
ग्रामप्रदक्षिणं कृत्वा विशेदास्थानमण्टपम्
नीरांजमं ततो दत्वा नृत्तवाद्यैश्च तोषयेत् ३६
यात्रार्थस्नपनं कृत्वा भूरिपान्नं निवेदयेत्
एवं दिने दिने कुर्याद् वसन्ताख्यं तदुत्सवम् ३७
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात्
इति सूक्ष्मशास्त्रे वसन्तोत्सवविधिः द्वाविंशतिः पटलः

शीतकुंभविधिं वक्ष्ये शृणुष्वैतत्प्रभंजन
अर्थार्थं च जयार्थं च विशेषाज्ज्वरनाशनम् १
दुर्भिक्षे दुर्निमित्ते च महामारी प्रवर्तने
भूमिकम्पे दिशादाहे प्रतिसूर्यप्रदर्शने २
एवमादिषु कालेषु शीतकुम्भं समाचरेत्
चैत्रमासे च वैशाखे फल्गुने वा विशेषतः ३
राज्ञश्च जन्मनक्षत्रे मासऋक्षेऽथवा पुनः
चतुर्दश्याममावास्यां पंचम्यां वा विशेषतः ४
अथशुक्रेन्दुवारैश्च गुरुवारैस्समाचरेत्
याज्ञिकं वृक्षमादाय पूर्वोक्तविधिना सह ५
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
वितानध्वजसंयुक्तं दर्भमालाभिरावृतम् ६
मण्टपस्य तु तन्मध्ये वेदीं कुर्याद्विधानतः
स्थण्डिलं कारयेद्विद्वांस्तन्मध्येब्जं समालिखेत् ७
स्थण्डिलं गन्धपुष्पाद्यैः पूजयेद्धृदयेन तु
नव कुम्भान्समादाय क्षाळयेदस्त्रमंत्रतः ८
क्षीरेण मधुनाज्येन पूरयेद्गन्धवारिणा
इक्षुसारेण वा कुर्याद् हेमं तत्रैव निक्षिपेत् ९
गन्धैः पुष्पैश्च धूपैश्च नैवेद्यान्तं विशेषतः

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् १०
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्
एवं जागरणं रात्रो प्रभाते देशिकोत्तमः ११
नित्यपूजावसाने तु कुम्भारोहणमारभेत्
नैमित्तिकं महं चेद्धि महदादौ समाचरेत् १२
गव्यैस्संस्नापयेद्देवं पंचब्रह्ममनुस्मरन्
गन्धपुष्पादिनाभ्यर्च्य धर्मादीनि यथाक्रमम् १३
धामप्रदक्षिणं कुर्यात् सर्वातोद्यसमन्वितम्
कुंभानुद्धृत्य शिरसा त्रिपादूर्ध्वे तु विन्यसेत् १४
मासं वाप्यर्धमासं वा पंचाहं त्रियहं तु वा
एकाहं वा विशेषेण कारयेद्देशिकोत्तमः १५
दिवारात्रं शिवं मूर्ध्नि स्नावयेत्कुंभपृष्ठतः
अभिषेकार्चनं सौम्ये हविष्याशोर्ध्ववक्त्रके १६
यात्रस्नानार्चनं सौख्यं नैवेद्यं नरवस्त्रके
अव्यव्यत्राभिषेकं च अर्चनं सौख्यकं हृदि १७
सौख्यं नैवेद्ययानं च स्नानमर्चनगुह्यके
अर्चनं सौख्यनैवेद्यं यात्रास्नानं च सद्यके १८
एवं विधिं समालोक्य पूजयेत्तु दिने दिने
सद्यं वा घोरवस्त्रं वा पुरुषं वाममेव च १९
द्वारमाश्रित्य यद्वक्त्रं तदा नैवेद्यसंयुतम्
तदासंपूजयेद्विद्वान् नित्यं चैव विधानतः २०
अत्रानुक्तं तु यत्सर्वं जलधारोक्तमाचरेत्
अर्चनोक्तं समभ्यर्च्य हव्यं दद्याद्विशेषतः २१
आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुळीयकैः
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् २२
इति सूक्ष्मशास्त्रे शीतकुम्भविधित्रयोदशः पटलः

११
पवित्रारोहणं वक्ष्ये शृणुष्वैतत्प्रभंजन

मनसा कर्मणा वाचा यन्न्यूनं कर्मणावपि १
पतनात्त्रायते यस्मात् पवित्रकमिहोच्यते
स्वसिद्धिं सर्वसिद्धिं च द्वयं स्यात्तु पवित्रकम् २
आत्मार्थं यजनं कुर्यात् स्वसिद्धिरिति चोच्यते
पराथेप्यर्चयेद्धीमान् सर्वसिद्धिरिति स्मृतम् ३
एतेषां सर्वसिद्धैव पूजापक्षे यथाक्रमम्
आषाढे श्रावणे मासे प्रोष्ठमासे तथैव च ४
अश्विनी कृत्तिकामासे पवित्रारोहणं कुरु
पूर्वपक्षे चतुर्दश्यां आषाढे च पवित्रकम् ५
अन्येषु सर्वमासेषु पक्षयोः सितकृष्णयोः
चतुदश्यामथाष्टम्यां पवित्रं विधिवत्कुरु ६
कृत्तिकादीपतः पश्चाद् नाचरेत्तु पवित्रकम्
क्षौमं कार्पासकं वाथ सूत्रलेपं परिग्रहेत् ७
त्रिगुणं त्रिगुणीकृत्य अस्त्रमंत्रेण शोधयेत्
रोमाद्यं तु विसृज्याथ क्षाळयेदस्त्रमंत्रतः ८
शोषणं हृदयेनैव पवित्रं कारयेत्सुधीः
वामाद्यानवशक्तिश्च नवसूत्राधिदेवताः ९
तन्तुना त्रिगुणीकृत्य दशवृध्या ततः क्रमात्
शतमष्टोत्तरं चैव तन्तूनामुत्तमं भवेत् १०
तन्तुना द्वादशेनैव द्वादशादित्यदैवतम्
पंचाशात्तन्तु संख्याता तन्तुना मध्यमा मता ११
तन्तुना तिथिसंख्याता त्रिमूर्तिरधिदेवताः
पंचविंशति संख्याता तन्तुना कन्यसा स्मृता १२
अथवान्यप्रकारेण तन्तुसंख्यां शृणुष्वथ
एकाद्येकैकवृध्या तु तन्तुना त्विष्टसंख्यया १३
ग्रन्थयस्तन्तुसंख्याता यथेष्टग्रन्थिसंयुता
एकद्वित्र्यंगुलं वापि ग्रन्थिमानं प्रकल्पयेत् १४
ग्रन्थयस्त्विष्टदेशे वा कल्पयेत्कल्पवित्तमः
एभिर्लक्षणसंयुक्तं कुर्याद्गन्धपवित्रकम् १५

महापवित्रं वक्ष्यामि गंगा गौरीवतारकम्
पंचग्रन्थिसमायुक्तमामंत्रिणपवित्रकम् १६
दूर्वाक्षतैस्समभ्यर्च्य तस्मान्नित्यपवित्रकम्
गैरिकागरुकाश्मीरचन्दनैरक्तचन्दनैः १७
हरिद्राकृष्णकतरैः रंजयेद् ग्रन्थिमध्यमे
ग्रात्मविद्याशिवेनैव त्रितयं लिंगमूर्धनि १८
पवित्रं पिण्डकेत्वेवं परिवारामरादिषु
पवित्रमेकं कर्तव्यं महेशे तद्विशेषतः १९
शिरो माला उरो माला बाहुमालोपवीतकम्
मणिबन्धाक्षमाला च सकळेऽप्येवमाचरेत् २०
पवित्रमेकं सर्वेषां ग्रल्पतन्तुविधीयते
प्रासादं यागशालाय प्राकारं पचनालयम् २१
त्रिगुणं त्रिगुणीकृत्य तन्तुना वेष्ट्य देशिकः
निश्चित्यदिवसात्पूर्वे ग्रंकुरार्पणमाचरेत् २२
प्रासादस्याग्रदेशे वा उत्तरे दक्षिणेऽपि वा
रुद्रहस्तं समारभ्य द्विद्विहस्तविवर्धनात् २३
प्रयोविंशत्करान्तं च समं च चतुरश्रकम्
तत्त्रिभागैकभागेन वेदिकां संप्रकल्पयेत् २४
हस्तमानं तदुत्सेधं दर्पणोदरसंनिभम्
वेदिकायां पुरो भागे कुण्डं कुर्यात्सलक्षणम् २५
सर्वालंकारसंयुक्तं मण्डपं भूषयेत्सुधीः
गोमयालेपनं कृत्वा पुण्याहं प्रोक्षणं कुरु २६
शालिभिः स्थण्डिलं कृत्वा तन्मध्येब्जं समालिखेत्
तण्डुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत् २७
पंचचूर्णैरलंकृत्य ग्राचार्यः स्नानमाचरेत्
सकळीकरणं कृत्वा सामान्यार्घ्यं च दापयेत् २८
तद्दिनस्य तु पूर्वेद्युः ग्रधिवासनमारभेत्
पंचागव्यामृतेनैव स्नपनैरभिषेचयेत् २९
नैवेद्यं दापयेच्छंभोः धूपदीपादिकं ददेत्

देवदेवं नमस्कृत्वा ज्ञापयेत्तु पवित्रकम्  ३०
मण्टपं तु समभ्यर्च्य भान्वादिगुरुरन्तकम्
वेदिकोर्ध्वे शिवं यष्ट्वा परिवारसमन्वितम्  ३१
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत्
अष्टमंगळरूपाणि वेदिबाह्ये समर्चयेत्  ३२
शिवकुम्भस्य मध्ये तु स्थापयेत्तु पवित्रकम्
संस्थाप्योदकेनैव प्रोक्ष्यसंहितयाणुभिः  ३३
कुम्भस्योत्तरदेशे तु न्यसेद्गन्धपवित्रकम्
आमन्त्रणपवित्रं तु कुम्भस्याग्रे विनिक्षिपेत्  ३४
कुम्भस्य पश्चिमे भागे न्यसेन्नित्यपवित्रकम्
अस्त्रेणैव तु संप्रोक्ष्य कवचेनावगुण्ठयेत्  ३५
अभ्यर्च्य हृदयेनैव धेनुमुद्रां प्रदर्शयेत्
नववस्त्रेण संछाद्य बहुरूपमनुस्मरन्  ३६
मण्डलस्थं शिवं यष्ट्वा पश्चिमे तु विशेषतः
पद्मं वा स्वस्तिकाभं वा गौरीतिलकमेव वा  ३७
लिंगे वा षण्णवत्या वा मण्डले तु समर्चयेत्
कर्त्रिका दन्तकाष्ठं च तालुशोधनमेव वा  ३८
सूचिका श्रोत्रशोधी च नखशोधनमेव च
पूर्वभागे न्यसेद्धीमान् पौरुषं मंत्रमुच्चरन्  ३९
कौपीनं खण्डवस्त्रं च तैलमामलकं तथा
रजनीं पंचगव्यं च पंचामृतं च दक्षिणे  ४०
बहुरूपमनुस्मृत्य अर्चयेद्देशिकोत्तमः
ईक्षाहरं यूकहरं केशशोधनमंजनम्  ४१
वस्त्रं यज्ञोपवीतं च पुष्पमाभरणं तथा
चन्दनं पश्चिमे देशे स्थापयेत्सद्यमंत्रतः  ४२
ओड्याणं योगपट्टं च भिक्षापात्रं कमण्डलुम्
व्याघ्राजिनं वेणुदण्डं चामरं छत्रदर्पणम्  ४३
भसितं पादुकं चैव मात्रादण्डं च खड्गकम्
उत्तरे विन्यसेद्धीमान् वामदेवमनुस्मरन्  ४४

अस्त्रमंत्रैस्समभ्यर्च्य पश्चात्कुण्डान्तिकं विशेत्
अग्निकार्योक्तमार्गेण अग्निकार्यं समाचरेत् ४५
समिदाज्यचरून्लाजान् तिलापूपफलांस्तथा
मुद्गं गौळं यवं चैव सक्थुसर्षपमेव च ४६
संहितेनैव जुहुयात् मूलेन सर्षपं हुनेत्
स्थालीपाकविधानोक्तमार्गेणैव चरुं पचेत् ४७
चरुं त्रिभागतः कृत्वा शिवांशं त्वग्निभागतम्
बल्यर्थं स्यादथैकांशं कल्पयेत्कल्पवित्तमः ४८
द्रव्यान्ते व्याहृतिं हुत्वा अस्त्रेणैव शतं हुनेत्
सौरादिगुरुपर्यन्तं दद्यान्नित्यपवित्रकम् ४९
द्वारदेवान्समभ्यर्च्य स्वनाम्नैव प्रदापयेत्
आमंत्रिण पवित्रं तु दद्याल्लिंगस्य मूर्धनि ५०
परिवारामरादीनां दद्यान्मन्त्रपवित्रकम्
निवेदयेच्छिवांशं तु गन्धपुष्पैस्समर्चयेत् ५१
अघोरेण शतं हुत्वा अस्त्रेणैव शतं हुनेत्
मूलेनाष्टशतं हुत्वा स्पृष्ट्वा गन्धपवित्रकम् ५२
भान्वादिचण्डपर्यन्तं दद्याद्गन्धपवित्रकम्
सर्वालंकारसंयुक्तं सर्ववाद्यसमन्वितम् ५३
दीपज्वालासमायुक्तं हर्म्यप्रदक्षिणं कुरु
द्वारपालान्समभ्यर्च्य दद्याद्गन्धपवित्रकम् ५४
स्वनाममंत्रैरभ्यर्च्य प्रविशेद्गर्भगेहकम्
पाद्यमाचमनं दत्वा मूलमंत्रेण देशिकः ५५
दद्याद्गन्धपवित्रं तु धूपदीपादिकं ददेत्
पश्चान्नित्याग्निकार्यादि संध्याशेषं समाचरेत् ५६
एवं रात्रौ प्रकर्तव्यं प्रभाते स्नानमाचरेत्
सकळीकरणं कृत्वा सामान्यार्घ्यं करो गुरुः ५७
संप्रोक्ष्य बहुरूपेण वस्त्रमण्डवरोपयेत्
तानीशमण्डले पात्रे चण्डेशार्थं प्रगृह्यताम् ५८
अष्टपुष्पिकया देवं समभ्यर्च्य यदाणुभिः

यागशालां प्रविश्याथ सकळीकरणं कुरु ५९
सामान्यार्घ्यं तु संकल्प्य प्रोक्षयेदस्त्रमंत्रतः
भान्वादिगुरुपर्यन्तं अर्चयेद्देशिकोत्तमः ६०
कुण्डमस्त्रेण संप्रोक्ष्य हृदयेन समर्चयेत्
पूजयेद्वस्त्रमंत्रेण घोरेणाष्टशतं हुनेत् ६१
अस्त्रेणैव शतं हुत्वा स्पृष्ट्वा गौरीवतारकम्
मूलेनाज्येन जुहुयात् संपातं पंचविंशतिः ६२
सर्वद्रव्यं समाहृत्य स्विष्टंकृद्धोममाचरेत्
नैवेद्यं कारयेच्छंभोः धूपदीपादिकं ददेत् ६३
भान्वादिगुरुपर्यन्तं दद्याद्गौरिवितारकम्
ब्रह्मकुम्भे च वर्धन्यां दद्याद्गौरिवितारकम् ६४
पंचगव्यामृतं कल्प्य स्नपनं कल्प्य देशिकः
विघ्नेश्वरं समभ्यर्च्य द्वारदेवान्समर्चयेत् ६५
गर्भगेहं प्रविश्याथ लिंगं पीठस्थलेन च
क्षाळनं चास्त्रमंत्रेण शिवमंत्रैस्समर्चयेत् ६६
पूर्वभागस्थितं द्रव्यं आनीयान्तः प्रविश्य च
कर्त्रिकां हृदयेनैव दद्यात्तेनैव देशिकः ६७
शिरसा दन्तकाष्ठं च शिखया तालुशोधनम्
सूचिकां कवचेनैव नेत्रेण श्रोत्रशोधनम् ६८
न स्वश्मेधनमस्त्रेण दद्यात्तु देशिकोत्तमः
दक्षिणे स्थापितां द्रव्यान् आनीयान्तः प्रविश्य च ६९
ईक्षाहारं हृदा चैव यूकाहारास्त्रमंत्रतः
दद्यादघोरमंत्रेण केशशोधनमंजनम् ७०
युवं वस्त्रेति मंत्रेण वस्त्रेणाच्छादयेत्प्रभुम्
यज्ञोपवीतं हृदया पुष्पमाभरणं तथा ७१
चन्दनेन समालिप्य गन्धद्वारेति मंत्रतः
नैवेद्यं दापयेच्छंभोः धूपदीपादिकं ददेत् ७२
पश्चान्मण्टपमाविश्य हृदा वै षोडशं हुनेत्
परिचारकमाहूय सोष्णीषं सोत्तरीयकम् ७३

पवित्रं वाहयित्वा तु सर्वालंकारसंयुतम्
हर्म्यं प्रदक्षिणं कृत्वा द्वारदेशं प्रविश्य च ७४
द्वारदेवान्समभ्यर्च्य दद्याद्गौरिवतारकम्
गर्भगेहं प्रविश्याथ पूजयेत्परमेश्वरम् ७५
आत्मविद्या शिवा त्वेके दद्याद्गौरिवतारकम्
शंखघोषैस्समायुक्तं सर्वालंकारशोभितम् ७६
महेशप्रतिमादीनां परिवारामरादिषु
प्राग्द्वारे बलिपीठे च दद्याद्गंगावतारकम् ७७
प्रभूतहविषं दद्याद् धूपदीपादिकं ददेत्
ओड्याणमीशमंत्रेण योगवेष्टं पुरुषेण तु ७८
भिक्षापात्रमघोरेण वामेनैव कमण्डलुम्
व्याघ्राजिनं तु सद्येन हृदयाच्छत्रदण्डकम् ७९
चामरं शिरसा चैव छत्रं वै शिखयाणुना
भसितं कवचेनैव पादुकं नेत्रमंत्रतः ८०
मात्रादण्डमथास्त्रेण खड्गं मूलेन दापयेत्
दद्यान्नित्यपवित्रेण अस्त्रमंत्रेण देशिकः ८१
पश्चान्नित्याग्निकार्यादिसंध्याशेषं समाचरेत्
महेश्वरं समभ्यर्च्य गन्धपुष्पस्त्रगादिभिः ८२
सर्वालंकारसंयुक्तं बल्यन्ते चोत्सवं कुरु
एकाहं त्रियहं वापि पंचसप्तनवाहकम् ८३
एवमेव दिनं कुर्याद् यानमेकं समाचरेत्
लिंगात्पवित्रमुद्वास्य क्षाळयेदस्त्रमंत्रतः ८४
तेन मंत्रेण जुहुयात् समिदाज्यान्नकैस्सह
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ८५
एवं दिने दिने कुर्यात् क्रियामेनां समाचरेत्
अवरोहदिने प्राप्ते नित्यपूजां समाचरेत् ८६
जयादिरभ्याधानं च राष्ट्रभृद्धोममाचरेत्
कुण्डेष्वग्निं विसृज्याथ कुम्भमध्ये तु योजयेत् ८७
पश्चात्कुंभं समुद्धृत्य गर्भगेहं प्रविश्य च

संस्नाप्य देवदेवेशं प्रभूतहविषं ददेत् ८८
तद्रात्रावेव कर्तव्यं दद्याच्चण्डपवित्रकम्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः ८९
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इति सूक्ष्मशास्त्रे पवित्रविधिः चतुर्विं शतिपटलः

१२

स्नपनस्य विधिं वक्ष्ये शृणुष्वैतत्प्रभञ्जन
फाल्गुने चैव वैशाखे मघर्क्षे स्नानमाचरेत् १
कर्तुर्जन्मर्क्षके वाथ नृपजन्मर्क्षकेऽपि वा
अन्यत्पुण्यदिने वापि स्नानकर्म समाचरेत् २
पूर्ववन्मण्टपं कल्प्य सर्वलक्षणसंयुतम्
विस्तारं सप्तहस्तं स्याद् समं च चतुरश्रकम् ३
सर्वालंकारसंयुक्तं मण्डपं भूषयेद्बुधः
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ४
मंगळाष्टकसंयुक्तं दर्भमालाभिरावृतम्
गोमयालेपनं कृत्वा सूत्रन्यासं तु कारयेत् ५
प्रागग्रमनुसंख्या च उदगग्रं तथैव च
सूत्रात्सूत्रान्तरं ताळं कल्पयेत्कल्पवित्तमः ६
पंचपंचपदं मध्ये बाह्ये त्वेकपदे त्यजेत्
कोणेऽनन्तपदं ग्राह्य मध्ये अर्कपदं ग्रहेत् ७
स्थण्डिलं कल्पयेत्तत्र अष्टद्रोणैश्च शालिभिः
तण्डुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत् ८
नैवेद्यं दापयेच्छम्भोः स्नानं विज्ञाप्य देशिकः
महेशं पूजयेद्विद्वान् गन्धपुष्पस्त्रगादिभिः ९
शिबिकोर्ध्वे समारोप्य ग्रामप्रदक्षिणं कुरु
स्नानार्थमण्टपं चैव वसं लिस्त्वेन्द्रदेशिके १०
एकत्र स्थण्डिलं कल्प्य स्थापयेत्कलशान्पृथक्
आवाहनादि धूपान्तं अर्चनादि यथाक्रमम् ११

स्थण्डिले स्थापयेत्पश्चाद्द्वियोगमिति कठ्यते
नवाधिकशतान्कुम्भानुपकुम्भसमन्वितान् १२
पं द मध्ये स्थितान्कुंभान्सूत्रमध्योपकुम्भकान्
शिवकुम्भस्य वर्धन्यामुपकुम्भं विसर्जयेत् १३
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
सकूर्चान्हेमसंयुक्तान् फलपल्लवसंयुतान् १४
मध्यमे शिवकुम्भं तु वर्धनीं तस्य वामके
संस्थाप्य कलशनष्टौ विद्येशान्संप्रपूजयेत् १५
सर्षपं तिलबिल्वं च जम्बीरं वकुळं तथा
यवैर्गोजिश्च वामं च प्रथमावरणे न्यसेत् १६
सक्थुकं कृसरं गन्धं कोष्ठं मृगमदं तथा
कच्चोलं चन्द्रकं पत्रं केसरं हरिबेरकम् १७
दान्तं मांचीमुरुं चैव शमी दूर्वा तृणं तथा
द्वितीयावरणे स्थाप्य लोध्रं नीलोत्पलं तथा १८
चम्पकं चोत्पलं चैव किन्वेषी रक्तसीसकः
विष्णुक्रान्तिरपामार्गं धूर्धूरं चतुरंगुलम् १९
पुन्नागं नन्दिकावर्तं तृतीयां वरणे न्यसेत्
जाती च सहदेवी च श्रियावर्तं तथैव च २०
भूपाटली च तुळसी शातकी मल्लिका तथा
कुरवं च शतावेरी गोक्षुरा पनसं तथा २१
वैजिका मालती चैव सहभद्रा तथैव च
कुरवन्दमिन्द्रवल्ली श्वेतपद्मं च पाटली २२
हरीतकी चामलकी व्याघ्री चन्दनकुन्दुकम्
कीतकं शोकतण्डुल्यं नवनीतं तथैव च २३
रजनी चैव तक्कोलं मञ्जुषी नागकेसरम्
चतुर्थावरणे स्थाप्य अश्वत्थं गुग्गुलं तथा २४
एलं जीरकसंयुक्तं कृष्णजीरकमेव च
सितकाश्मीरमेघं च कृष्णागरुं च रोचना २५
श्रीवेष्टकं बन्धरसं पिप्पलं हस्तिपिप्पलम्

हरितारं मनः शैलं रक्तचन्दनमेव च २६
कामधूवनिकं लोध्रं भस्मं च कालमेषिका
क्षौद्रकमिक्षुसारं च कदळीफलमेव च २७
लाजं कराडुरुकं चैव यवं सक्थुकमेव च
द्रव्यक्रममिदं प्रोक्तं देवतानामथोच्यते २८
महादेवश्शिवो रुद्रः शंकरो नीललोहितः
ईशानो विजयो भीमो देवदेवो भवोद्भवः २९
कपाली भीषणश्चैव प्रकटो विकटाननः
स्कन्दस्य दुर्गाश्चराडं च द्वितीयावरणे न्यसेत् ३०
वैकर्तनो विवस्वांश्च मार्ताराडो भास्करो रविः
लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमः ३१
आदित्यस्सूर्यकश्चैव अंशुमाली दिवाकरः
तृतीयावरणे पूज्य स्वनामंत्रेण देशिकः ३२
शर्वः पशुपतिश्चोग्रो रुद्रश्चैव भयस्तथा
ईशानश्च महादेवो विघ्नेशं स्कन्दमेव च ३३
नन्दिनं च महाकाळं भृंगीशश्चराडमूर्तिनः
वृषभस्कन्ददेवश्च देवीं प्रचराडभैरवम् ३४
धारो ध्रुवश्च सोमश्च सोमः स्वापनिलोनलः
प्रत्यूषश्च प्रभासश्च महाशान्तः सुरेश्वरः ३५
भद्रा जया मन्दभी च कार्तिकेयो गजाननः
गंगा च यमुना चैव निर्मदा च सरस्वती ३६
चतुर्थावरणे स्थाप्य अर्चयेत्स्वस्वनामतः
वामाज्येष्ठा च रौद्री च काळीं चापि तथैव च ३७
कलविकरिणीं बलविकरिणी बलप्रमथिनी तथा
सर्वभूतदमनी चैव स्वधा स्कन्दं तथैव च ३८
शालिनी ज्वालिनी कृष्णा श्रुतिकामः स्मृतिप्रजः
सहस्रांगी भूषणी चैव पुष्पिणी भृंगुणी तथा ३९
श्रीकराठशाक्तिनी देवी शाक्तिनी भूषिणी तथा
सहस्रांगी उषादेवी भक्षणी शंखिनी तथा ४०

सिद्धिमध्यक्षमा मधा कान्तिः स्वाहा स्वधा प्रजा
भूमिस्वाहास्वधा चैव कान्तिः पुष्टिः श्रुतिस्तथा ४१
कृत्तिमेधा स्वधा प्रोक्ता पंचमावरणे न्यसेत्
ऋगाद्यध्ययनं कुर्याद् चतुर्दिक्षु विशेषतः ४२
नैवेद्यं दापयेद्धीमान् धूपदीपादिकं ददेत्
अग्निकार्योक्तमार्गेण अग्निकार्यं समाचरेत् ४३
समिदाज्य चरुं लाजान्सर्षपांश्च यवांस्तिलान्
होमद्रव्यक्रमं लब्ध्वा सद्यादि च शिरोन्तकम् ४४
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ४५
पश्चादग्निं विसृज्याथ कुम्भे शम्भुं समर्चयेत्
गन्धतैलं समभ्यर्च्य शंखध्वनि समन्वितम् ४६
सर्वालंकारसंयुक्तं स्नानमण्टपमाविशेत्
पुण्याहं वाचयित्वाथ गन्धतैलाभिषेचयेत् ४७
भस्मानं तु समालिप्य बिल्वपत्रैर्विभूषयेत्
मृदोदकेन संस्नाप्य पिष्टैरामलकेन तु ४८
आलिप्य देवदेवेशं गन्धतोयाभिषेचयेत्
पंचगव्यामृतैः स्नाप्य दुग्धेनैवाभिषेचयेत् ४९
शुद्धतोयेन संस्नाप्य गन्धपुष्पैः समर्चयेत्
शिवकुम्भं समुद्धृत्य प्रथमावरणान्वितम् ५०
सर्वालंकारसंयुक्तं स्नानमण्टपमाविशेत्
धूपदीपादिकं दत्वा संस्नाप्य कलशोदकैः ५१
पायसान्नं ददेच्छंभोः धूपदीपादि दर्शयेत्
दधिक्षीरं घृतं क्षौद्रं स्नापयेत्परमेश्वरम् ५२
शुद्धोदकेन संस्नाप्य द्वितीयावरणोदकैः
संस्नाप्य देवदेवेशं कृसरान्नं निवेदयेत् ५३
शर्करेण समालिप्य नारिकेळं च विन्यसेत्
धूपदीपादिकं दत्वा इक्षोदैरभिषेचयेत् ५४
शुद्धोदकेन संस्नाप्य तृतीयावरणोदकैः

अभिषिच्याथ यथान्यायं गुळान्नं च निवेदयेत्  ५५
फलेनापूर्य देवेशं क्षौद्रेणैव तु सेचयेत्
धूपदीपादिकं दत्वा नाळिकेरोदकेन तु  ५६
संस्नाप्य देवदेवेशं गन्धतोयाभिषेचयेत्
चतुर्थावरणे स्नाप्य मुद्गान्नं च निवेदयेत्  ५७
चन्दनेन समापूर्य धारां मृगमदेन तु
धूपदीपादिकं दत्वा हिमतोयाभिषेचयेत्  ५८
संस्नाप्य शुद्धतोयेन पंचमावरणोदकैः
संस्नाप्य देवदेवेशं हरिद्रान्नं निवेदयेत्  ५९
धूपदीपादिकं कृत्वा पश्चान्मण्टपमाविशेत्
सर्वालंकारसंयुक्तं भूषयेद्भूषणार्हकैः  ६०
राजोपचारवत्सर्वं  देवेशाय प्रदापयेत्
प्रभूतहविषं दत्वा ताम्बूलं च निवेदयेत्  ६१
धूपदीपादिकं दत्वा नृत्तवाद्यैश्च घोषयेत्
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम्  ६२
धूपदीपसमायुक्तं मूलस्थाने प्रवेशयेत्
भक्तानां परिचाराणां यथा शक्ति प्रपूजयेत्  ६३
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्  ६४
इति सूक्ष्मशास्त्रे स्नपनकर्मविधिपंचविंशतिपटलः

१३

घटस्नानं प्रवक्ष्यामि शृणुष्वैतत्प्रभंजन
सर्वरोगविनाशार्थं  महामारीविनाशनम्  १
अपमृत्युविनाशार्थं  राष्ट्रदुर्भिक्षनाशनम्
जयार्थं  चैव श्रेयार्थं  सर्वसिद्धिकरं शुभम्  २
नृपाणां जन्मनक्षत्रे अभिषेकर्क्षयापि वा
भजनारम्भावसाने तु युद्धारम्भावसानके  ३
अन्यस्मिन्मंगळे काले यथा कर्तुमनोरमे
निश्चित्य दिवसात्पूर्वे भूसुरान्भोजयेत्ततः  ४

तद्दिनेनैव कर्तव्यं पूर्वसंध्यावसानकम्
आचार्यः स्नापयेद्धीमान्सोष्णीषं चोत्तरीयकम् ५
विघ्नेशं पूजयेत्पूर्वं संकल्प्य इति सिद्धिमान्
पुण्याहं वाचयित्वा तु पंचगव्यामृतेन तु ६
स्नपनं कारयेच्छम्भोः शान्तिहोमं समाचरेत्
द्वारपूजां समभ्यर्च्य स्थान शुद्धिं ततः कुरु ७
लिंगशुद्धिं ततः कुर्यादासनं मूर्तिमूलकम्
पंचब्रह्मषडंगं च मंत्रपुष्पं च धूपकम् ८
गन्धं पुष्पं च माल्यं च हेमतोयाभिषेचनम्
पायसान्नं ददेच्छम्भोः घटस्नानं प्रपूजयेत् ९
दशस्सन्धिपृथक्कुर्याद्द्रव्यं प्रति विशेषतः
पूर्वोक्तेन प्रमाणेन तद्धटं द्रोणपूरितम् १०
शिवाग्रे गर्भगेहे तु स्थण्डिलं शालिभिः कुरु
तण्डुलैश्च तिलैश्चैव दर्भैः पुष्पैः परिस्तरेत् ११
धूपधूम्रेण पूरित्वा जलद्रोणीं च पूजयेत्
तन्तुना वेष्टयेद्धीमान् नव वस्त्रैस्सकूर्चकम् १२
सप्ततीर्थेन चावाह्य जलद्रोणीं च पूजयेत्
कुंकुमागरुकर्पूरकस्तूरीचन्दनादिकान् १३
प्रथमसंधिपूजायां दीपमारोपयेच्छतम्
स्नानद्रव्यं च पयसा घटस्नानं शतं भवेत् १४
निवेद्यं पायसान्नं च पंकजं पुष्पमर्चयेत्
सद्योजातेन मंत्रेण वेष्टयेन्नववस्त्रकम् १५
धूपदीपं ददेत्पश्चाद् तृप्तिरर्घ्यं तु विन्यसेत्
द्वितीयसंधिरः कृत्वा दीपमारोपयेच्छतम् १६
स्नानद्रव्यं दधिं चैव घटस्नानं शतं भवेत्
गुळान्नं च निवेद्यं च करवीरेण पुष्पकम् १७
शुभमंत्रमनुस्मृत्य नववस्त्रेण वेष्टयेत्
धूपदीपं ददेच्छंभोः तृप्तिरर्घ्यं प्रदापयेत् १८
त्रिसंध्यं चैव कर्तव्यं दीपमारोपयेच्छतम्

स्नानद्रव्यघृतं चैव घटस्नानशतं क्रमात्  १९
कृसरान्नं निवेद्यं च नीलोत्पलस्य पुष्पकम्
बहुरूपमनुस्मृत्य नववस्त्रेण वेष्टयेत्  २०
धूपदीपं ददेद्धीमान् तृप्तिरर्घ्यं प्रदापयेत्
षट्संध्यां चैव कर्तव्यं दीपमारोपयेच्छतम्  २१
स्नानद्रव्यगुळं चैव घटस्नानं च पूर्वकम्
पाटलीपुष्पमभ्यर्च्य घृतान्नं च निवेदयेत्  २२
हृदयेनैव मंत्रेण नववस्त्रेण संयुतम्
घूपदीपं ददेद्धीमान् निरोधार्घ्यं प्रदापयेत्  २३
सप्तसंधिक्रमेणैव दीपं पूर्ववदाचरेत्
नाळिकेरोदकैः स्नाप्य घटस्नानशतं भवेत्  २४
बिल्वपत्रैः समभ्यर्च्य शिरसेन तु मंत्रतः
हरिद्रान्नं निवेद्यं च नववस्त्रेण संकुलम्  २५
धूपदीपं ददेद्धीमान् तृप्तिरर्घ्यं ददेत्प्रभुः
अष्टसंधिक्रमेणैव दीपमारोपयेच्छतम्  २६
स्नानं फलं फलेनैव घटस्नानं शतं क्रमात्
अर्चयेद्रक्तपुष्पं स्यात् दध्यन्नं च निवेदयेत्  २७
शिवमंत्रमनुस्मृत्य नववस्त्रेण संहितः
धूपदीपं ददेद्धीमान् अर्घ्यं चैव तु दापयेत्  २८
रंध्री संधिक्रमं कृत्वा दीपमारोपयेच्छतम्
आम्रफलसमा स्नाप्य घटस्नानशतं भवेत्  २९
जातिपुष्पैः समभ्यर्च्य पायसान्नं निवेदयेत्
कवचेनैव मंत्रेण नववस्त्रेण वेष्टयेत्  ३०
धूपदीपं ददेद्धीमान् निरोधार्घ्यं प्रदापयेत्
धर्मसिद्धिक्रमेणैव द्विशतं दीपमाचरेत्  ३१
कदळीफलसंयुक्तं घटस्नानं शतं भवेत्
स्नपनं तत्र कुर्वीत शान्तिहोमं समाचरेत्  ३२
आचार्य दक्षिणां चैव कुंभं धृत्वा प्रदक्षिणम्
गर्भगेहं प्रविश्याथ घटे लिंगस्य मूर्धनि  ३३

मुक्तपुष्पं ततः कृत्वा मंत्रपुष्पं न योजयेत्
पंचवर्णहविर्दद्यात् पंचवक्त्रे तु योजयेत् ३४
मूलमंत्रं समुच्चार्य चित्रवस्त्रैरलंकृतम्
सर्वालंकारसंयुक्तं सर्वाभरणभूषितम् ३५
महाहविः क्रमेणैव नैवेद्यं तु प्रदापयेत्
संध्यां प्रतिविशेषेण पाद्यमाचमनीयकम् ३६
संध्यां प्रति विशेषेण नीराजनं ददेच्छिवम्
आपक्षीरकुशाग्राणि अक्षतैर्यवतण्डुलैः ३७
तिलैः सिद्धार्थकैश्चैव अर्घ्यद्रव्यमिति स्मृतम्
संध्यां प्रति विशेषेण स्नानद्रव्यं तु निक्षिपेत् ३८
चन्दनागरुकोष्ठं च चम्पकं नागकेसरम्
तक्कोलहरिबेरं च कच्चोलं लोलमेव च ३९
लवंगं चैव पत्रं च स्नानद्रव्यमिति स्मृतम्
काम्यार्थं भूमिभागं च यथा शक्तिं च तण्डुलम् ४०
भूमिशुद्धिं ततः कृत्वा प्रोक्षयेत्पुरुषेण तु
ब्रीहि सम्यक्परिस्तीर्य वस्त्रेणैव विचक्षणः ४१
तस्योर्ध्वे कदळीपत्रं पूर्वाग्रं चोत्तराग्रकम्
परिस्तरेद्विशेषेण घृतेनैवाभिघारयेत् ४२
हविष्यं तु त्रिधा कृत्वा भूरिपान्नं ददेच्छिवम्
तण्डुलस्य प्रमाणेन खारित्रयस्य कन्यसम् ४३
भारश्च मध्यमं प्रोक्तं त्रिभारस्य तदुत्तमम्
प्रस्थस्यैकपलं चैव व्यंजनं लवणान्वितम् ४४
मुद्गभिन्नकलांशस्यादष्टांशं दधिरुच्यते
गवां घृतं निवेद्यानां चतुष्षष्ट्यंशमुच्यते ४५
मध्याह्ने पूजनं कृत्वा बलिहोमं समाचरेत्
धूपदीपं ददेच्छम्भोः तृप्तिरर्घ्यं प्रदापयेत् ४६
महेशप्रतिमादीनां पूर्वोक्तयजनादिकम्
ताम्बूलं दापयेद्धीमान् उपचाराणि दापयेत् ४७
पूवावसाने कर्तव्यं यजमाने प्रविश्यति

भस्मरक्षां प्रकर्तव्यं सायुज्यपदमाप्नुयात्  ४८
आचार्यं  पूजयेत्तत्र यथा वित्तानुसारतः
येन यत्कर्ममारभ्य आदौ तदवसानके  ४९
तेनैवानुष्ठितं कर्म श्रीसौभाग्यायुवर्धनम्
इति सूक्ष्मशास्त्रे घटस्नानकर्मविधिः षट्विंशतिः पटलः

१४
घृतधाराविधिं वक्ष्ये शृणुष्वैतत्प्रभंजन
श्रीकरं विजयं पुण्यं आयुरारोग्यवर्धनम्  १
अपमृत्युविनाशार्थं  सर्वशत्रुनिवारणम्
वर्षार्थं  च जयार्थं  च ज्वरापस्मारनाशनम्  २
सर्वरोगविनाशार्थं  महापातकनाशनम्
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः  ३
पुष्यमासेश्वयुङ्मासे धनुर्मासे च कार्तिके
मासनक्षत्रजन्मर्क्षे शान्त्येन्ये पुण्यऋक्षके  ४
महाद्भुतेद्भुते चैव कृष्णाष्टम्यां विशेषतः
एवमादिषु कालेषु घृतधारां समाचरेत्  ५
हिमाम्बुगंगातोयेन मधुक्षीरेण सेचयेत्
पंचगव्यामृतैर्धूपैः सलिलैर्नाळिकेरकैः  ६
गंधतैलैर्विशेषेण स्नावयेल्लिंगमूर्धनि
निर्दिष्टदिवसात्पूर्वे सायाह्न समये बुधः  ७
विघ्नेशं पूजयेत्तत्र अष्टोत्तरशतं क्रमात्
स्थण्डिलं कारयेद्विद्वान् पूर्वोक्तविधिना सह  ८
गन्धपुष्पादिभिः पूज्य संचारणादयः क्रमात्
तस्य दक्षिणभागे तु प्राङ्मुखो वाप्युदङ्मुखः  ९
स्थानशुद्धिं पुरा कृत्वा दर्भानास्तीर्य बुद्धिमान्
नवभाण्डानि संग्राह्य तन्तुना वेष्टयेत्पुरा  १०
क्षाळयेद्विधिना मंत्री साधयेत्तु विचक्षणः
अर्चनोक्तक्रमेणैव पूजयेत्तदनन्तरम्  ११

उद्धृत्य प्रणवेनैव शिवकुंभं च वर्धनीम्
मण्डलोपरि संस्थाप्य सर्वातोद्य समन्वितम् १२
धूपदीपं हृदा दत्वा पायसान्नं निवेदयेत्
पानीयाचमनं दत्वा ताम्बूलं दापयेद्बुधः १३
ऋगाद्यध्ययनं कुर्युः चत्वारो वेदपारगान्
अष्टदिक्ष्वष्टकुण्डानि चतुरश्राणि कारयेत् १४
शिवाग्निं कल्पयेत्तत्र पूर्वोक्तविधिना सह
समिदाज्यान्नं लाजाद्यैः होमयेद्विधिपूर्वकम् १५
वस्त्रेणोद्वर्तनं कुर्यात् तैलादीनभिषेचयेत्
लिंगं वस्त्रेण संवेष्ट्य गन्धमाल्यैरलंकृतम् १६
पाद्यमाचमनं चार्घ्यं पायसान्नं निवेदयेत्
पुण्याहं वाचयेत्तत्र कुम्भारोहणमाचरेत् १७
पृष्ठे सुषिरसंयुक्तं हेमनाळसमन्वितम्
स्त्रावयेदभिषेकान्तमविच्छिन्नाग्रधारया १८
उपकुम्भं तदन्ते तु वस्त्रहेमादि संयुतम्
पृष्ठे रविविहीनं तु पूर्ववत्स्थण्डिले बुधः १९
आसनं च ततः कृत्वा मूर्तिमावाहयेद्धटे
ब्रह्मभिश्च कलोपेतं विद्यादेहं प्रकल्पयेत् २०
प्रणवं शिवमावाह्य प्रणवं सम्यगर्चयेत्
शतमष्टोत्तरं वापि तदर्धार्धमथापि वा २१
नवपंचैक वा कुर्यात् समिदाज्यान्नसंयुतम्
ध्यात्वामृतं घृतं मूलं उच्चरित्वा षडंगकम् २२
पश्चात्सर्वपरोपेतं शिवकुंभं च निक्षिपेत्
यामं प्रति विशेषेण उष्णोदैरभिषेचयेत् २३
उष्णतोयाभिषेकान्ते तत्तद्वर्णहविर्ददेत्
एवं विधिसमालोक्य दिवसं प्रत्यहर्निशि २४
मासं वाप्यर्धमासं वा चतुर्दशदिनं तु वा
नवाहं वाथसप्ताहं पंचाहं त्रियहं तु वा २५
एकाहं वा द्वियामं वा याममात्रमथापि वा

यजमानेच्छया वाथ घृतधारां समाचरेत्  २६
दिवारात्रं शिवं मूर्ध्नि स्नावयेच्छिवमंत्रतः
मध्ये विच्छिन्नधामचेद् राजा दुर्जयमाप्नुयात्  २७
सहस्त्रं मूलमंत्रेण जप्त्वा विज्ञापयेत्प्रभोः
पूर्वोक्तविधिनानेन स्नावयेल्लिंगमूर्धनि  २८
धूपदीपावसाने तु स्तोत्रपाठावसानके
नृत्तगीतावसानां तु तयोर्मध्येऽथवा पुनः  २९
अथ यामावसानान्ते पादुकारधनान्तके
चण्डपूजावसाने तु प्रतिकुम्भविधानतः  ३०
निक्षिपेदुत्तरास्यं तु धाराकुम्भस्य मध्यमे
तत्तन्मंत्रं समुच्चार्य ध्यात्वाया घृतधारिणा  ३१
एवं विधिसमालोक्य पूजयेत्तु दिने दिने
स्नानं घृताधिवासं च नैवेद्यं सौख्यदर्शनम्  ३२
साध्यस्वस्तिमुखं पंच वक्त्राभावमिहोच्यते
ईशानादि तु सद्यान्तं कलानाड्यवसानकम्  ३३
पूजासमाप्तिं चुळुकोदकं च पराङ्मुखार्घ्यं च कवाटबन्धम्
प्रप्रच्छन्नूरुकवचाष्टसमर्पणं च विना समंत्रार्पणमेव धीमान्  ३४
कुम्भावरोहणं वापि यावद्धोमं समाचरेत्
द्विगुणं पूजयेत्तत्र ब्राह्मणान्भोजयेत्ततः  ३५
कुम्भावरोहणं कुर्यात्तदन्ते स्नपनान्वितम्
विंशत्सूत्रं प्रकर्तव्यं प्राङ्मुखोदङ्मुखं क्रमात्  ३६
सप्तसप्तपदं मध्ये परितो द्विपदं त्यजेत्
परितस्संत्यजेदेकं द्वाराष्टकसमन्वितम्  ३७
चतुर्दिक्षु चतुर्द्वारं पदद्वयविलोकनात्
द्वारपार्श्वे विशेषेण द्विपदं तु परित्यजेत्  ३८
दिशासु द्वादशपदं विदिशासु नवं भवेत्
त्रीणि बाह्यन्तरे त्यक्त्वा चतुर्दिग्द्वारसंयुतम्  ३९
आग्नेयादिषु कोणेषु मध्ये युगपदं नवम्
एवं कृते पदे सम्यक् शताष्टकलशाधिकम्  ४०

स्थरिडलं कारयेत्तत्र चतुस्त्रिद्व्येकसंख्यया
यवार्धं तराडुलं प्रोक्तं तस्यार्धं तिलमेव च ४१
तिलार्धं लाजमित्युक्तं कलशानां पृथक्पृथक्
द्रोणं चापि तदर्धं वा तदर्धार्धमथापि वा ४२
स्थरिडलं कारयेद्धीमान् मध्ये शिवकुम्भं च वर्धनीम्
सूत्रवस्त्रसुवर्णाढ्यं कूर्चपल्लवसंयुतम् ४३
एलालवंगकर्पूरकस्तूरीकुंकुमं परम्
हिमाम्बुना समायुक्तं जलभारडेन योजयेत् ४४
मुद्रादिबन्धरुद्रान्तं पूजयेत्तु पृथक्पृथक्
पूर्णाहुतिं ततो हुत्वा शिवमंत्रेण देशिकः ४५
कुम्भावरोहणं कुर्यात् तत्तत्स्नपनमारभेत्
अथार्चनोक्तमभ्यर्च्य देवं देवीं विशेषतः ४६
पंचवर्णहविर्दत्वा ताम्बूलं दापयेत्ततः
अत्रानुक्तं तु यत्सर्वं शीतकुम्भविधानवत् ४७
आचार्यं पूजयेत्पश्चाद् गोभूमीकांचनादिभिः
भक्तानां परिचाराणां यथाशक्त्या तु दक्षिणा ४८
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात् ४९
इति सूक्ष्मशास्त्रे घृतधाराविध्यष्टाविंशतिः पटलः

१५
वक्ष्ये मंत्रोदकस्नानं शृणुष्वैतत्प्रभंजन
सर्वशत्रुक्षयकरं जरापस्मारनाशनम् १
सर्वपापप्रशमनं सर्वाभीष्टफलप्रदम्
प्रासादस्येशदिग्भागे पूर्वे वा चोत्तरेऽथवा २
मराडपं कारयेद्विद्वान् पूर्वोक्तविधिना सह
तन्मध्ये वेदिकां कुर्याद् द्विकरायतविस्तृतम् ३
द्वादशां गुलमुत्सेधं निम्नोन्नतविवर्जितम्
कुराडानि परितः कुर्यान्नवपंचैकमेव वा ४
मार्जनं प्रोक्षणं कृत्वा गोमयेनानुलेपयेत्

आचार्यः सुप्रसन्नात्मा सकळी कृतविग्रहः ५
सामान्यार्घ्यकरो भूत्वा प्रविशेन्मुखमण्टपम्
पुण्याहं वाचयेत्तत्र प्रोक्षयेदस्त्रमंत्रतः ६
मण्टपं संप्रविश्याथ पूर्वोक्तविधिना सह
वेद्यूर्ध्वे स्थण्डिलं कृत्वा अष्टद्रोणैश्च शालिभिः ७
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्
संपूज्य गन्धपुष्पाद्यैः वृषगायत्रिमंत्रतः ८
पूर्वे वा चोत्तरे वापि स्नानार्थमुदकं ग्रहेत्
अष्टतालप्रमाणेन यंत्रपीठं प्रकल्पयेत् ९
तस्योर्ध्वे विन्यसेत्पात्रं द्रोणत्रयजलान्वितम्
तत्पीठे सुषिरं कृत्वा लोहसूच्यग्रमानतः १०
सुगन्धकुसुमेनैव दामं कृत्वातिमार्दवम्
सुषिरे योजयेद्विद्वान् वारिधारासमन्वितम् ११
दामोद्भवजलं गृह्य शुद्धपात्रे विचक्षणः
आर्द्रवस्त्रेण संछाद्य फलकोपरि विन्यसेत् १२
सुवर्णरौप्यताम्रेण धारापात्रं प्रकल्पयेत्
अथवा मृण्मयेनैव कारयेत्सुदृढं यथा १३
चतुष्पादं त्रिपादं वा वस्त्रयुग्मेन साधयेत्
धारापात्रस्य चाधारं कल्पयेत्कल्पवित्तमः १४
नवकुम्भान्समादाय क्षाळयेदस्त्रमंत्रतः
तन्तुनावेष्ट्य संधूप्य पूरयेत्तज्जलेन तु १५
सरत्नं वस्त्रसंयुक्तं कूर्चपल्लवसंयुतम्
नारिकेळफलोपेतं वेदिमध्ये तु विन्यसेत् १६
तस्यैव दक्षिणे भागे धारापात्रं च विन्यसेत्
तस्यैव चोत्तरे पार्श्वे पात्राधारं न्यसेद्बुधः १७
अभ्यर्च्य हृदयेनैव धूपदीपं प्रदापयेत्
ततोपकुंभे गंगादितीर्थमावाह्य बुद्धिमान् १८
पूजयेद्गन्धपुष्पाद्यैः हृदयेनैव मंत्रतः
आचार्यो मूर्तिपैस्सार्धं शिवाग्निं विधिना नयेत् १९

समिदाज्यान्नलाजैश्च मूलेन जुहुयाच्छतम्
तदर्धं वा तदर्धं वा षोडशाहुतिरेव वा २०
ईशानादीनि सद्यान्तं जुहुयात्तत्क्रमेण तु
वामाद्या नव शक्त्या तु ईशाद्याः पंच पक्षके २१
सर्षपं शालिमुद्गं च नाळिकेरफलं गुळम्
सक्थुचूर्णेन जुहुयाद् अस्त्रेणैव तु देशिकः २२
तदन्ते पूजयेद्विद्वान् कुम्भमध्यगतं जलम्
ततो गर्भगृहं गत्वा धामप्रदक्षिणान्वितम् २३
लिंगशुद्धिं ततः कृत्वा पंचगव्यामृतादिभिः
संपूज्य देवदेवेशं पायसान्नं निवेदयेत् २४
पात्राधारं च संस्थाप्य शोभाबलसमन्वितम्
तस्योर्ध्वे विन्यसेत्पात्रं पृष्ठे सुषिरसंयुतम् २५
तद्रन्ध्रे कांचनाळं तु समारोप्य शिवोपरि
गन्धपुष्पैस्समभ्यर्च्य धूपदीपं प्रदर्शयेत् २६
ततोपकुम्भमादायं शंखध्वनिसमन्वितम्
पुण्याहप्रोक्षणोपेतं शिवमंत्रेण पूरयेत् २७
जप्त्वा चाष्टोत्तरशतं रुद्रशान्तिमनुं बुधः
स्तोत्रैर्वेदजपैर्वापि नृत्तगीतैरथापि वा २८
तोषयेद् देवदेवेशं संकल्प्य दिवसान्तकम्
तज्जलं हेमनाळेन अविच्छिन्नाग्रधारया २९
नवाहं वाथ सप्ताहं पंचाहं त्रियहं तु वा
मासं वाप्यर्घमासं वा स्त्रावयेल्लिंगमूर्धनि ३०
ततोपकुम्भमापूर्य पूर्वद्रव्येण देशिकः
स्थण्डिले स्थापयेद्यंत्रं ततो होमं समाचरेत् ३१
आचार्यस्त्वीशमंत्रेण पूजयेच्छिवमध्यमे
प्रायश्चित्ताहुतिं हुत्वा क्षुरिकास्त्रेण सुव्रत ३२
समिदाज्यचरुं लाजान् हुत्वा पूर्वोक्तमंत्रतः
शतमर्धं तदर्धं वा षोडशाहुतिरेव वा ३३
नवपंचैकवारं वा हुत्वा पूर्णाहुतिं नयेत्

एककालं द्विकालं वा सर्वोपद्रवशान्तये ३४
शतहोमं ततः कृत्वा नवपंचैकवारकम्
हुत्वा संपूज्य गन्धाद्यैः उपकुम्भं हृदा पुरा ३५
जप्त्वान्तां मूलमंत्रेण वाद्यध्वनिसमन्वितम्
उदकुम्भजले क्षिप्त्वा धारापात्रेऽप्युदङ्मुखम् ३६
एवं शिवं समालोक्य मूर्तिपान्तदनन्तरम्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ३७
तदन्ते क्षुरिकास्त्रेण शतहोमं समाचरेत्
पूर्णाहुतिं ततो हुत्वा विसृजेच्छिवपावकम् ३८
यानादीश्वरमभ्यर्च्य गन्धपुष्पादिना हृदा
ततो गर्भगृहं गत्वा पुण्याहं वाचयेद्गुरुः ३९
धारावरोहणं कुर्याद् दशाक्षरमनुस्मरन्
स्नपनं कारयेत्पश्चाद् यथा वित्तानुसारतः ४०
संपूज्य देवदेवेशं प्रभूतहविषं ददेत्
अत्रानुक्तं तु यत्किंचित् तत्सर्वं शीतकुम्भवत् ४१
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः
पूजयेद्वस्त्रहेमाद्यैः मूर्तिपान्परिचारकाम् ४२
एवं यः कुरुते मर्त्यः सर्वान्कामानवाप्नुयात्
इति सूक्ष्मशास्त्रे मंत्रोदकस्नानाभिषेकविध्येकोनत्रिंशत्पटलः

१६
जलधाराविधिं वक्ष्ये शृणुत्वं तत्प्रभंजन
सर्वरोगविनाशार्थं अपमृत्युविनाशनम् १
सर्वकामार्थसिध्यर्थं जलधारां समाचरेत्
प्रातस्सन्ध्यावसाने तु मध्याह्नयजनैस्सह २
देवाग्रे स्थण्डिलं कृत्वा पुण्याहं वाचयेत्ततः
पंचगव्यामृतं स्थाप्य स्नानद्रव्यं च विन्यसेत् ३
स्नपनं कल्पयेद्विद्वान् स्नपनोक्तवदाचरेत्
विघ्नेशं पूजयेत्पश्चाद् द्वारदेवान्समर्चयेत् ४

गंगादिसप्ततीर्थानि जलद्रोणीं च पूजयेत्
जलद्रव्यं च कुसुमं निक्षिपेद्धृदयेन तु ५
वेरशुद्धिं पुराकृत्वा तैलेन स्नाप्य देशिकः
पंचगव्यामृतैः स्नाप्य स्नानद्रव्याभिषेचयेत् ६
तदन्ते स्नपनं कुर्यात्कुरवशब्दसमन्वितम्
चतुष्पादीन्समादाय क्षाळयेदस्त्रमंत्रतः ७
स्नावयेल्लिंगमूर्धौ तु अविच्छिन्नाग्रधारया
ब्राह्मणेभ्यो जपं कुर्याच्छ्रीरुद्रं रुद्रसंख्यया ८
तदन्ते चमकं कृत्वा ब्राह्मणेभ्यो पृथक्पृथक्
तत्संख्याद्विगुणं जप्वा त्रिगुणं वा विशेषतः ९
अथवा एकसंख्या च जपेयु ब्राह्मणैस्तथा
धारावरोहणं कृत्वा गन्धपुष्पैस्समर्चयेत् १०
मंत्रान्नं दापयेत्पश्चाद्वस्त्रेणोद्वर्तनं कुरु
वस्त्रैराभरणैर्माल्यैः अलंकृत्य विशेषतः ११
प्रभूतहविषं दत्वा गन्धपुष्पैस्समर्चयेत्
++++++++ पानीया चमनं ददेत्
एवं क्रमेण विधिवज्जलधारां समाचरेत् १२
इति सूक्ष्मशास्त्रे जलधाराविधित्रिंशत्पटलः

१७
घृतशिरोर्पणं वक्ष्ये शृणुत्वं तत्प्रभंजन
शूकाभिषेकपूर्वे वा चूर्णोत्सवस्य पूर्वके १
घृतशिरोर्पणं कुर्याद्विधिनानेन बुद्धिमान्
प्रासादस्येशदिग्भागे पश्चिमे चोत्तरेऽपि वा २
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत्
पुण्याहं वाचयित्वाथ स्थानशुद्धिं ततः कुरु ३
स्थण्डिलं कारयेद्धीमान् आढकद्वयशालिना
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् ४
अभ्यर्च्य गन्धपुष्पाद्यैः पूर्वोक्तविधिना सह

दारुपीठं च तस्योर्ध्वे विन्यसेद्वस्त्रसंयुतम् ५
तण्डुलेन समापूर्य स्थलिकामुपरिविन्यसेत्
यथा लाभं समानीय सुशुद्धकपिलाघृतम् ६
हेमादि पात्रे संगृह्य विन्यसेत्तण्डुलोपरि
तत्पूर्वे हेमपुष्पं च पूर्वाग्रं दक्षिणे न्यसेत् ७
अंकुरं पश्चिमे न्यस्त्वा चोत्तरे धवळाक्षतम्
अर्चयेद्ब्रह्ममंत्रेण गन्धपुष्पादिना बुधः ८
घृतसूक्तं जपेत्पूर्वं मंत्रं पंचाक्षरं ततः
घृतपात्रादिसर्वं वा वाहयेच्छिष्यमूर्धनि ९
धामप्रदक्षिणं कृत्वा सर्वालंकारसंयुतम्
देवाग्रे स्थापयेद्विद्वान् घृतपात्रादिकं यथा १०
पुण्याहं वाचयेत्तत्र आत्मानं शक्तिरूपकम्
भावयेद्गौरिहस्तं च दक्षपाणितले बुधः ११
अभ्यर्च्य देविगायत्र्या गन्धमण्डलसंयुतम्
घृतं संग्राहयेद्विद्वान् करसंपूज्य मानसम् १२
घृतं मिमिक्षमंत्रेण स्त्रावयेद्बिम्बमूर्धनि
एवं त्रिवारकं भक्त्या सामा नित्यविधानवित् १३
दूर्वाग्रं हेमपुष्पं च अंकुरं चाक्षतं क्रमात्
मूर्धादोः कण्ठहृदये योजयेन्मूलमंत्रतः १४
शिवोऽहं भावयेद्विद्वान् गौर्याश्चैवं विधानतः
धूपदीपं ततो दत्वा क्षमस्वेति प्रणामयेत् १५
सर्वमंगळकार्यादिष्वेवं घृतशिरोर्पणम्

इति सूक्ष्मशास्त्रे घृतशिरोर्पणविध्येकत्रिंशत्पटलः

क्रियासमर्पणं वक्ष्ये शृणुष्वैतत्प्रभञ्जन
सर्वयज्ञावसाने तु कारयेद्देशिकोत्तमः १
शिवाग्रे स्थण्डिलं कृत्वा पुण्याहं वाचयेत्ततः
शुद्धपात्रे समानीय पूजाद्रव्यमथाल्पकम् २
तस्योर्ध्वे विन्यसेत्पात्रं अष्टगन्धमनोहरम्

पूर्णचन्द्रोपमं कल्प्य सुगन्धकुसुदामभिः ३
क्रियारम्भावसानान्तं यत्कर्म तत्स्वरूपकम्
मनसा भावयेन्मंत्री तत्तन्मंत्रैस्समर्चयेत् ४
तारेणादं य विन्यस्यं परिचारकमूर्धनि
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम् ५
धामप्रदक्षिणं कृत्वा प्रविशेद्गर्भगेहकम्
पंचबिल्वैः शिवं यष्ट्वा धूपदीपं समाचरेत् ६
गन्धपात्रं समादाय क्रियाद्रव्यसमन्वितम्
ॐ देवदेव जगन्नाथ जगदार्तिविनाशन ७
एतत्कर्मफलं सर्वं गृहाणवरदो भव
इदं मंत्रं समुच्चार्य विन्यसेच्छिवसंनिधौ ८
न्यूनोऽतिरिक्तं विज्ञाप्य इष्टार्थं प्रार्थयेद्गुरुः
एवमेवं विधानेन सर्वपूजावसानके ९
क्रियासमर्पणं कुर्याद् अन्योन्यफलदायकम्
इति सूक्ष्मशास्त्रे क्रियासमर्पणविधिद्वात्रिंशत्पटलः

१९
प्रणम्य शिरसा देवं पंचप्रत्ययकं शुभम्
तत्सर्वं श्रोतुमिच्छामि भगवन्वक्तुमर्हसि १
ईश्वरः
अथातस्संप्रवक्ष्यामि पाषाणप्रत्ययं शृणु
सायानृतविशुध्यर्थं प्रत्ययं कारयेद्बुधः २
अंगारे सूर्यवारे च कारयेद्देशिकस्सदा
वृषभस्याग्रतश्चैव कृत्वा मण्टलमेव च ३
तालमात्रेण देवेश भ्रामयेत्पूर्णचन्द्रवत्
षोडशैदळसंयुक्तं तन्मध्ये पद्ममालिखेत् ४
तस्य मासेत्परिभ्रष्टं गन्धपुष्पादिनार्चयेत्
तस्य बाह्ये तु परितो ब्रह्माण्यंगानि विन्यसेत् ५
पूजयेत्तु विशेषेण गन्धपुष्पेण संयुतम्

भ्राष्टमध्ये न्यसेदग्निदेविमथित्वातिं च सा स्मृतम्  ६
स्वनाम्ना चैव संपूज्य पश्चाद्ब्रह्मादि पूजयेत्
कुलिशी भागिनी चैव सती सत्यानृती तथा
योगी सर्वमयी देवी कौशिकी गोपिनी ततः
तस्याधिपाः पयश्चैतत् तद्वाहरेपूजयेद्गुरुः  ७
तासां स्वनाममंत्रेण पूजयेद्देशिकोत्तमः
तस्य बाह्ये तु परितो लोकपानपि पूजयेत्  ८
चतुर्दिक्षु चतुश्शूलं पूजयित्वा विशेषतः
कोणे चक्रं समाख्यातं इष्टका चूर्णसंयुतम्  ९
अायसेनैव कर्तव्यं तस्य पात्रं शतं पलम्
तस्य तार च तालं च तस्याधारं द्वयांगुलम्  १०
भ्राष्टोपरिन्यसेद्देविहृदा च क्षुरिकायुधम्
तस्य दक्षिणदेशे तु धर्मदेवं समर्चयेत्  ११
स्वनाममन्त्रैः संपूज्य गन्धपुष्पेण संयुतम्
तप्तपाषाणरूपं तु तत्पात्रे विन्यसेद्बुधः  १२
तस्यैव पूर्वरात्रे तु प्राशयेत्पंचगव्यकम्
तत्र ज्ञना च नामानि अालिखेत्तालवृत्तके  १३
तत्पात्रं मूध्निविन्यस्य अपापुष्पेण संयुतम्
त्रिष्कृत्वा चैककृत्वा वा पाषाणदर्शनं ततः  १४
सद्यादीशानपर्यन्तं प्रत्येकं तु जपन्नरः
तद्धस्तमग्निना दग्ध --- परीक्षयेत्  १५
सत्यमुद्दिश्य यद्द्रव्यं तटाकार्थं परित्यजेत्
पाषाणप्रत्ययं प्रोक्तं परशुप्रत्ययं शृणु  १६
इति सूक्ष्मशास्त्रे पाषाणप्रत्ययविधित्रयस्त्रिंशत्पटलः

२०
परशुप्रत्ययं वक्ष्ये शृणुष्वैतत्प्रभञ्जन
प्रत्याधानं परं श्रेष्ठं परशुप्रत्ययं ततः  १
सत्यानृतविशुध्यर्थं प्रत्ययं कारयेद्बुधः

सुमुहूर्ते सुलग्ने च परशुं चैव कारयेत् २
सौवर्णं राजतं ताम्रं मृण्मयं वाथ कारयेत्
द्वादशांगुलमायामं पंचाशत्पलसंयुतम् ३
पंचांगुलं तु विस्तारमग्रद्वयं विशेषतः
मध्यमं चतुरंगुल्यं दर्पणोदरवत्कृतम् ४
एभिस्तु लक्षणैर्युक्तं परशुं कारयेद्बुधः
शिल्पिनं पूजयेत्पश्चाद् वस्त्रहेमांगुलीयकैः ५
प्रतिष्ठाविधिं प्रवक्ष्यामि समासाच्छृणु सुव्रत
पूर्वोक्ते चैव नक्षत्रे योगे च करणान्वितम् ६
स्थिरराशौ तु कर्तव्यं उभयराशावथापि वा
पुण्याहं वाचयेत्तत्र ब्राह्मणैश्च विशेषतः ७
धामप्रदक्षिणं कुर्याद् पंचगव्यसमन्वितम्
मंत्रगेयसमायुक्तं गणिका नृत्तसंयुतम् ८
मण्टपाग्रे न्यसेदृंकं प्रासादेन तु मंत्रतः
प्रासादस्याग्रतः कुर्यान्मण्टपं पंचहस्तकम् ९
ब्रह्मभागे तु देवी स्यात् कुण्डं पूर्वोक्तवत्कुरु
चतुर्दिक्षु च वृत्तं स्यात् ऐशान्यामष्टकोणकम् १०
अथवा चैककुण्डं वा कारयेद्देशिकोत्तमः
त्रिरात्रमेकरात्रं वा जले चैवाधिवासयेत् ११
शयनं पूर्ववत्कृत्वा कम्बळोपरि मध्यमे
शिवबीजेन मंत्रेण शयने शाययेद्बुधः १२
अष्टकुंभं समादाय विद्येश्वरसमायुतम्
उग्री चैव उदग्री च दण्डिनी पाशिनी ततः १३
सती सत्यानृती चैव कुलिशी कौशिकी तथा
परबाह्यं तु परितः एता देवीश्च पूजयेत् १४
ततो होमं प्रकुर्वीत पूर्वोक्तविधिना सह
शिवबीजेन मंत्रेण प्रत्येकं तु शताष्टकम् १५
ततः प्रभाते विमले प्रासादेन प्रतिष्ठितम्
एकाशीत्यर्चनं कुर्यात् पंचवर्णहविर्ददेत् १६

आचार्यं पूजयेत्पश्चाद् धाराणां लक्षणं शृणु
अंगारे सूर्यवारे वा ऐशान्याभिमुखः स्थितः १७
गोमयालेपनं कृत्वा मण्डलान्सप्तविन्यसेत्
षोडशांगुलमानेन भ्रामयेत्पूर्णचन्द्रवत् १८
अष्टदिक्ष्विष्टिकाचूर्णैः शूलरूपं तु शेखरेत्
मण्टपस्योत्तरे पार्श्वे पूजयेद्धर्मदैवतम् १९
ॐकारादिनमोन्तं तन्नाममंत्रेण पूजयेत्
पूर्वरात्रे तु परशुं दिवसेदीशमंत्रतः २०
पायसान्नं निवेदित्वा नववस्त्रेण वेष्टयेत्
धामप्रदक्षिणं कुर्यात् परशुं सर्वशोभितम् २१
मण्डपाद्दक्षिणे भागे परशुं विन्यसेत्ततः
मण्डलात्तु चतुर्भिस्ते कुशा तु दक्षिणे यजेत् २२
मण्डलात्पूर्वदेशे तु पलाशं विन्यसेत्ततः
अश्वत्थसप्तपत्राणि सप्तसूत्रेण वेष्टयेत् २३
परशुं विन्यसेद्धस्ते इदं मंत्रं समुच्चरन्
त्वमग्ने सर्वभूतानां अन्तश्चरसि पावकः २४
साक्षि यत्पुण्यपापेभ्यो ब्रूहि सत्यं तु मे मम
ॐ । ईश्वरं ईश्वर सत्यानृतविशोध-- २५
धर्मरूपमनुप्रविश योगाधिपतये नमः
इदं मंत्रं समुच्चार्य हस्तयोः परशुं क्षिपेत् २६
दग्धे चैव महादोषी त्वदग्धे शुद्ध उच्यते
अनन्तरे चैव परशो पतिते दण्डितो भवेत् २७
आचार्यपूजनं कृत्वा वस्त्रहेमांगुलीयकैः
ब्राह्मणान्भोजयित्वाथ पूजयेच्छक्तितस्तु तान् २८
परशुप्रत्ययं प्रोक्तं सत्यप्रत्ययमथ शृणु
इति सूक्ष्मशास्त्रे परशुप्रत्येकविधिः पटलः

अतः परं प्रवक्ष्यामि सत्यप्रत्ययकं शृणु
अंगारे सूर्यवारे च शिवालयसमीपतः १

पूर्वेद्युरधिवासं स्यात् कलशान्नवसंयुतान्
पूर्वोक्तमण्टपे रम्ये कलशान्स्थापयेत्क्रमात् २
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत्
शालिनं विकिरेत्तत्र तण्डुलांश्च तिलान्न्यसेत् ३
दर्भैश्चैव परिस्तीर्य स्थापयेन्मध्यमे शिवे
प्रासादेन तु मंत्रेण स्थापयेच्छिवकुम्भकम् ४
वर्धनीं तस्य वामे तु गौरीबीजेन स्थापयेत्
सत्यं शिवं समावाह्य वस्त्रगन्धादिभिर्यजेत् ५
अभितः कलशानष्टौ विन्यसेत्तु विचक्षणः
गोमुखी सुमुखी चैव कुलिशी कौतुकी तथा ६
एता देवीश्च देवेश कलशेषु च विन्यसेत्
पूजयेत्तु यथान्यायं स्वस्वनाम्ना विशेषतः ७
गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत्
ततो होमं प्रकुर्वीत ऐशान्यां स्थण्डिले ततः ८
समिदाज्यचरुं लाजान् सर्षपं च समायुतम्
पंचद्रव्यसमायुक्तं प्रासादेन तु मंत्रतः ९
जुहुयाद्देवदेवेशं प्रत्येकं पंचविंशतिः
शुद्धाशुद्धं परीक्षार्थं जनानाहूय सर्वशः १०
दन्तधावन पूर्वं तु स्नानं कुर्याद्विशेषतः
तद्दिने चोपवासं तु शुचिर्मनसमन्वितम् ११
दर्भशय्यासनस्थं तु कलशं दक्षिणे वसेत्
सत्यं कृष्णं तु वचनं तालपत्रेह लेखयेत् १२
कुम्भपार्श्वे न्यसेद्देवी शिवबीजेन मंत्रतः
ततः प्रभाते विमले संध्यायां पूजयेद्बुधः ३३
पूर्वाह्णे चोत्तमं विद्यान्मध्याह्ने मध्यमं भवेत्
मध्याह्नात्परतो देवी वर्जयेत्सत्यमेव च १४
कलशान्स्थापयेत्तत्र प्रासादेन तु मंत्रतः
वर्धनीं स्वस्वमंत्रेण स्थापयेत्पीठमेव च १५
पीठप्रदक्षिणं कुर्यात् सत्यर्थं मेदिति ब्रुवन्

लर्णासाभ्यन्तरे देवी वरणं योगितज्ञनः १६
तत्तद्दोषं भवेत्सर्वं इति शास्त्रस्य निश्चयः
सत्यमुद्दिश्य यद्द्रव्यं धर्मार्थाय निवेदयेत् १७
इति सूक्ष्मशास्त्रे पंचप्रत्ययविधित्रयत्रिंशत्पटलः

२२
वक्ष्ये नक्षत्रयजनं शृणुष्वैतत्प्रभञ्जन
महाभूतप्रशमनं परसेनापलायनम् १
सर्वशत्रुक्षयकरं सकलाभीष्टसिद्धिदम्
अकालमृत्युशमनं अपग्रहविनाशनम् २
राजाभिषेकसमये तस्य जन्मदिनेऽपि च
चतुर्दश्यामथाष्टम्यां पक्षयोरुभयोरपि ३
रणारम्भावसाने तु योगयुक्तदिनेऽथ वा
नक्षत्रयजनं कुर्यात् सकलाभीष्टसिद्धये ४
शिवाग्रे मण्टपं कुर्यात् सर्वालंकारसंयुतम्
तन्मध्ये वेदिकां कुर्याद् गुणभागैकभागतः ५
विस्तारार्धसमुत्सेधं दर्पणोदरसंनिभम्
दिशाभद्रसमायुक्तं निम्नोन्नतविवर्जितम् ६
द्वादशस्तम्भसंयुक्तं प्रासादपदमलंकृतम्
तुरंगं वाथ वृषभं कल्पयेदग्रपार्श्वयोः ७
अलंकृत्य विशेषेण वस्त्रपुष्पस्रगादिभिः
कैलासं कल्पयेन्मध्ये शालिपिष्टमयेन तु ८
उपवेदीं ततः कृत्वा तद्विस्तारार्धमानतः
चतुरंगुलमुत्सेधं निम्नोन्नतविवर्जितम् ९
राशिमण्डलकं कल्प्य मध्ये पद्मं समालिखेत्
भानुसंख्यामहाब्जं च -गं षण्णवतिं विदुः १०
कुंकुमं कृष्णवर्णं च रक्तं गोक्षीरवर्णकम्
शुक्लवर्णं क्रमेणैव कल्पयेत्पूर्ववर्त्मना ११
यागार्थमण्टपं कुर्यात्पूर्वोक्तविधिना ततः

निश्चित्य दिवसात्पूर्वे नवमे सप्तमेऽथ वा १२
पंचमे वा विशेषेण बिल्ववृक्षस्समाश्रयेत्
तत्पूर्वादीनि परितः तृणादीनि व्यपोह्य च १३
पुण्याहं वाचयेद्विद्वान् प्रोक्षयेच्छिवमंत्रतः
हस्तमात्रेण तन्मूले परितश्चतुरश्रकम् १४
खानयेदस्त्रमंत्रेण पंचगव्येन पूरयेत्
गन्धादिभिः समभ्यर्च्य मूलमंत्रेण सुव्रत १५
त्रियम्बकेन मंत्रेण बध्वा प्रतिसरक्रिया
दध्योदनबलिं दत्वा वनदेवाय तृप्तये १६
यावदाशोषितं गव्यं जप्त्वा रुद्राधिदेवताः
जपान्ते संगृहेद्विद्वान् बिल्ववृक्षं समूलकम् १७
पंचांगं प्रणवेनैव विभजेत्तत्पृथक्पृथक्
सद्योजातेन संयोज्य मूलमूर्तिक्रियान्वितम् १८
तरुं वामेन संग्राह्य पत्रं हृदयमन्त्रतः
फलं वस्त्रेण संग्राह्य ईशाने कुसुमं ग्रहेत् १९
शुद्धवस्त्रेण संवेष्ट्य शिरसा वाहयेत्ततः
सर्वालंकारसंयुक्तं स्वस्तिसूक्तसमन्वितम् २०
धामप्रदक्षिणं कृत्वा शिवाग्रे वाथ मण्टपे
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत् २१
स्थण्डिलं कारयेद्विद्वान् शालिभिर्विमलैश्शुभैः
विन्यसेद्बिल्वपंचांगं तत्तन्मंत्रक्रमेण तु २२
तत्पूर्वे पश्चिमे वापि उत्तरे वा विशेषतः
अष्टांगुलप्रमाणेन छित्वा परशुनास्त्रतः २३
बिल्वकाष्ठं च मूलं च शुद्धतोयेन पेषयेत्
रोचनं कुंकुमं कोष्ठं चन्दनं हरिचन्दनम् २४
उशीरं मेघकर्पूरं भस्म चागरुमिश्रितम्
हरिबेरसमायुक्तं हिमतोयेन मर्दयेत् २५
छायाशुष्कपदं कृत्वा पत्रपुष्पादिना फलम्
गृहीत्वा नवभाण्डे तु मुखं वस्त्रेण बन्धयेत् २६

ध्यात्वाभ्यर्च्य षडंगेन त्वमृतीकरणं कुरु
जप्त्वाष्टोत्तरसाहस्त्रं पापं भक्षणमंत्रतः २७
तद्दिने वाथ पूर्वेद्युः अधिवासनमारभेत्
ततो मण्डपमासाद्य सकळीकृतविग्रहः २८
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः
मण्डपं पूजयेद्विद्वान् पूर्वोक्तविधिना सह २९
स्थण्डिलं वेदिकामध्ये अष्टद्रोणेन शालिना
तण्डुलैस्तिललाजैश्च दर्भैश्चैव परिस्तरेत् ३०
बहुरूपेण संप्रोक्ष्य पूजयेद्वृषभासनम्
मण्डपस्योत्तरे पूर्वे पश्चिमे वा विशेषतः ३१
अष्टद्रोणेन दुग्धेन स्नपनं परिकल्पयेत्
अर्घ्यं संपादयेद्विद्वान् पात्रशुद्धिं समाचरेत् ३२
विभजेद्बिल्वपंचांगं अष्टधा देशिकोत्तमः
द्विभागं शिवरूपं स्याद् एकभागेन पार्वती ३३
नक्षत्रान्पंचभागेन कल्पयेत्तु यथाक्रमम्
गन्धपुष्पादिना स्पृष्ट्वा जप्त्वा पूर्वोक्तमंत्रतः ३४
प्रणवेनैव संग्राह्यं विन्यसेद्वेदिकोपरि
पूजयेत्कर्णिकामध्ये पार्वतीपरमेश्वरौ ३५
चतुर्दिक्षु न्यसेद्विद्वान् नक्षत्राणि यथाक्रमम्
अग्ने श्लेषपर्यन्तं सप्तकं त्विन्द्रदेशके ३६
अनूराधादिविष्वन्तं सप्तकं पश्चिमे दिशि
मघादिशूर्पपर्यन्तं सप्तकं याम्यदेशके ३७
श्रविष्ठादिभरण्यन्तं सप्तकं याम्यदेशके
संकल्प्याभ्यर्च्य गन्धाद्यैः तत्तत्स्वनाममन्त्रतः ३८
ततो गर्भगृहं गत्वा लिंगशुद्धिं समाचरेत्
निवेदयेत्तु मुद्गान्नं लेपयेच्चन्दनेन तु ३९
धूपदीपैः समभ्यर्च्य अभीष्टं प्रार्थयेद्गुरुः
ततो मण्डपमासाद्य मण्डपाधिपती न्यसेत् ४०
अग्न्यायतनमासाद्य शिवाग्निं विधिना नयेत्

मधुरत्रयसंयुक्तं दूर्वाग्रं कदळीफलम् ४१
नाळिकेरफलं दुग्धं ओदनेन समन्वितम्
शतमर्धं तदर्धं वा मूलेनैव हुतं चरेत् ४२
पूर्णाहुतिं ततो हुत्वा शिवाग्निं तु विसर्जयेत्
ततस्संपूज्य देवेशं उमादेवीसमन्वितम् ४३
हविर्निवेदयित्वा तु ताम्बूलं दापयेत्ततः
परिचारकमाहूय सोष्णीषं चोत्तरीयकम् ४४
कुम्भामुद्धृत्य शिरसा कृत्वा धामप्रदक्षिणम्
प्रविश्य गर्भगेहं तु स्नापयेत्स्नपनार्हके ४५
हविर्निवेदयित्वा तु गन्धपुष्पादिभिर्यजेत्
ततो मण्डपमासाद्य सर्वालंकार संयुतम् ४६
प्रणवेनैव संग्राह्य पंचचूर्णं सलड्डुकम्
शिरसा वाहयित्वा तु प्रदक्षिणमथाचरेत् ४७
विन्यस्य मण्डपस्याग्रे पुण्याहं वाचयेत्ततः
कैलासशिरमभ्यर्च्य पूजयेद्वृषदैवतम् ४८
तस्योर्ध्वे विन्यसेद्बिल्वं पंचांगं साधिदेवताम्
नक्षत्रान्परितः स्थाप्य पूर्ववत्पूजयेत्क्रमात् ४९
पट्टिका पाटली व्याघ्री रक्ता गव्यं च धातकी
लक्ष्मी च रक्तपद्मं च सप्तमं कृत्तिकादिषु ५०
वकुळद्रोणपुष्पं च धूर्धूरं करवीरकम्
प्रदोषं पृथिवी पद्मं भूपाटलं च दक्षिणे ५१
तुळसी जातिपुन्नागं श्वेतार्कं बिल्वपत्रकम्
आद्रपर्णी च दूर्वा च अनुराधादिसप्तके ५२
श्रियावर्तं च मन्दारं रक्तार्कं चतुरंगुलम्
विष्णुक्रान्तिः सहा भद्रा श्रविष्ठादिषु सप्तके ५३
मुद्गान्नं कृत्तिकादौ स्याद् कृसरान्नं मघादिषु
पायसान्नं प्रदातव्यं अनुराधादिसप्तके ५४
श्रविष्ठादिषु ते माषं गुळान्नमीश्वरस्य तु
भक्त्या सर्वोपचारेण पूजयेदिष्टसिद्धये ५५

एवं यः कुरुते मर्त्यः सर्वलोके जनिष्यति
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः ५६
भक्तानां परिचाराणां यथा शक्त्या तु दक्षिणा
द्विजातीनां च भक्तानां अन्नपानादिकं ददेत् ५७
संध्यान्तरे परे वाथ पुष्पांजलिकरो गुरुः
मूलेन शिवमादाय योजयेत्स्वयमात्मनि ५८
पंचचूर्णं समादाय शुद्धपात्रे ग्रहेद्गुरुः
तच्चूर्णं यजमानाय दापयेत्तु विधानतः ५९
पंचचूर्णं समादाय चन्दनेनैव संयुतम्
भस्मना वाथ संयोज्य सन्ततं धारयेन्नरः ६०
सर्वपापविनिर्मुक्तः सर्वशत्रुजयी भवेत्
नक्षत्रयजनं प्रोक्तं पुष्पपूजाविधिं शृणु ६१
इति सूक्ष्मशास्त्रे नक्षत्रपूजाविध्येकत्रिंशत्पटलः

२३
स्वर्णपुष्पार्चनं वक्ष्ये शृणुष्वैतत्प्रभञ्जन
नराणां चैव कर्तव्यं देवानां च सुपूजितम् १
नराणां च विशेषेण भोगादीनां च या ददेत्
चतुर्वर्णैः स्वयं योग्यं अन्यजातिविशेषतः २
स्वर्णपुष्पकृतं चेत्तु गुरुहस्ते निधापयेत्
तत्पुष्पं गुरुमानीय लिंगमूर्ध्नि प्रदापयेत् ३
विप्राणां तु विशेषेण शिवदीक्षा समन्वितः
नन्ध्यावर्तं श्रियावर्तं करवीरं जातिरेव च ४
नीलोत्पलं च कुटजं चम्बकं हिमपुष्पकम्
पंकजं बिल्वपुष्पं च बृहतीद्वयं च पाटली ५
एवं पुष्पं च संकल्प्य पत्राणां विधिरुच्यते
बिल्वपत्रं तपस्वी च तुळसी गन्धपत्रकम् ६
दूर्वां वा पंचबिल्वं च स्वर्णपत्रकृतं भवेत्
अन्यथा सर्वपुष्पाणि अन्यपत्राणि कारयेत् ७

पुष्पं प्रति विशेषेण उत्तमं पंचनिष्कमम्
त्रिनिष्कं मध्यमं प्रोक्तं निष्कपादं तु कन्यसम् ८
कन्यसात्कन्यसंश्रेष्ठं तदर्धार्धमथापि वा
स्वर्णसंख्या क्रमेणैव आकृतिश्च पुरोक्तवत् ९
एवं लक्षणमाख्यातं तत्तत्कालविधिं शृणु
प्रातःकाले विशेषेण द्विजाः सम्यक्समर्चयेत् १०
अंजलीकृतपुष्पं च आसनं आसने यजेत्
पुनरंजलिपत्रं च मूर्तिं मूर्तौ तु विन्यसेत् ११
पुनश्चांजलिपुष्पेण विद्यादेहं समर्चयेत्
स्थूलमूलं समुच्चार्य पुष्पं मूर्धनि धापयेत् १२
त्रियम्बकेन मंत्रेण पद्मपुष्पं च दापयेत्
खिलमंत्रान्समुच्चार्य नीलोत्पलं च दापयेत् १३
एवं प्रतिदिनं कार्यं भोगमोक्षफलप्रदम्
द्विजानामेव कर्तव्यं राज्ञां विधिरिहोच्यते १४
मध्याह्ने तु प्रकर्तव्यं शिवदीक्षासमन्वितम्
देशिकस्याज्ञया चैव पत्रं वा पुष्पमेव वा १५
जयमंत्रं समुच्चार्य पीठोर्ध्वे पुष्पमर्चयेत्
स्थूलमंत्रं समुच्चार्य नीलोत्पलं च दापयेत् १६
एवं मंत्रं समुच्चार्य अष्टोत्तरशतान्तकम्
अर्चयित्वा क्रमेणैव दिनं प्रति यथाक्रमम् १७
एवं प्रतिदिनं कार्यं भोगमोक्षफलप्रदम्
एवं राज्ञा विधानज्ञो वैश्यानां चैव कथ्यते १८
प्रदोषे तु विशेषेण रक्षादीपावसानके
पीठबाह्ये समभ्यर्च्य स्थूलमंत्रं समुच्चरेत् १९
रहस्यमंत्रमुच्चार्य अष्टोत्तरशतान्तकम्
एवं नित्यं समभ्यर्च्य भोगमोक्षाभिवृद्धये २०
वैश्यानामेव कर्तव्यं चतुर्थो विधिरुच्यते
प्रातर्मध्याह्नसाये तु त्रिकाले सम्यगर्चयेत् २१
शिवमंत्रसमायोग्यान् शिवशासनसंयुतान्

अथवा भक्तिसंयुक्तान् अर्चयेत्तु विशेषतः २२
अर्धमण्डपमध्ये तु प्रविशेद्देशिकसंयुतम्
देशिकस्याज्ञया चैव उत्तराभिमुखः स्थितः २३
तत्पुष्पं पाणिना गृह्य देवाग्रे मण्डले न्यसेत्
पूर्वसंख्या समभ्यर्च्य निर्माल्यं तु विसर्जयेत् २४
एवं प्रतिदिनं कार्यं भोगमोक्षप्रदायकम्
समुदायिकमेवं स्याद् विशेषमधुना शृणु २५
पंचविंशतिपुष्पं च वत्सरान्तं समर्चयेत्
विद्यार्थी लभते विद्यां पुत्रार्थी लभते सुतम् २६
वर्णसंख्यां समभ्यर्च्य वत्सरान्तिकमेव च
धनार्थी लभते बित्तं यशोर्थी लभते यशः २७
पदसंख्यात्सपुष्पं च पंचवर्षाणि दापयेत्
रोगार्तो रोगनाशः स्यात् दासभृत्यादिवृद्धये २८
अष्टोत्तरशतं पुष्पं दशवर्षाणि दापयेत्
सर्वकामप्रसिध्यर्थं जीवन्मुक्तो भवेद्ध्रुवम् २९
विंशद्वर्षकृतं चेत्तु अश्वमेधफलं भवेत्
चत्वार्यब्दं च दातव्यं सालोकपदमाश्रयेत् ३०
पंचाशद्वर्षपर्यन्तं सामीपपदमाश्रयेत्
एकाशीत्यब्दसंयुक्तं सारूपमिहकथ्यते ३१
आदेहपातपर्यन्तं सायुज्यं च भवेद्ध्रुवम्
बिल्वपत्रादिसर्वेषां स्वर्णेनाकृत्यमर्चयेत् ३२
तत्फलं द्विगुणं प्रोक्तं विशेषाच्छत्रुनाशनम्
एवमेवक्रमेणैव स्वर्णपुष्पफलं ध्रुवम् ३३
रहस्यमंत्रं जपेद्धीमान् दिनं प्रतिशतं जपेत्
इति सूक्ष्मशास्त्रे स्वर्णपुष्पविधिपंचत्रिंशत्पटलः

शक्तिपीठार्चनं वक्ष्ये शृणुध्वं तत्प्रभञ्जन
आयुरारोग्यजयदं पुत्रश्रीकीर्तिवर्धनम् १
सर्वरोगविनाशार्थं सर्वाभीष्टफलप्रदम्

सर्वशत्रुक्षयकरं सर्वैश्वर्यप्रदायकम्  २
सर्वदानफलं चैव सर्वयज्ञफलप्रदम्
पीठार्चनात्परं पुरायं नास्तीति भुवनत्रये  ३
आत्मार्थं च परार्थं च यजनं द्विविधं स्मृतम्
आत्मार्थं तु स्वरक्षार्थं सर्वेषां रक्षणार्थकम्  ४
परार्थमिति विज्ञेयं आत्मार्थं स्वगृहार्चनम्
ग्रामे वा नगरे वापि पत्तने राजधानिके  ५
उद्याने वा नदीतीरे पर्वताग्रे मनोरमे
देवालये वा कर्तव्यं परार्थमिति विद्यते  ६
प्रासादस्योत्तरे देशे सोमशंकरमध्यमे
प्रासादं वा प्रपां वापि सालं वापि प्रकल्पयेत्  ७
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
मुखद्वारे विशेषेण लिंगसंस्थापनं कुरु  ८
पश्चिमं भोगमोक्षार्थं वृष्ट्यार्थं चोत्तरं भवेत्
पूर्वा स्यास्सर्वसिध्यर्थं दक्षिणं मोक्षसाधनम्  ९
अथवान्यप्रकारेण पूर्वद्वारं सतोरणम्
तदग्रे चन्द्रलिंगं तु स्थापयेद्विधिपूर्वकम्  १०
एवं संकल्प्य मतिमान् शेषं पूर्ववदाचरेत्
विप्रक्षत्रियविट्छूद्रा अन्याश्च प्रतिलोमजाः  ११
शंभुदीक्षा समायुक्ताः पुरुषा सा महेश्वराः
शंभुदीक्षा विरहिताः पुरुषास्ते पशु स्मृताः  १२
शंभुदीक्षा समुद्भूताः सर्वदेवेषु वन्दिताः
तत्वशुद्धिसमायुक्ताः समयस्था इति स्मृताः  १३
आत्मार्थयजनं कुर्याद् विप्रादी च चतुष्टयः
परार्थात्मार्थ यजने कार्यमेव शिवद्विजैः  १४
ब्राह्मे मुहूर्ते मनसा चिन्तयेद्गुरुरूपकम्
षोडशेनोपचारेण समना चिन्तयेद्बुधः  १५
नित्यानुष्ठानकर्मं च विज्ञाप्यानुज्ञया ततः
गुरुरूपं विसृज्याथ पंचांशेन नमस्कृतम्  १६

आधारमासनं कल्प्य प्राणायामं समाचरेत्
इडया रेचकं कुर्यात् पिंगळेनैव पूरयेत् १७
वह्निमण्डलसायोज्य पिंगळेनैव रेचयेत्
इडया पूरयेनैव सोममण्डलमध्यमे १८
इत्थं स्याद्बहुशः कृत्वा शोषणं दहनं कुरु
मण्डलत्रितयं कल्प्य वह्निमध्येन्दुमण्डलम् १९
आधारे हृदयेनैव भ्रूमध्ये च विचक्षणः
दशद्वादशकं चैव दशळं षोडशसंयुतम् २०
वाग्भवं कामराजं च शक्तिबीजं च संयुतम्
पीतं रक्तं तथा श्वेतं संयुक्तं चेत्परस्परम् २१
भावयेद्ब्रह्मरन्ध्रान्तं तदूर्ध्वे अमृतं घटम्
अधोमुखानि संचिन्त्य स्रावयेदमृतेन तु २२
ध्याययेत्तत्परां देवीं हृदयाम्भोजमध्यमे
पृथिव्यपस्तथा तेजो वायुराकाशमेव च २३
तत्तद्गुणसमोपेतं अमृतप्लावनं नयेत्
मूर्धादिपादपर्यन्तं व्यापकत्रितयं कुरु २४
बीजद्वयसमायुक्तं मातृकान्यासमाचरेत्
मूलमंत्रं शतं जप्त्वा स्तोत्रं कुरु यथा विधि २५
आवश्यकादिकं कुर्यात् पूर्वोक्तविधिना कुरु
शौचमाचमनं दन्ततालुशोधनकं कुरु २६
ततः संध्यामुपासीत क्रमाद्वैदिकशैविकीम्
सशक्तिमूलमंत्रेण तर्पणं पंचविंशतिः २७
अणिमाद्यादिकं तर्प्य मूलेनार्घ्यं प्रदापयेत्
शतमर्धं तदर्धं वा दश वापि जपेद्बुधः २८
प्रदक्षिणत्रयं कृत्वा प्रणम्य दण्डवत्कृतम्
ततो देवालयं गत्वा पुष्पं संगृह्य पाणिना २९
हर्म्यप्रदक्षिणं कृत्वा द्वारस्थानं प्रविश्य च
द्वारदेवान्समभ्यर्च्य मण्डपान्तः प्रविश्य च ३०
देवाग्रे दक्षिणे देशे स्वासीनोत्तरदिङ्मुखः

पुष्पपात्रं सदीपं च दक्षिणे स्थाप्य देशिकः ३१
अर्घ्योदकं सपात्रं च वामभागे हविर्न्यसेत्
अर्चयेन्मूलमंत्रेण धेनुमुद्रां प्रदर्शयेत् ३२
अस्त्रेणैव तु मंत्रेण दिग्बन्धनमथाचरेत्
पूजोपकरणद्रव्यान् प्रोक्षयेत्तु शिवाम्भसा ३३
भस्मन्यासं ततः कुर्याद् ध्याययेत्पूर्ववद्गुरुः
करशुद्धिं ततः कृत्वा दिग्बन्धं चास्त्रमंत्रतः ३४
अकारं मध्यमांगुल्ये आकारं नामिकां न्यसेत्
सौकारं स्यात्कनिष्ठे तु अकारांगुष्ठके न्यसेत् ३५
आकारं चैव तर्जन्यां सौकारं तलमध्यतः
बीजत्रयसमायुक्तं आत्मानं रक्ष रक्षक ३६
हृदये विन्यसेद्धीमान् दिग्बन्धं चास्त्रमंत्रतः
आत्मानं संगृहीत्वाथ पुष्पैर्नारा च मुद्रया ३७
द्वादशान्ते समायोज्य भूतशुद्धिं च पूर्ववत्
प्राणायामोक्तमार्गेण अमृताप्लावनं नयेत् ३८
सिंहासनं च संकल्प्य हृदयाम्भोजमध्यमे
स्वनाम पीठमभ्यर्च्य तन्मध्ये परमेश्वरम् ३९
परिवारसमायुक्तं ध्यायेत्तन्मूलमंत्रतः
हंसं हंसेति मंत्रेण सात्मानं रक्ष रक्षकम् ४०
दिग्बन्धनं ततः कृत्वा चतुदिक्ष्वस्त्रमंत्रतः
आत्मानमात्मयेद्धीमान् एवं शिवतनुस्मृतम् ४१
गणेशपट्टिकैश्चैव नमस्कृत्वा स्वनामतः
अंगन्यासं ततः कुर्यात् विन्यस्य मातृकां ततः ४२
अष्टत्रिंशत्कला न्यस्त्वा श्रीकण्ठादीनि विन्यसेत्
स्वदेहं सकळीकृत्य सोहं भावं समाचरेत् ४३
हृन्मध्ये चार्चयेद्देवीं नाभौ होमं प्रकल्पयेत्
आत्मशुद्धिरिदं प्रोक्तं स्थानशुद्धिं समाचरेत् ४४
तदग्रे हस्तमात्रेण चतुरश्रं प्रकल्पयेत्
त्रिकोणं कल्पयेन्मध्ये प्रोक्षयेन्मूलमंत्रतः ४५

शंखाधारं च शंखं च क्षाळनं चास्त्रमंत्रतः
अधोमुखानि संस्थाप्य पृष्ठे कूर्चं विनिक्षिपेत् ४६
शंखं संस्पृश्य मूलेन हृदयेन समुद्धरेत्
शिरोमन्त्रेण विन्यस्य कवचेनाम्बु पूरयेत् ४७
कूर्चं निक्षिप्य शिखया नेत्रेणैव समर्चयेत्
मूलमंत्रं सकृज्जप्त्वा चार्घ्यं संकल्प्य देशिकः ४८
पंचगव्यामृतादीक्षं पूजयेत्साधकोत्तमः
द्वारदेशं प्रविश्याथ गणेशं पूजयेद्बुधः ४९
फलभक्ष्यादिनैवेद्यैः संतोष्य गणनायकम्
तोरणं च समभ्यर्च्य चन्द्रलिंगं समर्चयेत् ५०
द्वारस्य दक्षिणे पार्श्वे महामोडीं समर्चयेत्
वामे मधुकरं पूज्य कवाटे तु सरस्वतीम् ५१
विमलं च सुबाहुं च ऊर्ध्वाधस्तात्प्रपूजयेत्
कवाटोद्घाटनं कृत्वा गर्भगेहं प्रविश्य च ५२
अस्त्रेणैव तु मंत्रेण दिग्बन्धनमथाचरेत्
अर्घ्योदकेन संप्रोक्ष्य मूलमंत्रेण देशिकः ५३
पुष्पं विनिक्षिपेत्पीठे धूपदीपादिकं ददेत्
पूजापर्युषितं द्रव्यं दत्वा चण्डसुभैरवे ५४
पिण्डिकां च स्थलं चैव क्षाळयेदस्त्रमंत्रतः
शुद्धतोयाभिषेके तु श्रीसूक्तेनैव देशिकः ५५
पंचगव्यामृतेनैव मूलार्णेनाभिषेचयेत्
गन्धोदकेन संस्नाप्य उमासूक्तेन देशिकः ५६
खण्डवस्त्रेण संमृज्य मूलेन पिण्डिकेश्वरीम्
गन्धपुष्पं विनिक्षिप्य चार्चयेत्परमेश्वरीम् ५७
ध्यात्वा तु मूलमंत्रेण कुर्यादावाहनादिकम्
अणिमाद्यादिशक्त्युक्तं स्वनाम्ना चैव पूजयेत् ५८
धूपदीपादिकं दत्वा नैवेद्यं दापयेद्बुधः
ताम्बूलं दापयेद्देव्या नित्याग्निं कारयेद्बुधः ५९
त्रिकोणमण्डलं कल्प्य मध्यमे तु हुताशनम्

मूलेन स्थापयेद्विद्वान् संप्रोक्ष्य हृदयेन तु ६०
ब्रह्मनख्या च मंत्रेण दर्भैश्चैव परिस्तरेत्
देवीं तन्मध्यमेभ्यर्च्य परिवारसमन्वितम् ६१
शुद्धोदनं घृतोपेतं मूलमंत्रेण होमयेत्
चतुर्दिक्षु बलिं कुर्यादिन्द्रो धर्मस्तथैव च ६२
वरुणस्सोमदेवाश्च बलिं दद्यात्स्वनामतः
पुष्पेण संगृहेद्देवीं पीठं संयोज्य देशिकः ६३
अर्ध्यपात्रं च पुष्पं च हविः पात्रान्नलिंगकम्
बलिबेरसंमायुक्तं प्राकारे बलिमाचरेत् ६४
पूर्वे गजमुखीं पूज्य अग्नौ सिंहमुखीं यजेत्
मंत्रिणीं दक्षिणेभ्यर्च्य नैर्ऋत्ये गजनायकम् ६५
शूलिनीं वारुणे देशे वायवे खड्गरूपिणीम्
सौम्ये कात्यायनीं चैव मातंगीमीशगोचरे ६६
अग्रपीठस्य चाग्रे तु सर्वसंध्यासनीं यजेत्
सिद्धा मोहा जया क्रोधा शान्ता च विजयप्रदा ६७
महापीठे बलिं दद्यात् स्वनाम्ना चैव देशिकः
गीतनृत्तादिभिर्युक्तं प्रदक्षिणमथाचरेत् ६८
वेदैस्तोत्रैश्च गानैश्च नृत्तैस्सन्तोषयेत्क्रमात्
पराङ्मुखार्घ्यं दत्वा तु प्रणम्य परमेश्वरीम् ६९
पूजापर्युषितद्रव्यैः चण्डभैरवमर्चयेत्
सवाहनं च सास्त्रं च परिवारसमन्वितम् ७०
वाद्यकं बीजसंयुक्तं तन्मंत्रेण समर्चयेत्
एवं दिने दिने कृत्वा चार्चयेत्परमेश्वरीम् ७१
केवलं त्विति विख्यातं शुद्धं वक्ष्ये यथाक्रमम्
रात्रिपूजावसाने तु विशेषेणार्चयेद्बुधः ७२
स्वर्णरजतपात्रेण लाबुपात्रे च मृण्मये
मधुना पूरितेनैव वामभागे प्रतिष्ठितम् ७३
मासपात्रं समादाय पात्राधारे तु विन्यसेत्
पुष्पपात्रं च दीपं च दक्षिणे स्थाप्य देशिकः ७४

पूर्वोक्तविधिमार्गेण देहन्यासमथाचरेत्
स्वदेहं शक्तिरूपेण मनसा चिन्तयेद्बुधः ७५
पंचपुष्पांजलिं कृत्वा मूलमंत्रेण देशिकः
शुद्धतोयेन संप्रोक्ष्य शुद्धिं तन्मध्यमे न्यसेत् ७६
मूलमंत्रं समुच्चार्य पूर्णकुम्भाभिमंत्रयेत्
गोमयालेपनं कृत्वा चतुरश्रं समन्वितम् ७७
वृत्तत्रिकोणसंयुक्तं ह्रींकारं मध्यमे न्यसेत्
श्रीपात्रं गुरुपात्रं च भैरवं पात्रमेव च ७८
शंखपूजाविधानोक्तं श्रीपात्रं संप्रपूजयेत्
गन्धपुष्पादिना चैव चार्चयेत्पिण्डकेश्वरीम् ७९
विघ्नादिक्षेत्रपालान्तं पूर्वोक्तविधिना चरेत्
अत्र किंचिद्विशेषोऽस्ति स्नानकर्म विवर्जयेत् ८०
सर्वोपचारद्रव्येण सर्पिणैव विमिश्रकम्
पूजयेत्पिण्डकाशक्तिं बिम्बत्रयसमर्पणम् ८१
दद्यात्सकुळदीपं च स्तोत्रेणैव समर्चयेत्
पराङ्मुखार्घ्यं दत्वाथ कवचेनैव बन्धयेत् ८२
एकपुष्पं गृहीत्वाथ मस्तकेषु विनिक्षिपेत्
व्यापकत्रितयं कुर्यात् दिग्बन्धं चास्त्रमंत्रतः ८३
शक्तित्रयसमायुक्तं शक्तियुक्तं पिबेद्बुधः
शुद्धाशुद्धं न कर्तव्यं असामर्थद्विजादिकम् ८४
विमुक्तस्वस्ववर्णा च क्रियामेकां समाचरेत्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ८५
पीठशक्त्यर्चनं प्रोक्तं श्रीचक्राराधनं शृणु
इति सूक्ष्मशास्त्रे शक्तिपीठार्चनविधिषट्त्रिंशत्पटलः

२५

श्रीचक्राराधनं वक्ष्ये शृणुष्वैतत्प्रभंजन
पूजाचक्रं प्रवक्ष्यामि शृणुध्वं तत्प्रभंजन १
स्थानाचार्यो फणी कर्मी समयी समयाधिपः

देशाधिपः स्वदेशी च सप्तैताश्चक्रनायकाः २
भृंगराजपदे स्त्वग्रमण्डपे देशिकस्य च
फणीतिप्रपदस्थापी देवस्यैशानमण्डपे ३
नैर्ऋते त्वीशदेशे वा कर्मस्थो मणिमण्डपे
स्नानाख्यमण्डपद्वारे समयी स्थानमुच्यते ४
सोपाने त्वीशदेशे वा सौम्ये वा समयाधिपः
देशाधिपस्तु सुग्रीवो धर्मश्रवणमण्डपे ५
मध्यहारद्वारपार्श्वे स्वदेशी स्थानमुच्यते
स्थानमेवं समाख्यातं आचारं शृणु सुव्रत ६
चक्रचिह्नः प्रदानं च क्रियानियोगमेव च
द्रव्यसंग्रहणं चैव द्रव्याणां च प्रपालनम् ७
द्रव्यपुष्पकृतं चैव चक्रभंगस्य साधनम्
द्रव्योत्पत्तिप्रवृत्ती च स्थानाचार्यादि सत्कृतिः ८
आचारमेवमाख्यातं चक्ररूपं ततः शृणु
वृषभं फणिनी मुद्रा यन्त्रिका चण्डमुद्रकौ ९
परा तु हेममुद्रार्हा क्षणिकं पिण्डपालनम्
फणिनी धर्ममुद्रार्हा कर्मी च यन्त्रिकार्हका १०
समयी चण्डमुद्रार्हा परशुं समयाधिपः
पिण्डका र्हके राजा सदेशी हेमवेत्रधृत् ११
आचार्याधर्ममुद्रार्हा फणिन्यादिकरे ददेत्
चक्रचिह्नं समाख्यातं समर्या कं शृणु १२
पूजोपकरणद्रव्यात् तत्तद्द्रव्याधिपान्यथा
मध्यहारे समाहृत्य विज्ञाप्य शिवसंनिधौ १३
स्वदेशीकृत्यमेवोक्तं स्वदेशाधिपतेः शृणु
------------- समयी चरितं शृणु १४
तत्तद्द्रव्याधिपाद्द्रव्यान् यावत्पूजावसानकम्
तत्काले समयी योग्यः प्रेरयित्वा न संकरम् १५
समयी चरितं प्रोक्तं समयाधिपतेः शृणु
यागोपकरणद्रव्यं तत्तत्कारणभारकान् १६

सर्वाण्याहूय पूजान्ते करणाधिपतिं त्यजेत्
समयीकृत्यमेवोक्तं स्वदेशाधिपतेः शृणु १७
शिवाज्ञाचक्रसंयोगात् विभ्रष्टकरणाधिपान्
पुनश्चक्रे समायोज्य यथाशक्त्या प्रशासिताम् १८
स्वदेशाधिपकृत्यं हि कर्मकोशाग्रकाधिपः
कर्मकृत्यमिति प्रोक्तं फणिनी चरितं शृणु १९
क्रियापंचकसंयुक्तस्वनुभूतिकमाप्तवान्
तत्तत्कर्मावसाने तु त्यजेत्पंचाधिकारकः २०
स्थानाचार्येण संयुक्तं विज्ञाप्य स्वनुभूतिकम्
पूजासमर्पणस्यान्ते क्रियाचिह्नानि चाहरेत् २१
स्थानाचार्यकरे दद्यात् तत्तन्मन्त्रं समुच्चरन्
फणिनी कृत्यमेवं स्यात् स्थानाचार्यकृतं शृणु २२
समयारंभपूर्वे तु चक्रचिह्नानि पूजयेत्
दूर्वाक्षतैः समभ्यर्च्य चक्राचक्रमनुं जपेत् २३
पंचाधिकारनामाय चक्रचिह्नानि दापयेत्
स्थानाचार्यकृतं प्रोक्तं चक्रधीशगणा शृणु २४
वाद्यकश्चार्चकस्संध्या विष्पगं चाप्यलंकृतः
साधकश्च षडेतानि स्थानाचार्यानुवर्त्तिनः २५
भस्मदानी धूपवेदी दीपवत्तुण्डधारकाः
पाणीयायुधसंगृह्य छत्रत्वामरधारकः २६
तटितं तुण्डधारी च तालवृन्तं च पाचनी
ताम्बूलं दायस्मवते फणिनी कृत्यनायकाः २७
नित्यदीपजले क्षाळ्य क्रिया शोधनायकम्
निर्माल्य शोधनं केशी अब्धिक्लीदुग्धपाचकः २८
अश्मशोधक्षयक्षाळी गण्डलेपोपदंशकः
बलिबेरविवस्वे ते कर्मकृत्यविधानतः २९
शोधली लोपकी पात्रा क्षाळकी भस्तदीपका
कन्तुकी कर्मणी शाली कुट्टनी वंशवादिणी ३०
विनोदी नन्दिनी वीणावादिनी रजनी तथा

एते च रान्तसमयीकृत्वा भक्तिसमन्विताः ३१
दामी नन्दामिनी पुष्पग्रामी मुकुळबन्धुनी
छत्रचारी तृणोद्धारी स्तोत्रादिविशगाननीम् ३२
भस्मवृद्धिमलोद्धारी सकती जलसेचरी
ज्ञानवैराग्यसंतोषी समयाधिपकृत्यके ३३
ग्रामवासी नम तिथी बन्धनी पुरजीवनी
शुश्रूषजनका जीषी त्वदेशी कृत्यनायकाः ३४
देववित्कालविद्विद्वान् धर्मिष्ठान्यायबलकान्
कथा वाक्यप्रशंसी च स्वदेशाधिपकृत्यके ३५
अर्चको वाप्युपासीनजलग्राही च शोधकी
मुष्टग्राळी च शुश्रूषी स्तोत्र दाविडगानवित् ३६
दामाविद्याद्यको लेख्यः प्रेष्यकस्त्वेधकस्तदि
प्रोक्ताद्वादशभेदेन शिवाज्ञा चक्रपूर्विकाः ३७
चक्रराजक्रमं प्रोक्तं भोग्यभोगक्रमं शृणु
विभजेत्काम्यनिर्माल्यमष्टम्यामयथा समम् ३८
अर्चकस्याष्टभागं हि कालांशं परियष्टिनाम्
रसांशं वाद्यकस्यैव लेख्यकस्य युगांशकम् ३९
ग्राविड्गानस्य षड्भागा द्विभागं धामभागके
द्विभागं काष्ठभारस्य वेदांशं प्रेष्यकस्य च ४०
शोधकीभागमक्ष्यंशं शुश्रूषस्य द्वियंशकम्
पात्रशोधीद्विभागं च स्थानाचार्यैकभागकम् ४१
फणी च भागमेकांशं कर्मीभागं तथैव च
समयी भागमेकांशं समयाधिपतेस्तथा ४२
देशाधिपस्य भागैकं देश्यंशं तत्तदेव हि
शेषमातिथ्यभागार्थं कल्पयेदब्धिपाचकी ४३
एवमेवक्रमेणैव काम्यभोगं यथासमम्
एवं भागक्रमं प्रोक्तं शृणु निर्माल्यकल्पनम् ४४

इति सूक्ष्मशास्त्रे पूजाचक्रविधिसप्तत्रिंशत्पटलः

२६

आत्मार्थयजनं वक्ष्ये शृणुष्वैतत्प्रभंजन
आरोग्यमायुः कीर्तिं च विजयस्य फलप्रदम्
ब्रह्महत्तिविनाशार्थं वीरहत्तिविनाशनम्
गोपहत्तिविनाशार्थं प्रजावृद्धिकरं परम् २
सर्वकामप्रसिध्यर्थं सर्वयज्ञफलप्रदम्
आत्मार्थयजनात्साम्यं न भूतं न भविष्यति ३
शुद्धं केवलसंमिश्रं आत्मार्थं त्रिविधं स्मृतम्
शुद्धं वा शक्तिरहितं केवलं शक्तिसंयुतम् ४
सौरादिचण्डपर्यन्तं मिश्रं चैव प्रकीर्तितम्
प्रातरुत्थाय मनसा ललाटे भस्म लेपयेत् ५
शिवध्यानपुराणं च चिन्तयेच्छिवभाषणम्
तद्ग्रामाच्च बहिर्गत्वा विण्मूत्रं च विसर्जयेत् ६
शौचमाचमनं तस्य दन्तधातालुशोधनम्
स्नानं च तर्पणं कृत्वा प्राङ्मुखो वैदिकं चरेत् ७
आर्द्रवस्त्रं परित्यज्य धौतवस्त्रेण वेष्टयेत्
उत्तराभिमुखो भूत्वा शैवसंधिक्रमं चरेत् ८
दक्षहस्ते जलं धार्यं सेचयेदक्षरं लिखेत्
वक्त्रशुद्धिं ततः कृत्वा एकाक्षरीति मंत्रतः ९
आपोशनार्घ्यमंत्रेण तत्वमन्त्रत्रयेण च
विभूतिं वामहस्ते च सव्यहस्ताभिमन्त्रयेत् १०
असुरांशं त्यजेद्धीमान् द्वात्रिंशैकांशराक्षसम्
दिग्बन्धनं ततः कृत्वा अस्त्रमंत्रमनुस्मरन् ११
सव्यहस्ते जलं नीत्वा मर्दयेदंगुलि न्यसेत्
मुर्ध्नि चैव ललाटे च कर्णौ कण्ठे तथैव च १२
हृदये चैव बाह्वे च नाभौ कण्ठे च मूर्ध्नि च
निष्कं निष्कार्चकं चैव निष्कद्वयं द्वयार्धकम् १३
विप्रादीनां च वर्णानां भस्मस्नानं समाचरेत्
रुद्रसंख्यासु संध्येषु ब्रह्मांगानि प्रकल्पयेत् १४

प्राणायामत्रयं कृत्वा दिग्बन्धं चास्त्रमंत्रतः
पूर्वमेवांगुलिन्यासमंगन्यासं च कल्पयेत् १५
सव्यहस्ते जलं धार्य वामहस्तस्थितं तु वा
आपोशनार्घमन्त्रेण पूर्वमन्त्रत्रयं न्यसेत् १६
द्विहस्तेन जलं धार्य ऊर्ध्वं ताराघ्र्यमन्त्रतः
सव्यहस्ते जलं गृह्य अस्त्रमंत्रप्रदक्षिणम् १७
तर्पणं रुद्रसंख्यात ब्रह्मांगेनैव मन्त्रतः
आचमनं ततः कृत्वा वैदिकं शैवमेव च १८
पादप्रक्षाळनं कृत्वा गृहारामे शिवालये
नदीतीरे तटाके वा पर्वते राजधानिके १९
नवहस्तं सप्तहस्तं वा पंचहस्तं त्रिहस्तकम्
चतुरश्रायतं वृत्तं यथेष्टं मण्डपं न्यसेत् २०
मार्जनप्रोक्षणं चैव गोमयेनानुलेपयेत्
आधारशक्तिमभ्यर्च्य तन्मध्ये खेटकं न्यसेत् २१
तदूर्ध्वं नमग्निश्चाद्य ऊर्ध्वपीठे तु पश्चिमे
तदूर्ध्वे पद्मपीठं स्यात् प्रभामण्डलसंयुतम् २२
वस्त्राधानं च वस्त्रं च पुष्पाधानसमन्वितम्
लोहजं रजतं चैव कांचनं रत्नसंयुतम् २३
रुद्राक्षं च प्रवाळं च मुक्तामालासमन्वितम्
नवरत्नं विचित्रेण माल्याभरणशोभितम् २४
चित्रवस्त्रसमायुक्तं चित्राभरणशोभितम्
खण्डवस्त्रसमायुक्तं लिंगशोधनसंयुतम् २५
गन्धपात्रसमायुक्तं पुष्पपात्रसमन्वितम्
शंखाधारं च शंखं च पात्राधारं च पात्रकम् २६
स्थालिका स्थालिकाधारं पानीयाधारपात्रकम्
जलद्रोणसमायुक्तं जलाधारणपात्रकम् २७
घण्टां च धूपदीपं च आरात्रिकमतः परम्
स्नानवेदीं च पादं च स्थितदीपसमन्वितम् २८
तीर्थपात्रसमायुक्तं आज्यस्थालीं च स्रुक्स्रुवम्

पचनपात्रसमायुक्तं व्यञ्जने पात्रसंयुतम् २९
व्रीहिचर्मं च दर्वीं च काष्ठत्रिपादिसंयुतम्
नाळिकेरकुशं चैव व्यजनं शीतशास्त्रकम् ३०
पात्रसंपाद्यमेवोक्तं द्रव्यसंपाद्यमेव च
चन्दनागरुकर्पूरकुंकुमं रक्तचन्दनम् ३१
हिमतोयं कृष्णगन्धं च गोरोचनमथद्वयम्
कुसुमं पंचपुष्पं च अष्टपुष्पं च पत्रकम् ३२
कंकणं लम्बमाला च बिल्वदूर्वाक्षतं तथा
जलपूरितमेवं तु जलद्रव्यसमन्वितम् ३३
पाद्यद्रव्यादिसंयुक्तं धूपद्रव्यादिसंयुतम्
कपिलाज्यं शुद्धतैलं शिरीषं पिष्टचूर्णकम् ३४
पंचगव्यामृतं चैव नाळिकेरं प्रयत्नतः
पंचत्रिरेकवृत्तं वा तन्तुरुद्रा च संख्यया ३५
आवृतं सप्तनाळं वा पंचनाळैकनाळकम्
दीपज्वालासमायुक्तं गोघृतं वा सुतैलकम् ३६
यथेष्टं गोघृतं चैव वृक्षबीजं च तैलकम्
द्विप्रस्थादि चतुर्द्रोणशुद्धतण्डुलसंयुतम् ३७
लवणं क्रमपक्वं च व्यंजनैरुपदंशकम्
मरीची लवणं चैव जीरकं सर्षपं तथा ३८
क्रमुकफलं च पत्रं च श्वेतगन्धं च चूर्णकम्
भस्मं च दर्पणं छत्रं चामरं तालवृन्तकम् ३९
आसनं दर्भदारुं च सारंगं चर्ममेव च
व्याघ्रचर्मं च रोमं च रत्नकम्बळवाससम् ४०
आसनं कल्पयेद्धीमान् अर्चनात्क्रममुच्यते
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः ४१
भस्मन्यासं ततः कृत्वा पूर्वोक्तविधिना सह
शिरस्नानमोक्तं दिग्बन्धनमतः कुरु ४२
प्राणायामत्रयं कृत्वा भूतशुद्धिक्रमं चरेत्
पंचग्रन्थिस्तु विच्छेदं शिरः पादान्तिकं चरेत् ४३

अमृताप्लावनं कृत्वा करन्यासांगुली न्यसेत्
अंगन्यासाष्टत्रिंशेन श्रीकण्ठामक्षरं न्यसेत् ४४
शिवहस्तं तु संकल्प्य हृत्पद्मे चार्चयेच्छिवम्
नाभौ होमं च कर्तव्यं हृन्मध्ये ध्याययेच्छिवम् ४५
आत्मशुद्धिरिति प्रोक्तं सौरपूजादिकं शृणु
खेटके भूतले वापि सौरपूजा यथाक्रमम् ४६
पूर्वाशाभिमुखं प्राप्य लेपयेद्रविमण्डलम्
बेरे तु चक्रलिखिते यथेष्टं मण्डलस्थिते ४७
उदुद्यं जातमन्त्रेण पात्रे च जलपूरिते
रक्तचन्दनपुष्पाद्यैरर्चयेद् हृदयेन तु ४८
दक्षपाणितले धार्यदर्शनार्घ्यं तु सेचयेत्
दण्डनी पिंगळे चैव गणेशगुरुमेव च ४९
प्रभूतासनं संकल्प्य विमला सौरार्थपद्मजः
दीप्तादिसर्वतोमुख्या अर्कासनखषोल्ककः ५०
नादं वह्निसमायुक्तं द्वितीयस्वानसंयुतम्
बिन्दुनादसमायुक्तं अनन्दं रुद्रसंयुतम् ५१
तृतीयस्वरसंयुक्तं नादाद्यं शिवसंयुतम्
नमोन्तं सूर्यमुच्चार्य सौरसंपूजनं कुरु ५२
सूर्यं कुंकुमसंकाशं सर्वाभरणभूषितम्
द्विनेत्रं चारुवदनं रक्तमाल्यानुलेपनम् ५३
चतुर्भुजसमोपेतं परहस्ताम्बुजद्वयम्
अभयवरदोपेतं प्रभामण्डलमण्डितम् ५४
उपवीतसमायुक्तं उषाप्रत्युषसंयुतम्
पद्मस्थं वा रथारोहं अरुणेन समन्वितम् ५५
ध्यात्वाभ्यर्च्य षडंगेन परिवारसमन्वितम्
सोमांगारकसौम्याश्च गुरुशुक्रशनैश्चराः ५६
राहुकेतू ग्रहानष्टौ पूर्वादीशान्त्यके यजेत्
क्षीरान्नं दापयेत्पश्चाद् धूपदीपादिकं ददेत् ५७
तेजश्चण्डेश्वरं पूज्य प्रणिपत्य क्षमापयेत्

पादप्रक्षाळनं कृत्वा देवाग्रे मराडलं कुरु ५८
सामान्यार्घ्यं च संकल्प्य तेनैव प्रोक्ष्य भूतले
षोडशांगुलमायामं चतुरश्रं समन्वितम् ५९
वामदेवेन संमृज्य सव्यहस्ततलेन तु
स्थानशुद्धिं च कर्तव्यं भूमिर्भूम्नेतिमंत्रतः ६०
पंचगव्यामृतैः स्नाप्य स्नानद्रव्याणि विन्यसेत्
देवस्य दक्षिणे पार्श्वे यथेष्टमासनं न्यसेत् ६१
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः
भस्मन्यासं करन्यासं अंगन्यासं तु कारयेत् ६२
पाद्यादिरर्घ्यसंयुक्तं पात्रं संपूजयेत्ततः
अथवा पात्रमेकं तु पाद्यमाचमनार्घ्यकम् ६३
पात्रं प्रक्षाळ्यशस्त्रेण हृदयेन निरीक्षयेत्
त्रिपाद्यूर्ध्वे स्थितं शंखं अवकुराठनमाचरेत् ६४
जळेन पूरयेत्पात्रं ब्रह्मांगंमनुसंस्मरन्
सव्यहस्ताभिमंत्रेण शिवगायत्रिया जपेत् ६५
सुरभिमुद्रां ससंस्पृश्य प्रोक्षयेत्पात्रतो विधि
शंखमूलं धरादेवीं कुक्षीणा विष्णुदेवतः ६६
धारया घोरदेवं तु वलयं सूर्यदेवतम्
मुखे च सप्ततीर्थानि प्रवेशे चन्द्रदेवता ६७
त्रिपाद्यामधिदेवार्थं ब्रह्मविष्णुमहेश्वराः
वृत्तमाधारशक्तिश्च इत्येते अधिदेवताः ६८
पीठशुद्धिं ततः कृत्वा प्रोक्षयेदस्त्रवारिणा
वृषेश्वरं तथा पूर्वे वृषं वा मेतु भास्करम् ६९
महेशमग्निदेशे तु दक्षिणामूर्तिदक्षिणे
गणेशं नैर्ऋते देशे तद्वामे कमलोद्भवम् ७०
षरामुखं वायुदेशे तु विद्यापीठं तु दक्षिणे
सौम्ये तु नृत्तमूर्तिश्च ईशाने क्षेत्रपालकम् ७१
कुबेरानिलयोर्मध्ये लिंगोद्भवं तु विन्यसेत्
सोमशंकरयोर्मध्ये भक्तादीन्विन्यसेत्क्रमात् ७२

भक्तानां वामपार्श्वे तु एकाक्षरीं तु विन्यसेत्
एकाक्षर्याश्च वामे तु लकुळीशं च विन्यसेत् ७३
पुष्पं मूर्ध्नि तु विन्यस्य पश्चाद्द्वारं प्रपूजयेत्
पश्चिमद्वारमस्त्रेण प्रोक्षयेत्तु शिवाम्भसा ७४
गणेशं दक्षिणेभ्यर्च्य वाग्देवीं वामपार्श्वके
मध्यमे तु महालक्ष्मीं नन्दीं गंगां च दक्षिणे ७५
महाकाळं च यमुनां वामपार्श्वे विशेषतः
ऊर्ध्वाधः संप्रपूज्याथ शिवास्त्रं संप्रपूजयेत् ७६
गणेशादिक्षेत्रपालान्तं अर्चयेत्स्वस्वनामतः
द्वारं पश्चिममेवं तु नैवेद्यं पूर्ववक्त्रके ७७
लिंगं संग्राह्य हस्तेन स्नानवेद्युपरि न्यसेत्
अर्घ्योदकेन संप्रोक्ष्य वक्त्रन्यासं समाचरेत् ७८
अंगुष्ठादिकनिष्ठान्तं पंचब्रह्ममनुन्यसेत्
कनिष्ठानामिका मध्ये नवपुष्पं तु संगृहेत् ७९
अंगुष्ठतर्जनीभ्यां च निर्माल्यं च विसर्जयेत्
विसर्जनस्य तत्काले पुष्पं मूर्ध्नि च विन्यसेत् ८०
निर्माल्यं तु विसृज्यैशे चण्डेशाय प्रकल्पयेत्
शुद्धतोयाभिषेकं च अस्त्रं पाशुपतं जपेत् ८१
मूलाधारात्समादाय ब्रह्मरन्ध्रे तु विन्यसेत्
गुरूपदेशं विज्ञेयं मंत्रशुद्धिरुदाहृतम् ८२
प्रणवादिनमोन्तं च मंत्रजीवमुदाहृतम्
चलासनं तु संकल्प्य पुष्पं मूर्ध्नि च विन्यसेत् ८३
अभ्यंगं तु ततः कृत्वा शुद्धतोयाभिषेचनम्
शिरीषपिष्टचूर्णेन लिंगं पीठं च मर्दयेत् ८४
शुद्धतोयाभिषेकं च पुष्पं मूर्ध्नि च विन्यसेत्
पंचगव्यामृतैः स्नाप्य जलेनैवाभिषेचयेत् ८५
अस्त्रमंत्रमनुस्मृत्य पुष्पं मूर्ध्नि तु विन्यसेत्
क्षीरं दधि घृतं क्षौद्रं नाळिकेरजलस्तथा ८६
इक्षुसारं च गन्धोदं शुद्धतोयाभिषेचनम्

मंत्रपुष्पं ततो दत्वा मंत्रान्नं च निवेदयेत् ८७
शुक्लवस्त्रेण संमृज्य पुष्पं मूर्ध्नि च विन्यसेत्
पद्मपीठे तु संस्थाप्य शिवमंत्रमनुस्मरन् ८८
पंचासनं समभ्यर्च्य उपर्युपरि विन्यसेत्
कमलासनं तथाभ्यर्च्य दळेभ्यः केसरेऽपि च ८९
कर्णिकायै नमश्चेति बीजेभ्यो नम इत्यपि
शक्त्यादिशक्तिपर्यन्तं अर्चयेत्तु दळाग्रके ९०
पीठे मनोन्मनीं न्यस्त्वा शुद्धस्फटिकसंनिभाम्
तन्मध्ये शिवमावाह्य पंचावरणमर्चयेत् ९१
सद्यो वाममघोरश्च पुरुषेशान एव च
अम्बी गणाम्बिका चैव भागी गौरी उमास्तथा ९२
पश्चिमे चोत्तरे याम्ये पूर्वमीशान एव च
हृच्छिरश्च शिखा वर्म नेत्रमस्त्रं तथैव च ९३
वामी नीली च पाशांगी खड्गिनी जम्भिनी तथा
आग्नेयादियमस्तीशे गर्भावरणमर्चयेत् ९४
अनन्तेशश्च सूक्ष्मश्च शिवोत्तमश्चैकनेत्रकः
एकरुद्रस्त्रिमूर्तिश्च श्रीकण्ठश्च शिखण्डिना ९५
भूमिः स्वाहा स्वधाकान्ति पुष्टिश्रीकीर्तिमेधवी
विद्येशावरणं प्रोक्तं इन्द्रादीशान्तमर्चयेत् ९६
वृषनन्दिगणेशाश्च महाकालगुहौ तथा
भृंगिणं गौरि चण्डेशं इन्द्रादीशान्तमर्चयेत् ९७
भद्रा च कुन्दळी चैव भृंगिणी पद्मिनी तथा
देवयानीश्च चस्तादीन् रूपिणीं चण्डकीशके ९८
गणेशावरणं प्रोक्तं स्वनाम्नैरर्चयेत्क्रमात्
इन्द्रश्चाग्नियमश्चैव निर्ऋती वरुणवायवौ ९९
कुबेर ईशानविष्णू च पितामहानीशमेव च
स्वाहा शान्त्या च देवी च कालकण्ठी च दाहिनी १००
भोगिनी घोशशक्तैश्च गंभिणी हर्षिणी तथा
लक्ष्मी वागीश्वरी चैव दिक्पालावरणक्रमात् १०१

वज्रं शक्तिं च दराडं च खड्गं पाशं ध्वजं तथा
गदां शूलं च चक्रं च पद्मं चेति दशायुधः १०२
प्रसन्नात्मा च कोपात्मी गुणात्मी कोमळात्मनीम्
विषात्मी विकृतात्मी च महात्मी मंगळात्मनी १०३
अस्त्रेशावरणं प्रोक्तं प्रक्रमेणैवमर्चयेत्
वस्त्रेण गळभूषं च घृतवारिसमन्वितम् १०४
गन्धपुष्पं च मकुटं कंकणं लम्बमालिकम्
रुद्राक्षमुपवीतं च प्रवाळं मौक्तिकं स्रजम् १०५
स्वर्णरत्नविचित्रेण स्वर्णमालाविभूषणम्
ऐन्द्रदेशे च अव्यक्तः याम्ये नियति गोचरे १०६
वरुणे चैव कालाख्य उत्तरे तु कलाख्यकम्
ऊर्ध्वच्छन्दमधश्छन्दमध्यमे माधमन्यसेत् १०७
योगासनं ततः प्रोक्तं तन्मध्ये चार्चयेच्छिवम्
धूपं च ध्वजदीपं च निवेद्यं चोपदंशकम् १०८
गोमयालेपनं कृत्वा देवाग्रे मराडलं न्यसेत्
अतिपक्वमपक्वं च कृशिरं परिवर्जयेत् १०९
स्थालिकाक्षाळनं कृत्वा नैवेद्यं च प्रपूरयेत्
व्यंजनैरावृतं चैव लवणं चोपदंशकैः ११०
फलादिगुळसंयुक्तं क्षीरं दधि च मध्यमे
आज्यावृतसमायुक्तं अपिधानं तु वाससा १११
नैवेद्योस्थापने मार्गे मार्जनप्रोक्षणं कुरु
पाद्यूर्ध्वे विन्यसेच्चैव बेराणां तु पृथक्पृथक् ११२
प्रोक्षणं चास्त्रमंत्रेण ताळत्रयमथोच्यते
दिग्बन्धनं ततः कृत्वा धेनुमुद्रां प्रदर्शयेत् ११३
आपोशनार्घ्यकं दत्वा हस्तप्रक्षाळनं कुरु
नवपुष्पं गृहीत्वा तु गणेशस्य निवेदयेत् ११४
तत्पुष्पं तु विसृज्याथ हस्तयोः क्षाळनादिकम्
प्रभूतहविषं दत्वा पानीयं तु निवेदयेत् ११५
महेशप्रतिमादीनां नैवेद्यं हृदयेन तु

सदाशिवस्य निर्माल्यं चराडेशस्य समीपके १९६
शेषनिर्माल्यसर्वां श्च मुखवासं तु विन्यसेत्
--------------- स्वैशाने तु विसर्जयेत् ११७
लिंगशुद्धिं ततः कृत्वा पुनरर्घ्यं प्रदापयेत्
करोद्वर्तनमेवोक्तं मुखवासं तु विन्यसेत् ११८
ताम्बूलं दापयेत्पश्चाद् दत्वा नित्यपवित्रकम्
नित्याग्नियजनं कृत्वा अन्तर्बलिसमाचरेत् ११९
धूपदीपादिकं दत्वा आरात्रिकमतः परम्
भस्मदर्पणच्छत्रं च चामरं ताळवृन्तकम् १२०
वेदस्तोत्रसमायुक्तं नृत्तगीतं सवाद्यकम्
कनिष्ठानामिकामध्ये पुष्पं संगृह्य बुद्धिमान् १२१
जपमाला तु नक्षत्रं नायकस्तु शशिर्भवेत्
प्रच्छन्नपटमाच्छाद्य मूलमंत्रमनुस्मरन् १२२
जपान्ते चैव तत्काले पुष्पं मूर्धनि विन्यसेत्
विद्यापीठं समभ्यर्च्य प्रदक्षिणनमस्कृतम् १२३
पूजासमाप्तिं विज्ञाप्य चार्चयेत्संहृदाणुभिः
चुळुकोदकं ततः कृत्वा अर्घ्यं विसर्जयेद्गुरुः १२४
उद्वाहनं तु देवाश्च सर्वात्मानि नियोजयेत्
पूर्ववत्सदनं कृत्वा मूलालिंगादि संगृहेत् १२५
स पुष्पं वस्त्रमाच्छाद्य बेराणां तु पृथक्पृथक्
पूजापर्युषितद्रव्यैश्चराडेशं च समर्पयेत् १२६
ध्वनिचराडेश्वरायेति हुंफडस्त्रान्तमन्त्रतः
धूपदीपादिकं दत्वा अर्घ्यं विसर्जयेद्गुरुः १२७
शिरः कराठे च कक्षौ च कोर्पराहस्तयोच्छिवम्
एवं दिने दिने पूज्य अर्चयेत्पूर्ववत्क्रमात् १२८
इति सूक्ष्मशास्त्रे आत्मार्थपूजाविधि अष्ठत्रिशत्पटलः

२७
मृल्लिंगार्चविधिं वक्ष्ये शृणुत्वं तत्प्रभंजन

भुक्तिमुक्तिप्रदं नित्यं सर्वकामार्थसाधनम् १
शूर्पर्क्षे श्रोणनक्षत्रे हस्ते वा नागऋृक्षके
तत्तदृक्षचतुर्थांशे क्रमुदेशप्रदेशके २
दृष्ट्वा कर्कटलग्नस्य चोदयं शिवमंत्रवित्
मृदं संग्राह्य यत्नेन काम्यराष्ट्रेशमन्दिरे ३
मध्ये तद्ग्राममध्ये च प्रधान तुरगालये
प्रधानगजवासे च शृंगस्पृक्श्वाससंयुतम् ४
चतुष्पथ्यापणे मध्ये कोशमन्दिरपार्श्वके
ग्रामदेवालये क्षेत्रे तटाकजलनिर्गमे ५
बहुयत्नेन संगृह्य दशस्थानेषु मृत्तिकाम्
पृथक्पात्रे समाकृष्य स्वदेशे देवमन्दिरे ६
शुद्धवस्त्रेण संछाद्य विन्यसेच्छालि मध्यमे
तस्मिन्मासेऽर्धमासे वा पूर्ववत्कर्कटोदयम् ७
निश्चित्यदिवसात्पूर्वे दशाहे वा नवाहके
प्रातः काले समुत्थाय स्नानं कृत्वा विधानतः ८
संतर्प्य शिवमंत्रेण अष्टोत्तरसहस्रकम्
ततो देवगृहं गत्वा महादेवं प्रणम्य च ९
दशकुंभान्समादाय तन्तुना परिवेष्टयेत्
प्रणवेन तु संक्षाळ्य संधूप्य शिवबीजतः १०
शिवमंत्रं शतं जप्त्वा प्रत्येकं मृदमाहरेत्
दशकुम्भेषु संस्थाप्य मुखं वस्त्रेण वेष्टयेत् ११
देवालयाग्रे सौम्ये वा ईशाने पावकेऽथवा
स्थण्डिलं कारयेद्विद्वान् आढकद्वयशालिना १२
हृदयेनैव संप्रोक्ष्य कुम्भान्तस्योपरि न्यसेत्
पिधाय शुद्धवस्त्रेण धराबीजेन चार्चयेत् १३
संरक्ष्य चास्त्रमन्त्रेण धेनुमुद्रां प्रदर्शयेत्
पूर्वास्यमुत्तरास्यं वा रुचिरासनसंस्थितः १४
स्पृष्ट्वा कुंभं कुशाग्रेण जप्त्वा पंचाक्षरं मनुम्
दशसाहस्रकं जप्त्वा जपान्ते होममाचरेत् १५

कुंभपूर्वेऽथवा सौम्ये होमं कुर्याद्विचक्षणः
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिना नयेत् १६
नाळिकेरफलं मुद्गं शर्करामधुसंयुतम्
कदळीपनसोपेतं सहस्राहुतिमाचरेत् १७
ब्राह्मणान्भोजयेत्तत्र नवपंचैकमेव वा
दिनं प्रति विशेषेण एवमेवं समाचरेत् १८
निश्चित्य दिवसात्पूर्वे जपहोमावसानके
शिवाग्रे मण्डपं कल्प्य षोडशस्तम्भसंयुतम् १९
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
दर्भमालासमायुक्तं वितानाद्यैरलंकृतम् २०
तन्मध्ये वेदिकां कुर्यान्नवभागैकभागतः
वेदीं वस्त्रेण संवेष्ट्य स्थण्डिलं रक्तशालिना २१
तण्डुलैस्तिललाजैश्च दर्भैश्चैव परिस्तरेत्
स्नानं कृत्वा विधानेन संतर्प्य तदनन्तरम् २२
जपहोमावसानान्ते प्रविशेन्मण्डपं बुधः
संकल्प्य रजतेनैव शिवलिंगं विचक्षणः २३
पंचगव्यामृतैः स्नाप्य वेद्यूर्ध्वे चासनोपरि
संस्थाप्य च महादेवं द्रोणपुष्पैस्समर्चयेत् २४
सहस्रं शिवमन्त्रेण पूर्वं मन्त्रेण चायुधम्
द्रोणपुष्पैस्समभ्यर्च्य धूपदीपं प्रदापयेत् २५
संग्राह्य दशमृत्कुंभान् संशोध्य वीक्षणादिभिः
शिवबीजेन वादाय तन्मृदा लेपयेद्विभुम् २६
सहस्रं जातिकुसुमैः पंचाक्षरमनुस्मरन्
सष्टिमार्गेण चाभ्यर्च्य संनिवेद्य गुळोदनम् २७
सर्वोपचारैः संपूज्य ततः साधकमानयेत्
द्रोणैश्च जातिकुसुमैः अर्चयित्वा गुरूत्तमः २८
अयुतं वा तदर्धं वा तदर्धार्धमथापि वा
साधकेनैव चाभ्यर्च्य शिवहस्तं प्रकल्पयेत् २९
कीलमंत्रं जपेद्भक्त्या करं साधकमूर्धनि

संस्थाप्य च महामंत्रं अश्वकान्तेति मंत्रवित् ३०
अनेन विधिना पूर्वरात्रौ जागरमाचरेत्
संकल्पदिवसे प्राप्ते व्रती नियतमानसः ३१
ब्राह्मणान्शिवभक्तांश्च भोजनं दापयेद्बुधः
दीनान्धकृपणादीनां अन्नपानं प्रदापयेत् ३२
पूर्वोक्तकालसंप्राप्ते गणेशं पूजयेद्बुधः
दैवज्ञेन यथाकाले यजमानाय बोधयेत् ३३
भृंगमंत्रप्रभावेन यजमानः प्रसन्नधीः
गुरूपदिष्टमार्गेण देशयेन्नवसंख्यया ३४
अनेन विधिना शाले यस्मिन्द्राष्ट्रमहीं बुधः
त्रिवारं प्राशयेत्तेन तद्राज्यं लभते ध्रुवम् ३५
मृल्लिंगस्यार्चनं चैव चतुस्सागरमध्यगाम्
मेदिनीं लभते राजा सत्यं सत्यं प्रभञ्जन ३६
मृल्लिंगस्यार्चनं प्रोक्तं मुखलिंगविधिं शृणु
इति सूक्ष्मशास्त्रे मृल्लिंगार्चनविधि एकोनचत्वारिंशत्पटलः

पादुकाराधनं वक्ष्ये शृणुत्वं तत्प्रभंजन
अर्धयामस्य पूजान्ते पूजयेत्पादुकायुगौ १
स्थलिकोर्ध्वे तु विन्यस्य तन्मध्ये वृषभं लिखेत्
तस्योर्ध्वे शिवमावाह्य गन्धपुष्पस्रगादिभिः २
शिबिकोर्ध्वे समारोप्य शंखघोषसमन्वितम्
सर्वालंकारसंयुक्तं सर्ववाद्यसमन्वितम् ३
स्तोत्रगीतसमायुक्तं शक्तिस्थाने समाविशेत्
पादप्रक्षाळनं कृत्वा पाद्यमाचमनं ददेत् ४
हस्तवारिगृहीत्वा तु विकिरेच्छयनोपरि
देवीमभ्यर्च्य विधिवदस्त्रेणावाह्य देशिकः ५
शयनोपरि विन्यस्य तस्योर्ध्वे शिवमर्चयेत्
पाद्यमाचमनं दत्वा भक्त्यापूपादिकं ददेत् ६
धूपदीपादिकं दत्वा ताम्बूलं दापयेद्बुदा

इति शास्त्रं परितोभ्यर्च्य पादुकौ विन्यसेत्स्थले ७
वस्त्रेणैव पिधानं च कुर्यात्कवाटबन्धनम्
चण्डेश्वरं समभ्यर्च्य स्वगृहं प्रविशेद्गुरुः ८
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इति सूक्ष्मशास्त्रे पादुकाराधनविधिचत्वारिंशत्पटलः

२९

अथातः संप्रवक्ष्यामि राजरक्षाविधिं परम्
विवृतं संवृतं चैव द्विविधं तत्प्रकीर्तितम् १
विवृतं भस्मसंयुक्तं सवृतं रोचनादिकम्
मासर्क्षे जन्मनक्षत्रे षडशीतिमुखेऽपि च २
अयने च चन्द्रसूर्यग्रहणे कुहुकालके
षष्ठाष्टं द्वादशे मासि शूलनक्षत्रकेऽपि च ३
युद्धारप्यावसाने च भूतरोगाद्य संभवेत्
पूजयेन्नृपरक्षार्थं अनेन विधिना बुधः ४
कर्मारम्भदिनात्पूर्वे नवमे सप्तमे तथा
शिवमाराध्य विधिवद् अर्चयेत्कृष्णवर्णगाम् ५
गोमयं सद्यमंत्रेण भूमावपतितं गृहेत्
सहादेवीं शिखाबिल्वपंचांगेन समन्वितम् ६
वामदेवेन मंत्रेण पिण्डं कृत्वा विचक्षणः
शोषणं बहुरूपेण पुरुषेणैव पाचनम् ७
ईशेन ग्राहयेद्धीमान् कलार्णैरभिमंत्रयेत्
मृत्पात्रे ताम्रपात्रे वा निक्षिपेद्धृदयेन च ८
मुखं वस्त्रेण संवेष्ट्य गन्धपुष्पसमन्वितम्
ग्रामप्रदक्षिणं कुर्यात् सर्वालंकारसंयुतम् ९
शिवाग्रे स्थापयेद्विद्वान् अधिवासनपूर्वकम्
पूजयेद्गन्धपुष्पाद्यैः मूलेनैव विचक्षणः १०
ततो मण्डपमासाद्य वितानाद्यैर्विचित्रितम्
विसृतन्नन्दधा भाज्य मध्ये व्योमपदं ग्रहेत् ११

-- पकैव चतुर्दिक्षु दिशि भद्रसमन्वितम्
मुष्टिमात्रसमुत्सेधं दर्पणोदरसंनिभम् १२
दिशि भद्रोन्नतं विद्धि तच्चतुर्भागहीनकम्
उपवेदी प्रकर्तव्या तच्चतुर्भागभागया १३
नवाग्निं वाथ पंचाग्निं एकाग्निं वाथ कारयेत्
कुण्डानि कल्पयेत्तत्र पूर्वोक्तविधिना बुधः १४
गोमयालेपनं कृत्वा शालिभिश्च विचित्रयेत्
पुण्याहं वाचयेद्धीमान् पंचगव्यसमन्वितम् १५
पूजयेत्पुरुषेणैव पवमानमुदीरयन्
शालिभिश्च वसुद्रोणैः स्थण्डिलं कारयेत्ततः १६
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
लाजैः पुष्पैः परिस्तीर्य पंचवर्णेन पूरयेत् १७
वस्त्रैरावेष्ट्य तद्वेदीं नानालंकारसंयुतम्
तन्मध्येब्जं प्रकर्तव्यं दळाष्टकसमन्वितम् १८
नवकुम्भान्समादाय क्षाळयेदस्त्रमंत्रतः
तन्तुना वेष्टयेत्सर्वान् गवाक्षसदृशान्तरम् १९
मण्डपस्यैशदिग्भागे स्थापयेत्तानधोमुखान्
तोरणान्कलशानस्त्रदिग्पतिश्च यथाक्रमम् २०
पूजयेद्गन्धपुष्पाद्यैः तत्तन्मन्त्रेण देशिकः
ततः संपूज्यगन्धाद्यैः वेदिकोर्ध्वे शिवासनम् २१
भ्रंशे सत्येन्तरिक्षे वा समर्यकपदेऽपि वा
द्वादशांगुलमानेन मण्डलं स्वस्तिकान्वितम् २२
सितरक्तयुतं वाथ पीतरक्तयुतं तु वा
युगलिंगसमायुक्तं स्वस्तिकं संप्रकल्पयेत् २३
अस्त्रमंत्रं समुच्चार्य प्रोक्षयेदस्त्रवारिणा
स्थण्डिलं तंत्र कर्तव्यं विमलैः शालितण्डुलैः २४
सौवर्णं रजतं वापि ताम्रं वा कांस्यमेव वा
स्थलिकायां न्यसेत्तत्र शालिपिष्टैर्विचक्षणः २५
द्वादशांगुलमानेन वृषभं शयनान्वितम्

सर्वावयवसंपूर्णं कल्पयेत्कल्पवित्तमः २६
पंचवर्णैरलंकृत्य सर्वाभरणभूषितम्
खुरशृंगास्य कर्णौ च वृषणं चातिरक्तकम् २७
शृंगाग्र वालपादान्तं पीतवर्णेन भूषितम्
भ्रुवो तन्मानरेखाणां कृष्णवर्णमिति स्मृतम् २८
श्यामैः शिवासनं कल्प्य शेषांगं शुक्लवर्णकम्
सर्वपुष्पैरलंकृत्य धूपदीपसमन्वितम् २९
पूजयेद्गन्धपुष्पाद्यैः तस्य गायत्रिया बुधः
जीवन्यासं ततः कुर्यात् तद्बीजेन समन्वितम् ३०
दत्वा पाद्यादिकादींश्च तन्मूलेन विचक्षणः
मण्डपादाय वृषभं शाखध्वनिसमन्वितम् ३१
पूर्वास्यमुत्तरास्यं वा स्थापयेन्वेदिमध्यमे
दूर्वाग्रमष्टसाहस्रा धवळाक्षतसंयुतम् ३२
सोमवारे समभ्यर्च्य पापभक्षणमंत्रतः
हविर्निवेदयित्वाथ मुद्गभिन्नसमन्वितम् ३३
पानीयाचमनं दत्वा धूपदीपं ददेद्बुधः
ततो देवालयं गत्वा गीतवाद्यसमन्वितम् ३४
भस्मकुंभं समादाय पूर्वभद्रे तु विन्यसेत्
नवकं दक्षिणे भद्रे स्थापयेत्पूर्ववर्त्मना ३५
पश्चिमे दश पुष्पं च नीराजनमथोत्तरे
विन्यसेद्गन्धपुष्पाद्यैः हृदयेन विचक्षणः ३६
जप्त्वा राक्षोघ्नं मंत्रं तु कृणुष्वादिजपं कुरु
धूपदीपैस्समभ्यर्च्य शुद्धान्नं च निवेदयेत् ३७
कुण्डान्तिकं ततो गत्वा ततः संस्कारमारभेत्
आधानादिविवाहान्तं पूर्वोक्तविधिना कुरु ३८
तन्मध्ये देवदेवेशं पंचवक्त्रसमन्वितम्
दाडिमीपुष्पसंकाशं दशदोर्भिः समन्वितम् ३९
पीतवर्णपरीधानं पीतमाल्यानुलेपनम्
वज्रासिशूलटंकं च अभयं दक्षिणे धृतम् ४०

फणीन्द्रवरदपाशाग्न्यं अंकुशं वाम भागके
मनोन्मन्या समायुक्तं पंचावरणसंयुतम् ४१
पूजयेद्गन्धपुष्पाद्यैः तत्तन्मंत्रेण देशिकः
इन्धनाद्याज्यसमिधः धूपं दधि घृतं मधु ४२
तिललाजगुलं मुद्गसक्थुसिद्धार्थकं फलम्
सिताम्र पंचदूर्वाग्रं होमद्रव्यं दशायुधम् ४३
मृत्युंजयार्थमंत्रेण सर्वद्रव्यं क्रमाद्धुनेत्
प्रत्येकं शतमर्धं वा तदर्धं वा हुतं चरेत् ४४
द्रव्यान्ते व्याहृतिं हुत्वा भस्मकुंभं स्पृशेत्ततः
गन्धपुष्पैः समभ्यर्च्य धूपदीपं ददेद्गुरुः ४५
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत्
विधिना वह्निमभ्यर्च्य सर्वद्रव्यैर्हुतं चरेत् ४६
ततः स्विष्टाहुतिं हुत्वा पूर्णाहुतिमथाचरेत्
गन्धैः पुष्पैः समभ्यर्च्य विसृजेदग्निदैवतम् ४७
भस्मकुंभं समादाय सर्वालंकारसंयुतम्
वेदध्वनिसमायुक्तं स्तोत्रध्वनिसमन्वितम् ४८
गीतवाद्यसमायुक्तं कृत्वा धामप्रदक्षिणम्
शिवाग्रे मण्डलं कृत्वा सर्वालंकारसंयुतम् ४९
सकळं मध्यमे स्थाप्य भस्म पूर्वे तु विन्यसेत्
नवकं दक्षिणे स्थाप्य नीराजनमथोत्तरे ५०
पश्चिमे दशपुष्पाणि विन्यसेद्देशिकोत्तमः
गणेशं पूजयेत्पश्चाद्द्वारदेवान्समर्चयेत् ५१
लिंगशुद्धिं ततः कृत्वा पंचगव्यामृतैरपि
अर्चयेद्दीपदानान्तं तन्मन्त्रेण विचक्षणः ५२
नवकैः स्नापयेद्देवं मूलमंत्रमनुस्मरन्
मंत्रपुष्पं ततो दत्वा मंत्रान्नं च निवेदयेत् ५३
वस्त्राभरणमालाद्यैः अर्चयेत्परमेश्वरम्
कुंभाद्भस्मसमादाय लिंगमूर्धनि दापयेत् ५४
बृहत्सामेति मंत्रेण लिंगमालिप्य सर्वशः

पंचवर्णहविर्दत्वा मंत्रान्नं च निवेदयेत्  ५५
ततो मण्डपमासाद्य वृषभाय हविर्ददेत्
धूपदीपैस्समभ्यर्च्य वृषमूलेन देशिकः  ५६
स्तोत्रसंगीतनृत्ताद्यैः तोषयेद्वृषभेश्वरम्
ततः सायाह्नसमये धूपदीपावसानके  ५७
नीराजनं समादाय शिवाग्रे स्थापयेद्बुधः
निवृत्यादि कला मन्त्रैः अर्चयेद्रक्तपुष्पकैः  ५८
पद्मं च शूलमुद्रां च दर्शयेद्दीपसंनिधौ
सगुग्गुळुगुळैर्युक्तं धूपामोदसमन्वितम्  ५९
देवाग्रे दर्शयेद्विद्वान् लिंगमूर्धोपरि त्रिधा
भ्रामयेन्मूलमंत्रेण अवतीर्य शनैः शनैः  ६०
एकवारं द्विवारं वा त्रिवारं वा विचक्षणः
पूर्ववद्भ्रमणं कृत्वा प्रणवेन विसर्जयेत्  ६१
ब्राह्मणैर्वाथ नारीभिः वाहयित्वा विचक्षणः
प्रदक्षिणं ततः कुर्याद् वाद्यध्वनिसमन्वितम्  ६२
पीठाग्रे गोपुराग्रे वा त्रिपथे वा चतुष्पथे
वीराजनं परित्यज्य बहुरूपमनुस्मरन्  ६३
परितः सेचनं कुर्यात् सामान्यार्घ्यजलेन तु
पादप्रक्षाळनं कृत्वा प्रविशेदालयं गुरुः  ६४
दशपुष्पैस्समं यष्ट्वा दशबीजेन देशिकः
पुष्पांजलित्रयं दत्वा अभीष्टं प्रार्थयेद्गुरुः  ६५
संध्यान्तरे परित्यज्य वृषभं जलमध्यमे
भस्म विसृज्य तारेण शुद्धपात्रे विनिक्षिपेत्  ६६
कवचेन तु संरक्ष्य मुखं वस्त्रेण वेष्टयेत्
ततः साध्यं समाहूय कल्पयेद्रुचिरासनम्  ६७
अनुग्रहशिवं ध्यात्वा प्राङ्मुखोदङ्मुखः स्वयम्
मूलेन सार्धमालोक्य चूडादिचरणान्तकम्  ६८
विन्यसेद्दक्षिणे पार्श्वे भस्मकुंभं विचक्षणः
निष्कमात्रं समादाय साध्यस्य शिरसोपरि  ६९

प्रणवेन समुद्धूळ्य त्रिवारं देशिकोत्तमः
चूडादिपादपर्यन्तं पादाच्चूडावसानकम् ७०
त्रिवारं व्यापकं कुर्यात् पापभक्षणमंत्रतः
षडंगेन चरेद्भक्त्या मृत्युं जयमनुं जपन् ७१
प्राणायामत्रयेनैव साध्यात्मानं च रक्षयेत्
साध्यस्य हृदयं स्पृष्ट्वा मूलमंत्रशतं जपेत् ७२
शिवांगैर्ब्रह्ममंत्रैश्च व्योमव्यापिं जपेद्बुधः
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ७३
इति सूक्ष्मशास्त्रे राजरक्षाविधिरेकचत्वारिंशत्पटलः

३०
रक्षादीपं कथं देव शृणुत्वं तत्प्रभंजन
यत्सर्वं तत्त्वया पृष्ठं तत्सर्वं वद मे प्रभो १
रक्षादीपं विशेषेण उत्तमा मध्यमाधमा
शान्तिकं पौष्टिकं चैव कामदं च त्रिधामतम् २
स्वर्णं वा रजतं वापि लोहं वा कांस्यमेव वा
स्थलिकाकृतिसंयुक्तं विंशदंगुलमुच्यते ३
मध्यादुत्तरपर्यन्तं पंचकुम्भानि विन्यसेत्
दशांगुलसमुत्सेधं विस्तृतं च शरांगुलम् ४
तदूर्ध्वे दीपं विन्यस्य कल्पयेत्कल्पवित्तमः
पादं चैव शरांगुल्यं उत्सेधं तत्समं भवेत् ५
विस्तारं तावदेवं च दीपपात्रं च कल्पयेत्
त्रिपाद्युपरि विन्यस्य रक्षादीपं च कारयेत् ६
एवं शान्तिकमित्युक्तं पौष्टिकस्य विधिं शृणु
विंशत्युंगुलविस्तारं स्थलिकामान उच्यते ७
शालिपिष्टमयेनाथ दीपाधारं च पंचधा
एतत्पौष्टिकमाख्यातं कामदं च ततः शृणु ८
विस्तारं तु चतुर्विं शत् पात्रं सुवृत्तमुत्तमम्
पंच सप्त नवैकं वा दीपाधारं प्रयत्नतः ९

गोमयं वाथ पिष्टं वा विन्यसेत्सप्तपात्रकैः
नवदीपं विशेषेण तण्डुलं प्रस्थपादकम् १०
पाचयित्वा क्रमेणैव कुडुपं मध्यपिण्डकम्
अष्टदिक्षु क्रमात्पिण्डं समभागकृतं हविः ११
पंचवर्णैः समालेप्य अथवा रक्तवर्णकम्
तदूर्ध्वे वर्तितं प्राप्य गोघृतेनैव सेचयेत् १२
नयनोच्छिष्टमार्गेण प्रदोषे सम्यगाचरेत्
दिनं प्रति विशेषेण राज्ञां विजयभेतले १३
शान्तिकं नित्यवत्कार्यं कुण्डे वा सर्वगोऽपि च
सायाह्ने शयनं कुर्याद् रक्षेशीं सम्यगर्चयेत् १४
अग्निर्मध्ये विशेषेण अर्चयेत्तु प्रदीपयेत्
तस्य पश्चिमभागे तु स्थण्डिलं चतुरश्रकम् १५
स्थलिकां विन्यसेत्तत्र नेत्रमंत्रेण संयुतम्
तैलं वा गोघृतं वापि वर्तितं चैव सेचयेत् १६
कुण्डाग्नौ दीपयेत्पश्चात् प्रासादेन तु मंत्रतः
अथवा वह्निबीजं वा मध्यदीपं प्ररोपयेत् १७
पूर्वाद्युत्तरपर्यन्तं पुरुषादिषु मंत्रकैः
व्योमव्यापि समुच्चार्य सर्वदीपं प्रपूजयेत् १८
गणिकां देवदासीं वा धारयेद्दीपपात्रकम्
वादित्रलयसंयुक्तं गणिकानृत्तमाचरेत् १९
वेदध्वनिसमायुक्तं सर्ववाद्यसमन्वितम्
गच्छेत्प्रदक्षिणं तस्य नयेद्देवस्य संनिधौ २०
अस्त्रमंत्रं समुच्चार्य दीपान्संपूजयेद्गुरुः
धूपदीपावसाने तु रक्षामंत्रं समुच्चरन् २१
अष्टपुष्पैः समभ्यर्च्य लिंगादीन्वर्तयेत्ततः
त्रिवारान्पंचवारान्वा भ्रामयेत्तु शनैःशनैः २२
पुनश्च गणिकादाय बलिपीठाग्रके क्षिपेत्
एवं शान्तिकमित्युक्तं पौष्टिकं च ततः शृणु २३
शिवाग्रे तु विशेषेण मण्डलं कल्पयेत्सुधीः

विन्यसेत्स्थलिकोर्ध्वे तु रक्षादेवीं च मंत्रतः २४
नेत्रमंत्रमनुस्मृत्य प्रोक्षयेत्तु शिवाम्भसा
गर्भगेहं ततः प्राप्य अस्त्रमंत्रेण पूजयेत् २५
रक्षादेवीमनुस्मृत्य दीपं दद्याच्छिवादिकम्
एकद्वित्रिक्रमाद्भ्राम्य बेरादीन्क्रमणं ततः २६
विसर्जने तु तत्काले भस्मानि दापयेत्ततः
शिवस्य रक्षां कृत्वाथ सर्वप्राणिहितावहम् २७
एवं पौष्टिकमेव स्यात् कामदं त्वधुना शृणु
कुण्डे वा स्थण्डिले वापि गर्भगेहेऽथ वा पुनः २८
सप्तपात्रे तु कर्तव्यं दीपं संयोजयेत्ततः
पौष्टिकस्य क्रमेणैव पूजयेद्देशिकोत्तमः २९
शिवेन दीपं संयोज्य विसर्जने यथा भवेत्
एवं कामदमित्युक्तं कथं देवत्वया शृणु ३०
उत्तमं दीपमाख्यातं सप्तांगुलं तदुन्नतम्
शरांगुलं तु मध्यं स्यात् शूलांगुलं तु कन्यसम् ३१
गोघृतं चोत्तमं प्रोक्तं अजाघृतं तु मध्यमम्
तैलं कन्यसमेवोक्तं गाळितेनैव कारयेत् ३२
दूर्वाक्षतैश्च संयोज्य दर्पणं भसितेन च
पाद्यादिदर्शनादूर्ध्वं शिवे दद्यात्क्रमेण तु ३३
यक्षेश्वरी स्वरूपं तु शृणुध्वं तत्प्रभंजन
यान्तेनैव समायुक्तं ईकारस्वरसंयुतम् ३४
ॐकारादिनमोन्ताश्च मध्ये रक्षेशिबीजकम्
परात्परमिदं मंत्रं तव स्तोत्र प्रकाशितम् ३५
द्विभुजं चैकवक्त्रं च द्विपादं च द्विनेत्रकम्
करण्डमकुटोपेतं सौम्यरूपं स्मिताननम् ३६
दीपमध्ये न्यसेद्देवीं अंजलीकृतमुद्रया
एवं ध्यात्वा यजेद्देवीं रक्षादेवीं च मंत्रवित् ३७
वामादिशक्तयश्चाष्टौ पूर्वादिक्रमशोर्चयेत्
सोमांगारादि संपूज्य द्वितीयावरणे न्यसेत् ३८

लोकपालादिसंपूज्य तृतीयावरणे न्यसेत्
एवमेव क्रमेणैव रक्षेशीं पूजयेद्बुधः ३९
पश्चाद्भस्म ददेच्छम्भोः तच्छेषं तु जनाय च
प्रदोषशयनं कल्प्य एवं निश्चित्य बुद्धिमान् ४०
सर्वपापहरं पुण्यं सर्वदेवप्रियार्थकम्
एवं क्रमेण संयोज्य रक्षादीपं समापयेत् ४१
इति सूक्ष्मशास्त्रे रक्षादीपविधिद्विचत्वारिंशत्पटलः

३१
अथ वक्ष्ये विशेषेण करणानां तु लक्षणम्
कार्यं कर्तृ न शक्यं स्यात् सर्वथा कारणैर्विना १
तस्माल्लक्षणसंयुक्तं कर्तव्यं करणं तथा
कुण्डानां लक्षणं चैव ततः स्रुक्स्रुवयोस्तथा २
लक्षणं होमपात्राणां परिधीनां तथैव च
परिस्तरणदर्भाणां समिधानां च लक्षणम् ३
आहुतीनां प्रमाणं च ततः स्नानोदकस्य च
पाद्यमाचमनीयं च अर्घ्यं चापि विशेषतः ४
गन्धपुष्पं च धूपं च दीपं चापि यथाविधि
वितानलक्षणं चैव प्रच्छन्नपटलक्षणम् ५
धूपानां च महाघण्टा दीपपात्रस्य लक्षणम्
द्विविधं तु विधानं स्याद् बाह्यमाभ्यन्तरं तथा ६
पादप्रमाणं सर्वेषां कलशानां तु लक्षणम्
ध्वजदण्डप्रमाणं च बलिदानस्य लक्षणम् ७
एतां लक्षणतो वक्ष्ये यथा शास्त्रविनिश्चितैः
पूर्वाग्रमुत्तराग्रं च कुर्यात्सूत्रत्रयं पुनः ८
चतुरश्रीकृते क्षेत्रे कुर्यात्कुण्डानि लक्षणैः
कर्णसूत्रं चतुर्भागं कृत्वैकेन तु वर्तयेत् ९
क्षेत्रार्धावधिकं यावत्पार्श्वयोरुभयोरपि
कर्णसूत्रस्य सप्तांशं पूर्वायां दिशि विन्यसेत् १०

पार्श्व ----------- कुण्डं योन्याकृतिर्भवेत्
चतुरश्रीकृते क्षेत्रे मध्यात्कर्णविगृह्य च ११
ततो विसृज्य क्षेत्रार्धं शेषं कुर्यात्त्रिभागिकम्
भागेनैकेन संयुक्तं क्षेत्रार्धेन तु योजयेत् १२
वर्तयेत्तेन सूत्रेण वर्तुलं कुण्डमुच्यते
चतुरश्रं तु कर्णेन कृत्वा तत्रैव पूर्ववत् १३
वर्तितं वर्तुलं कुण्डं तत्रार्धं धनुरुच्यते
क्षेत्रस्याध्यर्धमासेन साहैकाशीतिभागिकम् १४
सूत्रसूत्रमनेनैव त्रिकोणं स्यात्कृतं भवेत्
क्षेत्रं तु सप्तधा कृत्वा भागमेकं बहिर्न्यसेत् १५
तस्मान्मध्यं गृहीत्वा तु भ्राम्य वृत्तं तथैव च
कर्णाष्टांशस्य संयुक्तं कर्णार्धं यद् भवेदिह १६
सूत्रं तत्रैव वेदे तत्पंचाश्रे तु भुजाभवेत्
प्रागादिपंचसूत्रेण पंचाश्रं कारयेद्बुधः १७
दशभागं तथा क्षेत्रं कृत्वैकं बाह्यतो न्यसेत्
सूत्रेण मध्यमात्तस्य वृत्तं कृत्वा ततो बुधः १८
क्षेत्रे षोडशभागैकं क्षेत्रार्धेन तु योजयेत्
एवं सूत्रं ततः कृत्वा सप्ताश्रे तु भुजा भवेत् १९
प्रागादिसप्तसूत्रेण सप्ताश्रं भवति स्फुटम्
पद्मपद्मसमं वृत्ते कर्णिकादळसंयुतम् २०
एवं समासतः प्रोक्तं कुण्डानां लक्षणं परम्
वैकंकतमथो वाथ खादिरो वा स्रुवस्रुचः २१
अथवा याज्ञिकैर्वृक्षैः कर्तव्यौ स्रुक्स्रुवौ बुधैः
पलाशखदिराश्वत्थ प्लक्षोदुम्बरचन्दनैः २२
वैकंकतशमीबिल्वा यज्ञवृक्षा इमे शृणु
द्विधा कृत्वा ततो भागैः सूत्रेण सुमितं तथा २३
चतुरश्रं ततः कृत्वा कुर्याल्लक्षणतो बुधः
अरत्निमात्रमायामं तत्पार्श्वे तु बलिं भवेत् २४
षडंगुलपरीणाहं दण्डमूले विधीयते

तदर्धं कुराठनाहं स्यात् पुष्करं मूलवद्भवेत् २५
गोबालसदृशं गराडं ममाग्रं नासिकासमम्
पुटद्वयसमायुक्तं कर्षाज्येन पूरितः २६
स्रुवस्य लक्षणं प्रोक्तं स्रुक्लक्षणं समुच्यते
षट्त्रिंशदंगुलायामं अष्टांगुलसुविस्तृतम् २७
उत्सेधं तु तदर्धं स्यात् सूत्रे या सुमितं ततः
सप्तांगुलं भवेदास्यं हस्तारायामतोऽपि हि २८
त्रिभागैकं भागे ------ व्य महस्तारामतोऽपि हि
त्रिभागैकं भवेदग्रं कृत्वा शेषं परित्यजेत् २९
कराठं द्वयंगुलायामं विस्तारं चतुरंगुलम्
वेदिकाष्टांगुलायामं विस्तारं तत्प्रमाणतः ३०
तस्य मध्ये बिलं कुर्यात् चतुरंगुलमानतः
बिलं सुवर्तितं कुर्यात् अष्टपत्रसकर्णिकम् ३१
परितो बिलबाह्ये तु पट्टिकार्धां गुलेन तु
तद्बाह्ये यवनिम्नं तु पद्मपत्रं विचित्रितम् ३२
यवद्वयप्रमाणेन तद्बाह्ये पट्टिका भवेत्
वेदिकामध्यतो रन्ध्रं कनिष्ठांगुलमानतः ३३
घातं यवं श्वघातं स्यात् बलिमानं तु निम्नकम्
दराडं षडंगुलं नाहं दराडाग्रे दरिडकात्रयम् ३४
अर्धां गुलविवृद्ध्या तु कर्तव्यं चतुरंगुलम्
त्रयोदशांगुलायामं दराडमूले घटो भवेत् ३५
द्वियंगुलं भवेत्कुंभं नाहं विद्याद्दशांगुलम्
वेदिमध्ये तथा कुम्भे पात्रलक्षणमुच्यते ३६
इति सूक्ष्मशास्त्रे करणाधिकारविधित्रिचत्वारिंशत्पटलः

३२
सहस्रधारा विधिं वक्ष्ये शृणुत्वं तत्प्रभंजन
नित्यनैमित्तिके काम्ये स्नानान्ते तु महेश्वरम् १
सहस्रधारया स्नानं श्रीसौभाग्यप्रदं ध्रुवम्

उत्तमोत्तमधारैषां परात्परमशक्ति सा २
सहस्रवदनैः स्राव्या संचिन्त्यामृतरूपिणी
ततः पात्रं समादाय तल्लक्षणमिहोच्यते ३
सप्तांगुलं समारभ्य द्विद्व्यंगुलविवृद्धितः
सप्तविंशांगुलं यावत्पात्रविस्तारमुच्यते ४
त्रियंगुलसमं वापि पंचांगुलचुतं तु वा
विस्तारं परितो मर्त्याः पादांगुलघनं भवेत् ५
चतुर्वलययुक्तं वा द्विपार्श्ववलयान्वितम्
अयं शृंखलयायुक्तं वातरज्जुसमन्वितम् ६
स्वर्णं वा रजतं वाथ ताम्रकं च त्रिधा भवेत्
उत्तमादिक्रमेणैव कारयेत्तत्प्रभंजन ७
ब्रह्मक्षत्रियवैश्यानां स्वर्णादिषु विधीयते
भूपतीनां विशेषेण स्वर्णं वा रजतं मतम् ८
अशक्तिस्ताम्रमेवं तु कल्पयेत्कल्पवित्तमः
तत्पात्रं चतुरश्रं वा वृत्तं वाथ प्रकल्पयेत् ९
त्रियश्रं वा प्रकर्तव्यं पंचविंशत्पदं ततः
वृत्तं चेत्तु विशेषेण सर्वकामार्थसाधनम् १०
आयुष्करं पुष्टिकरं श्रीकरं चतुरश्रकम्
पात्रमध्ये विशेषेण पद्मं साष्टसकर्णिकम् ११
अंगुलांगुलवृध्या तु त्रियंगुलसमावधि
पद्मावृत्तसमायुक्तं रत्नं खचितमाचरेत् १२
माणिक्यं मध्यमे न्यस्य परिमुक्तं दृढं मतम्
तद्बाह्ये सुषिरं कल्प्य सूचिमात्रप्रमाणतः १३
यवमात्रप्रमाणं वा माषमात्रमथापि वा
त्रयोदशावरणार्थाय भ्रामयेन्मनुसूत्रकम् १४
पूर्वभागे तु वज्रं स्यात् आग्नेय्यां मुक्तकं दृढम्
दक्षिणे पुष्यरागं च निर्ऋतौ चेन्द्रनीलकम् १५
वारुणे स्फटिकं चैव वैडूर्यं चैव वायवे
सौम्ये मरकतं चैव ऐशान्यां नीलमेव च १६

तदा वृत्तासुमुक्तं वा स्वर्णं वा दृढमुत्तमम्
त्रयोदशावरणानि रन्ध्रसंख्या ततः शृणु १७
प्रथमे चाष्टरन्ध्रानि वसुदेवाधिदैवतम्
द्वितीये च कलारन्ध्रे कलानामधिदेवताः १८
तृतीये च चतुर्विंशत्सर्पराजाधिदैवतम्
चतुर्थे द्वादशरन्ध्राणि महागंगाधिदैवतम् १९
पंचमावरणे चैव पंचाशद्रन्ध्रमादिकम्
यमुनामाधिदैवत्यं सर्वरन्ध्राणि पूजयेत् २०
षष्ठमावरणे चैव युगाधिकमशीतिकम्
रन्ध्राणामधिदैवत्यं सिन्धुरेव विधीयते २१
सप्तमावरणे रन्ध्रं षडशीतियुतं तथा
नवमावरणे चैव रन्ध्रं षण्णवतिः स्मृतम् २२
गोदावरीसदैवत्यं सर्वरन्ध्रेषु योग्यताम्
दशमावरणे चैव शतरन्ध्रसमन्वितम् २३
कावेरीत्यधिदैवत्यं सुषिरे योजयेत्क्रमात्
पश्चादावरणं चेत्तु युगाधिकशतं भवेत् २४
पुण्यतीर्थाधिदैवत्यं +++++
सर्वरन्ध्राणि कर्तव्यं विन्यसेत्तु विचक्षणः २५
द्वादशावरणं चेत्तु अष्टोत्तरशतं भवेत्
इच्छाशक्त्याधिदैवत्यं सर्वरन्ध्रमशेषतः २६
त्रयोदशावरणं प्रोक्तं षट्षडाधिकशतद्वयम्
ज्ञानशक्त्याधिदैवत्यं सर्वरन्ध्रसमन्वितम् २७
एवं रन्ध्रं समाख्यातं मात्रांगुलवशान्नयेत्
चतुरश्रस्य मध्ये तु सप्तसप्तपदं भवेत् २८
मध्यकोष्ठेषु पद्मं स्यात् माणिक्यं चैव मौक्तिकम्
वज्रं नीलं च वैडूर्यं मरकतं पुष्यरागकम् २९
स्फटिकं प्रवाळमेवं तु मध्यादीशान्तमेव च
सुषिरं पंचविंशच्य पदमेकं प्रकल्पयेत् ३०
एवमेव पदान्तानि पदं प्रति पदं प्रति

सहस्रधारया युक्तं पराशक्त्याधिदैवतम्  ३१
चतुश्शृंखलया युक्तं डोलायन्तं प्रकल्पयेत्
अथवान्यप्रकारेण शृणुध्वं तत्प्रभञ्जन  ३२
तत्पात्रं त्रिविधं प्रोक्तं अधमत्रयमेव च
द्वादशांगुलमेवं तु उत्तमं परिकीर्तितम्  ३३
सप्तांगुलसुविस्तारं नीचमध्यं प्रकीर्तितम्
पंचांगुलसुविस्तारं नीचमध्यं प्रकीर्तितम्  ३४
त्रियंगुलसुविस्तारं ++++++
पादांगुलसमुत्सेधं मध्यमं त्विति विद्यते  ३५
यवद्वयसमुत्सेधं एवमेव क्रमेण तु
यवत्रयघनं प्रोक्तं क्रमेणैव सुबुद्धिमान्  ३६
पाणिभ्यां तु पात्रमादाय लिंगमूर्ध्न्यभिषेचयेत्
स्वर्णरजतताम्रैर्वा चतुरश्रं वाथ वृत्तकम्  ३७
चतुरश्रं नवकोष्ठेषु मध्ये सुषिरमेकयुक्
अन्यानि पदमध्ये तु ईशदृक्सुषिरं कुरु  ३८
चतुरश्रमिति प्रोक्तं सुवृत्तमथ चोच्यते
पूर्ववत्पात्रमेवं तु साष्टपत्रं सकर्णिकम्  ३९
कर्णिकामध्यमेकं तु पूर्वादिसुरन्ध्रकम्
तद्बाह्ये दळमध्ये तु द्वादश सुषिरं कुरु  ४०
तद्बाह्ये वृत्तमध्ये तु महाशासु युगं भवेत्
एवं सुषिरमाख्यातं अष्टोत्तरशतं क्रमात्  ४१
पंचाशत्पंचविंशच्च पूर्ववत्परिकल्पयेत्
क्षुद्रमानपदं प्रोक्तं आत्मार्थं च परार्थकम्  ४२
परार्थे भद्रमानं तु आत्मार्थं न विचारतः
मोहादज्ञानतो वापि भद्रपात्रेऽभिषेचयेत्  ४३
आयुःश्रीकीर्तिपुष्टिं च कृष्णपक्षे तु चन्द्रवित्
तत्पात्रं शंखतोयेन पूरयेन्मूलमन्त्रतः  ४४
एवमेव क्रमेणैव सहस्रधाराभिषेचनम्

इति सूक्ष्मशास्त्रे सहस्रधाराविधिचतुश्चत्वारिंशत्पटलः

३३
वागस्य लक्षणं वक्ष्ये शृणुत्वं तत्प्रभंजन
स्वर्णरजतताम्रेण शिलयेष्टकयाथवा १
दारुजैर्दशमृद्भिर्वा भुजंगं संप्रकल्पयेत्
एकहस्तं समारभ्य वस्वंगुलविवर्धनात् २
चतुर्विं शतिहस्तान्तं नागायतं प्रकल्पयेत्
आयादिशोभनोपेतं शुभमानं परिग्रहेत् ३
तन्मानं शतधा भज्य एकांशं चांगुलं भवेत्
वेदांशं मुखमानं स्याद् रुद्रांशं मुखविस्तृतम् ४
भान्वंशं फणशीर्षं स्यात् पंचांशं फणविस्तृतम्
नांसापुटान्तरं पादं नासितारं शिवांशकम् ५
तत्समं नासिदीर्घं स्यात् व्योमांशं दृष्टिमण्डलम्
तन्मध्ये यवमानेन कृष्णमण्डलमाचरेत् ६
तद्विस्तारार्धमानेन ज्योतिर्मण्डलकं भवेत्
पक्षदीर्घं द्विभागं स्याद् तद्विस्तारं शिवांशकम् ७
पक्षोच्चं चांगुलार्धं तु कर्णं पक्षांगुलं भवेत्
+++ भागे मण्डपं विधिनाचरेत् ८
तन्मध्ये वेदिकां कुर्याद् हस्तमात्रप्रमाणतः
रुद्रवेदीति सा प्रोक्ता तत्तारत्र्येकतुंगकम् ९
तत्पूर्वादिचतुर्दिक्षु विधिवेदीं प्रकल्पयेत्
अनेरेवासकं कुर्यात् तद्विधानप्रकारकम् १०
एवमेव प्रकारेण मण्डपं सम्यगाचरेत्
नवाहे वाथ पंचाहे त्रियहेंकुरमाचरेत् ११
जीर्णपीठोपरित्यागं कृत्वाथ स्नापयेन्नवम्
तज्जीर्णं तु त्रिधाप्रोक्तं स्फुटितं छिन्नभिन्नकम् १२
भद्रपीठं विशेषेण महागोपांगसंयुतम्
उपानजगती चाथ कुमुदं कर्णपट्टिका १३
पद्मं च कर्णिका चाथ महांगमिति कीर्तितम्

दळोपदळनास्यादि उपांगमिति कीर्तितम् १४
वर्जयेत्तं महांगेषु स्फुटितं च नैर्ऋत्यां चेत्प्रभंजन
क्षुद्रपीठादिसर्वेषु विभिन्नेतांश्च वर्जयेत् १५
तस्योद्धारकं वक्ष्ये पीठदक्षिणमण्डले
संकल्प्यासनं मावास्य पूजामंत्रं समाचरेत् १६
तत्पूर्वे स्थण्डिलं कृत्वा शालिभिर्विमलैः शुभैः
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् १७
द्रोणाम्बुपूरितघटात् तन्मध्ये विन्यसेद्बुधः
आवाह्य पीठं देवांश्च कुम्भमध्ये तु विन्यसेत् १८
निवेद्यादीन्समाप्याथ चाग्निकार्योक्तमार्गतः
आधानादिविवाहान्तं कृत्वा मधुघृतैरपि १९
दूर्वाभिस्तण्डुलैस्तत्तत् देवतामंत्रमुच्चरन्
शतमर्धं तदर्धं वा होमयेत्तु पृथक्पृथक् २०
क्षुरिकाबीजमुख्येन पूर्णाहुतिमथाचरेत्
जयादिरभ्याधानं च क्रमाद्राष्ट्रं भृतं हुनेत् २१
अग्निस्थं मण्डलस्थं च कुम्भमध्ये समावहेत्
भूतले निखनेत्तांश्च समुद्रेष्वथवा नयेत् २२
जीर्णपीठादिसंभूतं अस्तिचेदिदमाचरेत्
पीठशुद्धिं ततः कृत्वा पंचमृद्द्रव्यबिल्वकैः २३
भद्रपीठे विशेषोऽस्ति तदग्रस्थितदर्पणे
धाराभिषेचनं कुर्यात् शुद्धैरुद्धेति मन्त्रतः २४
वास्तुहोमबलिं चाथ मण्डपार्चाम्बुराचरेत्
रक्षाबन्धं ततः कुर्याद्भद्रपीठोर्ध्वकर्णिके २५
अन्येषामेवपीठानां कृतं वा तद्विनाचरेत्
वेद्यासुस्थण्डिलं कुर्याद् अष्टद्रोणेन शालिना २६
तन्मध्ये तण्डुलैर्युक्तं तदर्धं तिलसंयुतम्
लाजैः पुष्पैस्तिलैर्दर्भैः विकीर्णैस्समलंकृतम् २७
तत्पूर्ववेदिकुम्भेषु दक्षिणोत्तरमध्यतः
नन्दिनं च महाकाळं वृषभं पूजयेत्क्रमात् २८

ततो दक्षिणसंभूतवेदिकुंभेषु सर्वतः
दुर्गां मातृश्च विघ्नेशं वरस्कन्दौ च माधवम् २९
चण्डेशमग्न्यादीशान्तं अग्रे भूतेशमर्च्य च
प्रतीचीवेदिकुम्भेषु रिष्टं तु भुजगेश्वरम् ३०
धर्मदेवमवामे च वामे मध्येष्वनुक्रमात्
उदीचीवेदिकुम्भेषु इन्द्रं वैश्वानरं यमम् ३१
निर्ऋतिं पाशिवाध्विन्दुवटुकाख्यं महेश्वरम्
विष्णुं पितामहं चापि पूर्वादारभ्य पूजयेत् ३२
तन्मध्ये वेदिकुंभेषु आमोदं च प्रमोदकम्
सुमुखं दुर्मुखं चाथ अविघ्नं विघ्नविनायकम् ३३
पूर्वदक्षिणपाशीन्द्ररुद्रदिक्कर्णिकोर्ध्वतः
आसनं मूर्तिमूलाद्यैः संयुतं तान्समर्चयेत् ३४
तत्तद्वेद्युत्तरे देशे क्षुद्रपीठाधिवासनम्
भद्रपीठे विशेषोऽस्ति तत्स्थाने चाधिवासयेत् ३५
वेदपारायणं कुर्यात् कुम्भस्थापनपूर्वकम्
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत् ३६
समिदाज्य चरुं लाजं सर्षपं च यवं तिलम्
तत्तन्मूलषडंगैश्च पवमानैस्त्रियम्बकैः ३७
स्पृष्ट्वा स्पृष्ट्वा तु जुहुयात्तत्तन्मूलमनुस्मरन्
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत् ३८
तोरणादिघटान्सर्वानर्चयेद्गन्धपुष्पकैः
क्षुद्रपीठे प्रतिष्ठाय स्थानं वक्ष्यामि तच्छृणु ३९
प्रासादमध्यमाश्रित्य चान्तर्मण्डलमध्यतः
दुर्गादिचण्डपीठान्तं अग्नेरीशान्तमर्चयेत् ४०
अग्रे वषस्थलं यत्र तत्र तत्पीठदेशकम्
तत्पृष्ठे भूतनाथस्य पीठदण्डप्रमाणतः ४१
द्वारं प्रति विशेषेण द्वारेशपरमेशकम्
अन्तर्मण्डलमात्रं स्याद्धर्मेशस्य वृषातृता ४२
इन्द्रपीठमुखायामे भद्रपीठाग्रमानतः

तत्स्थानसीमासंबद्धं अन्तर्मण्डलमानतः ४३
अग्न्यादिस्थापयेत् सप्त दिक्षुसोमेशमध्यतः
नैर्ऋते दण्डमानेन विष्णुपीठं प्रतिष्ठयेत् ४४
ऐशान्यां सप्तमानेन ब्रह्मपीठं प्रतिष्ठयेत्
द्वितीयावरणे पीठास्त्वेवमेव प्रकल्पयेत् ४५
भद्रपीठप्रतिष्ठा तु प्रोक्ता प्राकारलक्षणे
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमांगुळीयकैः ४६
अध्येतॄन्परिचारांश्च यथावित्तानुसारतः
पर्यष्टीनुत्तरीयाद्यैः उष्णीषैर्मण्डितेन च ४७
पूर्वे तु स्थापितघटान् सर्वातोद्यसमन्वितम्
शिरसा वायित्वा तु कृत्वा धामप्रदक्षिणम् ४८
तत्तन्मूलं समुच्चार्य तत्तत्पीठेऽभिषिच्य च
भद्रपीठे विशेषोऽस्ति मन्त्रन्यासं समाचरेत् ४९
इति नागविधिः ३३ पटलः

३४

गोपुरस्य विधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
अन्तर्मण्डलमारभ्य मर्याद्याद्यन्तसालके १
शोभार्थं रक्षणार्थं च द्वारशालादिमाचरेत्
द्वारशाला द्वारशोभा द्वारप्रासादहर्म्यकम् २
द्वारगोपुरमित्येते पंचधा परिकीर्तिताः
द्वारशालादिहर्म्यान्तं शोभार्थं रक्षणार्थकम् ३
किंचिद्भेदविशेषेण महागोपुरमिष्यते
एकादित्रितलान्तं च स्नानार्थं संप्रकल्पयेत् ४
युगादिसप्तपर्यन्तं वज्रमाभरणानि च
अष्टादिपंक्तिपर्यन्तं शयनार्थं प्रकल्पयेत् ५
रुद्रादित्रयो दशान्तं गौडभाषादि कल्पयेत्
चतुर्दशतलान्तं च नृत्तगीतादिवाद्यकम् ६
तलभेदः प्रकर्तव्यो दिवाकार्यप्रकाशनम्

ऋतुमार्गवशात्तत्र कल्पयेत्कल्पवित्तमः ७
एकादित्रितलान्तं च द्वारशालां प्रकल्पयेत्
त्रितलादिषु भूम्यन्तं द्वारप्रासादमाचरेत् ८
षड्दळादष्टपर्यन्तं द्वारहर्म्यं प्रकल्पयेत्
कलाभूम्यवसानं च महागोपुरमिष्यते ९
अथवा सर्वसालेषु मुनिसंख्यतलं भवेत्
सालानामपि सर्वेषां इत्येवं परिकल्पनम् १०
उपपीठसमायुक्तं केवलं वा मसूरकम्
उपपीठसमायुक्तं पंचांशं तु विभाजिते ११
अधिष्ठानं शिवांशं तु क्वांशं वा चरणायतम्
एकांशं प्रस्तरोत्सेधं अधिष्ठानमुपांशकम् १२
उपपीलक्रमेणैव कूपपीठं प्रकल्पयेत्
अश्रमायाम उत्सेधे विस्तारात्संप्रवक्ष्यते १३
मूलहर्म्यविशालं तु चतुर्गुणमुदाहृतम्
पंचषड्भागमानं तु गोपुरं संप्रकल्पयेत् १४
विस्तारमष्टधा कृत्वा द्वादशांशं दशांशकम्
शिवांशं रोपयेद्धीमान् एकांशं रहितं क्रमात् १५
पंचषट्सप्तभागास्तु गुणिताः संप्रकीर्तिताः
शालादिगोपुरान्तं च विस्तारमिह कथ्यते १६
प्रासादमानमेवं हि हस्तमानं शृणु क्रमात्
पंचहस्तं समारभ्य्ह द्विद्विहस्तविवर्धनात् १७
यथाश्रद्धानुसारेण कल्पयेत्तु विचक्षणः
पंचधागोपुरे कार्यं क्रमेण विनिवेशयेत् १८
सप्तहस्तं समारभ्य त्वेकहस्तविवर्धनात्
हस्तसप्तति यावच्च यथामानं प्रकल्पयेत् १९
नवहस्तं समारभ्य द्विद्विहस्तविवर्धनात्
अशीतिद्वयहस्तान्तं पंचधा परिकल्पयेत् २०
रुद्रहस्तं समारभ्य त्वशीत्यन्तं प्रकलप्येत्
विस्तारमेवमाख्यातं आयाममधुना शृणु २१

सार्धपादं सपादं वा सत्रिपादमथापि वा
द्विगुणं द्विगुणार्धं च त्वायामं कल्पयेद्बुधः २२
हस्तं त्रिपादमर्धं वा वृद्धिहानिं च कल्पयेत्
आयादिशोभनार्थं च विस्तारे तु विशेषतः २३
प्राक्बाह्ये पादमध्ये वा पादाभ्यन्तरमेव वा
आयादिशुभसंयुक्तं तत्र मानं प्रकल्पयेत् २४
विस्तारं कल्प्य चोत्सेधं विस्तारं रसधा भजेत्
शान्त्योत्सेधं तु धर्मां शं कल्पयेत्तु विचक्षणः २५
विस्तारे तु नवांशं तु द्वादशांशं तु शोभया
त्रिपादाधिकं प्रासादं हर्म्यं द्विगुणमुत्तमम् २६
द्विगुणम् द्विगुणार्धं च गोपुरं तु प्रकल्पयेत्
उत्तरादिशिखान्तं च मस्तकान्तमथापि वा २७
कूटकोष्ठादिनीप्रं च मानसूत्रं बहिः क्रमात्
प्रासादोक्तवशात्तत्र नीप्रवेशं च कथ्यते २८
त्रिभागे द्वयमेवं वा चतुर्भागे द्विभागिकम्
सप्तभागं च सालाग्नि ++ निष्क्रान्तमेव हि २९
त्रिहस्तं तु समारभ्य यावद्दशकरान्तकम्
द्वारविस्तारमेवं तु क्रमेणैव तु कल्पयेत् ३०
सार्धपादं सपादं वा त्रिपादसहितं तु वा
द्विगुणं तु तदुत्सेधं द्वारमानं विधीयते ३१
द्वयंगुलादि च सप्तान्तं मध्यान्नीप्रं प्रकल्पयेत्
लिंगस्य मध्यवामे तु द्वारमध्यं प्रकल्पयेत् ३२
द्वादशांगुलमारभ्य पंचाशद्विस्तृतं भवेत्
त्रिभागेनैकभागं वा पंचभागैकमेव वा ३३
स्तंभनिष्क्रान्तमेवं हि अधोदुम्बरमुन्नतम्
द्वारस्तम्यप्रमाणेन उपानाद्युत्तरान्तकम् ३४
द्वारोच्चं वसुभागं तु वेदांशमुपपीठकम्
अधिष्ठानं द्वयांशेन द्वयांशं तलिपायतम् ३५
अष्टनन्ददशांशं तु उपपीठं त्रियंशकम्

त्रिभागेनैकभागेन अधिष्ठानोच्छ्रयं भवेत्  ३६
द्वियंशं तलिपायामं प्रथमं च प्रकल्पयेत्
उपपीठोदयान्तं च स्थलमानं विधीयते  ३७
पूर्वे परे च साले तु द्वारस्तंभं प्रकल्पयेत्
पूर्वे कवाटबन्धं स्याद् अपरे तु विवर्जयेत्  ३८
कवाटद्वारयोगं च धामोक्तविधियत्नतः
पंक्तित्रयं समारभ्य रुद्रपंक्त्यन्तविस्तृतम्  ३९
पंक्तिद्वयं वा चैकं वा पंक्तिमानं प्रकल्पयेत्
विस्तारे नवभागेन पंचांशं नाळगेहकम्  ४०
शेषं कुड्यविशालं स्यात्तदर्धं  वापि कल्पयेत्
शेषं तु भित्तिविस्तारमेकभौमं प्रकल्पयेत्  ४१
विस्तारं सप्तभागे तु आयामं च तथा भवेत्
त्र्यंशं तु गर्भगेहं स्यात्पादभित्तिविशालकम्  ४२
कर्णकूटं शिवांशं स्याच्छालायामं द्वियंशकम्
हारान्तरं तदंशेन विस्तारायाममेव च  ४३
द्वितलं त्विति विख्यातं त्रितलं त्वधुनोच्यते
दशांशं विभजेद्दीर्घं  विस्तारं च तथा भवेत्  ४४
त्रियंशं गर्भगेहं स्यात् एकांशं गृहपिण्डिका
अलिन्दमेकभागेन हाराव्यासं शिवांशकम्  ४५
कर्णकूटं शिवांशेन शालादीर्घं  त्रियंशकम्
एकांशं पंजरव्यासं अर्धां शं हारयोन्तरम्  ४६
एवमेव क्रमेणैव द्वितलं पूर्ववद्भवेत्
त्रितलं त्विति विख्यातं चतुर्भौममतः शृणु  ४७
एकादियुगभूम्यन्तं निष्क्रान्तं भित्तिकं विना
द्वितलादिकलान्तं च सार्धकोटिसमन्वितम्  ४८
एकांशमर्धमर्धं  वा सार्धकोटिविशालकम्
मध्यकोष्ठांशसंयुक्तं सार्धकोटिसुभद्रकम्  ४९
विस्तारे रुद्रभागं तु गर्भगेहं त्रियंशकम्
द्व्यंशं तु भित्तिविष्कंभं अंशेनाण्डारिकं भवेत्  ५०

हाराव्यासमथार्धां शं बाह्ये भित्तिरुदाहृता
विस्तारं दशधा कृत्वा कर्णकूटं शिवांशकम् ५१
चतुरंशं कोष्ठदीर्घं शेषं हारा सपंजरम्
+++ कर्णकं त्यक्त्वा आयामे तु विशेषतः ५२
षोडशांशं विभज्याथ द्व्यंशं तु पार्श्वकोष्ठकम्
शालादीर्घं षडंशं तु अर्धां शेन तु पंजरम् ५३
शेषं हारान्तरं प्रोक्तं एवमेव क्रमेण तु
त्रयोदशांशविस्तारे नाळगेहं त्रियंशकम् ५४
एकांशे गृहपिण्डस्तु अंशेनाण्डारिकं भवेत्
हारादीर्घं त्वेकांशं बाह्यभित्तिविशालकम् ५५
रसभूम्यादिभूम्यन्तं कल्पयेत्कल्पवित्तमः
द्वादशांशं तु विस्तारं एकांशं कूटविस्तृतम् ५६
पंचांशं कोष्ठदीर्घं तु शेषं हारा सपंजरम्
कर्णकूटांशकं त्यक्त्वा आयामे तु विशेषतः ५७
शालायामं तु सप्तांशं शेषं हारा सपंजरम्
रसभूमिरिति प्रोक्ता सप्तभूमिरथोच्यते ५८
त्रयोदशांशं कृत्वाथ एकांशं कूटविस्तृतम्
शालादीर्घं तु भूतांशं शेषं हारान्तरं भवेत् ५९
कर्णकूटांशकं त्यक्त्वा आयामे तु विशेषतः
त्रयोविंशांशमायामं दशांशं कोष्ठदीर्घकम् ६०
द्व्यंशं तु पार्श्वकोष्ठं च एकांशं चैव पंजरम्
शेषं हारासमायुक्तं सप्तभूमिरिति स्मृतम् ६१
विस्तारं पूर्ववत्कृत्वा एकांशं कर्णकूटकम्
शालांशं भूतभागं तु शेषं हारा सपंजरम् ६२
आयामे तु विशेषेण कर्णकूटांशकं त्यजेत्
त्रयोविंशतिभागं तु पार्श्वकोष्ठं द्वियंशकम् ६३
शालायामं तु सप्तांशं सार्धां शं पंजरं भवेत्
एकांशाधिककोष्ठं वा शेषं हारा सपंजरम् ६४
कर्णकूटांशकं त्यक्त्वा दीर्घमेव विधीयते

एवं रसादिभूम्यन्तं त्रियंशं गर्भगेहकम्  ६५
शेषं पूर्ववदुद्दिष्टं नवभागान्तमुच्यते
+++++++++++++++++ नैव पंजरम्  ६६
शेषं हारान्तरं प्रोक्तं नवभूमिरिति स्मृतम्
विस्तारे सप्तदशांशं एकांशं कूटविस्तृतम्  ६७
सप्तांशं कोष्ठदैर्घ्यं  स्या शेषं हारा सपंजरम्
द्वात्रिंशद्दीर्घमेवं तु द्वियंशं पार्श्वकोष्ठकम्  ६८
दशांशं कोष्ठमेवं तु अर्धां शेनैव पंजरम्
शेषं हारान्तरं प्रोक्तं दशभौमं प्रकल्पयेत्  ६९
विस्तारे तु चतुर्विं शत् द्व्येकांशं कर्णकूटकम्
द्व्यंशं तु पार्श्वकोष्ठं तु रसांशं कोष्ठदैर्घ्यकम्  ७०
अर्धां शं पंजरव्यासं शेषं हारान्तरं मतम्
दीर्घमेवं प्रकर्तव्यं कर्णकूटांशकं विना  ७१
आयामे चत्वार्त्यं शं तु अष्टांशं कोष्ठमायतम्
पक्षांशं पार्श्वकोष्ठं च पंजरं तु त्रिपादकम्  ७२
शेषं हारान्तरं प्रोक्तं रुद्रभूमिरिति स्मृतम्
एकमर्धं  त्रिपादं वा पंजरस्य तु दैर्घ्यकम्  ७३
शेषं हारान्तरं प्रोक्तं कल्पयेत्तु यथाविधि
त्रिसप्ततिविभागं तु एकांशं कर्णकूटकम्  ७४
युगांशं पार्श्वकोष्ठं च दशांशं मध्यकोष्ठकम्
अर्धां शं पंजरं प्रोक्तं शेषं हारान्तरं मतम्  ७५
अष्टत्रिंशांशमायामं द्व्यंशं तु पार्श्वकोष्ठकम्
शालायामं तु भान्वंशं नन्दांशं पंजरं भवेत्  ७६
शेषं हारासमं प्रोक्तं अर्कभूमिरिति स्मृतम्
त्रिंशदंशेशविस्तारं एकांशं कूटविस्तरम्  ७७
द्व्यंशं तु पार्श्वकोष्ठं च दशांशं कोष्ठमेव च
एकांशं पंजरं प्रोक्तं त्रयोदशतलं क्रमात्  ७८
द्वाविंशतिश्च विस्तारं एकांशं कूटविस्तरम्
शालादीर्घं  तु रुद्रांशं पार्श्वकोष्ठं द्वियंशकम्  ७९

पंजरार्धेन कर्तव्यं शेषं हारासमं भवेत्
चत्वार्यं शं विभज्याथ अर्कांशं कोष्ठमेव च ८०
द्व्यंशं तु पार्श्वकोष्ठं च अर्धां शेन तु पंजरम्
शेषं हारान्तरं चैव चतुर्दशतलं मतम् ८१
विस्तारं विंशदंशं तु एकांशं कर्णकूटकम्
नन्दांशं कूटमेवं तु पार्श्वकोष्ठं द्व्यांशकम् ८२
अर्धां शं पंजरं प्रोक्तं शेषं हारान्तरं मतम्
आयामे तु विशेषेण पंचाशद्भागमेव हि ८३
विंशद्भागं च कोष्ठं च द्व्यंशं तु पार्श्वकोष्ठकम्
त्रिपादं पंजरं प्रोक्तं शेषं हारान्तरं क्रमात् ८४
एकोनत्रिंशविस्तारं एकांशं कूटविस्तरम्
पार्श्वकोष्ठं द्वियंशं च दशांशं मध्यकोष्ठकम् ८५
एकांशं पंजरं प्रोक्तं शेषं हारान्तरं मतम्
षष्ठ्यंशं विभजेत्तत्र मध्यकोष्ठं त्रयोदश ८६
द्व्यंशं तु पार्श्वकोष्ठं च एकांशं पंजरं भवेत्
शेषं हारान्तरं प्रोक्तं पंक्तिमानमिदं परम् ८७
प्रस्तरे पंचभूम्यादि वेशनं च ततः शृणु
सभद्रं वा विभद्रं वा प्रस्तरं कल्पयेद्बुधः ८८
कर्णकूटादिशालानां भद्रमेवं विधीयते
गण्डमानमथो बक्ष्ये शृणु त्वं तत्प्रभंजन ८९
उत्तरादिशिखान्तं च मुनिभागं च कल्पयेत्
सार्धां शं तु कपोतोच्चं एकांशं गळमेव च ९०
पादोनत्र्यंशशिखरे शिखामानं तु शेषकम्
एवमेव क्रमेणैव एकभौममिति स्मृतम् ९१
उत्तरादिशिखान्तं च शतभागमिति स्मृतम्
कपोतोच्चं सपादांशं द्व्यांशं चरणोन्नतम् ९२
एकांशं मंजमानं तु सार्धपक्षांशकं घटम्
शिखाशेषं प्रकर्तव्यं द्वितलं च यथाक्रमम् ९३
उत्तरादिशिखान्तं च त्रयोदशांशमेव च

मंचं सार्धां श्च मानं च सार्धद्व्यंशांशमंघ्रिकम् ९४
प्रस्तारोच्चं समापादांशं द्व्यंशं पादमेव च
कपोतोच्चं त्वेकपादं तत्समं गळमेव च ९५
सार्धपक्षांशकं प्रोक्तं शेषं स्तूप्यादयं स्मृतम्
उत्तरादिशिखान्तं च त्रयोदशविभाजिते ९६
अर्धां शं मंचमानं स्यात् सार्धद्व्यंशांघ्रितुंगकम्
कपोतोच्चं सपादांशं पक्षांशं पाददैर्घ्यकम् ९७
मंचमानं शिवांशं च शक्त्यंशं गळमुच्यते
शिखरं सार्धपक्षांशं शेषं स्तूप्युदयं भवेत् ९८
त्रितलं ह्येवमाख्यातं चतुर्भूतमतः शृणु
स्तूप्याद्युत्तरसीमान्तं अष्टादशविभाजिते ९९
पादोनद्व्यंशमंचोच्चं पक्षांशं चरणायतम्
व्योमांशं मंचमानं स्याद्गळं तत्सममुच्यते १००
पादोनत्र्यंशशिखरं शेषं स्तूप्युदयं भवेत्
चतुर्भूमिरिति प्रोक्ता बाणभूममथ शृणु १०१
उत्तरादिशिखान्तं च पंचविंशतिभागया
पक्षांशं मंचमानं स्यात् सार्धाग्न्यंशांघ्रितुंगकम् १०२
सपादांशं कपोतोच्चं गुणांशं तलिपायतम्
सार्धां शं मंचमानं स्यात्सार्धपक्षांशमंघ्रिकम् १०३
सपादांशं कपोतोच्चं पक्षांशं तलिपायतम्
कपोतोच्चं सार्धपादांशं गळं तत्सममुच्यते १०४
युगांशं शिखरोत्तुंगं शेषं स्तूप्युदयं भवेत्
पंचभूमिरिति प्रोक्तं रसभूमिरथोच्यते १०५
उत्तरादिशिखान्तं च एकत्र्यंशांशकं भवेत्
सपादद्व्यंशमंचोच्चं युगांशं चरणायतम् १०६
पक्षांशं मंचमानं तु सार्धाग्न्यंशांघ्रितुंगकम्
पादोनद्व्यंशमंचोच्चं गुणांशं चरणायतम् १०७
सार्धां शं मंचमानं तु सार्धपक्षांशमंघ्रिकम्
सपादांशं कपोतोच्चं कलांशं चरणायतम् १०८

व्योमांशं मंचमानं तु सपादांशं गळोदयम्
शिखरं युगभागं तु शेषं स्तूप्युदयं भवेत् १०९
रसभूमिरिति प्रोक्तं सप्तभूममथ शृणु
उत्तरादिशिखान्तं च अष्टत्रिंशति भागया ११०
सार्धं तु द्व्यंशमंचोच्चं सार्धवेदांशमंघ्रिकम्
सपादद्व्यंशमंचोच्चं युगांशं तलिपायतम् १११
पक्षांशं मंचमानं तु सार्धाग्न्यंशांघ्रितुंगकम्
सपादद्व्यंशमंचोच्चं वेदार्धं चरणायतम् ११२
पक्षांशं प्रस्तरोत्सेधं युगपादाधिकं भवेत्
स्थाणुत्रिपादं मंचोच्चं अग्न्यर्धं तलिपायतम् ११३
सार्धांशं मंचमानं तु त्र्यंशं पादाधिकं भवेत्
सपादांशं कपोतोच्चं त्रिभागं गळमुच्यते ११४
शिखरे पंचभागे तु शेषं स्तूप्युदयं भवेत्
सप्तभूमिरिति प्रोक्तं वसुभूमिमथ शृणु ११५
पंचांशं द्वेदमाधिक्यं भागं कृत्वा गृहोन्नतम्
द्विपादद्व्यंशमंचोच्चं रसार्धं तलिपायतम् ११६
सपादद्व्यंशमंचोच्चं भूतांशं तलिपायतम्
सपादद्व्यंशमंचोच्चं वेदांशं चरणायतम् ११७
पक्षांशं मंचमानं तु युगांशं चांघ्रितुंगकम्
पादोनद्व्यंशमंचोच्चं गुणार्धं चरणायतम् ११८
सार्धांशं मंचमानं तु द्विगुणं चांघ्रितुंगकम्
सपादांशं कपोतोच्चं पक्षार्धं चरणायतम् ११९
सपादांशं कपोतोच्चं गुणांशं गळमुच्यते
शिखरे पंचभागे तु शेषं स्तूप्युदयं भवेत् १२०
वसुभौममिति प्रोक्तं नन्दभौममथ शृणु
उत्तरादिशिखान्तं च षष्ट्यंशं विभजेत्ततः १२१
द्विपादद्व्यंशमंचोच्चं भूतार्धं चरणायतम्
द्विपादद्व्यंशं कपोतोच्चं पंचांशं चरणोदयम् १२२
सपादद्व्यंशमंचं तु युगांशं तलिपायतम्

द्व्यंशं तु प्रस्तरं चैव अग्न्यर्धं तलिपायतम् १२३
त्रिपादांशं कपोतोच्चं गुणांशं चरणायतम्
सार्धां शं मंचमानं तु द्व्यंशार्धं चरणायतम् १२४
सपादांशं कपोतोच्चं द्व्यंशं तु चरणायतम्
अंशं च प्रस्थमानं तु त्र्यंशं तु गळमुच्यते १२५
शिखरे पंचभागे तु शेषं स्तूप्युदयं भवेत्
उत्तरादिशिखान्तं च चतुष्षष्ट्यंशकं भजेत् १२६
सपादत्र्यंशमंचोच्चं कौशिकार्धां घ्रितुंगकम्
गुणांशं मंचमानं तु सार्धभूतांशमंघ्रिकम् १२७
पादोनत्र्यंशमंचोच्चं भूतांशं तलिपायतम्
कपोतं सार्धपक्षांशं सार्धं वेदांशमंघ्रिकम् १२८
सपादद्व्यंशमंचोच्चं वेदांशं चरणायतम्
सपादांशं कपोतोच्चं गळं तत्सममुच्यते १२९
शिखरे युगभागे तु शेषं स्तूप्युदयं भवेत्
दशभूममिदं प्रोक्तं रुद्रभूममथ शृणु १३०
सप्ततीयुगभागं तु उत्तरादिशिखान्तकम्
सार्धाग्न्यंशं कपोतोच्चं तलिपं सार्धषट्ककम् १३१
सपादत्र्यंशमंचोच्चं कौशिकांशांघ्रितुंगकम्
कपोतोच्चं गुणांशं तु सार्धभूतांशमंघ्रिकम् १३२
पादोनद्व्यंशमंचोच्चं गुणांशं चरणायतम्
कपोतं सार्धपक्षांशं सार्धवेदांशमंघ्रिकम् १३३
सपादद्व्यंशमंचोच्चं वेदांशं चरणायतम्
पक्षांशं मंचमानं तु सार्धाग्न्यंशांघ्रितुंगकम् १३४
सार्धां शं मंचमानं तु सार्धपक्षांशमंघ्रिकम्
सपादांशं कपोतोच्चं कलांशं चरणायतम् १३५
मंचमानं सपादांशं गळं तत्सममुच्यते
शिखरं वेदभागं तु शेषं स्तूप्युदयं भवेत् १३६
रुद्रभूमिमिदं प्रोक्तं भानुभूममथ शृणु
पंचाधिकमशीत्यंशं उत्तरादिशिखान्तकम् १३७

त्रिपादाद्यंशमंचोच्चं धात्वंशं तलिपायतम्
सार्धाग्न्यंशं कपोतोच्चं चरणं सार्धषट्ककम् १३८
सपादत्र्यंशमंचोच्चं षडंशं तलिपायतम्
कपोतोच्चं गुणांशं तु सार्धभूतांशमंघ्रिकम् १३९
पादोनत्र्यंशमंचोच्चं भूतांशं तलिपायतम्
सार्धपक्षांशमंचोच्चं सार्धवेदांशमंघ्रिकम् १४०
पादद्व्यंशं तु मंचोच्चं वेदांशं चरणायतम्
पक्षांशं मंचमानं तु सार्धाग्न्यं शांघ्रितुंगकम् १४१
पादोनद्व्यंशमंचोच्चं गुणांशं तलिपायतम्
सार्धां शं मंचमानं च सार्धपक्षांशमंघ्रिकम् १४२
सपादांशं कपोतोच्चं पक्षांशं चरणायतम्
मंचमानं सपादांशं गळं तत्सममेव च १४३
शिखरं वेदभागं तु शेषं स्थूप्युदयं भवेत्
भानुभूममिति प्रोक्तं त्रयोदशतलं शृणु १४४
उत्तरादिशिखान्तं च षण्णवत्यंशकं भजेत्
युगांशं मंचमानं तु सार्धसप्तांशमंघ्रिकम् १४५
त्रिपादाग्न्यंशमंचोच्चं सप्तांशं चरणायतम्
सार्धाग्न्यंशं कपोतोच्चं तलिपं सार्धषट्ककम् १४६
सपादत्र्यंशमंचोच्चं षडंशं तलिपायतम्
गुणांशं मंचमानं तु सार्धभूतांशमंघ्रिकम् १४७
पादोनत्र्यंशमंचोच्चं भूतांशं चरणायतम्
कपोतं सार्धपक्षांशं सार्धवेदांशमंघ्रिकम् १४८
सपादद्व्यंशमंचोच्चं युगांशं चरणायतम्
भूतांशं मंचमानेन सार्धाग्न्यंशांघ्रितुंगकम् १४९
पादोनद्व्यंशमंचोच्चं गुणांशं चरणायतम्
सार्धां शं मंचमानं च सार्धपक्षांशमंघ्रिकम् १५०
सपादांशांशमंचोच्चं पक्षांशं चरणायतम्
शिवांशं मंचमानं च सपादांशं गळोदयम् १५१
शिखरं युगभागं तु शेषं स्थूप्युदयं भवेत्

त्रयोदशतलं प्रोक्तं मनुभूममथ शृणु १५२
उत्तरादिशिखान्तं च अष्टाधिकशताधिकम्
सपादयुगमंचोच्चं वस्वंशं चरणायतम् १५३
वेदांशं मंचमानं तु सार्धसप्तांशमंघ्रिकम्
त्रिपादाग्न्यंशमंचोच्चं सप्तांशं चरणायतम् १५४
सार्धाग्न्यंशं कपोतोच्चं तलिपं सार्धषट्ककम्
सपादत्र्यंशमंचोच्चं षडंशं तलिपायतम् १५५
गुणांशं मंचमानं तु सार्धभूतांशमंघ्रिकम्
पादोनत्र्यंशमंचोच्चं भूतांशं चरणायतम् १५६
सार्धपक्षांशकं मंचं सार्धपक्षांशमंघ्रिकम्
सपादद्व्यंशमंचोच्चं वेदांशं चरणायतम् १५७
पक्षांशं मंचमानं तु सार्धाग्न्यंशांघ्रितुंगकम्
पादोनद्व्यंशमंचोच्चं गुणांशं तलिपायतम् १५८
सार्धां शं मंचमानं तु सार्धपक्षांशमंघ्रिकम्
सपादांशं च मंचोच्चं वेदांशं चरणायतम् १५९
पक्षांशं मंचमानं तु सार्धाग्न्यंशांघ्रितुंगकम्
पादोनद्व्यंशमंचोच्चं गुणांशं तलिपायतम् १६०
सार्धां शं मंचमानं तु सार्धपक्षांशमंघ्रिकम्
सपादांशं च मंचोच्चं पक्षांशं चरणायतम् १६१
शिवांशं मंचमानं तु गळं तत्सममेव च
शिखरं वेदभागं तु शेषं स्थूप्युदयं भवेत् १६२
मनुभूममिति प्रोक्तं तिथिभौममथ शृणु
एकविंशच्छशान्तं तु उत्तरादिशिखान्तकम् १६३
मंचमानं युगांशं तु सार्धपक्षांशमंघ्रिकम्
सपादयुगमंचोच्चं वस्वंशं तलिपायतम् १६४
युगांशं मंचमानं तु सार्धसप्तांशमंघ्रिकम्
त्रिपादाग्न्यंशमंचोच्चं सप्तांशं चरणायतम् १६५
सार्धाग्न्यंशं कपोतोच्चं तलिपं सार्धषट्ककम्
सपादत्र्यंशमंचोच्चं षडंशं तलिपायतम् १६६

गुणांशं मंचमानं तु सार्धभूतांशमंघ्रिकम्
पादोनत्र्यंशमंचोच्चं भूतांशं चरणायतम् १६७
इति गोपुरलक्षणं ३४ पटलः

३५
मण्टपस्य विधिं वक्ष्ये शृणु त्वं तत्प्रभंजन
प्रासादपुरतो वापि दक्षिणे चोत्तरेऽपि वा १
पश्चिमे त्वीशदेशे वा नैर्ऋते वायुदेशके
उद्याने वा सभास्थाने तीर्थतीरेऽथवा पुनः २
पंचप्राकारबाह्ये वाप्युत्तरे वास्तुवीथिके
मण्टपं कारयेद्विद्वान् मकुटारोपणार्थकम् ३
शनैवैकादशहस्तादि द्विद्विहस्तविवर्धनात्
नवमानं प्रकर्तव्यं मात्रारादित्यकर्णिकम् ४
आयादिशोभनोपेतं शुभमानं च संग्रहेत्
समाश्रमायताश्रं वा मण्डपं परिकल्पयेत् ५
युगं वा युगपंक्तिं वा समाश्रं समपंक्तितम्
आयामेत्वायतां पंक्तिं मण्डपे संप्रकल्पयेत् ६
विस्तारस्य चतुर्थां शं वस्वंशं वा तलोदयम्
स्तंभोदयार्धमानं वा तत्त्रिभागैकमेव वा ७
चतुर्भागैकभागं वा तलोत्सेधं प्रकल्पयेत्
तलोत्सेधार्धमानं वा तत्समं वा त्रिपादकम् ८
उपपीठोदयं ख्यातं उत्सेधसमनिर्गमम्
तलोदये तु सप्ताधिकाक्ष्यंशत्वं प्रमानकम् ९
बाणांशं कण्ठमानं च अक्ष्यंशं पट्टिका भवेत्
सुभद्रमिति विख्यातं अष्टाविंशतिभागिके १०
गुणभागमुपानं च तत्समं कुमुदोदयम्
एकांशं कण्ठमानं च एकांशमूर्ध्वपंकजम् ११
धृतिवप्रं च भागांशं अधःपद्मं शिवांशकम्
तदूर्ध्वे चैवमेकांशं धातुभागं गळोदयम् १२

कंपमेकांशतः कुर्यात् पद्ममेकांशतस्तथा
कंपोच्चं द्विगुणांशं च द्विभागं प्रस्तरोदयम् १३
सुमंगलमिति प्रोक्तं अष्टाष्टांशे तलोदये
उपोपानं गुणांशं च कोलकांशमुपानकम् १४
पद्ममानं गुणांशं च कम्पमेकांशमानतः
नन्दांशं कर्णमानं च शिवांशं कंपमानकम् १५
अग्न्यंशमम्बुजोत्सेधं पट्टिका तत्समांशतः
कम्पमानं द्विभागं हि ऊर्ध्वकम्पं शिवांशकम् १६
अक्ष्यंशमम्बुजोत्सेधं शक्त्यंशं कम्पमानकम्
जगती सप्तभागा स्यात् अब्जमेकांशतः कुरु १७
एकांशं कण्ठमेकांशं पद्मं वेदांशकं घटम्
गळमेकांशतः कुर्यात् कम्पमेकांशमानकम् १८
अष्टभागं गळोत्सेधं एकांशं वाजनोदयम्
पद्ममेकांशमानं च कपोतोच्चं युगांशकम् १९
त्रिभागं प्रस्तरोत्सेधं कौबेरमिति विद्यते
इष्टकाभिश्शिलाभिर्वा कल्पयेदतिसुन्दरम् २०
भित्तिबन्धयुतं वापि निम्नोन्नतविवर्जितम्
अथवा मूलया प्रोक्तमार्गेणैव धरातलम् २१
कल्पयेदुपपीठेन सहितां वा विना तु वा
अधिष्ठानक्रमं प्रोक्तं स्तंभमानमथ शृणु २२
त्रिकरादिनन्दहस्तान्तं त्रित्र्यंगुलविवर्धनात्
स्तंभदीर्घं प्रकर्तव्यं स्तंभतारं ततः शृणु २३
षडंगुलं समारभ्य चांगुलांगुलवर्धनात्
एकविंशांगुलं यावत् स्तंभतारं प्रकल्पयेत् २४
तदष्टांशोनं गृहं स्यात् दशभागोनमेव वा
रुद्रभागांशहीनं वा स्तम्भानामग्रषट्स्मृतम् २५
स्तंभाग्रतारमानं स्याद् बोधिकोत्सेधमुच्यते
उत्सेधं त्रिगुणं वापि चतुःपंचगुणं तु वा २६
षट्सप्ताष्टगुणं वाथ बोधिकादीर्घमिष्यते

बोधिकादीर्घमित्युक्तं प्रस्तारं शृणु सुव्रत २७
अधिष्ठानसमोच्चं वा स्तंभार्धं वार्धमेव वा
तदुत्सेधं त्रिधाभज्य होमांशमुत्तरोदयम् २८
कपोतोत्सेधमेकांशं एकांशं प्रस्तरोदयम्
गन्धिनीप्रप्रवेशादीन् कल्पयेच्छिवधामवत् २९
एवं मण्डपमासाद्य सर्वालंकारसंयुतम्
गोमयालेपनं कृत्वा ब्राह्मणान्भोजयेदथ ३०
स्थापनादिक्रमं प्रोक्तं प्रासादस्थापनोक्तवत्
एवं मण्डपमाख्यातं रथस्य लक्षणं शृणु ३१
इति सूक्ष्मशास्त्रे मण्डपलक्षणविधिः षट्चत्वारिंशत्पटलः

३६
मण्डपस्यार्चनं वक्ष्ये शृणु त्वं तत्प्रभंजन
कलशस्थापने चैव पवित्रारोपणेऽपि च १
उत्सवे प्रोक्षणे चैव स्थापने च विशेषतः
गोमयालेपनं कृत्वा प्रोक्षयेच्छुद्धतोयकैः २
आचार्यो मूर्तिपैस्सार्धं विधिना स्नानमाचरेत्
सकळीकरणं कृत्वा गोमयालेपनं कुरु ३
पुण्याहं वाचयेत्तत्र प्रोक्षयेद्यागमण्डपम्
सामान्यार्घ्यं च संकल्प्य प्रोक्षयेदस्त्रमंत्रतः ४
पूर्वादिस्थण्डिलं कल्प्य भूतयुगशिवयुगत्रिगम्
षड्द्वयं वेदवह्निं च पूर्वादीशावसानकम् ५
सर्षपैस्तिललाजैश्च पुष्पैर्दर्भैः परिस्तरेत्
इन्द्रपावकयोर्मध्ये सौरकुंभं तु विन्यसेत् ६
ह्रां ह्रीं ह्रूं शिवसूर्याय परिवाराय संयुतम्
स वाहनाय सास्त्राय नमोऽन्तैश्च समर्चयेत् ७
पादप्रक्षाळनं कृत्वा चाचम्य विधिना बुधः
सकळी करणं कृत्वा सामान्यार्घ्यं च कल्पयेत् ८
संप्रोक्ष्य हृदयेनैव तोरणादींश्च पूजयेत्

तोरणं तोरणे पूज्य द्वारादीन्कलशे यजेत् ९
शान्तिभूतिबलारोग्यतोरणादीन्स्वनामतः
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् १०
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च
प्रणवादिनमोन्तैश्च तद्द्वारपदसंयुतम् ११
नन्दिनं च महाकाळं पूर्वद्वारे समर्चयेत्
याम्ये चोत्तरशाख्यायां द्वौ कुंभेषु च पूजयेत् १२
भृंगी तु विघ्नराजं च याम्यद्वारे समर्चयेत्
उत्तरद्वारकुंभे तु गौरीं चण्डेशमर्चयेत् १३
पश्चिमे पूर्वशाखायां पूजयेत्तत्स्वनामतः
पश्चिमद्वारयाम्ये तु महालक्ष्मीं समर्चयेत् १४
पश्चिमद्वारदेशे तु नित्यत्वा मण्डपाद्बहिः
ध्वजाष्टकं समभ्यर्च्य प्राकारशिशिरस्तथा १५
पर्जन्यं च ताथाशोकपूतलं जीवनाय च
अमृताय विनात्माय श्रीप्रदाय स्वनामतः १६
पूर्वादीशानपर्यन्त पताकाश्च सुपूजयेत्
वज्रं शक्तिं च दण्डं च खड्गं पाशांकुशं तथा १७
गदात्रिशूलं कुन्दं च पद्मं चेति दशायुधम्
पूर्वादीशानपर्यन्तं नैर्-ऋत्यादीशमन्तकम् १८
स्वनामाद्यैः समभ्यर्च्य धूपदीपादिकं ददेत्
बाह्ये ध्वजाष्टकं पूज्य कुमुदात्कुमुदाक्षकान् १९
पुण्डरीकस्तथा धाम शंकुश्रवणमेव च
अस्त्रनेत्रा च सुमुखा सुप्रतिर्वा स्वनामतः २०
गन्धपुष्पादिनाभ्यर्च्य नित्यवद्द्वारपालकान्
गन्धपुष्पादिनाभ्यर्च्य घण्टां तु ताडयेत्त्रिभिः २१
अस्त्रेणोच्चार्य पुष्पेण पार्ष्णिघातत्रयेण तु
दिव्यन्तरिक्षभूमिष्ठविघ्नसंघनिवारणम् २२
अस्त्रेणोदुम्बरं शोच्यं मण्डपं तु प्रविश्य च
द्वारत्रयं तु संघट्य अस्त्रमंत्रेण देशिकः २३

नैर्ऋते वास्तुनाथं च पूजयेत्तत्स्वनामतः
कम्बीषु पृथिवी तत्वात्तृणेष्वापस्तथैव च २४
बन्धेषु जलतत्वाय वंशे वायुस्तथैव च
अग्रेषू व्योमतत्वाय वितानेषु च चन्द्रमाः २५
तरंगे जाह्नवीं पूज्य दर्भमालासु वासुकिम्
अस्त्रमंत्रेण संप्रोक्ष्य गन्धपुष्पादिनार्चयेत् २६
द्वारस्योभयपार्श्वे तु पूजयेदष्टमंगळम्
दर्पणं पूर्णकुंभं च वृषभं युग्मचामरम् २७
श्रीवत्सं स्वस्तिकं शंखं दीपं पूज्य स्वनामतः
वेदीदक्षिणपार्श्वे तु आसीनश्चोत्तराननः २८
नित्यवद्भूतशुध्यादि सकळीकरणं कुरु
यागोपकरणद्रव्यान् प्रोक्षयेदस्त्रवारिणा २९
दक्षपाणितलेनैव गन्धेनालिप्य शास्त्रतः
तलमध्ये विशेषेण कल्पयेद्गन्धमण्डलम् ३०
शक्त्यादिशक्तिपर्यन्तं मानसस्थं शिवं यजेत्
मूलमंत्रमनुस्मृत्य स्वशिरस्यधिरोप्य च ३१
षट्त्रिंशद्दर्भसंयुक्तं ग्रन्थिवेणिकयान्वितम्
कलामंत्रसमायातं ज्ञानखड्गं प्रकल्पयेत् ३२
गृहीत्वा खड्गमस्त्रेण संहारास्त्रमनुं जपेत्
दक्षिणे कटिबन्धौ च विन्यसेत्सुदृढं यथा ३३
पंचगव्यं तु संकल्प्य पूर्वोक्तविधिना सह
यागोपकरणान्सर्वान् मण्डपाभ्यन्तरादिकान् ३४
पंचगव्याम्बुना प्रोक्ष्य शुद्धैरुत्थेति मंत्रतः
स्थानशुद्धिं ततः कृत्वा भूमिर्भूम्नेति मंत्रतः ३५
निरीक्षणं हृदयेनैव प्रोक्षणं त्वीशमंत्रतः
ताडनं हुंफडन्तेनाभ्युक्षणं शिरसा बुधः ३६
खननं चास्त्रमंत्रेण चोद्धारं घोरमंत्रतः
पूरणं वामदेवेन सद्येनैव समं कुरु ३७
शिखया सेचनं कुर्यात् कुट्टनं चैव वर्मणा

मार्जनं नेत्रमंत्रेण लेपनं पुरुषेण तु ३८
निवृत्यादिकलानां तु कल्पयेत्तत्स्वनामतः
त्रिसूत्रं वर्तुळं कुर्याद् बीजमुख्येन मंत्रतः ३९
मूलेनैव समभ्यर्च्य ईशे रेखात्रयं न्यसेत्
वज्रीकरणमस्त्रेण चतुष्कं मूलमंत्रतः ४०
विकिरान्नेत्रमंत्रेण विकीर्यकुशकूर्चकैः
संगृह्य शिवगायत्र्या विशेदीशानगोचरे ४१
आसनं चास्त्रमंत्रेण कल्पयेत्कल्पवित्तमः
कलशस्थापनोक्तेन स्थापयेत्कुंभवर्धनीम् ४२
कुंभे वृषासनं कल्प्य वर्धन्यां सिंहमासनम्
चतुर्भुजं त्रिणेत्रं च रक्तपिंगोर्ध्वकेशकम् ४३
अक्षपाशधरं देवं ज्ञानखड्गकरान्वितम्
ध्यात्वा पाशुपतं देवं सांगं संपूजयेत्ततः ४४
श्लीं पशुं च हुंकारं फट्कारं नामसंयुतम्
इदं मंत्रेण चावाह्य गन्धपुष्पादिनार्चयेत् ४५
इन्द्रादिलोकपालानां समभ्यर्च्य विशेषतः
इन्द्राय सपरिवाराय सायुधाय स वाहन ४६
प्रणवादिचतुर्थ्यन्तं एतैर्मन्त्रैः समर्चयेत्
अग्निश्चैव यमश्चैव निर्ऋतिर्वरुणस्तथा ४७
++++++++++ वायुः सोमस्तथैव च
गन्धपुष्पादिनाभ्यर्च्य स्वनामाद्यैश्च पूर्ववत् ४८
आदायवर्धनीं पश्चात् कुंभं शिष्य शिरोद्धरेत्
कुंभाग्र कामिनीं शक्तिं विचित्रेण पयोधराः ४९
ईशानादि समारभ्य स्रावयेन्मूलमंत्रतः
कुंभं पूर्वे तु संस्थाप्य पश्चाद्विन्यस्य वर्धनीम् ५०
मया प्रवर्तितं याग इन्द्रादीन्लोकपालकान्
रक्षणीयं तु युष्माभिः समाप्तिर्यावदस्य हि ५१
इति विज्ञाप्य लोकेशान् भक्त्यासम्यक् प्रणम्य च
वायौ विघ्नेश्वरं यष्ट्वा स्वनामाद्यैश्च पूर्ववत् ५२

गुरुपंक्तिमथैशान्यां पूजयेत्तत्स्वनामतः
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् ५३
प्रणम्य दराडवद्भूमौ विज्ञाप्य गुरुसंनिधौ
देवदेव जगन्नाथ जगदानन्दकारण ५४
शिवाध्वरः प्रवृत्तोऽयं तवाज्ञां कुरुते नमः
शिवं सपरिवारेण पूजयेद्वेदिकोर्ध्वके ५५
यथा मंत्रोक्तदेवानां तथा मंत्रोक्तवद्यजेत्
ग्राचार्यं पूजयेत्पश्चाद् यथा वित्तानुसारतः ५६
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात्
इति सूक्ष्मशास्त्रे मराडपपूजाविधि सप्तचत्वारिंशत्पटलः

३७

ग्रथातः संप्रवक्ष्यामि मासपूजाविधिं परम्
समा द्विविधमाख्यातं स्थूलसूक्ष्ममिति स्मृतम् १
स्थूलं वै धनुर्मासादि वृश्चिकान्तमिति स्मृतम्
उदयान्तं च यत्प्रश्नं तत्प्रश्नं परिवर्तते २
तत्सूक्ष्ममिति विज्ञेयं सूक्ष्ममासं प्रभञ्जन
स्थूले वा सूक्ष्मकाले वा मासपूजा विधीयते ३
युद्धारम्भावसाने च ग्रयने विषुवे तथा
कर्तुरात्मानुकूलर्क्षे मासऋक्षेऽथवा पुनः ४
पुरायकाले विशेषेण मासपूजां प्रकल्पयेत्
प्रासादस्येशदिग्भागे पूर्वे वा चोत्तरेऽपि वा ५
दशपंचकरं वाथ त्रयोदशकरं तु वा
मराडपं कारयेत्तत्र षोडशस्तम्भसंयुतम् ६
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
दर्भमालासमायुक्तं वितानाद्युपशोभितम् ७
देशिकस्सुप्रसन्नात्मा सकळीकृतविग्रहः
संस्थाप्य पंचगव्यं च पुरायाहं वाचयेत्ततः ८
प्रोक्षयेच्छुद्धतोयेन शुद्धैरुत्थैरिति ब्रुवन्

सूत्रन्यासं ततः कृत्वा प्रागग्रं चोदगग्रकम् ९
स्वस्तिकं सर्वतो भद्रं नन्द्यावर्तं सुभद्रकम्
श्रीकान्तं श्रीनिवासं च पद्मभद्रं च वर्तुळम् १०
तिलकं ब्रह्मकान्तं च रुद्रमीशतलं बुधः
आर्द्रादि वृश्चिकान्तं वा मण्डपस्य विधानकम् ११
स्थण्डिलं कारयेद्विद्वानष्टद्रोणेन शालिना
तदर्धं तण्डुलैर्भूष्य तदर्धं च तिलैरपि १२
लाजैः पुष्पैः परिस्तीर्य पंचचूर्णेन पूरयेत्
वेदीमस्त्रेण संवेष्ट्य प्रोक्षयेत्पंचगव्यकैः १३
स्थण्डिलं पूजयेत्तत्र कल्पयेद्वृषभासनम्
मण्डपं पूजयेद्विद्वान् पंक्तिमानक्रमेण तु १४
शान्तिनन्दिमहाकालं इन्द्राद्यैश्चैव पूर्वके
अनलं चाग्निदिग्भागे विद्यां भृंगेश्वरं यमम् १५
गणेशं दक्षिणे भागे नैर्ऋते वास्तुदैवतम्
गौणं चैव तथा तारां पाशौ वृषभवारुणे १६
निवृत्यस्त्रं गुहं लक्ष्मीं वायौ वायुं गणेश्वरम्
देवीं सोमं प्रतिष्ठां च चण्डेशं चोत्तरे यजेत् १७
गुरुपंक्तिमथैशानचक्रपाणिमवीचके
पूजयेद्गन्धपुष्पाद्यैः तत्तन्मंत्रेण देशिकः १८
स्नपनं कारयेत्तत्र शतमष्टोत्तरं तु वा
वारुणे यन्त्रपीठं वा त्रिपादीं वेदिकोपरि १९
स्थापयेत्प्रणवेनैव कल्पयेच्छैवमासनम्
संग्राह्य शुद्धपात्रे तु मासद्रव्यं तु देशिकः २०
मार्गशीर्षे घृतं प्रोक्तं पुष्ये क्षौद्रं प्रशस्यते
सघृतं कम्बलं माघे फाल्गुने दधि कीर्तितम् २१
चैत्रे दमनकं प्रोक्तं वैशाखे गन्धपूजनम्
फलपूजा ज्येष्ठमासे क्षीरमाषाढपूजनम् २२
श्रावणे शर्करापूजापूपैः प्रोष्ठपदार्चनम्
आश्वयुज्यन्नपूजा स्याद्दीपदानं च कार्तिके २३

स्थापयेत्तु क्रमेणैव पूजयेन्मूललिंगवत्
पाद्यमाचमनं चार्घ्यं स्नानं वस्त्रं विलेपनम् २४
भूषणं चैव पुष्पं च धूपदीपं निवेद्यकम्
वह्नेरायतनं चैव समिदाहुतिकं जपम् २५
यात्राहोमं तु कर्तव्यं तदग्रे होममाचरेत्
स्थण्डिलं हस्तमात्रेण निर्दोषैः सिकतैरपि २६
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
समिधा सद्यमंत्रेण ईशानेन घृतं हुनेत् २७
अघोरेण चरुं हुत्वा प्रत्येकं पंचविंशतिः
प्रासादमुख्यबीजेन व्योमव्यापिदशाकरैः २८
शक्त्याद्यैश्चैव वामाद्यैः प्रत्येकं षोडशं हुनेत्
स्पृष्ट्वा तु जुहुयाद्धोमं गौरीबीजमनुस्मरन् २९
इति सूक्ष्मतन्त्रे गौरीसंगोचविधिसप्तचत्वारिंशत्पटलः

३८

कामकोष्ठविधिं वक्ष्ये शृणु त्वं तत्प्रभंजन
स्वतन्त्रं केवलं चेति द्विविधं परिकीर्तितम् १
स्वतन्त्रं वीरमित्युक्तं परिवारादिभिर्युतम्
परिवारविहीनं यत् केवलं चेति कथ्यते २
द्वितीयावरणे चैव तृतीयावरणे तथा
चतुर्थावरणे चैव पंचमावरणेऽथवा ३
नदीतीरे तटाके वा पर्वताग्रे मनोरमे
उद्याने वा सभास्थाने गौर्यालयं प्रकल्पयेत् ४
स्वतन्त्रं स्थानमेवोक्तं मण्डपस्त्वीशगोचरे
मण्डपस्योत्तरे वापि केवलं कोष्ठमाचरेत् ५
केवलं स्थानमेवोक्तं स्वतन्त्रमधुना शृणु
श्रीभोगं पुत्रकोष्ठं च चित्रं श्रीभद्रमेव च ६
चित्रकान्तविमानं च गोमुखं लक्ष्मीकान्तकम्
कौसलं श्रीनिवासं च विजयं पद्मकान्तकम् ७

कोष्ठं सुन्दरधामं च सुभद्रं च सुमंगलम्
पार्वतीकान्तकं चैव गौर्यालयं द्विरष्टधा ८
आलयप्रविष्ठमंध्यात्तु दिक्सूत्रं तु निर्गताम्
तत्सूत्रं शिवसूत्रं स्यात्तत्कण्ठे कर्णसूत्रकम् ९
अष्टदिक्सूत्रपार्श्वे तु उमाकोष्ठं प्रकल्पयेत्
तत्सूत्राद्देविकोष्ठस्य मध्यसूत्रद्वयान्तरम् १०
शिवभागमिति ज्ञेयं तन्मानं शृणु सुव्रत
त्रिचतुः पंचषट्सप्तभागं वै परिकल्पयेत् ११
लिंगविस्तारमानं यत् शिवभागमिति स्मृतम्
अथवान्यप्रकारेण शिवभागं विधीयते १२
स्वस्तिके लिंगतारार्धं शैवाधिक्यं त्रिपादकम्
गुणार्धं वर्धमानं स्यात् त्रिगुणं समखण्डकम् १३
अन्येषां लिंगनाहं यत् शिवभागविशालकम्
शिवभागावसाने तु कोष्ठमध्यमसूत्रकम् १४
तद्भागान्तर्गतं सूत्रं कर्तृनाशकरं भवेत्
श्रीभागबाह्यसूत्रं यत् संपन्नं वै समृद्धिदम् १५
तस्मात्सर्वप्रयत्नेन शिवभागावसानके
सूत्रं संकल्पयेद्विद्वान् गौरीकोष्ठस्य मध्यकम् १६
एवं सूत्रं विनिश्चित्य गौरीगेहं समाचरेत्
प्राक्सूत्राद्दक्षिणे सौम्ये श्रीभोगाख्यविमानकम् १७
अग्निदिक्सूत्रपार्श्वे तु पुत्रकोष्ठं समाचरेत्
दक्षिणे सूत्रपार्श्वे तु पुत्रकाष्ठं समाचरेत् १८
दक्षिणे सूत्रपार्श्वे तु चित्रकान्तं प्रकल्पयेत्
नैर्ऋते सूत्रपार्श्वे तु चित्रकान्तं प्रकल्पयेत् १९
नैर्ऋते सूत्रपार्श्वे तु श्रीभद्रं च विमानकम्
सुन्दरं वारुणे देशे सूत्रपार्श्वे प्रतिष्ठितम् २०
वायव्ये सूत्रपार्श्वे तु पुत्रकान्तं विमानकम्
कुबेरे सूत्रपार्श्वे तु विमानं गोमुखं स्मृतम् २१
श्रीकान्तमीशदिक्कोणे कर्णसूत्रस्य पार्श्वके

शक्रपावकयोर्मध्ये कौसलं कोष्ठमाचरेत् २२
अनलान्तकयोर्मध्ये श्रीनिवासविमानकम्
याम्यनैर्ऋतयोर्मध्ये विमानं विजयाभवम् २३
वरुणनैर्ऋतयोर्मध्ये विमानं पद्मकान्तकम्
वरुणानिलयोर्मध्ये कोष्ठं सुन्दरमाचरेत् २४
कुबेरानिलयोर्मध्ये सुभद्रकविमानकम्
कुबेरेशानयोर्मध्ये सुमंगलविमानकम् २५
शक्रईशानयोर्मध्ये पार्वतीकान्तमाचरेत्
श्रीभोगाद्यष्टकं कोष्ठं दिग्विदिक्षु प्रकल्पयेत् २६
कल्पयेदन्तराळेषु कौसलाद्यष्टकं गृहम्
अन्योन्यसंग्रहं चेत्तु तद्धाम राक्षसास्पदम् २७
तस्मात्सर्वप्रयत्नेन वर्णे वर्गेण संकरम्
क्रमेण कल्पयेद्विद्वान् तल्लक्षणपुरस्सरम् २८
मूलालयं समं वापि त्रिपादं वार्धमेव वा
गर्भार्धं तत्समं वापि गौरीधाम विशालकम् २९
अथवा हस्तमानेन गौरी धाम प्रकल्पयेत्
त्रिवेदहस्तमारभ्य नवपंक्तिकरान्तकम् ३०
विस्तारं पंचधाप्रोक्तं महार्घं चैकभूमिके
पंचषट्सप्तमारभ्य रुद्रभानुदशान्तकम् ३१
मुनिरिन्द्रकमारभ्य कलापक्षं च कान्तकम्
नन्दनाडीकरारभ्य स्मृत्यन्तं पंचमानकम् ३२
एकादियुगभूत्यन्तं विस्तारं संप्रकीर्तितम्
रुद्रभानुकरान्तादित्रयस्त्रिंशावसानकम् ३३
चतुस्त्रिंशान्तविस्तारं कलाभूमावसानकम्
विस्तारमेवमाख्यातं आयामं च ततः शृणु ३४
विस्ताराष्टांशमाधिक्यं ब्रह्मगर्भमिति स्मृतम्
विस्तारार्धसमाधिक्यं रुद्रगर्भमिति स्मृतम् ३५
एवमायाममाख्यातं उत्सेधमधुना शृणु
तारे सप्तः तु भूतांशे रसभूतयुगं समम् ३६

तारादष्टाधिकं तुंगं शान्तिकादि यथाक्रमम्
एवमुत्सेधमाख्यातं शृणु मण्डपमानकम् ३७
मूलकोष्ठसमं तारं आयामं सममण्डपम्
अर्धं पादं त्रिपादं वा मुखमण्दपमाचरेत् ३८
सार्धदण्डं द्विदण्डं वाभ्यन्तराळस्य वेशनम्
तत्संख्या हस्तमानेन चान्तराळविशालकम् ३९
अधिष्ठानादिगर्भाढ्यं सावकाशावसानकम्
भित्तिगण्डयुतं वापि तोरणाद्यैर्विचित्रितम् ४०
एवं मण्डपमाख्यातं आयादीनथ वक्ष्यते
अष्टाब्धिरसबाणेन वर्धयेद्भानुनाहुतिः ४१
आयामेऽथव्ययस्यापि नन्दसप्तशरादिभिः
ह्रासयेद्दशभिर्योनिरग्निबाणाब्धिनन्दयुक् ४२
पर्वतेन च ऋक्षस्य नन्दाष्टाब्धिरसेन च
तारेण ह्रासयेद्द्वारं नन्दसप्त ऋतुर्दिशि ४३
वारैश्च जनितं वारं चतुष्पंचषडष्टकैः
वर्धयेन्नन्दसंख्याश्च ह्रासयेदंशकस्य तु ४४
आयाधिक्यं धनाधिक्यं व्ययाधिक्यं धनक्षयः
ध्वजोक्षसिंहहस्ती च योनयः शुभदाः स्मृताः ४५
श्वानकाकखरोधूमयोनयस्त्वशुभावहाः
कर्तुश्च जन्मनक्षत्रं वास्तु ऋक्षावसानकम् ४६
गणयेत्त्रिजन्मयुगळं वेदाष्टं ऋतुनन्दभम्
शुभावहदिनं ह्येतत् तच्छेषास्त्वशुभावहाः ४७
बुधशुक्रेन्दुवारश्च गुरुवारं शुभप्रदम्
तस्करो भुक्तिशक्तिश्च धनो नृपतिक्लिपः ४८
नहीति निधनप्रेक्ष्य नवांशानि क्रमेण तु
आयामन्तस्थिरं षण्डं वर्जयेत्तु प्रयत्नतः ४९
शुभवारादिभिर्युक्तं पुष्यऋक्षादिसप्तकम्
रिक्ताख्यं मरणं नाशं अमृतं सौख्यसिद्धिदम् ५०
प्रत्यन्तं सप्तयोगं स्यात् मन्दवारोत्तरादिभिः

भानुवारे विशाखादि शशिवारे जलाधिपम्  ५१
भौमवारे श्रविष्ठा हि बुधवारे तु वैष्णवम्
गौरोर्विधात्रिऋक्षादि सप्तसप्तार्थकं भवेत्  ५२
एवं परीक्ष्य बहुधा शुभमानं तु संग्रहेत्
मानं विन्याससूत्रं च धारासारोपपीठकम्  ५३
प्रकृतिर्होमसूत्रं च सूत्रकल्पं प्रकल्पयेत्
आयादिशुभसंयुक्तं मानं यन्मानसूत्रकम्  ५४
षडंगुलं समारभ्य त्रियंगुलविवर्धनात्
तन्तुमानं प्रकर्तव्यं विन्यासं सूत्रनिर्गमम्  ५५
नवांगुलं समारभ्य अंगुलांगुलवर्धनात्
अष्टाविंशांगुलं यावत्तावद्भूस्तत्र निर्गमम्  ५६
तत्समं सोपपीठस्य कर्णवाद्वाह्य निर्गमम्
षडंगुलं समारभ्य अंगुलांगुलवर्धनात्  ५७
पंचविंशांगुलं यावत् सोपपीठस्य सूत्रकम्
तत्सूत्रात्प्रकृते नीप्रं त्रिचतुष्पं च मात्रकम्  ५८
सोमसूत्रसमोपेतं चतुस्सूत्रमुदाहृतम्
मानं विन्याससूत्रं च अधिष्ठानस्य सूत्रकम्  ५९
प्रकृतेर्होमसूत्रं च सूत्रपंचकमेव हि
एवं सूत्रक्रमं प्रोक्तं नाळीगृहविधिं शृणु  ६०
विस्तारमष्टधा कृत्वा रसांशं गर्भगेहकम्
रसांशैर्वेदभागः स्याद् वेदांशे द्वियगस्मृतम्  ६१
पंचभागेऽग्निभागं तु मुनिभागेन्द्रियस्विति
नवांशे धातुभागः स्यात् नाळीगृहविशालकम्  ६२
शेषांशं भित्तिविस्तारं परितः कल्पयेत्तु सा
एवं नाळीगृहं प्रोक्तं पंक्तिमानमथ शृणु  ६३
गुणभागं तु विस्तारं आयामं गुणतो भवेत्
अथवा त्रिंशविस्तारे पंचपंक्त्यायतं तु वा  ६४
पंचपंक्तिविशालं स्यात् आयामं सप्तपंक्तिकम्
विस्तारं वेदषड्भागं आयतं वा षडाष्टकम्  ६५

अथवा कोष्ठविस्तारं कौशिकांशविभाजिते
एकांशं कूटविस्तारं आयामं तत्समं भवेत् ६६
तद्द्वयं कोष्ठदीर्घं स्यात् शेषं हारान्तरं भवेत्
आयामे कुरु कूटांशं त्यक्त्वा शेषं युगांशकम् ६७
द्विभागं कोष्ठदीर्घं स्यात् शेषं हारान्तरं भवेत्
पंक्तिमानक्रमं प्रोक्तं अधिष्ठानविधिं शृणु ६८
पादबन्धं प्रतीबन्धं च द्विविधं तदुदाहृतम्
एकैकमष्टधा प्रोक्तं तद्भेदं शृणु सुव्रत ६९
प्रथमं पादबन्धं स्यात् द्वितीयं चाब्जकान्तकम्
श्रेणीबन्धं तृतीयं स्यात् चतुर्थं पुष्पपुष्कळम् ७०
श्रीकान्तं पंचमं चैव षष्ठं चाम्भोजसुन्दरम्
सप्तमं सुन्दराब्जं च भद्रबन्धमथाष्टकम् ७१
पादबन्धाष्टकं त्वैवं प्रतिबन्धं ततः शृणु
प्रथमं प्रतिबन्धं च श्रीबन्धं च द्वितीयकम् ७२
+++ तृतीयं स्यात् चतुर्थं कुंभकान्तकम्
पंचमं सर्वतो भद्रं षष्ठकं मकरासनम् ७३
सप्तमं शंभुबन्धं स्यात् अष्टमं चन्द्रबन्धनम्
प्रतिबन्धाष्टकं त्वेवं अलंकारमथोच्यते ७४
अधिष्ठानस्य चोत्सेधं भानुद्विगुणितांशके
पादबन्धमिदं प्रोक्तं द्वादशांशे धरातले ७५
उपानोऽथ द्विभागं स्यात् जगत्युच्चं गुणांशकम्
द्वयं चार्धघटोत्सेधं कंपमर्धां शमेव च ७६
ग्त्रिपट्टस्योर्ध्वमर्धां शं प्रत्युत्सेधं गुणांशकम्
अर्धां शं वाजनोत्सेधं प्रतिबन्धमिति स्मृतम् ७७
उपानं त्वेकभागेन तद्द्वयं पंकजोदयम्
कम्पमेकेन कर्तव्यं जगत्युच्चं गुणांशकम् ७८
अम्बुजं त्वेकभागं स्यात् गळमेकेन कल्पयेत्
तदूर्ध्वं पंकमेकांशं युगांशं कुमुदोन्नतम् ७९
पद्ममेकेन कर्तव्यं कम्पमेकेन कारयेत्

गुणांशं गळमानं तु व्योमांशं कम्पमुच्यते ८०
पद्ममेकेन कर्तव्यं द्विभागं वाजनोदयम्
ऊर्ध्वपद्मं शिवांशं स्यात् वेत्रमानं शिवांशकम् ८१
अष्टाविंशतिभागं स्यात् अंभोजं केसरं स्मृतम्
तदेववृत्तिकुंभाख्रशाम्भवं प्रतिबन्धके ८२
द्विभागं पादुकोत्सेधं पद्ममानं गुणांशकम्
कम्पमेकेन कर्तव्यं जगत्युच्चं घटांशकम् ८३
शरांशं घटमानं स्यात् कम्पमेकेन कारयेत्
रसांशं कन्धरोत्सेधं एकांशं वाजनं भवेत् ८४
पद्ममेकेन कर्तव्यं द्विभागं पट्टिका भवेत्
पद्ममेकेन कर्तव्यं कम्पमेकेन कारयेत् ८५
श्रेणीबन्धमिदं प्रोक्तं त्रिंशद्भागोदयं कृतम्
धरातलोच्चं विभजेत् सप्तदशविभागया ८६
उपानं शिवभागं स्यात् अब्जार्धां शकमेव वा
कम्पमर्धेन कर्तव्यं जगत्युच्चं शिवांशकम् ८७
वेदांशं कुमुदोच्चं तु अर्धां शं कम्पमानकम्
त्रिपट्टमेकभागं स्यात् प्रत्युत्सेधं युगांशकम् ८८
वाजनं चार्धभागं स्यात् श्रीबन्धं तदुदाहृतम्
धरातलोच्चं विभजेत् त्रयस्त्रिंशतिभागया ८९
द्विभागं पादुकोत्सेधं युगांशं पद्ममानकम्
एकांशं कंपमित्युक्तं वप्रमानं षडंशकम् ९०
अर्धां शं पद्ममानं तु गळमानं तथा भवेत्
शिवांशं पद्ममानं स्यात् घटमानं युगांशकम् ९१
द्वियंशेन गळं कंपं कर्णमानं रसांशकम्
उत्तरं चैकभागेन पद्ममेकेन कल्पयेत् ९२
द्विभागं वाजनोत्सेधं पद्ममानं शिवांशकम्
कम्पमेकेन कर्तव्यं पुष्पपुष्कळमीरितम् ९३
तदेव वृत्तकलशं सर्वतोभद्रकं भवेत्
चतुर्विं शतिभागं स्यात् आधारायाममानकम् ९४

पादुकं त्वेकभागेन जगत्युच्चं रसांशकम्
तत्समं घटमानं च कंपमानं शिवांशकम् ९५
वेदांशं गळमानं तु शिवांशं कंपमानकम्
एकांशं पद्ममानं तु कपोतोच्चं गुणांशकम् ९६
कंपमेकेन कर्तव्यं पद्ममेकांशमानकम्
कुमुदोच्चं युगांशेन पद्ममेकेन कारयेत् ९७
कंपमेकेन कर्तव्यं पद्मं तत्सममुच्यते
कपोतोच्चं द्वयं सार्धं अलिंगं त्वर्धभागया ९८
त्रिपट्टमर्धभागेन प्रत्युच्चमेकभागया
अर्धां शं वाजनोत्सेधं स्कन्दकान्तमुदाहृतम् ९९
उपानोच्चं द्विभागेन कम्पमेकेन कारयेत्
षडंशं कमलोच्चं तु व्योमांशं गळमानकम् १००
शिवांशं पद्मतुंगं तु भूतांशं तु घटोदयम्
पद्ममर्धां शमित्युक्तं कम्पमर्धेन कारयेत् १०१
कण्ठतुंगं युगांशं तु व्योमांशं व्योत्रतुंगकम्
तत्सममम्बुजोत्सेधं पट्टिकोच्चं गुणांशकम् १०२
पद्ममंशेन कर्तव्यं कम्पमंशेन कारयेत्
अष्टाविंशतिभागेन सुन्दराम्बुजमीरितम् १०३
तद्धटं वृतरूपं स्यात् तुरगासनमेव हि
धरातलोच्च सप्तांशे द्विभागं वप्रमानकम् १०४
गुणांशं गळमानं तु पक्षांशं पट्टिकोच्छ्रयम्
भद्रबन्धमिति प्रोक्तं सप्तविंशतिभागया १०५
उपानोच्चं द्विभागेन जगत्युच्चं रसांशकम्
षडंशं कुमुदोच्चं तु कम्पमंशेन कल्पयेत् १०६
कर्णतुंगं युगांशेन कम्पमंशेन कारयेत्
पद्ममर्धेन कर्तव्यं कपोतोच्चं द्वयंशकम् १०७
कम्पमंशेन कर्तव्यं त्रिपट्टमेकभागया
प्रतिरुच्चद्वियंशेन अर्धां शं वाजनोदयम् १०८
सप्तविंशतिभागेन कुंभबन्धं प्रकीर्तितम्

द्वियंशं पादुकोत्सेधं धात्वंशं वप्रमानकम् १०९
कराठमेकेन कर्तव्यं ऊर्ध्वपद्मं शिवांशकम्
गुणांशं घटमानं तु पद्ममानं शिवांशकम् ११०
पद्ममेकेन कर्तव्यं गुणांशं गळमानकम्
कंपमेकेन कर्तव्यं पद्मं तत्सममुच्यते १११
कपोतोच्चं गुणांशं स्यात् आलिंगं त्वेकभागया
पंचविंशतिभागेन चाब्जबन्धं प्रशस्यते ११२
तदेव वृत्तभागं स्यात् चन्द्रबन्धमिति स्मृतम्
अंशं वार्धं त्रिभागं वा शोभाबलसमन्तिवम् ११३
न्यूनं वाप्यधिकं वापि योजयेत्तु न दोषभाक्
पादबन्धमधिष्ठानं दिग्विदिक्षु प्रकल्पयेत् ११४
कल्पयेदन्तराळेषु प्रतिबन्धमसूरकम्
अन्योन्यसंकरं चेत्तु कर्ता मरणमाप्नुयात् ११५
तस्मात्सर्वप्रयत्नेन संकरं न समाचरेत्
पंचप्राकारबाह्येषु संकरं न तु दोषभाक् ११६
वृत्तकुंभसमायुक्तं प्रतिबन्धमसूरकम्
वस्वंशं कुमुदोपेतं प्रतिबन्धमिति स्मृतम् ११७
वर्गेण संकरं कुर्याद् अशुभं विपरीतके
कूटकोष्ठादिमानं तु संकरं शुभदं भवेत् ११८
जगतीनीप्रमानं यत् कुंभनीप्रं प्रकल्पयेत्
चतुर्भागैकभागं वा अर्धं वा कम्पनीप्रकम् ११९
उत्सेधसमनीप्रं वा द्विगुणं वाजनीप्रकम्
तत्त्रिपादसमं वार्धं महावाजननिर्गमम् १२०
अधिष्ठानक्रमं प्रोक्तं शृणु नाळस्य लक्षणम्
एकहस्तं समारभ्य त्रित्रियंगुलवर्धनात् १२१
सप्तमानावसानं यत् यो द्वाह्ये नाळनिर्गमम्
तदाधारं त्रिधा कृत्वा व्योमांशं मूलविस्तरम् १२२
तच्चतुर्थां शभिन्नं यत् अग्रतारं प्रकल्पयेत्
अग्रतारसमं वाथ त्रिपादं वाग्रचोदयम् १२३

मूलतारोदयं मूलं सिंहवस्त्रेण घट्टितम्
विस्तारस्य त्रिभागैकं मध्ये नीप्रं प्रकल्पयेत् १२४
अग्रवक्त्रे समायुक्तं अश्वगन्धरसादृशम्
पद्मपुष्पसमायुक्तं सर्वालंकारसुन्दरम् १२५
भित्तितारसमं वेशं अथवाष्टांगुलाधिकम्
संकल्प्य विधियुक्तेन स्थापयेत्कोष्ठमध्यमे १२६
नाळलक्षणमेवोक्तं स्तंभधामविधिं शृणु
प्रासादस्यांशमानेन स्तंभमानं प्रकल्पयेत् १२७
कोष्ठमानं चतुर्विं शदेकांशं पादविस्तृतम्
त्रिचतुः पंचमात्रं वा भित्तिपादस्य विस्तृतम् १२८
चतुरंगुलमारभ्य अंगुलांगुलवर्धनात्
नन्दपंक्त्यंगुलं यावत् कलाभूमावसानकम् १२९
भित्तिमानस्य विस्तारं क्रमेण परिकल्पयेत्
तदग्रांशेनमग्रं तु युगाश्रं ब्रह्मकान्तकम् १३०
अष्टाश्रं विष्णुकान्तं स्यात्षडश्रं स्कन्दकान्तकम्
आमूलादशपर्यन्तमीनाश्रं भानुकान्तकम् १३१
अग्रादिमूलपर्यन्तं इन्द्रकान्तमिति स्मृतम्
सर्वां गवृत्तरूपं यद् इन्द्रकान्तमितीरितम् १३२
चतुरश्रोपरिष्टात्तु कलाश्रं स्तंभशेखरम्
चतुरश्रं रसाश्रं यत् स्तंभं कौबेरकान्तकम् १३३
चतुरश्रं मिनासार्धा तलिपं वरुणाख्यकम्
अश्रस्योपरि वस्वश्रं तलिपं भीमकान्तकम् १३४
अश्रापरिष्टधर्माश्रं मणिवज्रमिति स्मृतम्
अद्धोर्ध्वे वृत्तरूपं यत् शिवकान्तमितीरितम् १३५
चतुरश्रोपरिष्टात्तु चतुष्षष्ठ्यंशधारयुक्
कौशिकस्तंभमाख्यातं अश्रोर्ध्वे वसुकोणकम् १३६
शिवच्छन्देति विख्यातं अश्रं यत्कण्ठमानतः
स्तम्भमूले प्रकर्तव्यं पादाधारसमन्वितम् १३७
सर्वेषामेव पादानां पादायामं प्रकल्पयेत्

कर्णार्धं वा तदर्धं वा पादाधारोदयं कुरु १३८
तत्कर्णं तस्य विस्तारं सर्वालंकारसंयुतम्
पादाधारमिति प्रोक्तं स्तंभानां भूषणं शृणु १३९
पादोत्सेधं तु सप्तांशे त्वेतांशे वेदिकोच्छ्रयम्
वेदिकारहितं वापि सहितं वा प्रकल्पयेत् १४०
पादोदये तु भूतांशे द्विभागं चोदये ग्रहे
चतुस्सप्ततिभागांशे वेदांशं सोधिकोदयम् १४१
तत्समं वीरखण्डं च फलकान्तं समं भवेत्
एकांशं तु गळोत्सेधं घटोच्चं तु त्रिभागया १४२
गळमंशेन कर्तव्यं तत्समं पालिकाण्डकम्
पद्ममेकेन कर्तव्यं पालिदीर्घं गुणांशकम् १४३
अब्जतुंगं त्रिभागेन पत्रतुंगं च तत्समम्
शेषान्तमायतं पादं कर्णं पालिमुखं भवेत् १४४
तत्कर्णं घटविस्तारं तत्कर्णं फलकायतम्
बोधिकोच्चं समंव्यासं आयामं त्रिगुणं तु वा १४५
तदायामं च वेदांशं छायाकारं द्वियंशकम्
फलकोच्चं तु भूतांशं द्विभागं फलकोदयम् १४६
त्रिभागं नागवक्त्रं स्यात् छायातारमथापि वा
मंचोच्चं गुणधा भज्य व्योमांशं प्रस्तरोदयम् १४७
कपोतं त्वेकभागं स्यात् एकांशं धातुभागिकम्
गुणांशमुत्तरोत्सेधं एकांशं वाजनोदयम् १४८
त्रिभागं नागवक्त्रं स्यात् छायातारमथापि वा
शेषमम्बुजमानं स्यात् आसन्नतेन शोभितम् १४९
एवं प्रस्तरमाख्यातं वेदिका लक्षणं शृणु
गळोत्सेधं तु वेदांशे एकांशं वेदिकोदयम् १५०
उत्तरं त्वेकभागेन शेषभागं गळोदयम्
अष्टांशे वेदिकोत्सेधं वेदांशं गळमानके १५१
कंपमेकांशमित्युक्तं द्विभागं पद्मतुंगकम्
वाजनं त्वेकभागेन वेदिकां कल्पयेद्बुधः १५२

पादबाह्यसमं मध्यं प्रस्तरस्य विशालकम्
रुद्रांशे नन्दभागं वा नन्दांशे सप्तभागिकम्  १५३
अष्टांशे सप्तभागं वा वेदिविस्तारमानकम्
वेदिविस्तारमाख्यातं गळवेशं ततः शृणु  १५४
एकद्वित्रिकदण्डैर्वा गळवेशं समाचरेत्
गळविस्तारमानं यत् कोष्ठशीर्षविनिस्सृतम्  १५५
शीर्षोच्चे तु च सप्तांशे पद्ममेकेन कल्पयेत्
उदरं वेदभागं स्यात् चक्रमंशेन कल्पयेत्  १५६
कपोतं नीप्रमेकांशं तत्समं लम्बमानकम्
गळतारे तु वेदांशं भूतांशं मध्यविस्तरम्  १५७
गळतारसमं यत्तत् बलिकस्य तु विस्तरम्
तत्त्रिभागैकभागेन छायाजं परिकल्पयेत्  १५८
स्थूप्यूर्ध्वं  सप्तधाभज्य वलग्नं त्वेकभागया
कुंभमानं गुणांशं स्यात् द्वियंशं पालिकोदयम्  १५९
कुश्मगं त्वेकभागेन कल्पयेत्तु विचक्षणः
स्थूपिकोत्सेधमानं यत् स्थूपिकुंभस्य नाभिकम्  १६०
उत्सेधमेवमाख्यातं नासिकालक्षणं शृणु
गळतारे त्रियंशं वा पंचांशांशमथापि वा  १६१
चतुर्भागैकभागं वा महानास्यास्तु विस्तरम्
तत्समं वा तदर्धं  वा त्रिशिरा निर्गमं भवेत्  १६२
ललाटे तु महानासी शीर्षस्यांत्वनुकूलवान्
स्थूपिकुंभावसानं यत् शृंगोत्सेधमुदाहृतम्  १६३
बलिकान्तं महानासी शृंगोत्सेधं प्रकल्पयेत्
नासीलक्षणमेवोक्तं द्वारमानविधिं शृणु  १६४
तलिपोच्चं समादाय दशनन्दाष्टधा भजेत्
एकांशरहितं शेषं द्वारोत्सेधं विधीयते  १६५
तच्छेषं रसधा भज्य भुवंगोच्चं गुणार्धकम्
पतंगांशं द्विभागार्धं  कल्पयेत्तु विचक्षणः  १६६
तदुत्सेधार्धविस्तारं पद्मपुष्पादिभूषितम्

द्वारस्य लक्षणं प्रोक्तं शृणुशान्त्यादिगरायकम् १६७
शान्तिकोत्सेधगरायं तु तिथिभागविभाजिते
अश्विन्यंशमधिष्ठानं पादोच्चं पंचभागया १६८
द्व्यंशं तु मंचमानं स्यात् द्वियंशं गळमानकम्
शिखरोच्चं गुणांशं तु स्थूप्युच्चं शशिभागया १६९
शान्तिकं त्वितिविख्यातं पौष्टिकं तु कलाधिकम्
अक्ष्यंशं खमधिष्ठानं सर्वभूतांशमप्रिजम् १७०
पंचमानं द्विभागं स्यात् तत्समं गळमानकम्
सार्धाग्न्यंशं शिरोत्सेधं शिरमानं शिखांशकम् १७१
पौष्टिकं सदनं ह्येतत् जयदं शृणु सुव्रत
सार्धाक्ष्यंशमधिष्ठानं षडंशं तलिपायतम् १७२
पंचमानं द्वियंशेन गळमानं च तत्समम्
शिखरं च शिखामानं पूर्ववत्परिकल्पयेत् १७३
स्मृत्यंशमद्भुतोत्सेधं कलांशं वै धरातलम्
पादोच्चं सार्धषड्भागं मंचमानं द्वियंशकम् १७४
द्वियंशं गळमानं तु वेदांशं शिखरोदयम्
सार्धां शेन शिखामानं अद्भुतं सदनं स्मृतम् १७५
त्रिपादाधिकमक्ष्यंशं अधिष्ठानोदयं भवेत्
षडंशं तलिपोच्चं स्यात् पादोनाग्न्यंशमंचकम् १७६
द्विपादांशं गळोत्सेधं युगांशं शिखरोदयम्
सपादांशं शिखामानं एतद्वै सार्वकामिकम् १७७
अथवान्यप्रकारेण सामान्यं शान्तिकादिके
षट्त्रिंशद्विभजेदुच्चं अधिष्ठानं गुणांशकम् १७८
रुद्रांशं तलिपोत्सेधं मंचमानं गुणांशकम्
अनलांशमुपग्रीवं अक्ष्यंशं मंचमानकम् १७९
सार्धाग्न्यंशं गळोत्सेधं पक्षांशं शीर्षकं भवेत्
शिखामानं गुणांशं स्यात् एकभूमेव कीर्तितम् १८०
गरायमेवं समाख्यातं अलंकारं प्रवक्ष्यते
अप्रिबन्धमधिष्ठानं ब्रह्मकान्ताग्निसंयुतम् १८१

अ्रायताश्रं शिरोयुक्तं महानासीचतुष्टयम्
कलाल्पनासिकोपेतं चतुष्कूटसमन्वितम् १८२
अ्रष्टाश्रं शीर्षकराठं तु गळोत्सेधान्तमुन्नतम्
शिखां पंचकसंयुक्तं श्रीभोगमिति विद्यते १८३
स्थाराुबन्धधरोपेतं स्कन्दकान्तांघ्रिसंयुतम्
अ्रायताश्रशिरोपेतं चतुर्नासीसमन्वितम् १८४
महानासीविनिष्ठान्तदराडकं द्वित्रिदराडकम्
महानासीद्वयोर्मध्ये क्षुद्रनासीद्वयान्वितम् १८५
भद्रनास्योच्चपार्श्वे तु क्षुद्रनासीविभूषितम्
पादं प्रत्यल्पनास्याढ्यं पुत्रकोष्ठमिति स्मृतम् १८६
पादबन्धतरा पृथ्वी स्तंभशेखरसंयुतम्
कोष्ठमध्ये महानासी गळभद्रसमन्वितम् १८७
तत्पार्श्वे क्षुद्रनास्याढ्यं पादं प्रत्यल्पनासिकम्
सर्वालंकारसंयुक्तं चित्रकान्ताख्यकोष्ठकम् १८८
तलिपाख्यं तलोपेतं विष्णुकान्तांघ्रिसंयुतम्
चतुष्कोरो चतुष्कूटं अ्रष्टाश्रं शीर्षयान्वितम् १८९
शालामध्ये द्विपार्श्वे तु महानासी चतुष्टयम्
महानासीद्वयोर्मध्ये क्षुद्रनासीविभूषितम् १९०
पादं प्रत्यल्पनासाढ्यं तोरणाद्यैरलंकृतम्
एवं लक्षरासंयुक्तं श्रीभद्रं नामदुच्यते १९१
अ्रप्रिबन्धमधिष्ठानं भीमकान्तांघ्रिसंयुतम्
शिखरे ऋतुनासाढ्यं अ्रल्पनासीद्वयान्तरे १९२
प्रासादे मराडपे मध्ये तोरणाद्यैर्विचित्रितम्
एवं लक्षरासंयुक्तं नाम्ना सुन्दरमुच्यते १९३
पादबन्धधरोपेतं वारणस्तंभसंयुतम्
शिखापंचकसंयुक्तं पुत्रकान्तविमानकम् १९४
कौबेरांघ्रिसमायुक्तं पादबन्धमयूरकम्
कलाल्पनासिकोपेतं महानासीद्वयान्वितम् १९५
सर्वालंकारसंयुक्तं गोमुखं त्विति विद्यते

पादबन्धमधिष्ठानं श्रीवत्सस्तंभसंयुतम् १९६
आयताश्रशिरोपेतं महानासीद्वयान्वितम्
चतुष्कूटसमायुक्तं नागाराद्विचितान्वितम् १९७
पादं प्रत्यल्पनासाढ्यं पंजराष्टकसंयुतम्
सर्वालंकारसंयुक्तं श्रीकान्तमिति विद्यते १९८
प्रतिबन्धधरायुक्तं धारास्तंभसमन्वितम्
अष्टाविंशाल्पनासाढ्यं भद्रनासीद्वयान्वितम् १९९
भद्रकूटसमायुक्तं तोरणाद्यैर्विचित्रितम्
पंजराष्टकसंयुक्तं पार्वतीकान्तमीरितम् २००
धर्मकान्तांघ्रिसंयुक्तं आधारं प्रतिबन्धके
त्रयस्त्रिंशाल्पनासाढ्यं शिखरे ऋतुनासिकम् २०१
वेदीभद्रसमायुक्तं सुमंगलमिति स्मृतम्
चन्द्रकान्तांघ्रिसंयुक्तं प्रतिबन्धं सुवृत्तकम् २०२
शालायामं त्रिभागैकं मुखभद्रसमन्वितम्
+++++++++ पद्मं स्यात्कर्णशीर्षकम् २०३
षण्महानासिकोपेतं विंशत्संख्याल्पनासिकम्
शिखापंचकसंयुक्तं सुभद्रमिति विद्यते २०४
प्रतिबन्धयुता पृथ्वी भानुकान्तांघ्रिसंयुतम्
प्रस्तरोपरि कोणेषु कर्णकूटसमन्वितम् २०५
वस्वश्रं शीर्षकण्ठं यत् गळोत्सेधान्तमुन्नतम्
वेदिकासुन्दरं कर्णं चित्रकान्तविमानकम् २०६
पंचराष्ट्रकसंयुक्तं तोषसुन्दरमीरितम्
चरणं रुद्रकान्तं स्यात् आधारं प्रतिबन्धकम् २०७
वेदिभद्रसमायुक्तं कूटहारान्तरान्वितम्
कन्धरं गीषकाकारं श्रीभद्रकविमानकम् २०८
एवं लक्षणसंयुक्तं विमानं विजयावहम्
श्रीभोगाद्यष्टकं दिक्षु विधिना धापयेद्बुधः २०९
पार्वतीकान्तकोष्ठाभ्यां अष्टमं चान्तराळके
कल्पयेदुक्तमार्गेण यथा वित्तानुसारतः २१०

कामकोष्ठविधिः प्रोक्तो देवतास्थापनं शृणु
जंभिनी पूर्वदिग्भागे स्तंभिन्ये दक्षिणे न्यसेत् २११
मोहिनी पश्चिमे देशे भेदिनी चोत्तरे न्यसेत्
कोणे सिंहवृषं स्थाप्य अथवा वृषभं न्यसेत् २१२
अथवा पूर्वदेशे तु इन्द्राणीं चैव विन्यसेत्
रौद्री दक्षिणदेशे तु वारुणे वैष्णवीं न्यसेत् २१३
ब्राह्मीमुत्तरदेशे तु स्थापयेत्तु विचक्षणः
देवतास्थापनं प्रोक्तं देविमानं ततः शृणु २१४
स्तंभोत्सेधं दशांशे तु भूतांशं कन्यकोदयम्
रसांशं श्रेष्ठमानं तु तयोर्मध्येऽष्टभाजिते २१५
नवधादेविमानं स्यात् नागरं देविमानकम्
स्वाधिष्ठानासमं नीचं पादाधिक्यं तु मध्यमम् २१६
श्रेष्ठं मध्याधिकं मानं द्राविडं देविमानकम्
नाळीगृहविशालं यत् नवभागविभाजिते २१७
सप्तांशमुत्तमं प्रोक्तं भूतांशं कन्यकं भवेत्
तयोर्मध्येऽष्टयन्मानं वेसरं देविमानकम् २१८
द्वारोत्सेधे विकारांशे ऊर्ध्वाधोंशद्वयं न्यसेत्
शेषं देवीस्यमानं स्यात् एतत्सामान्यमेव हि २१९
आयादिशुभसंयुक्तं देवीमानं परिग्रहेत्
अंगमानादिकं सर्वं मध्यमं दशतालकम् २२०
एवं लक्षणसंयुक्तां देवीं संगृह्य देशिकः
ततोंकुरार्पणं कुर्यात् नवमे सप्तमेऽथवा २२१
पंचमे त्रिदिने वापि सद्योंकुरमथापि वा
बालदेवीं समभ्यर्च्य प्रतिष्ठा दिनपूर्वके २२२
शिल्पिकर्मावसानेन गौरीं संग्राह्य देशिकः
प्रासादपूर्वदिग्भागे मण्डपे शालिकोपरि २२३
वस्त्रेणास्तीर्य तस्योर्ध्वे च्छाययेदूर्ध्ववक्त्रकम्
प्राक्शिरोममहादेवीं गौरीगायत्रियार्चयेत् २२४
वस्त्रेणाच्छाद्यतां देवीं तन्मूलेनैव देशिकः

तस्य दक्षिणभागे तु स्नपनं संप्रकल्पयेत् २२५
तस्य मण्डपरक्षार्थं पूर्वादीनि यथाक्रमम्
कुंभमध्ये समभ्यर्च्य लोकपालास्त्रकान्ग्रहान् २२६
हेमराजतपात्रे वा ताम्रपात्रेऽथवा पुनः
कांस्यपात्रेऽथवा मध्ये कल्पयेच्चन्दनेन तु २२७
द्वादशांगुलविस्तारं व्योमांगुलसमुन्नतम्
चतुरश्रसमायुक्तं मध्ये पद्मं समालिखेत् २२८
माणिक्यं कर्णिकामध्ये पूर्वमरकतं न्यसेत्
प्रवाळमग्निदिग्भागे इन्द्रनीलं तु याम्यके २२९
नैर्ऋृते पुष्यरागं च वज्रं वारुणदिग्दळे
गोमेधं वायुदेशे तु मौक्तिकं सोमदिग्दळे २३०
वैडूर्यमीशदेशे तु वामदेवसमन्वितम्
अर्चयेद्गन्धपुष्पाद्यैः वामादिशक्तिबीजतः २३१
शुद्धवस्त्रेण संछाद्य त्रिपाद्यूर्ध्वे तु विन्यसेत्
शिरीसदुर्जमज्ञोऽथ लेखयेद्धेमसूचिना २३२
भ्रूरेखां प्रथमं लिख्य नेत्रमंत्रमनुस्मरन्
प्रथमं मधुना तर्प्य द्वितीयं सर्पिषा बुधः २३३
तृतीयं पयसा तर्प्य चतुर्थं शुद्धवारिणा
पंचमं हिमतोयेन तन्मूलेनैव देशिकः २३४
गन्धपुष्पैः समभ्यर्च्य तप्यन्ते दर्शयेद्बुधः
उत्पलं दर्शयेत्पश्चात् कर्पूरशकलं ततः २३५
क्षीरं च दधिकुंभं च घृतकुंभं च दर्शयेत्
बृहतीफलहानिं च मधुकुंभं च दर्शयेत् २३६
अंजनं कन्दुकं चैव सवस्त्रं केशशोधनम्
कुंकुमं कृष्णगन्धं च शालिपुष्पं च तण्डुलम् २३७
तिलमुद्गसमूहं च दर्शयेत्तु विचक्षणः
प्रच्छन्नपटमावर्ज्य सवत्सां गां प्रदर्शयेत् २३८
दर्शयेद्ब्रह्मकन्याश्च ब्राह्मणानां प्रदर्शयेत्
प्राणिनां दर्शयेत्पश्चात् गौरीबीजमनुस्मरन् २३९

ततः संस्नाप्य देवेशीं अलंकृत्यातिसुन्दरम्
ग्रामप्रदक्षिणं कृत्वा सर्वालंकारसंयुतम्  २४०
जलतीरे प्रपामध्ये विन्यसेद्देशिकोत्तमः
पुण्याहं वाचयेत्तत्र जलाधिवासनार्थकम्  २४१
स्नपनं कारयेत्तत्र जलाधिवासनार्थकम्
स्नपनं कारयेत्तत्र जलक्रीडां समाचरेत्  २४२
जलमध्ये समापूर्य गंगादीनां समर्चयेत्
तन्मध्ये शाययेद्गौरीं जप्त्वाघमर्षणं मनुम्  २४३
रवेरस्तमयात्पूर्वे गौरीमादाय देशिकः
जलतीरे प्रपामध्ये विन्यसेत्स्नपनार्हकैः  २४४
संस्नाप्य च समादाय सर्वालंकारसंयुतम्
धामप्रवेशनं कुर्याद् यागमण्डपचोत्तरे  २४५
विन्यस्य चाष्टमृद्द्रव्यं भस्म बिल्वदळादिभिः
संस्नाप्य शुद्धतोयेन गौरीगायत्रिया बुधः  २४६
चित्रवस्त्रैरलंकृत्य गन्धपुष्पस्त्रगादिभिः
ततो मण्डपमासाद्य वास्तुहोमं समाचरेत्  २४७
पर्यग्निकरणं कृत्वा स्नात्वा संपूज्य मण्डपम्
ततः संमृज्य दर्भाग्रैः वेदिकां प्रोक्षयेद्गुरुः  २४८
स्थण्डिलं कारयेत्तत्र अष्टद्रोणैश्च शालिभिः
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि  २४९
तदर्धैर्लाजपुष्पैश्च तन्मध्ये नळिनं लिखेत्
प्रोक्षयेद्धृदयेनैव पूजयेत्सिंहमासनम्  २५०
ततो गौरीं समादाय मण्डपे वायुगोचरे
विन्यस्याभ्यर्च्य तस्याग्रे रक्षासूक्तं जपेत्क्रमात्  २५१
बध्वा प्रतिसरं मंत्रं शंखघोषसमन्वितम्
धूपदीपं ततो दत्वा विप्राशीर्वचनैस्सह  २५२
ततो बालगृहं गत्वा यात्रा होमं समाचरेत्
कुंभे वा करके वापि समावाह्य महेश्वरीम्  २५३
बालबिम्बं परित्यज्य नद्यां वा कूपवापिके

ततः संपूज्य गन्धाद्यैः करकस्थां महेश्वरीम् २५४
शिरसा वाहयित्वा तु शंखघोषपुरस्सरम्
पूर्वालंकारसंयुक्तं मुखमण्डपमाविशेत् २५५
इन्द्रईशानयोर्मध्ये वेदिकोर्ध्वे तु विन्यसेत्
आदाय चाष्टकरकान् कूर्चपल्लवसंयुतान् २५६
सवस्त्रान्हेमसंयुक्तान् स्थापयेद्दिग्विदिक्षु च
शयनं कर्णिकामध्ये चाण्डजाद्यैरधोमुखम् २५७
अथवा चित्रवस्त्रेण शयनं कल्पयेत्तथा
ततो गौरीं समादाय शयने शाययेद्बुधः २५८
संपूज्य गन्धपुष्पाद्यैः गौरीबीजेन देशिकः
ततोऽग्नियजनं कुर्यात् पूर्वोक्तविधिना सह २५९
समिदाज्यान्न लाजैश्च प्रत्येकं होममाचरेत्
समिद्धृदयमंत्रेण शिरसा च घृतं हुनेत् २६०
शिखया चरुहोतव्यं लाजं कवचमंत्रतः
गौरीमिमाय मन्त्रेण दशवारं हुनेत्सुधीः २६१
शतमर्धं तदर्धं वा द्रव्यं प्रतिहुतं चरेत्
द्रव्यान्ते व्याहृतिं हुत्वा व्याहृत्यन्ते स्पृशेदुमाम् २६२
वर्धनीं चैव संस्पृश्य जप्त्वा चाहुतिसंख्यया
प्रायश्चित्ताहुतिं हुत्वा शतं मंत्रेण देशिकः २६३
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत्
सौरीदीशकलान्यष्ट्वा तदन्ते होममाचरेत् २६४
ततो गर्भगृहं गत्वा स्थलशुद्धिं समाचरेत्
द्वारतारं त्रिधा कृत्वा मध्येष्टांशविभाजिते २६५
तदेकांशं त्रिधा कृत्वा कलांशं दक्षिणे न्यसेत्
व्योमांशं वामभागेन न्यस्त्वा सूत्रं प्रसारयेत् २६६
तत्सूत्रं शक्तिसूत्रं स्यात् शतैर्मध्यं प्रकल्पयेत्
तत्सूत्रं मध्यमे स्थाप्य गौरीपीठं यथादृढम् २६७
गर्भेऽष्टाष्टांशके भागे देविके स्थापनं कुरु
पीठं प्रक्षाळ्य चास्त्रेण पंचगव्याभिषेचयेत् २६८

पिण्डीमस्त्रेण संप्रोक्ष्य गन्धपुष्पादिना बुधः
वस्त्रेणाच्छादनं कुर्यात् प्रणवेनैव देशिकः २६९
ततो यागगृहं गत्वा चास्त्रेण जुहुयाच्छतम्
पादप्रक्षालनं कृत्वा चाचम्य विधिना बुधः २७०
परिचारकसंयुक्तं सोष्णीषं सोत्तरीयकम्
यजमानसमायुक्तं बन्धुवर्गैः समन्वितम् २७१
दैवज्ञेन समायुक्तं स्वस्तिसूक्तसमन्वितम्
गब्लिके शिंजिके वाथ खेटके वा रथेऽपि वा २७२
देवीमारोपयेद्विद्वान् वाद्यघोषसमन्वितम्
वितानच्छत्रसंयुक्तं धूपदीपसमन्वितम् २७३
ग्रामप्रदक्षिणं नीत्वा द्वारदेशे समन्वितम्
संपूज्य विधिवद्द्वारं पुष्पाक्षतसमन्वितम् २७४
गर्भगेहं प्रविश्याथ पुण्याहं वाचयेत्ततः
गर्ते संपूजयेद्रत्नान् स्थाप्य पूर्वोक्तमार्गतः २७५
स्थापयेत्तन्महादेवीं मुहूर्ते तस्य मंत्रतः
दृढी कृत्वाष्टबन्धेन शक्तिसूत्रं निरीक्षयेत् २७६
स्नापयेद्गन्धतैलेन सुगन्धामलकादिभिः
पंचगव्यामृतैः स्नाप्य नाळिकेरोदकैर्जलैः २७७
संस्नाप्य च महादेवीं नववस्त्रेण वेष्टयेत्
संपूज्य गन्धपुष्पाद्यैः प्रणवेनैव देशिकः २७८
पूर्णाहुतिं ततो दत्वा संग्रहेद्ब्रह्मवर्धनीम्
शंखध्वनिसमायुक्तं ब्रह्मघोषसमन्वितम् २७९
छत्रचामरसंयुक्तं सर्वातोद्यसमन्वितम्
धामप्रदक्षिणं कृत्वा द्वारपूजां समाचरेत् २८०
बिम्बाग्रे स्थापयेद्विद्वान् त्रिपाद्युपरि वर्धनीम्
देवीं संपूज्य गन्धाद्यैः मंत्रन्यासं समाचरेत् २८१
शशिनीं मूर्ध्नि विन्यस्य वक्त्रस्थाने गदां न्यसेत्
इष्टदां हृदये न्यस्य मरीचीं गुह्यदेशके २८२
पादांशं मालिनीं न्यस्त्वा गौरी बीजेन संयुतम्

षडंगानाचरेद्विद्वान् मातृका न्यासमाचरेत् २८३
गौरी कलां न्यसेत्पश्चाद् शक्तिन्यासं तथाचरेत्
वर्णं पदं च भुवनं तत्वं तत्वेशि संयुतम् २८४
कलामंत्रं सबीजेन ललाटे विन्यसेद्गुरुः
जीवन्यासं ततः कृत्वा हृदये सोपदेशिकः २८५
वर्धन्या बीजमादाय देवी हृन्मध्यमे न्यसेत्
तज्जलेनैव संस्नाप्य तापसापं निवेदयेत् २८६
स्नापयेत्सर्वकलशैः वेदकुंभपुरस्सरम्
ततः शुद्धोदकैः स्नाप्य स्थलशुद्धिं समाचरेत् २८७
मंत्रोदकेन संस्नाप्य मंत्रान्नं दापयेद्गुरुः
ततो देवी मलं कृत्य वस्त्रपुष्पस्त्रगादिभिः २८८
नैवेदयं दापयेद्विद्वान् षड्रसेन समन्वितम्
पानीयाचमनं दत्वा नित्याग्निं संप्रकल्पयेत् २८९
कुण्डे वा स्थण्डिले वापि चुल्ली मध्येऽपि वा पुनः
तूष्णीं हुताशनं स्थाप्य दीपयेदिन्धनैस्सह २९०
प्रणवेनैव संप्रोक्ष्य गौरीमावाह्य पूजयेत्
निरीक्षणादिभिः शोध्य घृतान्नं देशिकोत्तमः २९१
पुष्पाग्रैर्वाथ पत्रैर्वा जुहुयाद्देविमन्त्रतः
प्रत्येकं षोदशं हुत्वा चरुणा च घृतेन च २९२
पूर्णाहुतिं ततो हुत्वा गौरी गायत्रिया बुधः
तेनैवाभ्यर्च्य देवेशीं आवाहाग्निं विसर्जयेत् २९३
मूलेन पूजयेद्देवीं प्रणम्यानुज्ञया सह
द्वारादिवाहनान्तं वा पीठान्तं वा बलिं ददेत् २९४
द्वारदक्षिणपार्श्वे तु ज्ञानशक्तिं प्रपूजयेत्
वामपार्श्वे क्रियाशक्तिं तदग्रे वृषभं यजेत् २९५
श्रीदेवीमग्निदिग्भागे दक्षिणे सप्तमातरः
मातनी समोपेतं नैर्ऋते जाह्नवी स्वयम् २९६
पश्चिमे तु धरादेवीं वायव्ये मोहिनीं यजेत्
उत्तरे तु शचीदेवीं सावित्रीमीशगोचरे २९७

गोपुरद्वारपार्श्वे तु शंखपद्मनिधी यजेत्
अणिमा पूर्वदिग्भागे महिमा चाग्निगोचरे  २९८
दक्षिणे गरिमादेवी लघिमा नैर्ॠते दिशि
पश्चिमे त्वीशकादेवी वशित्वं वायुगोचरे  २९९
सोमे प्राप्तिमहादेवी प्राकाम्यादीशगोचरे
नैर्ॠतेऽकन्धतीं यष्ट्वा लघिमादेविदक्षिणे  ३००
ईशे प्राकाम्यमेवापि संयजेदमृतेश्वरीम्
सोमशंकरयोर्मध्ये सुन्दरीमर्चयेद्गुरुः  ३०१
महापीठाग्रके मंत्री कमलास्त्रं समर्चयेत्
अण्डनी कुंभिनी रौद्री शान्तिनीन्द्रविकारिणी  ३०२
स्तंभिनीं च षडेतान शक्तयो जि विनायकाम्
स्तंभिनी कर्णिकामध्ये अण्डनी पूर्वदिग्दळे  ३०३
जृंभिणी दक्षिणे भागे रौद्री वारुणदिग्दळे
सोमेन्द्रियविकारी च शान्तिशास्ता बलिं ददेत्  ३०४
द्वारादिबलिपीठान्तं बलिबेरसमन्वितम्
सर्वातोद्यसमायुक्तं बलिदत्वा यथाक्रमम्  ३०५
पादप्रक्षाळनं कृत्वा आलयं प्रविशेद्गुरुः
गीतवाद्यसमोपेतं जयशब्दसमन्वितम्  ३०६
धामप्रदक्षिणं पश्चाद् देवीं विन्यस्य मण्डपे
नीरांजनं ततः कृत्वा केवलं लोहशान्तये  ३०७
ततो गौरीं समभ्यर्च्य धूपदीपादिकं ददेत्
तोषयेद्देवदेवेशीं प्रणिपत्य क्षमापयेत्  ३०८
निर्माल्य धारिणीं यष्ट्वा रात्रौ पूजावसानके
एवं प्रतिसमभ्यर्च्य यथावित्तानुसारतः  ३०९
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इति सूक्ष्मशास्त्रे कामकोष्ठविधिः अष्टचत्वारिंशत्पटलः

३९
वक्ष्ये कल्याणकर्मं च शृणु त्वं तत्प्रभंजन

प्रतिष्ठादिनमारभ्य चतुर्थे पंचमेऽपि वा  १
सप्तमे नवमे वापि दशमे तद्दिनेऽपि वा
शुभवारादिभिर्युक्ते कल्याणं कारयेद्बुधः  २
तद्दिनस्य तु पूर्वे तु अंकुराण्यर्पयेद्बुधः
तद्दिनस्य तु पूर्वाह्णे जलक्रीडां समाचरेत्  ३
ततो मध्याह्नसमये पूरकर्म समाचरेत्
एवं कृत्वा दिवाकाले रात्रौ कल्याणमाचरेत्  ४
सायाह्नस्यापरार्धे तु तद्दिने देशिकोत्तमः
पूर्वोक्तविधिमार्गेण कौतुकं बन्धयेद्बुधः  ५
नवकुंभं समादाय क्षाळयेदस्त्रमंत्रतः
तन्तुनावेष्ट्य संधूप्य भस्मना पूरयेद्बुदा  ६
वस्त्रेणाच्छाद्य तद्वक्त्रं विश्वेत्कातेति बन्धयेत्
लाक्षाचाष्टौ च मृद्वापि विन्यसेद्ग्रन्थिमध्यमे  ७
जप्त्वा वृषभगायत्रीं दापयेद्वृषलांछनम्
पूजयेद्गन्धपुष्पाद्यैः तन्मूलेनैव देशिकः  ८
ताम्बूलं नाळिकेरं च क्रमुकस्य फलं क्रमात्
कदळीफलं च कह्लारं दामचन्दनकुंकुमम्  ९
कर्पूरं हिमतोयं च चित्रवस्त्रं च भूषणम्
क्षौमं शार्दूलचर्मं च चामरं छत्रदर्पणम्  १०
कन्दुकं कृष्णपुष्पं च केशशोधनमंजनम्
पृथक्पात्रे तु विन्यस्य यजमानेच्छया ग्रहेत्  ११
अस्त्रेणैव तु संप्रोक्ष्य प्रणवेनाभिमंत्रयेत्
परिचारकमाहूय सोष्णीषं सोत्तरीयकम्  १२
सर्वद्रव्यसमायुक्तं ब्रह्मघोषसमन्वितम्
सर्वभक्तजनैः सार्धं यजमानसमन्वितम्
गीतवाद्यसमोपेतं सर्वालंकारसंयुतम्  १२-१
भस्मकुम्भसमादाय प्रणवेन समर्चयेत्
शिवशास्त्रेति मंत्रेण त्यजेत्तद्वृषलांछनम्  १३
भस्म संगृह्य तारेण ललाटे देविहृद्गळे

संतर्प्य गौरी बीजेन सर्वद्रव्यं करे ददेत् १४
प्रणम्य परया भक्त्या स्थित्वा देव्यग्रके बुधः
अम्बिके गौरि कल्याणि कारुण्याकरचन्द्रिके १५
जगदार्तिविनाशाय शंभुपत्नी भविष्यसि
इत्युक्त्वा तु महादेवीं प्रणिपत्य गुरूत्तमः १६
धामस्येशानदिग्भागे प्रपां कृत्वाति सुन्दरम्
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत् १७
तन्मध्ये सितरक्तेन स्वस्तिकं कारेयेद्बुधः
सर्वशृंगारवेषाढ्यां सुविकीर्णाळकान्विताम् १८
धूम्रवर्णमहाभोगां चित्रिणीं पूजयेत्ततः
पुण्याहं वाचयेत्तत्र दध्यन्नं कदळीफलम् १९
रक्तपुष्पसमोपेतं बलिं दद्याद्विशेषतः
ततो देवी गृहं गत्वा पूजयेत्परमेश्वरम् २०
कुंभं संगृह्य देवेशं शिवहस्तसमन्वितम्
चित्रवस्त्रैरलंकृत्य पुष्पाभरणभूषितम् २१
गजे वा गब्लिके वापि शिबिके वा शिरो वहेत्
स्नपनं कारयेद्विद्वान् चक्रवर्त्युपचारतः २२
ततो देवी गृहं गत्वा मण्डले स्थण्डिलं कुरु
तत्र सिंहासनं कल्प्य वस्त्रोर्ध्वे स्थापयेद्विभुम् २३
तदग्रे स्थण्डिलं कृत्वा निर्दोषैः सिकतैः सितैः
अग्निकार्योक्तमार्गेण शिवाग्निं संप्रकल्पयेत् २४
समिदाज्यान्नलाजैश्च माषशालियवैस्तिलैः
सर्षपं नाळिकेरं च फलैश्च जुहुयाद्बुधः २५
सद्यादिनेत्रपर्यन्तं प्रत्येकं षोडशं हुनेत्
पूर्णाहुतिं ततो हुत्वा सर्वद्रव्यसमन्वितम् २६
मनुहस्तसमायामं तच्चतुर्थां शविस्तृतम्
नानाछत्रसमायुक्तं क्षौमं कार्पासिकं तु वा २७
मंत्रवस्त्रमिति प्रोक्तं मांगल्यं च ततः शृणु
कुंजं षोडशमारभ्य कुंजद्वयविवर्धनात् २८

यवद्वात्रिंशत्कुंजान्तं गृहेन्मांगल्यकांचनम्
गणेशाकृतिकं वाथ पद्माकृतिमथापि वा २९
शिवलिंगाकृतिं वापि मांगल्यं परिकल्पयेत्
बिन्दुपंचकसंयुक्तं पार्श्वे सुषिरसंयुतम् ३०
हेमसूत्रद्वयोपेतं गौरीकण्ठानुकूलकम्
एवं लक्षणसंयुक्तं मांगल्यं गन्धसंयुतम् ३१
भूषणं मंत्रवस्त्रं च खड्गदामसमन्वितम्
संगृह्यान्तः प्रविश्याथ गीतवाद्यसमन्वितम् ३२
शंखध्वनिसमोपेतं गत्वा देव्यालयं गुरुः
संपूज्य गन्धपुष्पाद्यैः वर्म वस्त्रेण वेष्टयेत् ३३
बध्वा मांगल्यसूत्रं च गौरी बीजेन देशिकः
आवाह्यकरणेऽभ्यर्च्य सर्वालंकारसंयुतम् ३४
कुंभेशवामदेवेशीं स्थापयेत्तदनन्तरम्
गन्धपुष्पादिना यष्ट्वा पार्वतीपरमेश्वरौ ३५
शिवद्विजकुलोत्पन्नः कृतदीक्षाभिषेककः
शिवशास्त्रविचारज्ञः पुत्रभ्रातृकळत्रकः ३६
शुक्लचन्दनलिप्तांगः शुक्लमाल्यैरलंकृतः
पंचांगभूषणोपेतः सोष्णीषः सोत्तरीयकः ३७
विष्णुमंत्रं जपेद्भक्त्या संगृहेद्धेमवर्धनीम्
शिवाग्रे स्थण्डिलं कृत्वा सुश्वेतद्रोणतण्डुलैः ३८
तन्मध्ये नळिनं लिख्य त्रिपादीं विन्यसेद्बुधः
तदूर्ध्वे स्थालिकां न्यस्य गुरुः पूर्वमुदङ्मुखः ३९
शिवहस्तसमोपेतं स्थित्वा कुंभेश पृष्ठके
विष्णुमंत्रं समच्र्याथ श्रीकण्ठं गौरिसंयुतम् ४०
देविहस्तं समादाय शिवहस्ते समर्पयेत्
अनादिगोत्रसंभूत लोकनाथ जगत्पते ४१
आदिगोत्रामुमां देवीं गृहाण लोकशान्तये
इत्युक्त्वा मोदकं दद्याच्छिवहस्ते स मंत्रवित् ४२
न देव्यदेविहस्तं च शिवहस्तं शिवान्तिकम्

तत्तन्मंत्रेण विन्यस्य धूपदीपं ददेद्गुरुः ४३
ततो हुताशनं यष्ट्वा सम्बन्धाहुतिमाचरेत्
मधुदत्वाज्यकदळी सितखण्डसमन्वितम् ४४
मधुपर्कं ततो दत्वा हृन्मंत्रेणैव देशिकः
पाद्यमाचमनं दत्वा धूपदीपं प्रदापयेत् ४५
शिवहस्तेन संस्पृश्य शंखघोषसमन्वितम्
पुण्याहं वाचयेत्तत्र पादुकाराधनार्थकम् ४६
अग्नेरुत्तरपार्श्वे तु गोमयालिप्तभूतले
स्थण्डिले दारुपीठोर्ध्वे चित्रवस्त्रैर्विभूषितैः ४७
अश्मानं स्थापयेद्विद्वान् चन्दनाद्यैर्विलेपितम्
धर्मासनं समभ्यर्च्य प्रोक्षयेदस्त्रवारिणा ४८
गौरीदक्षपदाम्भोजं शिवहस्तेन संगृहेत्
अश्मोपरिसमारोप्य चाष्टांगेन प्रपूजयेत् ४९
शिवहस्तेन संगृह्य गौरीहस्तं गुरूत्तमः
ततः शिष्यं समाहूय ग्राहयेद्देविपादुके ५०
वह्नेः प्रदक्षिणं कृत्वा स्वस्थाने पादुके न्यसेत्
संपूज्य देवदेवेशीं धूपदीपं ददेद्गुरुः ५१
अन्येन देशिकेनैव पट्टबन्धयुतेन च
सांगुळीयकरेणैव लाजं संगृह्यदेशिकः ५२
दम्पत्योरुभयोस्तेन हुत्वा लाजं शिवाणुना
ततोश्मानं समारोप्य पूर्ववद्गौरिपादुकाम् ५३
आराध्य पूर्वमार्गेण पूजयेत्कुंभवर्धनीम्
एवं त्रिवारं हुत्वा तु व्याहृतिं जुहुयात्ततः ५४
शतमर्धं तदर्धं वा जुहुयात्तन्मूलमंत्रतः
पूर्णाहुतिं ततो हुत्वा विसृज्य शिवपावकम् ५५
तद्भस्म च विसृज्याथ नैवेद्यं दापयेद्गुरुः
सर्वोपचारैस्संतोष्य संगृहेत्कुंभवर्धनीम् ५६
ब्रह्मघोषसमायुक्तं शंखवाद्यसमन्वितम्
विशेच्छय्यागृहे रम्ये शयने स्थापयेद्गुरुः ५७

द्विसंधिकेऽग्निमाहूय सायं प्रातर्हुतं चरेत्
समिदाज्येन चरुणा प्रत्येकं पंचविंशतिः ५८
द्रव्यं प्रति विशेषेण व्याहृत्याहुतिमाचरेत्
पंचमेऽहनि संप्राप्ते प्रातः संध्यावसानके ५९
चूर्णोत्सवं ततः कुर्याद् जलक्रीडां समाचरेत्
जलक्रीडावसाने तु तीर्थं संग्राह्य देशिकः ६०
सर्वालंकारसंयुक्तं छत्रचामरसंयुतम्
ग्रामप्रदक्षिणं कृत्वा स्नपनमण्डपमाविशेत् ६१
देवस्य देवदेव्याश्च स्नपनं कारयेद्गुरुः
शिवाग्निं तत्र संकल्प्य पूर्वोक्तविधिना बुधः ६२
अघोरेण शतं हुत्वा पूर्णाहुतिं समाचरेत्
अग्निं विसृज्य संयोज्य कुंभमध्ये विचक्षणः ६३
ततो गर्भगृहं गत्वा लिंगशुद्धिं समाचरेत्
कुंभोदकेन संस्नाप्य स्नापयेत्स्नपनोदकैः ६४
ततः संस्नाप्य देवेशीं स्नपनाद्यैर्विधानतः
स्नानवेदीं समापाद्य नित्यपूजां समाचरेत् ६५
रात्रौ पूजावसाने तु भोगांगं संप्रपूजयेत्
उमास्कन्दादिदेवानां कुंभहीनं समाचरेत् ६६
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इति सूक्ष्मशास्त्रे कल्याणकर्मविधिरेकोनपंचाशत्पटलः

४०
गौरीसंकोचनं वक्ष्ये शृणु त्वं तत्प्रभंजन
आयुरारोग्यजयदं पुत्रपौत्रसमृद्धिदम् १
आद्यं द्वितीयमेवं तु द्विविधं तरुणालयम्
कर्षणाद्यर्चनान्तं तु तरुणालयसंगृहेत् २
प्रासादे पतिते भिन्ने लिंगे च चलिते तथा
अन्यानि सर्वकर्माणि भाषितानि समानि च ३
मूलस्थाने विनिश्चित्य बालस्थानं तु कारयेत्

तदूर्ध्वे बालालयं कृत्वा तस्मान्मूले प्रवेशयेत् ४
प्रासादाग्रे तु कर्तव्यं दक्षिणे चोत्तरेऽपि वा
विंशद्धस्तप्रविस्तारं उत्तमं मण्डपं भवेत् ५
मध्यमं रविहस्तं स्याद् दशहस्तं तु कन्यसम्
षट्त्रिंशद्गात्रसंयुक्तं उत्तमं मण्डपं स्मृतम् ६
षोडशस्तंभसंयुक्तं मण्डपं मध्यमं भवेत्
दिशश्च विदिशश्चैव निश्चित्र व्योमसंभवम् ७
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
वितानध्वजसंयुक्तं दर्भमालासमावृतम् ८
यवैः पुष्पैः फलैस्सार्धं अष्टमंगळपूजितम्
स्तंभानि वेष्टयेत्तत्र प्रत्येकं वस्त्रवेष्टितम् ९
मण्डपं तु त्रिधा कृत्वा मध्यभागे तु वेदिकाम्
अरत्निमात्रमुत्सेधं दर्पणोदरसंनिभम् १०
वेद्या मूले तु परित उपवेदीं प्रकल्पयेत्
युगांगुलसमुत्सेधं द्विगुणं नीप्रमुच्यते ११
कुण्डानि परितः कुर्यात्किंचिद्भेदविशेषतः
नवाग्निं वाथ पंचाग्निं एकाग्निं समुदाचरेत् १२
योनिकुण्डानि सर्वाणि योनौ योनिं न कारयेत्
श्रोत्रार्धांशोच्चमानेन क्षेत्रं पंचैकभागिकम् १३
तत्पुरस्ताद्बहिर्नीत्वा भवेत्पिप्पलपत्रवत्
योनिकुण्डं ततः कृत्वा लक्षणं सम्यगाचरेत् १४
उद्वास्य शिल्पिनं पश्चाद् गोमयेनानुलेपयेत्
पुण्याहं वाचयेत्तत्र ब्राह्मणान्भोजयेत्ततः १५
पश्चादुद्वास्य चोच्छिष्टं पुण्याहमाचरेद्बुधः
समर्यकपदे सम्यग्वास्तुहोमं तु कारेयेत् १६
पर्यग्निकरणं कुर्यात् पुनः पुण्याहमाचरेत्
कृत्वा तु विधिना स्नानं शुक्लचन्दनलेपितम् १७
शुक्लवस्त्रधरोष्णीषं शुक्लमाल्यैरलंकृतम्
अंकुरार्ण्यर्पयेद्धीमान् स्थानशुद्धिं समाचरेत् १८

उत्तराभिमुखो भूत्वा सकळी करणं कुरु
गर्भगेहं प्रविश्याथ स्थानशुद्धिं ततः कुरु १९
गौरीशुद्धिं ततः कृत्वा स्नापयेद्रजनोदकैः
पुरायाहं तु ततः कृत्वा शुद्धोदैरभिषेचयेत् २०
पंचगव्येन संस्नाप्य बिल्वपत्रेण घर्षयेत्
दर्भमूले तु वल्मीके क्षेत्रमृद्गृह्य लेपयेत् २१
गन्धोदकेन संस्नाप्य पूजयेद्धृदयेन तु
चन्दनागरुकोष्ठं च कुंकुमोशीरकेसरैः २२
त्वगेलापत्त्रिकपूरैः बालोस्या गौरिपालयेत्
पिरिडकाब्जं समालिप्य प्रोक्षयेच्छक्तिबीजकम् २३
शिरसा वामहस्तं तु हेमसूत्रं तु कौतुकम्
अष्टपुष्पैस्समभ्यर्च्य सामान्यं पुष्पपूरितम् २४
नववस्त्रेण संवेष्ट्य गौरीपीठक्रमेण तु
ततो बालगृहं पश्चात् पूजयेद्गौरिसंयुतम् २५
यात्राहोमं तु कर्तव्यं तदग्रे होममाचरेत्
स्थरिडलं हस्तमात्रेण निर्दोषैस्सिकतैरपि २६
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
समिदा सद्यमंत्रेण ईशानेन घृतं हुनेत् २७
अघोरेण चरुं हुत्वा प्रत्येकं पंचविंशतिः
प्रासादबीजमुख्यैश्च व्योमव्यापिदशाक्षरैः २८
शक्त्याद्यैश्चैव वामाद्यैः प्रत्येकं षोडशं हुनेत्
स्पृष्ट्वा तु जुहुयाद्धोमं गौरीबीजमनुस्मरन् २९
तस्याग्रे स्थरिडलं कृत्वा शालिभिर्विमलैः शुभैः
कुंभं वा करकं वापि स्थरिडलोपरि विन्यसेत् ३०
ससूत्रं सापिधानं च हेमपल्लवसंयुतम्
नाळिकेरफलैर्युक्तां लम्बकूर्चसमन्विताम् ३१
गौरीस्थं कुंभमावाह्य कुंभमध्ये तु विन्यसेत्
स्थापयेद्वाममंत्रेण अघोरेणावगुराठयेत् ३२
सांनिध्यं शक्तिमंत्रेण पंचमेनार्चयेत्क्रमात्

दर्शयेच्छक्तिमुद्रां च मुकुळीपद्ममुद्रकम्  ३३
नमस्काराख्यमुद्रां च बध्वास्त्रं दिक्षु योजयेत्
सूत्रादिभिस्समोपेतानभितोष्टघटान्नयेत्  ३४
वामादिशक्तयश्चाष्टौ इन्द्रईशानमन्तकम्
कुंभमध्ये समावाह्य तत्तद्बीजमनुस्मरन्  ३५
पूजयेद्गौरिमंत्रेण गन्धपुष्पादिभिः क्रमात्
नैवेद्यं धूपदीपं च ताम्बूलं च निवेदयेत्  ३६
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिं च शिरसा घटमुद्धारयेत्ततः  ३७
अस्त्रेण च्छेदयेद्बिम्बं तटाके चैव निक्षिपेत्
पंचगव्येन संप्रोक्ष्य प्रविशेद्यागमण्डपम्  ३८
स्थण्डिलं शालिभिः कुर्यादष्टद्रोणैश्च शालिभिः
तण्डुलैश्च तिलैश्चैव लाजैः पुष्पैश्च दर्भकैः  ३९
तन्मध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम्
शिरसा वाहयित्वा तु प्रदक्षिणमथाचरेत्  ४०
सर्वातोद्यसमायुक्तं ब्रह्मघोषसमन्वितम्
शनैः प्रदक्षिणं कुर्याद् उमासूक्तं जपेत्क्रमात्  ४१
मण्डपं तु प्रविश्याथ वेदिकोर्ध्वे तु विन्यसेत्
गौरीबीजमनुस्मृत्य कुंभं तत्रैव पूजयेत्  ४२
अभितः स्थापयेत्कुंभान्वामादिशक्तयस्तथा
स्वनाममंत्रैरभ्यर्च्य गन्धपुष्पादिभिर्यजेत्  ४३
तत्तन्मूर्त्याकृतिं ध्यात्वा स्वस्वबीजेन कुंभके
गन्धपुष्पादिभिश्चैव पूजयेत्तु निवेद्यकम्  ४४
ऋगाद्यध्ययनं कुर्याद् उमासूक्तं जपेत्क्रमात्
श्रीसूक्तं रुद्रसूक्तं च पुरुषसूक्तं त्रियम्बकम्  ४५
शान्तिद्वयं जपेद्धीमान् दक्षिणे तु विशेषतः
आचार्यो मूर्तिपैस्सार्धं ततो होमं समाचरेत्  ४६
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमार्गतः
समिदाज्यचरुं लाजान् सर्षपांश्च यवांस्तिलान्  ४७

होमद्रव्याणि सप्तैते जुहुयाद्वै क्रमेण तु
पलाशौदुम्बराश्वत्थबिल्वं च खदिरं तथा ४८
मूलेन जुहुयादाज्यं अघोरेण चरुं हुनेत्
लाजं वामेन मंत्रेण सर्षपं कवचेन तु ४९
यवं हुत्वा तु शिखया तिलं मंत्रेण होमयेत्
शतस्य त्रितयं वापि तस्यार्धं चार्धमेव वा ५०
प्रत्येकं जुहुयाद्धीमान् द्रव्यान्ते व्याहृतिं हुनेत्
सर्वद्रव्यसमायुक्तं हव्यवाहेन होमयेत् ५१
एवं जागरणं रात्रौ प्रभाते प्रोक्षणं कुरु
आचार्यो मूर्तिपैस्सार्धं विधिना स्नानमाचरेत् ५२
पूर्णाहुतिं च शिरसा हुत्वाग्निं च विसर्जयेत्
शक्तिकुंभं समुद्धृत्य कृत्वा हर्म्यप्रदक्षिणम् ५३
सर्वातोद्यसमायुक्तं सर्वालंकारसंयुतम्
पुत्रभ्रातृकळत्रैश्च सर्वसंपत्सुखावहम् ५४
गर्भगेहं प्रविश्याथ स्थापयेत्स्थण्डिलोपरि
सुमुहूर्तं निरीक्ष्याथ दैवज्ञः संनिवेशयेत् ५५
तत्रैव विन्यसेद्गौरीं अष्टत्रिंशत्कलान्यसेत्
मंत्रपुष्पं ततो दत्वा मंत्रान्नं च निवेदयेत् ५६
नववस्त्रेण संवेष्ट्य गन्धपुष्पस्रगादिभिः
प्रभूतं च हविर्दत्वा ताम्बूलं च निवेदयेत् ५७
मुखवासं ददेद्धीमान् चुळुकोदकसंयुतम्
ऋगाद्यध्ययनं कुर्यात्स्तोत्रनृत्तं च वाद्यकम् ५८
प्रोक्षणान्ते विशेषेण उत्सवं सम्यगाचरेत्
इति सूक्ष्मशास्त्रे गौरीसंकोचविधिः पंचाशत्पटलः

४१
गौरीसंकोचनं वक्ष्ये शृणु त्वं तत्प्रभंजन
आयुरारोग्यजयदं पुत्रपौत्रसमृद्धिदम् १
आद्यं द्वितीयमेवं तु द्विविधं तरुणालयम्

मूलालयस्य यत्पूर्वं तद्देव्यास्तरुणालयम् २
अनादे च प्रमादे वा छिन्ने छिन्ने नवीकृते
यत्कृतं तद्द्वितीयाख्यं तरुणालयमुत्तमम् ३
अन्यानि सर्वकर्माणि भाषितानि समानि च
मूले स्थाने विनिश्चित्य बालस्थानं तु कारयेत् ४
बालबिम्बं प्रतिष्ठाप्य पश्चान्मूले न कारयेत्
बालस्थानं विना यत्र पुत्रपौत्रविनाशनम् ५
तस्मात्सर्वप्रयत्नेन बालस्थानं विधीयते
तस्याग्रे चोत्तरे वापि दक्षिणे वा विशेषतः ६
ईशाने वा विशेषेण कारयेत्तरुणालयम्
पंचसप्तनवाहे वा त्रियहे वांकुरार्पणम् ७
शैलजं लोहजं चैव दारुणं मृण्मयं तथा
कारयेत्तु विशेषेण लक्षणोक्तेन देशिकः ८
शमीबिल्वमधूकैश्च अश्वत्थौदुम्बरैस्तथा
बालशक्तिं प्रकर्तव्यं कारयेत्तु विचक्षणः ९
द्वादशांगुलमुत्सेधं मध्यमाधममेव हि
अंगुलांगुलवृध्या तु नवशक्तीः प्रकल्पयेत् १०
स्वयोनिं कारयेत्पीठं अथवा चेष्टकामयम्
सप्तपं च त्रिहस्तं वा कर्तव्यं तरुणालयम् ११
एवमादि समाख्यातं द्वितीये तरुणालये
आयामचतुरश्रं वा पूर्ववद्भवनं क्रमात् १२
गौरीमेवं समापाद्य मूलगर्भार्धमेव हि
त्रियंशं वा चतुर्थां शं प्रोक्तं बालगृहान्वितम् १३
गौरीपीठान्तरे बिम्बं बालबिम्बसमन्वितम्
वृत्तं वा चतुरश्रं वा स्थापयेच्छक्तिपीठकम् १४
रत्नन्यासं विना चेत्तु पादशैलं विनाचरेत्
तरुणालये विशेषं तु मण्डपं त्विष्टदेशके १५
पूर्वे वा दक्षिणे वापि ऐशान्ये चोत्तरेऽपि वा
दशाष्टनवहस्तं वा सप्तहस्तं त्रिहस्तकम् १६

षोडशस्तंभसंयुक्तं सर्वालंकारसंयुतम्
तन्मध्ये वेदिकां कुर्यान्नवभागैकभागतः १७
हस्तमात्रसमुत्सेधं दर्पणोदरसंनिभम्
गोमयालेपनं कृत्वा ब्राह्मणान्भोजयेत्ततः १८
पुण्याहप्रोक्षणं कृत्वा वास्तुहोमं समाचरेत्
तद्धोमं विधिवत्कृत्वा पर्यग्निकरणं कुरु १९
वस्त्रैर्यशालिभिर्युक्तं शयनं संप्रकल्पयेत्
बेरशुद्धिं ततः कृत्वा धामप्रदक्षिणं कुरु २०
अक्षिमोक्षणमेवं स्याद् रक्षासूत्रप्रबन्धनम्
त्रिरात्रमेकरात्रं वा यामं वाप्यर्धयामकम् २१
जलाधिवासनं कुर्याद् अब्धिकोर्ध्वे तु विन्यसेत्
वस्त्रेण वेष्टयित्वा तु सदर्भं पुष्पसंयुतम् २२
पीठस्य मध्यमे न्यस्य कण्ठमात्रजले न्यसेत्
मण्डपं कारयेद्धीमान् प्राक्शिरं शयनेन तु २३
वस्त्रेणाच्छादनं कृत्वा हृदिना पुष्पदर्भकैः
निद्राकुंभं तु विन्यस्य पूजयेद्देशिकोत्तमः २४
वेदिकोर्ध्वे न्यसेद्धीमान्वर्धनीं चैव विन्यसेत्
वामादिशक्तयः कुंभं इन्द्रादीशनमन्तकम् २५
संपूज्य गन्धपुष्पाद्यैः गौरीबीजमनुस्मरन्
वस्त्रहेमसपल्लं वा कूर्चं वा नाळिकेरकम् २६
मूलशक्तिं तदग्रे तु स्थण्डिलं कारयेत्ततः
यागमण्डपवर्धन्यां परिचारकदुद्धृतम् २७
तदग्रे स्थण्डिलं कृत्वा व्योमव्यापिं समुच्चरन्
गौरीं संपूज्य विधिवत् निवेद्यं पायसान्नकम् २८
गौरीमावाहयेत्कुंभं अर्चयेद्गन्धपुष्पकम्
यात्राहोमं ततः कुर्याद् अधिकार्योक्तमार्गतः २९
समिदाज्यचरुं लाजान् सर्षपांश्च यवांस्तिलान्
गौरीबीजमनुस्मृत्य स्पर्शाहुतिशतं जपेत् ३०
सोष्णीषः सोत्तरीयश्च कुंभमुत्थाप्य देशिकः

यागमण्डपकुम्भे तु वेद्या वै स्थण्डिलोपरि ३१
गौरीबीजमनुस्मृत्य गन्धपुष्पस्त्रगादिभिः
नवाग्निं वाथ पंचाग्निं एकाग्निं सर्वयोनिकम् ३२
स्थण्डिलं वा प्रकर्तव्यं अग्निकार्यं समाचरेत्
खदिराश्वत्थबिल्वं च पालाशं वह्निमेव च ३३
समिदाज्यान्नकैर्मं त्रैः होमं कुर्यात्पृथक्पृथक्
गौरीगायत्रिमंत्रेण घृतं हुत्वा विशेषतः ३४
अग्न्याधानादिकं सर्वं मण्डपं पूजयेत्क्रमात्
प्रभाते विमले होमं कृत्वा पूर्वे तु शक्तिना ३५
आचार्यं पूजयित्वा तु वस्त्रहेमांगुलीयकैः
दैवज्ञं पूजयित्वा तु भक्तानां परिवारकैः ३६
उत्थाप्य शयनं गौरीं तरुणालयमध्यमे
संस्थाप्य गौरीं सुस्निग्धं पीठस्य पदमध्यमे ३७
कुंभस्थं गौरीं संस्नाप्य गौरीमंत्रेण विन्यसेत्
वामादिशक्तिना कुंभं तत्तत्स्थानोभिषेचयेत् ३८
मंत्रपुष्पं न्यसेद्धीमान् मंत्रान्नं च निवेदयेत्
धूपदीपं ददेद्गौरीं प्रभूतहविषं ददेत् ३९
होमं नित्योत्सवं कुर्यात् भोगांगयजनं क्रमात्
महोत्सवेन देवेशं सर्वसंपत्करं नृणाम् ४०
प्रासादं पूर्ववत्कृत्वा मूले गौरीं सुयोजयेत्
संप्रोक्षणं ततः कुर्यात् प्रायश्चित्तं समाचरेत् ४१
इति सूक्ष्मशास्त्रे गौरीसंकोचविध्येकपंचाशः पटलः

४२

गौरीसंप्रोक्षणं वक्ष्ये शृणु त्वं तत्प्रभंजन
आयुरारोग्यजयदं पुत्रपौत्रसमृद्धिदम् १
आद्यद्वितीयमेवं तु द्विविधं तरुणालयम्
कर्षणाद्यर्चनान्तं तु तरुणालयसंगृहेत् २
प्रासादे पतिते भिन्ने लिंगे च चलिते तथा

अन्यानि सर्वकर्माणि भाषितानि समानि च ३
मूलस्थाने विनिश्चित्य बालस्थानं तु कारयेत्
तदूर्ध्वे बालालयं कृत्वा तस्मात्मूले प्रवेशयेत् ४
प्रासादाग्रे तु कर्तव्यं दक्षिणे चोत्तरेऽपि वा
विंशद्धस्तप्रविस्तारं उत्तमं मण्डपं भवेत् ५
मध्यमं रविहस्तं स्याद् दशहस्तं तु कन्यसम्
षट्त्रिंशद्गात्रसंयुक्तं उत्तमं मण्डपं स्मृतम् ६
षोडशस्तंभसंयुक्तं मण्डपं मध्यमे धमे
दिशश्च विदिशश्चैव निहित्रं होमसंभवम् ७
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
तोरणध्वजसंयुक्तं दर्भमालासमावृतम् ८
लाजैः पुष्पैः फलैस्सार्धं अष्टमं गळपूजितम्
स्तम्भानि वेष्टयेत्तत्र प्रत्येकं वस्त्रसंयुतम् ९
मण्डपं तु त्रिधाकृत्वा मध्यभागे तु वेदिका
अरत्निमात्रमुत्सेधं दर्पणोदरसंनिभम् १०
वेद्या मूले तु परितः उपवेदीं प्रकल्पयेत्
युगांगुलसमुत्सेधं गुणांशं नीप्रमुच्यते ११
कुण्डानि परितः कुर्यात् किंचिद्भेदं विशेषतः
नवाग्निं वाथ पंचाग्निं एकाग्निं सम्यगाचरेत् १२
योनि कुण्डानि सर्वाणि योनौ योनिं न कारयेत्
श्रोत्रांशोच्च मानेन क्षेत्रं पंचैकभागिकम् १३
तत्पुरस्ताद्बहिर्णास्त्वा भवेत्पिप्पलपत्रवत्
योनिकुण्डं ततः कुर्यात् लक्षणं सम्यगाचरेत् १४
उद्वास्य शिल्पिनं पश्चाद् गोमयेनानुलेपयेत्
पुण्याहं वाचयेत्तत्र ब्राह्मणान्भोजयेत्ततः १५
पश्चादुच्छिष्टमुद्वास्य पुनः पुण्याहमाचरेत्
कृत्वा तु विधिना स्नानं शुक्लचन्दनलेपतः १६
शुक्लवस्त्रधरोष्णीषः शुक्लमाल्यैरलंकृतः
अंकुरार्पयेद्धीमान् स्थानशुद्धिं समाचरेत् १७

उत्तराभिमुखो भूत्वा सकलीकृतविग्रहः
गर्भगेहं प्रविश्याथ स्थानशुद्धिं ततः कुरु १८
गौरीशुद्धिं ततः कृत्वा स्थापयेद्रजनोदकैः
पुण्याहं च ततः कृत्वा शुद्धोदैरभिषेचयेत् १९
पंचगव्येन संस्नाप्य बिल्वपत्रेण कर्षयेत्
दर्भमूले तु वल्मीके क्षेत्रमृद्गृह्य लेपयेत् २०
गन्धोदकेन संस्नाप्य पूजयेद्धृदयेन तु
चन्दनागरुकोष्ठं च कुंकुमोशीरकेसरैः २०-२
त्वगेलापत्रकपूरैः आलोढ्य गौरिलेपयेत्
पिण्डिकाब्जं समालिप्य प्रोक्षयेच्छक्तिबीजकम् २१
शिरसा वामहस्तं तु हेमसूत्रं तु कौतुकम्
अष्टपुष्पैस्समभ्यर्च्य सामान्यं पुष्पपूरितम् २२
नववस्त्रेण संवेष्ट्य गौरीबीजक्रमेण तु
ततो बालगृहं पश्चात् पूजयेद्गौरिसंयुतम् २३
यात्राहोमं तु कर्तव्यं तदग्रे होममाचरेत्
स्थण्डिलं हस्तमात्रेण निर्दोषैस्सिकतैरपि २४
अग्न्याधानादिकं सर्वं अग्निकार्यं समाचरेत्
समिदासद्यमंत्रेण ईशानेन घृतं हुनेत् २५
अघोरेण चरुं हुत्वा प्रत्येकं पंचविंशतिः
प्रासादबीजमुख्यैश्च व्योमव्यापि दशाक्षरैः २६
शक्त्याद्यैश्च वामाद्यैः प्रत्येकं षोडशं हुनेत्
स्पृष्ट्वा तु जुहुयाद्धोमं गौरीबीजमनुस्मरन् २७
तस्याग्रे स्थण्डिलं कृत्वा शालिभिस्तण्डुलैः शुभैः
कुंभं वा करकं वापि स्थण्डिलोपरि विन्यसेत् २८
ससूत्रं सापिधानं च हेमपल्लवसंयुतम्
नाळिकेरफलैर्युक्तं लम्बकूर्चसमन्वितम् २९
गौरीस्थं कुंभमावाह्य कुंभमध्ये तु विन्यसेत्
स्थापयेद्वाममंत्रेण अघोरेणावगुण्ठयेत् ३०
सांनिध्यं शक्तिमंत्रेण पंचमेनार्चयेत्क्रमात्

दर्शयेच्छक्तिमुद्रां च मुकुळं पद्ममुद्रिकाम् ३१
नमस्कारादिमुद्रां च बध्वास्त्रं दिक्षु योजयेत्
सूत्रादिभिस्समोपेतान् अभितोष्टघटान्न्यसेत् ३२
वामादिशक्तयश्चाष्टौ इन्द्रादीशानमन्तकम्
कुंभमध्ये समावाह्य तत्तद्बीजमनुस्मरन् ३३
पूजयेद्गौरिमन्त्रेण गन्धपुष्पादिभिः क्रमात्
नैवेद्यं धूपदीपं च ताम्बूलं च निवेदयेत् ३४
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिं च शिरसा घटमुद्धारयेत्ततः ३५
अस्त्रेण च्छेदयेद्बिम्बं तटाकेनैव निक्षिपेत्
पंचगव्येन संप्रोक्ष्य प्रविशेद्यागमण्डपम् ३६
स्थण्डिलं शालिभिः कुर्यादष्टद्रोणैश्च शालिभिः
तण्डुलैश्च यवैश्चैव लाजपुष्पैश्च दर्भकैः ३७
तन्मध्ये नळिनं लिख्य अष्टपत्रं सकर्णिकम्
शिरसा वाहयित्वा तु प्रदक्षिणमथाचरेत् ३८
सर्वातोद्यसमायुक्तं ब्रह्मघोषसमन्वितम्
शनैः प्रदक्षिणं कुर्यादुमासूक्तं जपेत्क्रमात् ३९
मण्डपं तु प्रविश्याथ वेदिकोपरि विन्यसेत्
गौरीबीजमनुस्मृत्य कुंभं तत्रैव पूजयेत् ४०
अभितः स्थापयेत्कुंभान्वामादिशक्तयस्तथा
स्वनाममंत्रैरभ्यर्च्य गन्धपुष्पादिभिर्यजेत् ४१
तत्तन्मूर्त्याकृतिं ध्यात्वा स्वस्वबीजेन कुंभके
गन्धपुष्पादिभिश्चैव पूजयेत्तु निवेद्यकम् ४२
ऋगाद्यध्ययनं कुर्याद् उमासूक्तं जपेत्क्रमात्
श्रीसूक्तं रुद्रसूक्तं च पुरुषसूक्तं त्रियम्बकम् ४३
शान्तिद्वयं जपेद्धीमान् क्रमेण तु विशेषतः
आचार्यो मूर्तिपैस्सार्धं ततो होमं समाचरेत् ४४
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
समिदाज्यचरुं लाजान् सर्षपांश्च यवांस्तिलान् ४५

होमद्रव्याणि सप्तैते जुहुयाद्वै क्रमेण तु
पलाशौदुम्बराश्वत्थबिल्वं च खदिरं तथा ४६
सद्येन जुहुयादाज्यं अघोरेण चरुं हुनेत्
सर्वद्रव्यसमायुक्तं हव्यं वामेन होमयेत् ४७
एवं जागरणं रात्रौ प्रभाते प्रोक्षणं कुरु
आचार्यो मूर्तिपैस्सार्धं विधिना स्नानमाचरेत् ४८
पूर्णाहुतिं च शिरसा हुत्वाग्निं च विसर्जयेत्
शान्तिकुंभं समुद्धृत्य कृत्वा हर्म्यप्रदक्षिणम् ४९
सर्वातोद्यसमायुक्तं सर्वालंकारसंयुतम्
पुत्रभ्रातृकलत्रैश्च सर्वसंपत्सुखावहम् ५०
गर्भगेहं प्रविश्याथ स्थापयेत्स्थण्डिलोपरि
सुमुहूर्तं निरीक्ष्याथ दैवज्ञः संनिवेशयेत् ५१
गौरिमिष्टं त्रिमात्रेण एकत्रिंशत्कला न्यसेत्
कुंभान्मंत्रं समादाय गौरीं मध्ये तु विन्यसेत् ५२
शक्त्यादिशक्तिपर्यन्तं कुंभे पीठं तु विन्यसेत्
मंत्रपुष्पं ततो दत्वा मन्त्रान्नन्तु निवेदयेत् ५३
नववस्त्रेण संवेष्ट्य गन्धपुष्पस्त्रगादिभिः
प्रभूतहविषं दत्वा ताम्बूलं च निवेदयेत् ५४
मुखवासं ददेद्देवीं चुळुकोदकसंयुतम्
ऋगाद्यध्ययनं कुर्यात् स्तोत्र नृत्तं च वाद्यकम् ५५
प्रोक्षणान्ते विशेषेण उत्सवं सम्यगाचरेत्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ५६
इति सूक्ष्मशास्त्रे गौरीसंप्रोक्षणविधिद्विपंचाशत्पटलः

४३
गौरीव्रतं प्रवक्ष्यामि शृणु त्वं तत्प्रभञ्जन
अकालमृत्युजयदं पुत्रसौभाग्यदायकम् १
सर्वशत्रुप्रशमनं सर्वैश्वर्यप्रदायकम्
अभीष्टफलदं नित्यं सत्यं सत्यं प्रभंजन २

श्रावणे पूर्वपंचम्यां प्रोष्ठे पूर्वत्रयोदशी
अश्विनी पूर्वनवमी कार्तिके पूर्वसप्तमी ३
आर्द्रामासे तु पूर्णायां पुष्ये पूर्वचतुर्दशी
माघे त्वपरपंचम्यां फाल्गुने त्वपराष्टमी ४
चैत्रे तु कृष्णदशमी वैशाखे कृष्णसप्तमी
ज्येष्ठे पूर्वद्वितीयायां आषाढे तु सिताष्टमी ५
अथवा गौरीनक्षत्रे मासे मासे विशेषतः
गौरीव्रतमनुष्ठेयं विधिनानेन यत्नतः ६
पर्वताग्रे नदीतीरे पुष्पोद्यानेऽथवा गृहे
देव्यालयाग्रेऽपि च वा गोष्ठे देवालयेऽपि वा ७
मण्डपं कारयेद्विद्वान् पंचदशकरायतम्
आयामसमविस्तारं षट्त्रिंशद्गात्रसंयुतम् ८
मण्डपं वा प्रपां वापि कूटाकारमथापि वा
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ९
वितानध्वजसंयुतं दर्भमालाभिरावृतम्
तरङ्गवेष्टनोपेतं दर्पणैरुपशोभितम् १०
नानाश्चर्यगणोपेतं मण्डपं परिकल्पयेत्
तन्मध्ये त्वेकपार्श्वे वा वेदिकां परिकल्पयेत् ११
शिखिपादसमाकारदिशिभद्रसमन्वितम्
विस्तारार्धसमुत्सेधं दर्पणोदरसंनिभम् १२
मध्ये स्यादुन्नतं तद्वद् उपवेदी समन्वितम्
वसु ++++ तो दत्वा कृत्वा देव पराक्रमम् १३
कारुण्यहास्यसंयुक्तं वीरं वा रौद्रमेव वा
शृंगारचरितं वापि श्रावयेद्देविसंनिधौ १४
पुनः संपूज्य देवेशीं धूपदीपादिना ततः
वेदैश्च विविधैस्तोत्रैः नृत्तगीतादि चार्भकैः १५
प्रदक्षिणनमस्कारैः संतोष्य परमेश्वरीम्
ततः पूर्वोक्तमार्गेण पानीयाश्वादिकं ददेत् १६
ततोऽस्तमनवेलायां सायरक्षां प्रकल्पयेत्

आरात्रिकं ततो दत्वा पंचविंशति संख्यकान्  १७
भस्म दत्वा स्वबीजेन दर्पणं दर्शनं ततः
ततो जया कुलेनैव नीराजनकृति त्यजेत्  १८
देव्यग्रे कल्पयेन्नृत्तं भरतोक्तं यथाक्रमम्
गौरीगणं समादाय मंजूषे स्थाप्य देशिकः  १९
चिह्ने संपूज्य देवेशीं सर्वदेवसमन्वितम्
आहूय दीक्षितान्सर्वान्स्तानालोक्यविचक्षणान्  २०
व्यसनव्याधिदुर्भिक्ष ऋणादिक्लेशशत्रवः
सर्वे नश्यन्तु युष्मभ्यं महादेव्याज्ञया सदा  २१
इत्युक्त्वा तान्विसृज्याथ कैलासं विसृजेज्जले
ततः साधकमालोक्य पापभक्षणमंत्रतः  २२
दार्वासने समारोप्य अंगाक्षरकलां न्यसेत्
गौरीचिह्नं समादाय साद्यकस्य प्रदापयेत्  २३
गौरीमंत्रजपेनैव साधकस्य शिरो वहेत्
चिह्नदर्शनमात्रेण सर्वपापं विनश्यति  २४
संग्रामसमये नेत्रमृगयाने महाभये
एवमादिषु कालेषु योनरः शिरसा वहेत्  २५
तस्य देहे वसेद्गौरी सत्यं सत्यं प्रभंजन
बहुनोक्तेन किं देवी संनिधिं कुरुते सदा  २६
सर्वेषां दक्षिणां दद्याद् आचार्यं पूजयेत्तदा
गौरीव्रतमिदं प्रोक्तं परं शिवव्रतं शृणु  २७
इति सूक्ष्मशास्त्रे गौरीव्रतविधित्रिपंचाशत्पटलः

४४
मत्स्यलीलाविधिं वक्ष्ये शृणु त्वं तत्प्रभंजन
प्राणिनां भोगमेवं स्यात् भूपतीनां सुखं भवेत्  १
मीनादिकन्नपर्यन्तं मत्स्यलीला प्रशस्यते
एतत्त्रिविधमाख्यातं उत्तमाधममध्यमम्  २
समुद्रे वापि नद्यां वा तटाके कूपकेऽपि वा

अब्धिः श्रेयान्समत्स्य नदीमत्स्यं च मध्यमम् ३
तटाके वापि मत्स्यं च अधमं तु प्रकीर्तितम्
अभिषेककृतं बेरं उत्तमं तु प्रशस्यते ४
पौराण्यायतनं बेरं मध्यमं तु प्रकीर्तितम्
सद्यनिष्कृतिबेरं च अधमं चोच्यते मया ५
उत्तमं बेरमेवं तु समुद्रादर्शनं मतम्
मध्यमं बेरमेवं तु नद्यादिदर्शनं मतम् ६
अधमं बेरमेवं स्यात् तटाकं वापिमेव च
शतकोशार्णविधिर्यावदुत्तमे दर्शनं मतम् ७
पंचाशत्कोशमेवं तु मध्यमे दर्शनं मतम्
द्वादशकोशमेवं तु अधमे दर्शनं मतम् ८
एवं कृतयुगे प्रोक्तं अन्यत्सर्वं प्रयत्नतः
वेदांशांशविहीनं स्यात् क्रमेण परिकल्पयेत् ९
कन्यसं दिनमेवं स्यान्मध्यमं त्रिदिनं भवेत्
शरसंख्या चोत्तमं चैव दिनसंख्या क्रमेण तु १०
ग्रामादिस्थानसंयुक्तं एतत्सर्वं समाचरेत्
तल्लीला द्विविधं प्रोक्तं वासं यानं च कथ्यते ११
यानं च दालये कार्यं नयेदास्थानमण्डपम्
सर्वालंकारसंयुक्तं मण्डपं किं तु कर्षयेत् १२
सुवारे सुदिने चैव रात्रौ पूजावसानके
देवदेव जगन्नाथ जगदार्तिविनाशन १३
स्वामिन्ननुगृहीतोऽस्मि इति विज्ञापनं क्रमात्
स्वर्णादिसूत्रं संग्राह्य रक्षाबन्धं पुरोक्तवत् १४
अपरेद्युर्दिवाकाले नयेदास्थानमण्डपे
प्रातःसन्ध्यावसाने तु सूरिबृन्देन सेवितम् १५
राजोपचारैस्सर्वैश्च तोषयेत्परमेश्वरम्
मध्याह्नपूजनान्ते तु सर्वालंकारसंयुतम् १६
सर्ववाद्यैरलंकृत्य पताकाद्यैरलंकृतम्
मत्स्यस्थानं समुद्दिश्य यानं पूर्ववदाचरेत् १७

तत्काले तु विशेषेण भूपतिर्देशिकैस्सह
कर्पूरं रजनीचूर्णं नागवल्लीदळैरपि १८
विकिरेत्सर्ववर्णैश्च तत्र स्थाने प्रविश्य च
उत्तरे पश्चिमे वापि पूर्वे वा दक्षिणेऽपि वा १९
तत्र स्थाने प्रपां कृत्वा वितानाद्यैरलंकृतम्
देवं मध्ये तु विन्यस्य तदग्रे मत्स्यपूजनम् २०
ओदनादीनि विन्यस्य ओदनस्येति पूजयेत्
तण्डुलैस्तिललाजैश्च मत्स्यं सम्यक्समर्चयेत् २१
मलिम्नावमहामत्स्यो दीपरूपो महोदरः
एवं मंत्रं समुच्चार्य मत्स्यानां भोजनं नयेत् २२
मत्स्यलीलां समालोक्य सायाह्नात्पूर्वमाचरेत्
तदन्ते यानकार्यं तु लीलागानं च गायकः २३
विनोदवाद्यसंयुक्तं पूर्वस्थाने प्रवेशयेत्
स्नपनं शान्तिहोमं च कारयेत्परमेश्वरम् २४
तदन्ते सायरक्षान्ते पूर्ववदर्चनं कुरु
पूर्ववन्नित्यपूजां च विशेषपूजा +++ २५
तदन्ते स्नपनं कृत्वा रक्षाबन्धं विसृज्य च
आलयस्य समीपं चेद् यानमेव विधीयते २६
एवं यानं समाख्यातं वासं चैव ततः शृणु
रात्रौ पूजावसाने तु कर्ता देशिकसंयुतः २७
महेशाग्रे तु कर्तव्यं प्रार्थयित्वा विचक्षणः
एकरूपा मूर्तिस्वरूपां तु पंचधा परिकल्पयेत् २८
लोकरक्षार्थमेवं हि श्रूयतां तत्प्रभंजन
अम्बिकासहितो देवो जगदुत्पत्तिकारणम् २९
मत्स्यलीलां समुद्दिश्य गम्यतामिति शंकर
एवं प्राथ्र्य तु तत्काले भगवानुज्ञया सह ३०
पूर्ववत्प्रतिसरं बध्वा वाहनं प्रतिसन्नयेत्
ततः प्रभाते कर्तव्यं सर्वालंकारशोभितम् ३१
सर्ववाद्यैरलंकृत्य जयघोषसमन्वितम्

राजोपचारसहितं यानं पन्थाः शनैः शनैः ३२
कर्पूरं रजनीं लाजं विकिरेत्समलंकृतम्
मनोरम्येन देशे वा भय्यादीनि निवेदयेत् ३३
ताम्बूलानि विचित्राणि दापयेच्छिवसंनिधौ
दिनं प्रति विशेषेण स्नपनं शान्तिहोमकम् ३४
नित्यपूजाविधानेन नित्यमेवं समाचरेत्
उद्दिश्य स्थानदेशे तु प्रपां कृत्वा सलक्षणम् ३५
मध्ये वेदिकया युक्तं ऊर्ध्वे सिंहासनं नयेत्
महेशं तत्र विन्यस्य लीलागानमथ शृणु ३६
वसन्तलीलां कृत्वा च सुरबृन्दैश्च सेवितम्
मत्स्यभोजनमध्ये तु तण्डुलानि पृथक्पृथक् ३७
ओदनस्येति मंत्रेण ओदनादीनि विन्यसेत्
मत्स्यलीलां समालोक्य मत्स्यानां भोजनं क्षिपेत् ३८
एवं प्रतिदिनं कुर्यान्निश्चित्य दिवसान्तकम्
नित्यपूजाविहीणं चेत् प्रायश्चित्तं तथा चरेत् ३९
अज्ञानान्मोहतो वापि प्रायश्चित्तविहीनकम्
प्रायश्चित्तविहीनं चेद् राजराष्ट्रस्य दोषकृत् ४०
तस्मात्सर्वप्रयत्नेन नित्यपूजां समाचरेत्
लीलावसाने कर्तव्यं विमुखं यानमुच्यते ४१
राजसत्कारमार्गेण पूर्वस्थाने निवेशयेत्
स्नपनं शान्तिहोमं च प्रभूतहविषं ददेत् ४२
राजा च राजपत्नी च वेशिकेन सहैव तु
मेळामंत्रं समुच्चार्य पुष्पं मूर्धनि दापयेत् ४३
मनसा चिन्त्य यत्कार्यं प्रासयित्वा विचक्षणः
एवमेव प्रकारेण मत्स्यलीलां समाचरेत् ४४
मत्स्यलीलाविधिः प्रोक्तो मौक्तिकग्रहणं शृणु
इति सूक्ष्मशास्त्रे मत्स्यलीलाविधिश्चतुःपंचाशः पटलः

४५

मौक्तिकग्रहणं वक्ष्ये श्रूयतां तत्प्रभंजन
फाल्गुने चैत्रमासे वा कार्तिके वा परेऽपि वा १
पूर्वपक्षे प्रशस्यं हि अपरे वा प्रकीर्तितम्
पूर्वपक्षे गृहीतं चेत् अष्ठमी नवमी तथा २
द्वितीये च तृतीये च चतुर्थे पंचमेऽपि च
वर्जयेत्तु प्रयत्नेन शेषं संगृह्य बुद्धिमान् ३
कृष्णपक्षे गृहीतं चेद् ++++++
अष्टमी नवमी चैव त्रयोदशी दर्शमेव च ४
वर्जयेत्तु प्रयत्नेन अन्याश्च तिथयो भवेत्
अथवान्यप्रकारेण ऋक्षेण ग्रहणं मतम् ५
अश्वयुग्रोहिणी चैव पुष्या च मघ एव च
सिद्धस्साध्यः शुभं चैव ब्राह्मे माहेन्द्रमेव च ६
प्रीतिरायुष्यमेवं च सौभाग्यं शोभनं तथा
धृतिश्शूलं च कर्तव्यं गण्डो वृद्धिरिहोच्यते ७
एताश्च शुभदाः प्रोक्ता अन्य एतानि वर्जयेत्
मेषश्च कर्कटश्चैव सिंहो वृश्चिक एव च ८
कुंभश्चैव शुभा ज्ञेया अन्यराशीन्विवर्जयेत्
एवं कालविधानज्ञो तत्कालं तु दमा भवेत् ९
+++ दिवसात्पूर्वे प्रातस्संध्यावसानके
कृताभिषेकबेराग्रे स्थण्डिलं कल्पयेत्सुधीः १०
राजचिह्नानि सर्वाणि तदूर्ध्वे स्थापयेत्क्रमात्
देवदेवं नमस्कृत्य विज्ञापनमथाचरेत् ११
मौक्तिकग्रहणार्थाय रत्नं संग्राह्य संमतम्
तस्मात्सर्वप्रयत्नेन तत्तदंगजनैस्सह १२
ध्वजादिच्छत्रपर्यन्तं मण्डत्वाद्यसमन्वितम्
अशनि वाद्यसंयुक्तं कोशवाद्यसमन्वितम् १३
एतत्सर्वं गृहीत्वा तु यानं पूर्ववदुच्यते
समुद्रतीरे विशेषेण कूटं वापि प्रपां कुरु १४
तन्मध्ये वेदिकायुक्तं सर्वलक्षणसंयुतम्

चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् १५
पताकादिवितानैश्च पूगाद्यैश्चैव शोभयेत्
एवं मण्डपमावेश्य सिंहासनोपरि स्थितः १६
नित्यपूजां प्रयत्नेन नित्यवत्पूजनं कुरु
तद्दिनस्य दिवाकाले समुद्रेशान्समर्चयेत् १७
अम्बुराशे नमस्तुभ्यं मौक्तिकग्रहणाय च
सुराब्धे तु नमस्तुभ्यं मौक्तिकग्रहणाय च १८
क्षीरार्णाय नमस्तुभ्यं मौक्तिकग्रहणाय च
दध्यब्धे तु नमस्तुभ्यं मौक्तिकग्रहणाय च १९
मध्वब्धे तु नमस्तुभ्यं मौक्तिकग्रहणाय च
इक्ष्वब्धे तु नमस्तुभ्यं मौक्तिकग्रहणाय च २०
सर्प्यब्धे तु नमस्तुभ्यं मौक्तिकग्रहणाय च
क्षाराब्धे तु नमस्तुभ्यं मौक्तिकग्रहणाय च २१
एवमेव प्रकारेण अर्चयेद्देशिकोत्तमः
उडुपादिं समानीय सर्वालंकारशोभितम् २२
देवं सम्यक्समारोप्य पटमारोपयेद्ध्वजम्
देवदक्षिणवामे तु मालिनी देशिकस्थितिः २३
देवाग्रे सर्ववाद्यैश्च लीलागानं च वेदयेत्
राजोपचारवत्सर्वं मौक्तिकस्थानमाविशेत् २४
पूर्ववद्यन्त्रमार्गेण मौक्तिकग्रहणं मतम्
पवन्यादिसमापूर्य पूर्वस्थाने निवेशयेत् २५
पश्चिमे रजतं वापि ऐशान्ये चोत्तरेऽपि वा
मुक्ताग्रहणशालायां कल्पयेद्देशिकोत्तमः २६
तच्छालाया रत्नमारभ्य सायाह्नतमसावधि
सायाह्ने तमसाकाले स्नपनं शान्तिहोमकम् २७
नित्यपूजां प्रयत्नेन नित्यवत्सम्यगाचरेत्
एवं प्रतिदिनं कार्यं तत्तीरे यजनं कुरु २८
एवमेव क्रमेणैव पक्षाहान्तं समाचरेत्
द्रव्यकालं समानीय पुनर्गत्वा गृहं प्रति २९

आस्थानमण्डपं प्राप्य सूरिबृन्दैश्च सेवितम्
स्नपनं शान्तिहोमं च ततो नैमित्तिकार्चनम्  ३०
मूलालये प्रकर्तव्यं पूर्ववत्पूजनं नयेत्
नित्यकर्माणि हीनं चेद् राजराष्ट्रस्य नाशनम्  ३१
तस्मात्सर्वप्रयत्नेन नित्यपूजा पुरोक्तवत्
महाहविर्निवेद्याथ तोषयेत्परमेश्वरम्  ३२
महेशाग्रे विशेषेण गोमयालेपनं कुरु
पिष्टचूर्णैरलंकृत्य सर्वत्र ज्वलदीपकैः  ३३
देवाग्रे विन्यसेद्रत्नं तद्द्रव्यमष्टधा भवेत्
एकांशं देशिकस्यैव अंशं भूपतिरेव च  ३४
आतिथ्यमंशकं चैव सूरीणामंशकं तथा
चक्रपूजोक्तमर्त्याश्च त्वेकांशं च प्रदापयेत्  ३५
शेषांशं देवभागं स्याद् एवं भागक्रमेण तु
एवमेव क्रमेणैव मौक्तिकग्रहणं नयेत्  ३६
सर्वलोकहितं पुण्यं सर्वदेवप्रियार्थकम्
मौक्तिकग्रहणं प्रोक्तं मृगाणां ग्रहणं शृणु  ३७

इति सूक्ष्मशास्त्रे मौक्तिकग्रहणविधिपंचपंचाशत्पटलः

४६

अथ उत्पातशान्तिस्तु राजराष्ट्रहिताय च
पताकविधिसंप्रोक्तं सामान्यं च महाद्भुतम्  १
सामान्यदीर्घफलदं सद्य एव महाद्भुतम्
तत्तत्प्रति क्रिया सम्यक् कर्तव्या दोषनाशिनी  २
अकर्तव्ये तु सा सद्यः सर्वदोषावहा नृणाम्
ब्राह्मणानां नृपाणां च विशेषाद्दोषदं महत्  ३
तस्मात्प्रतिक्रिया सद्यो नृपेणैवा विलम्बिनी
भास्करस्योदये रात्रौ अमावास्येन्दुदर्शनम्  ४
भूमिकम्पे नदीक्षोभे कूपक्षोभे तटाकके
प्रतिमारोदने चैव ततः शोणितवर्षणे  ५

पाषाणपांसुवर्षे च तथैव मधुवर्षणे
वर्षे तु क्षीरसृग्भ्यां च वृक्षाच्छोणितकस्त्रवे ६
शिखादिपादुकान्तं यद्देवालयमकारणात्
पतिते चैव तद्धाम स्थानात्स्थानान्तरेऽपि वा ७
वृक्षे स्थानान्तरप्राप्ते वृक्षे वान्यफलोद्भवे
तदन्यपुष्पसंभूते गन्धानन्यर्चसंभवे ८
लिंगे चैवोष्णसंभूते प्रतिमायां तथैव च
अण्डजाः स्वेदजाश्चैव चतुष्पाच्च तथा नराः ९
स्वजात्यन्यप्रसूते च प्रासादभ्रमणे तथा
श्वेतवायससंभूते पर्वतद्वन्द्वयुद्धके १०
आर्द्रवृक्षे स्वदग्धे च प्रतिमाकम्पने तथा
भिन्ने तु शिववर्धन्यां लिंगप्रतिमयोस्तथा ११
प्रतिमास्फोटने चैव लिंगस्फोटनके तथा
प्रतिमानीलिमा दृष्टे करिणी मदसंयुता १२
अग्नेग्निचोत्थिते धूमे लिंगवर्णान्तरे सति
अंगाधिकसमुत्पन्ने चतुष्पात्तु तथैव च १३
भेरीघोषः स्वयं ह्येवं प्रोक्तास्त्वेते महाद्भुताः
दर्शने प्रतिसूर्यस्य प्रतिचन्द्रस्य दर्शने १४
रात्राविन्द्रधनुर्दृष्टे वह्निनक्षत्रदर्शने
ग्रहनक्षत्रपाते च सप्ताहैशनिसंकुले १५
नैरन्तर्येण सप्ताहं परिवेषं तु सूर्ययोः
महावातप्रकोपे च दिशादाहसमुद्भवे १६
लिंगे तु पूजिते पुष्पे प्राप्ते वर्णान्तरं सति
अकस्मात्पतिते पुष्पे सितपुष्पे सिते तथा १७
अतीवशलभोत्पन्ने उन्मत्ते वाहने तथा
शुकाश्च मूषिकोत्पन्ना विषसर्पादिकोद्भवे १८
प्रासादे च सभास्थाने गोपुरे मण्डपे तथा
परिवारालये चैव मधुनीडसमुद्भवे १९
अतिवृष्टिरनावृष्टौ युद्धे त्यागे नृपस्य च

पतितेऽकारणात्पुण्यवृक्षे चैव विशेषतः २०
राज्ञः प्रधानमहिषी प्रधानाश्च गजे द्रुतौ
रक्तस्त्रीचरसाल्लज्ञां श्रद्धाश्चैव तु पिंगळाः २१
नृपवेश्याप्रविष्टे च स्पृष्टे चैव सुरालये
देवालयोपरिष्टात्तु नृपस्य भवनोपरि २२
श्वारोहरेशते तत्र तनार्जातिकयास्तथा
लिंगे च प्रतिमायां वा खद्योतारोहणे सति २३
केचिद्व्योमे तु केतुभ्यो नानारूपेण दर्शने
लिंगमूले +++ सज रोहिणके सति २४
व्यतिरिक्तक्रियाकार्येऽसामान्यास्त्वद्भुताः स्मृताः
तेषामेव निवृत्यर्थं +++ प्रतिक्रियाम् २५
राष्ट्रो ++++ प्राणनाशं नृपो भयम्
दिशाहोमं ततः कृत्वा महास्नपनमुत्तमम् २६
कृत्वा संपूज्य देवेशं प्रभूतहविषं ददेत्
ब्राह्मणान्भोजयेत्तत्र प्रीतिं तत्र प्रयोजयेत् २७
एवमेवं तु सप्ताहं दिनं प्रति दिनं प्रति
चन्द्रोदयेत्वमावास्यां गोनाशं सस्यनाशनम् २८
पूर्ववत्कारयेत्सर्वं तद्दोषशमनाय च
संभवो भूमिकम्पस्य राजराष्ट्रस्य दोषकृत् २९
क्षीरप्रस्थसहस्रैश्च मधुसर्पिस्सहस्रकैः
संस्नाप्य च शिवं सम्यङ्घव्योमीति मंत्रतः ३०
पलाशसमिधा चैव ततो होमं तु कारयेत्
ब्राह्मणान्भोजयेन्नित्यं एकविंशद्दिनान्तकम् ३१
नदीक्षोभे तथा कूपतटाकं क्षोभयेत्तदा
दुर्भिक्षं जायते लोके महातीरे भवेत्ततः ३२
तत्तीरे मण्डपं कृत्वा नवहस्तप्रमाणतः
मण्डपे मण्डलं स्यात्तु तन्मध्ये स्थण्डिलं कुरु ३३
पंचाग्निं कारयेत्तत्र अग्निकार्योक्तमार्गतः
व्याघातसमिधः कृत्वा अस्त्रमंत्रेण देशिकः ३४

हृदयेन घृतं हुत्वा चरुं पाशुपतेन च
शतमर्धं तदर्धं व प्रत्येकं जुहुयात्क्रमात् ३५
मिन्दाहुतिं च कुर्वीत व्याहृतिं च हुनेत्क्रमात्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ३६
शिवं संपूज्य विधिवत् ब्राह्मणान्भोजयेत्ततः
एवं कुर्यात्तु पंचाहं मौनो चोत्सवमाचरेत् ३७
प्रतिमारोदने चैव गोनाशं धान्यनाशनम्
तन्मण्डलाधिपो राजा ग्रामराष्ट्रं विनश्यति ३८
कृत्वा तु प्रतिमाशुद्धिं संप्रोक्षणमथाचरेत्
पक्षं पक्षद्वयं वापि समिद्भिः शान्तिहोमकम् ३९
स्नपनं कारयेन्नित्यं दिशाहोमसमन्वितम्
ब्राह्मणान्भोजयेन्नित्यं पदीनां चैव भोजयेत् ४०
तत्तश्शोणितवर्षेऽपि प्राणिनां नाशनं भवेत्
प्रासादमण्डपादीनां तोयेन क्षाळयेत्ततः ४१
आलयस्य समन्तात्तु गोमयेनानुलेपयेत्
पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत् ४२
क्षीरप्रस्थसहस्त्रैश्च मधुसर्पिः सहस्त्रकैः
संस्नाप्य विधिवन्मंत्री महाव्योमेति मंत्रतः ४३
पलाशसमिधा चैव शान्तिहोमं च कारयेत्
एवं कुर्यात्तु सप्ताहं अन्ते चोत्सवमाचरेत् ४४
मधुवर्षे क्षीरवर्षे विप्रक्षत्रियदोषकृत्
तत्तत्प्रस्थसहस्त्रैश्च स्नापयेद्देशिकोत्तमः ४५
पूजयेत्तु विशेषेण प्रभूतहविषं ददेत्
अमोकद्धमिशा चैव शान्तिहोमं च कारयेत् ४६
एवं कुर्यात्तु सप्ताहं पश्चाद्ब्राह्मणभोजनम्
वृक्षाच्छोणितसंभूते परचक्राद्भयं भवेत् ४७
वृक्षमूले दिशाहोमं कारयेद्देशिकोत्तमः
ब्राह्मणान्भोजयेत्तत्र वास्तुदेवान्प्रपूजयेत् ४८
पूजयेत्तु दिवं पश्चात् कुर्याच्च स्नपनं महत्

पूजयेत्तु विशेषेण प्रभूतहविषं ददेत् ४९
पतिते पातुकान्तं यद् देवालयमकारणात्
स्त्रीणां चैव तु बालानां क्षेत्रिणां चैव नाशनम् ५०
प्रासादं पूर्ववत्कृत्वा जीर्णं चैव समुद्धरेत्
पुनर्बिम्बं समापाद्य पूर्ववत्स्थापयेद्गुरुः ५१
विशेषपूजनं कृत्वा अन्ते चोत्सवमाचरेत्
स्थानान्तरं च प्राप्तिश्च स्थानभ्रंशं नृपस्य तु ५२
तत्स्थानं पूर्ववत्कृत्वा निर्माणं सम्यगाचरेत्
देवस्य स्थानं प्राग्वत् पूजयेत्तु विशेषतः ५३
गव्याभिषेचनं कृत्वा ब्राह्मणान्भोजयेत्ततः
वर्धनीशिवकुंभौ च छिन्ने भिन्ने तदन्तके ५४
तद्राष्ट्रदेवतानां च स्नपनं चाभिषेचनम्
कारयेद्विधिवद्राजा भक्त्या तद्दोषशान्तये ५५
ब्रह्मस्थानान्तरे प्राप्ते वृक्षे वान्यफलोद्भवे
तदन्यकुसुमोत्पन्ने रसगन्धान्यसंभवे ५६
मर्त्यानां चैव सर्वेषां दुःखं तद्राष्ट्रवासिनाम्
तज्जातिवृक्षं संस्थाप्य पूर्वस्थाने विशेषतः ५७
शान्तिहोमः ततः कुर्यान्मयूरसमिधा ततः
शिवं संपूज्य विधिवत् सप्ताहं स्नपनं कुरु ५८
क्षीराभिषेचनं कृत्वा वास्तुदेवं प्रपूजयेत्
तत्तत्फलानि सर्वाणि पुष्पैस्सर्वैर्यजेच्छिवम् ५९
सर्वगन्धसमायुक्तं पूजयेत्तु विशेषतः
उष्णं च प्रतिपन्ने च लिंगे च प्रतिमासु च ६०
मर्त्यानां चैव सर्वेषां महान्रोगः प्रजायते
गोनाशं चैव दुर्भिक्षं तद्राष्ट्रे जायते ध्रुवम् ६१
क्षीरप्रस्थसहस्रैश्च मधुसर्पिस्सहस्रकैः
नाळिकेरोदकेनापि स्नापयेत्तु शिवं बुधः ६२
स्नपनं तत्र कर्तव्यं महाव्योमेति मंत्रतः
पूजयेत्तु विशेषेण कुंकुमोशीरचन्दनैः ६३

कुष्ठेनागरुकर्पूरैः आलोढ्यालेपयेच्छिवम्
महाहविः प्रदातव्यं दिशाहोमं तु कारयेत् ६४
एवं कुर्यात्तु सप्ताहं शीतकुंभं तदन्तके
अराडजाः स्वेदजाश्चैव चतुष्पाद्य नरास्तथा ६५
स्वजात्यन्यप्रसूतश्चेत् भूपतेर्मरणं ध्रुवम्
गोभूमिकांचनादीनि दानं कुर्यात्प्रयत्नतः ६६
स्नपनं कारयेदर्कसमिधा शान्तिहोमकम्
एवं कुर्यात्तु सप्ताहं अन्ते चोत्सवमाचरेत् ६७
प्रासादभ्रमणोत्पन्ने राष्ट्रस्योपद्रवं भवेत्
प्रत्येकं प्रस्थसाहस्रैः गव्यैः प्रासादमेव च ६८
पंचब्रह्मषडंगैश्च स्नापयेत्परमेश्वरम्
प्रासादं प्रोक्षयेद्धीमान् पूर्वोक्तविधिना सह ६९
स्नपनं तत्र कुर्वीत ब्राह्मणान्भोजयेत्सुधीः
सिक्तोकुसुमुत्पन्ने राष्ट्रक्षोभं भवेत्सदा ७०
स्नपनं तत्र कुर्वीत पूजयेत्तु विशेषतः
वैकंकतेन समिधा शान्तिहोमं तु कारयेत् ७१
विशेषपूजनं कुर्यात् प्रभूतहविषं ददेत्
वास्तुदेवान्समभ्यर्च्य एवं पंचाहमाचरेत् ७२
पर्वतद्वन्द्वयुद्धे तु नृपस्यापजयं भवेत्
पर्वताग्रे विशेषेण दिशाहोमं तु कारयेत् ७३
प्रोक्षयेत्पंचगव्येन प्रासादेन तु पर्वतम्
तत्पर्वतसमीपे तु लिंगं संस्थाप्य पूजयेत् ७४
तद्राष्ट्रदेवतानां च स्नपनं +++ दके
विशेषपूजनं कुर्यात् तदन्ते चोत्सवं कुरु ७५
आर्द्रवृक्षे स्वयं दग्धे बालानां नाशनं भवेत्
अग्निक्षोभं च तद्राष्ट्रे सद्य एव भवेद्ध्रुवम् ७६
ग्रामस्यैव चतुर्दिक्षु होमं कुर्याद्विशेषतः
समिदाज्यचरुं लाजान् सर्षपान्होममाचरेत् ७७
तद्वृक्षसमिधा चैव पंचब्रह्मैः क्रमाद्धुनेत्

शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ७८
पंचब्रह्मषडंगैश्च प्रासादेन च मंत्रतः
प्रत्येकं तु सहस्रं वा तदर्धं जुहुयात्क्रमात् ७९
मिन्दाहुतिं ततो हुत्वा जयाद्या जुहुयात्ततः
कृत्वा तु स्नपनं पश्चाद् विशेषेणैव पूजयेत् ८०
औदुम्बरेण समिधा शान्तिहोमं तु कारयेत्
प्रतिमाकम्पनोत्पन्ने राजा मरणमाप्नुयात् ८१
कृत्वा तु प्रतिमाशुद्धिं गव्येनैवाभिषेचयेत्
दिशाहोमं ततः कृत्वा पुण्याहं वाचयेत्ततः ८२
एवं कुर्यात्तु सप्ताहं तदन्ते चोत्सवं कुरु
भिन्ने च शिववर्धन्यौ लिंगप्रतिमयोस्तथा ८३
परचक्राद्भयं भूमौ महामारी प्रवर्तते
बालस्थानं ततः कृत्वा प्रासादं पूर्ववत्कुरु ८४
प्रासादप्रोक्षणं कृत्वा पूर्वोक्तविधिना सह
तेनैव भिन्नलिंगं चेद् उद्धृत्य स्थापयेन्नवम् ८५
अन्येनापि प्रमाणेन कारयेद्देशिकोत्तमः
प्रतिष्ठां कारयेद्धीमान् पूर्वोक्तविधिना सह ८६
प्रत्यंगोपांगहीने च वस्त्राभरणहीनके
पुनः संधापनं कृत्वा संप्रोक्षणमथाचरेत् ८७
दिशाहोमं ततः कृत्वा महास्नपनमाचरेत्
पंचगव्यामृतैश्चैव अभिषेकं च कारयेत् ८८
क्षीरप्रस्थसहस्रैश्च मधुसर्पिः सहस्रकैः
स्नापयेत्परमेशानं महाव्योमेति मंत्रतः ८९
स्नपनं कारयित्वा तु ब्राह्मणान्भोजयेत्ततः
समिधा खादिरेणैव शान्तिहोमं तु कारयेत् ९०
एवं कृत्वा तु सप्ताहमन्ते चोत्सवमाचरेत्
प्रतिमो ++++++++++++++++ ९१
+++ पक्षद्वयं वार्कसमिधा शान्तिहोमकम्
स्नपनं ++++ दिशाहोमं च कारयेत् ९२

ब्राह्मणान्पूजयेन्नित्यं दिनान्तत्रैव पूजयेत्
करिणी मदसंयुक्ते महोत्पातप्रकोपने ९३
वाहनानां भयं चैव स्त्रीजनानां भयं भवेत्
एवं संपूज्य विधिवत् स्नपनं कुरु नित्यशः ९४
शिवांगैश्चैव विद्यांगैः शिवमंत्रैश्च होमयेत्
एवं सप्तदिनं नीत्वा महाहविर्निवेदयेत् ९५
अनग्नौ चोत्थिते धूमे वाहनानां क्षयं भवेत्
परचक्रभयं तत्र भूमौ संभवति ध्रुवम्
तत्प्रदेशं च खात्वा तु पंचमृद्भिस्तु पूरयेत् ९५-२
व्याघातसमिधा चैव शान्तिहोमं तु कारयेत्
ब्राह्मणान्भोजयेत्तत्र दीनानां चैव भोजयेत् ९६
क्षीरप्रस्थसहस्त्रैश्च स्नापयेत्परमेश्वरम्
तदन्ते स्नपनं कुर्यात् शीतकुंभं तदन्तके ९७
लिंगे वर्णान्तरं प्राप्ते जातिदूषणमावहेत्
एलालवंगकर्पूरजातितम्बुसुरैः सह ९८
पेषयित्वा यथा मंत्री लिंगमालेपयेत्ततः
स्नपनं कारयेदन्ते सप्ताहं शान्तिहोमकम् ९९
अशोकसमिधा हुत्वा त्र्यम्बकेनैव देशिकः
विशेषपूजनं कृत्वा तदन्ते विप्रभोजनम् १००
भेरीघोषे स्वयं जाते महामारी प्रवर्तते
स्नपनं कारयेद्बिल्वसमिधा शान्तिहोमकम् १०१
पक्षं पक्षद्वयं वापि एवमेव समाचरेत्
एवं महाद्भुतं प्रोक्तं शृणु सामान्यमद्भुतम् १०२
आदित्योदयकाले तु प्रतिसूर्यस्य दर्शने
परचक्राद्भयं भूमौ ज्वरग्रस्ता नरास्तथा १०३
अश्वत्थसमिधा चैव शान्तिहोमं तु कारयेत्
तदन्ते स्नपनं कुर्यात् पूजयेत्तु विशेषतः १०४
प्रभूतहविषं दत्वा एवं सप्ताहमाचरेत्
यथा चन्द्रोदये काले प्रतिचन्द्रस्य दर्शने १०५

दुर्भिक्षं जायते लोके महामारी प्रवर्तते
प्रत्यर्कदर्शनव्योममार्गेणैव समाचरेत् १०६
रात्राविन्द्रधनुर्दृष्टे वह्निनक्षत्रदर्शने
ग्रहनक्षत्रपाते च ग्रनावृष्टिर्न संशयः १०७
ज्वरग्रस्ता नराः सर्वे वाहनानां क्षयं भवेत्
पूजयित्वा शिवं तत्र महत्स्नपनमाचरेत् १०८
शान्तिहोमं ततः कृत्वा ग्रश्वत्थसमिधा ततः
एवं कृत्वा तु सप्ताहं तदन्ते चोत्सवं कुरु १०९
नैरन्तर्येण सप्ताहं ग्रशनौ पतिते सति
ग्रतिवृष्टिर्नराणां च रोगो संभवति ध्रुवम् ११०
ग्रवसाने घृतक्षीरप्रस्थानां तु सहस्रकैः
स्नापयेत्परमेशानं पूजयेत्तु विशेषतः १११
तदन्ते स्नपनं कुर्यात् प्रभूतहविषं ददेत्
भास्करं वा तथा सोमं सप्ताहं परिवेष्टितम् ११२
तन्मण्डलाधिपो राजा युद्धे मरणमाप्नुयात्
भूदानं तिलगोदानं महादानं तथैव च ११३
कृत्वा प्रस्थसहस्रैश्च क्षीरेणैव महेश्वरम्
स्नापयेत्तु विशेषेण तदन्ते स्नपनं कुरु ११४
दिशाहोमं ततः कृत्वा एवं सप्ताहमाचरेत्
लिंगे तु पूजिते पुष्पे प्राप्ते वर्णान्तरे सति ११५
वस्त्रानुलेपनं तद्वद्ग्रामं भूषणमादिशेत्
शिवं संपूज्य विधिवत्प्रभूतहविषं ददेत् ११६
ग्रतीवशलभोत्पन्ने उन्मत्ते वान्तरे तथा
शुकानां मूषिकाणां च पिष्टसर्पानितो भवे ११७
प्राणिनां नाशनं चैव ग्रनावृष्टिर्न संशयः
प्रासादस्याग्रतः कुर्यान् मण्डपं चतुरश्रकम् ११८
दशद्वादशहस्तं वा दर्पणोदरसंनिभम्
स्तंभैः षोडशभिर्युक्तं सर्वालंकारसंयुतम् ११९
हस्तद्वयप्रमाणेन वृत्तकुण्डं तु मध्यमे

मेखलात्रयसंयुक्तं एकैकं तु षडंगुलम्  १२०
नाभियोनिसमायुक्तं कारयेद्देशिकोत्तमः
दिशासु चतुरश्राणि कोणेषु च कुशेशयम्  १२१
शिवाग्निं कल्पयित्वाथ अग्निकार्योक्तमार्गतः
++++ चरुं लाजं सर्षपं लवणं तथा  १२२
कार्पासस्य तु बीजं च होमयेद्देशिकोत्तमः
पालाशखदिराश्वत्थवटाः पूर्वादितः क्रमात्  १२३
+++++ कं च मयूरं च विदिक्षु च
पालाशं तु प्रधानं स्यात् सद्यमंत्रेण होमयेत्  १२४
पंचब्रह्मषडंगैश्च विद्यांगैर्मूलमंत्रतः
पाशुपतेनास्त्रमंत्रेण अघोरास्त्रेण बुद्धिमान्  १२५
सहस्रं वा तदर्धं  वा प्रत्येकं जुहुयात्क्रमात्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्  १२६
तदन्ते स्नपनं कुर्याद् विशेषेणैव पूजयेत्
महाहविः प्रदातव्यं ब्राह्मणान्भोजयेत्ततः  १२७
एवमेवं तु मध्याह्ने जप्त्वेत्थं कारयेत् बुधः
प्रासादे च सभास्थाने गोपुरे मण्डपे तथा  १२८
परिवारालये चैव मधुनीडसमुद्भवे
ग्रामस्य नाशनं चैव नृपतेर्मरणं ध्रुवम्  १२९
व्यपोह्य मधुनीडं तत् प्रोक्षयेच्छुद्धवारिणा
शिवं संपूज्य विधिवद्दिशाहोमं तु कारयेत्  १३०
मध्वाज्यपयसा धीमान्स्नापयेत्परमेश्वरम्
समिद्भिर्नवसंभूतैः शान्तिहोमं तु कारयेत्  १३१
तदन्ते स्नपनं कुर्याद् एवं सप्ताहमाचरेत्
उत्सवं कारयेदन्ते सप्ताहं त्रियहं तु वा  १३२
अनावृष्टिसमुत्पन्ने गोनाशं सस्यनाशनम्
समिधाखादिरेणैव शान्तिहोमं तु कारयेत्  १३३
क्षीराभिषेचनं कृत्वा तदन्ते स्नपनं कुरु
कुर्यादेवं तु सप्ताहं शीतकुंभं ततः कुरु  १३४

अतिवृष्टिसमुद्भूते दुर्भिक्षं भवति ध्रुवम्
मधुप्रस्थसहस्रैश्च घृतप्रस्थसहस्रकैः १३५
स्नापयेत्परमेशानं तदन्ते स्नपनं कुरु
आलोढ्य रजनीं पश्चात्कर्पूरेण विमिश्रितम् १३६
षडंगुलप्रमाणेन वेष्टयेल्लिंगपिण्डिकाम्
कनिष्ठांगुलपरीणाहं कर्पूरेण च वर्जितम् १३७
गोघृतेन समायुक्तं वेदतालप्रमाणतः
सहस्रं वा तदर्धं वा दीपानारोपयेत्क्रमात् १३८
मुद्गं भिन्नसमायुक्तं प्रभूतहविषं ददेत्
शान्तिहोमं ततः कृत्वा पालाशसमिधा सह १३९
विशेषपूजनं कुर्यात् त्रियहं च समाचरेत्
युद्धोद्योगे सहस्रं वा नृपस्यैव विना तथा १४०
द्रुमे तु पतिते भूमौ प्रधानमहिषी तथा
प्रधानाश्वं गणं वापि मरणं तु भवेद्यदि १४१
भूपतेर्मरणं चात्र सद्य एव भवेद्ध्रुवम्
महद्दानं प्रकुर्वित ब्राह्मणानां विशेषतः १४२
पूजयित्वा महेशानं महत्स्नपनमाचरेत्
महाहविस्ततो दत्वा वास्तुदेवान्प्रपूजयेत् १४३
देवानामालये वाथ नृपस्यैव गृहेऽथवा
विद्या हि यागशालायां सभास्थाने च चत्वरे १४४
मठे तटाकतीरे वा तथा कूपस्य तीरके
प्रतिक्रिया च कर्तव्या रजस्त्री जायते यदि १४५
तदा मुंचति तद्ग्रामं आलये च तथा भवेत्
सभास्थाने समुत्पन्ने ग्रामनाशं भवेत्तदा १४६
चत्वरे तु समुत्पन्ने प्राणिनाशं तु जायते
तथैव च समुत्पन्ने ग्रामदूषणमाविशेत् १४७
तटाकतीरे संजाते तदा मुंचति पद्मजा
रथ्यां समुत्थिते संजाते दुःखं तद्ग्रामवासिनाम् १४८
तत्प्रदेशं तदा खात्वा पूरयेद्वालुकादिभिः

पुरायाहं वाचयित्वा तु ब्राह्मणान्भोजयेत्ततः १४९
पंचगव्येन संप्रोक्ष्य पवमानमुदीरयन्
शान्तिहोमं ततः कृत्वा पलाशसमिधा तथा १५०
तदन्ते स्नपनं कृत्वा एवं सप्ताहमाचरेत्
गोमायुपिंगळीगृध्रोलूकाश्चैवाथ वायसाः १५१
आलयान्तः प्रविष्टे च नृपवेश्मान्तरेऽपि वा
बालानां स्त्रीगणानां च नाशारास्तु विनिर्दिशेत् १५२
शीतकुंभं ततः कृत्वा शान्तिहोमं समाचरेत्
ब्राह्मणान्भोजयित्वा तु तदन्ते स्नपनं कुरु १५३
देवालयस्योपरिष्टात्तु नृपस्य भवनोपरि
श्वाते यदि भयं राज्ञो राष्ट्रस्य रणमाप्नुयात् १५४
तदंगत्वात्रजं त्यक्त्वा पुरायाहं वाचयेत्ततः
अश्वत्थसमिदाज्यैश्च शान्तिहोमं तु कारयेत् १५५
ब्राह्मणान्भोजयेत्तत्र कुर्याच्च स्नपनं भवेत्
तदन्ते चोत्सवं कुर्याद्वास्तुदेवान्समर्चयेत् १५६
लिंगे च प्रतिमे चैव गृध्रमारोहणे सति
नराणां चैव सर्वेषां रोगवृद्धित्वमावहेत् १५७
तं हत्वा चाथ सद्योऽत्र तद्देवं स्नापयेत्ततः
दूर्वया समिधा चैव शान्तिहोमं तु कारयेत् १५८
स्नपनं तु ततः कृत्वा महाहविर्निवेदयेत्
आकाशे धूमकेतुः स्यान्नानारूपसमन्वितः १५९
दृश्यते तत्र निश्चित्य प्रायश्चित्तं समाचरेत्
लिंगमूले तु निर्बीजान्वारुरोहणके सति १६०
राष्ट्रक्षोभं च दुर्भिक्षं जायते नात्र संशयः
पूजयेद्देवदेवेशं अष्टबन्धं तु कारयेत् १६१
शान्तिहोमं ततः कृत्वा समिधा खादिरेण तु
शीतकुंभं ततः कृत्वा महाहविर्निवेदयेत् १६२
व्यतिरिक्तक्रियाकार्ये शान्तिहोमेन शाम्यति
कुर्यात्प्रतिक्रियां तत्र गुणदृष्टस्य कर्मणा १६३

सम +++ नयत्कृत्वा निष्फलं त्वं प्रजायते
आचार्यं पूजयेत्तत्र प्रतिक्रियाविधेस्तु तः १६४
वस्त्रांगुळीयकैश्चैव गोभूमिधनधान्यकैः
अधमं +++ निष्कं स्याद् द्विगुणं मध्यमं स्मृतम् १६५
त्रिगुणं चोत्तमं विद्याद् देशिकस्य तु दक्षिणा
यागोपयोगद्रव्याणि देशिकाय प्रदापयेत् १६६
इति सूक्ष्मशास्त्रे उत्पातशान्तिविधिः षट्पंचाशत्पटलः

४७

ग्रामशान्तिविधिं वक्ष्ये शृणु त्वं तत्प्रभंजन
ग्रामे वा नगरे वापि पत्तने राजधानिके १
कुब्जके खेटके चैव बहुरूपं च वासिनाम्
एवं स्थानविधिश्चन्यपूर्वे वा दक्षिणेऽपि वा २
पश्चिमे चोत्तरे वापि विदिशास्वन्तराळके ३
ग्राममानं चतुर्भागं वसुभागमथापि वा
कलांशं द्वादशांशं तु तेष्वेकं कल्प्य वास्तुना ४
एवं निश्चित्य वीथी स्यात् बाह्ये वाभ्यन्तरेऽपि वा
प्रासादपरितो वापि वास्तु वीथ्यां प्रकल्पयेत् ५
ब्रह्म ईशानपर्यन्तं इन्द्रादीशान्तकं क्रमात्
ग्राममाश्रित्य देवानां ग्राममध्ये बलिं क्षिपेत् ६
आद्यन्तं बलियुक्तं तु अयुक्तं तु दिनं प्रति
ब्रह्मराक्षसपैशाच भूताश्चैव निशा चराः ७
एताश्च देवताः सर्वे शून्यग्रामं तु वासिनः
गतागतं च कृत्वा तु पूर्वापरसुवास्तुषु ८
तद्ग्रामवासिनः सर्वे रोगशोकभयं भवेत्
तद्ग्रामे चोत्सवं कुर्यात् तद्राष्ट्रं च विनश्यति ९
तद्दोषशमनार्थाय राक्षसादिबलिं ददेत्
ग्रामाभिमुखसंस्थानं निर्गत्वा द्वारदेशके १०
राक्षसाद्याश्च ये देवा द्वारदेशं समाश्रयेत्

एतत्स्थानाश्रिता देवाः प्रीत्यर्थं बलिमाचरेत् ११
बलिं द्रव्यं तु संपाद्य देशिकः स्नानमाचरेत्
सुशुद्धवस्त्रं संवेष्ट्य आर्द्रवस्त्रं परित्यजेत् १२
सकळीकरणं कृत्वा सामान्यार्घ्यं च कल्पयेत्
पंचगव्यं तु संसाध्य विघ्नेशं पूजयेत्पुरा १३
नाळिकेरफलं दत्वा द्विखण्डं सर्वसिद्धिदम्
शैथिल्यं कर्मशैथिल्यं तस्माद्दोषं परित्यजेत् १४
विघ्नराज नमस्तुभ्यं विज्ञाप्य परमेश्वरम्
देवदेवजगन्नाथ जगतामार्तिनाशन १५
शिवाध्वरः प्रवृत्तोऽयं तवाज्ञां कुरुते सदा
यत्कृतं तेन भगवन् मया च मखमन्दिरे १६
भूताश्च बलिकर्माणि त्वत्प्रसादात्करोम्यहम्
क्रमुकं नाळिकेरस्य पुष्पं प्रत्येकमेव हि १७
नाळिकेरफलं मांसं संख्यया प्रतिगृह्यताम्
तदर्धं तण्डुलं द्रोणं पुष्पं तस्य चतुर्गुणम् १८
पीतरक्तनिभं पुष्पं पुष्पं च सुसमुद्धृतम्
देवस्य उक्तपुष्पं तु जातिकह्लारकेतुषु १९
अन्यत्सुगन्धं पुष्पं च पुष्पपात्रे निधापयेत्
कार्पासवर्तिमेकेन महावर्तिस्तु पंचकम् २०
भजमृगमदं कृष्णगन्धं कर्पूरसंयुतम्
कुन्दुरुष्कागरुं धूपं रक्तवस्त्रं च कम्बलम् २१
पंचकं दारुपीठं तु चतुर्थं वा समन्वितम्
खड्गशूलधनुर्बाणक्षुरिका भिण्डिपालकम् २२
नाळिकेरं च तैलं च समृद्धकदळीफलम्
पंचचूर्णं गुळं क्षीरं कदळीदलसंयुतम् २३
क्रमुकं तैलसंयुक्तं ताम्बूलं च समृद्धिदम्
शुद्धोदनं पचेद्धीमान् आढकद्वयतण्डुलैः २४
पायं चासकेनैव ततसंख्यैश्च सिताक्षतैः
आद्ये क्षीरविमिश्रेण शुद्धपात्रे निधापयेत् २५

एवं द्रव्यं तु संपाद्य अस्त्रेश्वरमथार्चयेत्
शिवखड्गं तु संग्राह्य विन्यसेच्छिवसंनिधौ  २६
विज्ञाप्य परमेशानं बलिद्रव्यं तु संगृहेत्
अस्त्रेशं शिवखड्गं तु शिष्यः संग्राह्य पाणिना  २७
शंखभेर्याश्च घोषैश्च डमरुपटहमर्दळैः
एतैरन्यैश्च घोषैश्च स्त्रीणां सुरवसंयुतम्  २८
सदाघण्टारवोपेतं दीपज्वालासमन्वितम्
छत्रचामरसंयुक्तं द्वारदेशं समाश्रयेत्  २९
द्वारपालान्समभ्यर्च्य स्नाननैवेद्यकान्तकम्
बाह्ये वाभ्यन्तरे वापि वरकं संप्रपूजयेत्  ३०
द्वारं प्रक्षाळ्य तोयेन नन्दिकाळबलिं ददेत्
वृषभं पूजयेन्मध्ये महाघण्टां तु ताडयेत्  ३१
पश्चाद्द्वारं बहिः कृत्वा पंचहस्तप्रमाणतः
तृणमूलादिभिस्त्याज्य तत्समं चतुरश्रकम्  ३२
तन्मध्ये वेदिकां कुर्याद्गोमयालेपनं कुरु
प्रोक्षयेत्पंचगव्येन बलिद्रव्यं च संगृहेत्  ३३
अस्त्रेशं वेदिकोर्ध्वे तु शिवखड्गं तु विन्यसेत्
मध्ये पूर्वे च याम्ये च पश्चिमे चोत्तरे दिशि  ३४
मध्ये पत्राष्टपद्मं च ऐन्द्रे च वसुकोणकम्
याम्ये तु नवयोनिः स्यात् षट्कोणं पश्चिमे दिशि  ३५
उत्तरे चाष्टशूलं च रक्तवर्णेन संलिखेत्
तद्बाह्ये सितवर्णेन चतुरश्रं प्रकल्पयेत्  ३६
अश्रस्याभ्यन्तरे कोणं पंचवर्णैरलंकृतम्
मण्डलं स्यात्पदाद्बाह्ये न्यसेत्पीठचतुष्टयम्  ३७
पीठं विन्यस्य मध्ये तु मध्ये मण्डलपश्चिमे
पीठोर्ध्वे वस्त्रमास्तीर्य रक्तपद्मेन सुव्रत  ३८
प्रस्थं कुडुपमाधिक्यं तण्डुलं पीठकोपरि
तस्योर्ध्वे नाळिकेरं तु स्थापयेत्तु चतुर्दिशि  ३९
खड्गं पूर्वे तु विन्यस्य धनुर्बाणं च दक्षिणे

क्षुरिकं पश्चिमे स्थाप्य भिरिडपालं तथोत्तरे ४०
शूलं च मध्यमे स्थाप्य ओदने पंचभिश्शरम्
प्रस्थं कुडुपसंयुक्तं तराडुलं तु निधापयेत् ४१
तराडुलं कांस्यपात्रे तु कारयेत्तस्य मूर्धनि
नाळिकेरोदकेनैव घृतेन परिपूरितम् ४२
तन्मध्ये तु महावर्तिर्विधियुक्तं च विन्यसेत्
स्वस्तिकं वायुदेशे तु पंचचूर्णैरलंकृतम् ४३
तस्योनराय शुद्धं च नाळिकेरसमाश्रितम्
तस्याग्रे कदळीपत्रमामूलाग्रसमन्वितम् ४४
सिताक्षतान् न्यसेदूर्ध्वे कदळीफलसंयुतम्
शास्तुश्च चरिडकायाश्च अघोरं भैरवं तथा ४५
तन्मध्ये भूतनाथेशं पूर्वदिषु समर्चयेत्
आग्नेये मराडपे पश्चात् पंचचूर्णैरलंकृतम् ४६
मूर्तिमानजपूर्वे तु विन्यस्याष्टदिशासु वा
विन्यसेत्कदळीपत्रे कपित्थफलमाकृते ४७
पिराडमेकं प्रदातव्यं वर्तिदीपसमन्वितम्
नन्तादीनां बलिं दद्याद् जलेन परिषेचयेत् ४८
नैर्ऋते चैव षट्कोणं पंचचूर्णैर्विलिख्य च
महाभूतेन षट्कं च बल्यन्नं च यथाक्रमम् ४९
ऐशान्यां मराडलं कल्प्य चतुष्कोणसमन्वितम्
सूत्रषट्कसमायुक्तं पंचचूर्णैरलंकृतम् ५०
नाळिकेरदळेनैव लम्बयेत्तु पदार्थकम्
क्रमुकं नाळिकेरस्य पुष्पैश्चैव प्रलम्बयेत् ५१
चतुष्पथे पिशाचानां त्रिपथे रक्षसां बलिः
कूष्माराडं त्रिपथे पूज्य नागांश्च त्रिपथे यजेत् ५२
त्रिपथे भैरवं पूज्य द्विपथे असुरार्चनम्
एतदन्नं बलिं दत्वा वर्तिदीपं समाचरेत् ५३
एवं क्रमेण संपूज्य पुष्पं ग्राह्य विकीर्य च
सिताक्षतं विकीर्याथ दिष्टोद्वासनकं कुरु ५४

शिवखड्गेन संगोध्य रक्ततोयं विसृज्य च
ऐशान्यां मह्यमाने तु अजं शस्त्रेण संहरेत्  ५५
नमस्ते भूतनाथेश प्रीत्यर्थं  प्रतिगृह्यताम्
मया प्रवर्तितो यागः सर्वाभीष्टप्रदायक  ५६
ततः प्रीतमना भूत्वा गच्छत्वं हि यथासुखम्
शून्यवास्तुषु मध्ये तु पश्चाच्छान्तिबलिं क्षिपेत्  ५७
तद्ग्रामे भद्रकाळ्याश्च तृप्त्यर्थं  बलिमाचरेत्
दिशाकुंभोदकैः स्नाप्य सद्यमन्त्रं शतं जपेत्  ५८
नैवेद्यं चोपदंशं च हीने दुर्भिक्षसंभवम्
तद्दोषशमनार्थाय स्नापयेद्वल्कलोदकैः  ५९
अंगमंत्रशतं जप्त्वा तद्द्रव्यद्विगुणं ददेत्
पानीयं मुखवासं च हीने तु जलवर्जितम्  ६०
स्नापयेत्परमेशानं पंचाशत्कलशोदकैः
तद्द्रव्यं द्विगुणं दत्वा मूलमंत्रं शतं जपेत्  ६१
नित्यहोमविहीने च भूपतेस्तु विनाशनम्
शान्तिहोमं ततः कृत्वा षोडशस्नपनं कुरु  ६२
पश्चान्नित्याग्निकं कुर्यादघोरेण शतं हुनेत्
प्राकारबलिहीने च तद्राष्ट्रं बलवर्जितम्  ६३
शान्तिहोमं ततः कृत्वा स्नापयेन्मार्जनोदकैः
दशबीजं शतं जप्त्वा पश्चाद्बलिं समाचरेत्  ६४
नित्योत्सवविहीने तु परचक्राद्भयं भवेत्
शान्तिहोमं ततः कृत्वा स्नपनैरभिषेचयेत्  ६५
त्रियम्बकमनुं जप्त्वा पश्चान्मंत्रशतं जपेत्
नित्योत्सवं ततः कृत्वा पुनः किंचित्पदाम्यहेत्  ६६
बाणकात्वादिसंस्पृष्ट्वा प्रतिलोमादिभिस्तथा
यत्र देशे तु संस्थाप्य पूर्ववच्छान्तिमाचरेत्  ६७
तत्स्थानादिबलिं दद्याद् अस्त्रमंत्रं शतं जपेत्
बलिदीपविहीने च यत्र देशे तु संस्थितम्  ६८
पुनर्दीपं समारोप्य बलिशेषं समापयेत्

धूपदीपविहीने च महामारी प्रवर्तते ६९
शान्तिहोमं ततः कृत्वा स्नापयेत्सूर्यतोयकैः
आरात्रिकविहीने च नृत्तविच्छेदनेऽपि च ७०
शान्तिकुंभोदकैः स्नाप्य बहुरूपशतं जपेत्
भस्म ताम्बूलहीने च राजा दुर्जयमाप्नुयात् ७१
अस्त्रमंत्रं शतं जप्त्वा परिमार्जनतोयकैः
स्नापयेत्परमेशानं तद्द्रव्यं द्विगुणं ददेत् ७२
दर्पणच्छत्रहीने च खड्गचामरहीनके
परचक्राद्भयं भूमौ राजादुर्जयमाप्नुयात् ७३
शान्तिहोमं ततः कृत्वा स्नपनैरभिषेचयेत्
जप्त्वा तु क्षुरिका मंत्रं सहस्रं वा तदर्धकम् ७४
ऋगाद्यध्ययने हीने भक्तादिस्तोत्रहीनके
शान्तिकुंभोदकैः स्नाप्य बीजमुख्यं शतं जपेत् ७५
वेदांगश्रवणे हीने पुराणश्रवणे तथा
जायानां नाशनं चैव बालानां नाशनं भवेत् ७६
मान्योदकेन संस्नाप्य दशबीजं शतं जपेत्
नृत्तगानं च वाद्यं च हीने तद्राष्ट्रनाशनम् ७७
शान्तिहोमं ततः कृत्वा मूर्तिकुंभाभिषेचयेत्
नन्दिमंत्रं शतं जप्त्वा पश्चान्नृत्तादिकं कुरु ७८
चण्डार्चनविहीने च राजसेनाविनाशनम्
मूर्तिहोमं ततः कृत्वा गन्धोदैरभिषेचयेत् ७९
चण्डमंत्रं शतं जप्त्वा पश्चाच्चण्डं समर्चयेत्
साधसाध्ये विहीने च द्विगुणं चान्यसाध्यके ८०
यत्र देवाय तृप्त्यर्थं कुर्यान्निष्कृतिं पूर्ववत्
संधिद्वयविहीने च संप्रोक्षणमथाचरेत् ८१
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात्
इति सूक्ष्मशास्त्रे सप्ततन्त्रे नित्यपूजाप्रायश्चित्तविधिः षट्पंचाशत्पटलः

४८

अथातः संप्रवक्ष्यामि जीर्णोद्धारविधिक्रमम्
भवने मण्डपे चैव लिंगे बेरे च पिण्डिके १
प्राकारे गोपुरे चैव अन्ये जीर्णेषु तेषु च
स्वायंभुवादिलिंगेषु जीर्णोद्धारं न कारयेत् २
मोहाद्वा यदि वाऽज्ञानात् चालनं सर्वनाशनम्
तस्मात्ससर्वप्रयत्नेन मूललिंगं न शोधयेत् ३
प्रमादाज्जीर्णितं लिंगं तमेवं पूजयेत्सदा
प्रतिष्ठाक्रममार्गेण प्रतिष्ठां कारयेद्बुधः ४
अलक्षणं चेधामं च बहुवर्णं सशैलवम्
एकद्रव्येण निर्माणाद्धाम स्वायंभुवं स्मृतम् ५
तथैव जीर्णितैः काले तमेव बन्धयेद्दृढम्
अन्यद्रव्यकृतं चेत्तु राजराष्ट्रं विनश्यति ६
जलसंप्रोक्षणं कृत्वा शास्त्रोक्तविधिमार्गतः
पौष्टिकेषु च धामेषु एकाहं हीनकं यदि ७
तद्द्रव्येण समं कृत्वा संप्रोक्षणमथाचरेत्
सर्वां गानां क्षयं दृष्ट्वा प्रासादस्य विशेषतः ८
तद्द्रव्येणैव कुर्यात्तु पूर्वोक्तविधिना सह
वरद्रव्येण कर्तव्यं यथा वित्तानुसारतः ९
सलक्षणस्य धाम्नस्तु वरद्रव्येण तत्कृतम्
तस्मात्सर्वप्रयत्नेन हीनं चैव न कारयेत् १०
मृण्मयं दारुजं वापि लोहजं व शिलामयम्
स्थापितं पूजितं बेरं जीर्णं वा भिन्नमेव वा ११
छिन्नं वाप्यग्निदग्धं वा दृष्ट्वा बेरं न पूजयेत्
पूजयेद्यदि मोहेन राजराष्ट्रं विनश्यति १२
तस्माद्बेरं समुद्धृत्य जले वापि स्थलेऽपि वा
प्रक्षिप्य मृद्भिराच्छाद्य प्रतिमां कारयेन्नवाम् १३
मृण्मयं च मृदा कुर्याद्दारु चेद्दारुणा कुरु
लोहं च यदि लोहेन शिला चेच्छैलजं स्वयम् १४
मृण्मयाद्दारुजं श्रेष्ठं दारुजाच्छैलजं वरम्

शैलजाल्लोहजं श्रेष्ठं लोहजाद्रत्नजं शुभम् १५
सर्वेषामपि वस्तूनां हेमजं बेरमुत्तमम्
उक्ततालप्रमाणेन कारयेद्बेरमुत्तमम् १६
सर्वं बेरप्रमाणेन कुर्याद्धीनं न कारयेत्
मानोत्कृष्टं प्रकर्तव्यं अप्रकृष्टं न कारयेत् १७
कृत्वैवं विधिवद्बेरं पुनः स्थापनमारभेत्
स्वायंभुवस्य लिंगस्य पैण्डिकस्य च जीर्णिते १८
इष्टिकायां सुजीर्णायां पुनस्सन्धानमाचरेत्
पंचांगानां क्षयं दृष्ट्वा शिलायां बन्धयेद्दृढम् १९
शैलजेषु च हीनेषु एकदेवविहीनकम्
एकांगुलप्रमाणेन हीनाधिक्यं न दोषभाक् २०
तमेवांगं समं कुर्यात् सकलांगे ततोद्धरेत्
तत्तल्लक्षणमार्गेण कुर्यात्स्वायंभुवादिके २१
पौरुषेषु च लिंगेषु शैलजे शैलजं भवेत्
अन्यथा तु न कर्तव्यं कृतं चेत्सर्वदोषकम् २२
पौरुषस्य च लिंगस्य पैण्डिकस्य च जीर्णिते
तत्काले चोद्धृतं पीठं समुद्रे निक्षिपेद्बुधः २३
तत्तदात्तप्रमाणेन तत्प्रमाणानुकं तु वा
कुर्याल्लिंगानुरूपं च पीठं सम्यक्सलक्षणम् २४
पीठबन्धं विना कुर्यात्पीठबन्धविचक्षणः
अष्टबन्धविधिं कुर्यात् शास्त्रदृष्टेन कर्मणा २५
स्वायंभुवादिलिंगेषु अग्निदाहो न दोषभाक्
यागकर्मविधानेन पीठं तु स्थापयेद्बुधः २६
पुनःस्थापनमार्गेण कुर्याद्वै देशिकोत्तमः
मण्डपे जीर्णिते काले पूर्वोक्तविधिना कुरु २७
प्राकारे जीर्णिते तत्र संधानं पूर्ववत्क्रमात्
कर्णकूटादिहीनं चेद् अखिलं चेत्ततोद्धरेत् २८
प्रथमेष्टकां न्यसेत्तत्र शैलजे शैलजं न्यसेत्
पुरातनकृतात्कालात् प्राकारं न समं यदि २९

मुखादन्यस्तु सर्वेषु समं कुर्याद्विधानतः
पुरातनकृतात्कालात् सलक्षणयुतं यदि ३०
तेन मानेन कर्तव्यं सालानामपि सर्वशः
इष्टकाजीर्णदेशेषु पुनस्सन्धानमाचरेत् ३१
श्रद्धया शैलजाभिश्चेन्मानाधिक्यं तथा भवेत्
एवमेव प्रकारेण गोपुरादीनि कारयेत् ३२
द्वारगोपुरजीर्णेषु तानेव संगृहेद्वनात्
स्थपतिश्च विशेषेण शास्त्रमार्गेण कारयेत् ३३
पश्चान्मार्गेण तान्येव संगृह्याभिस्तरुः क्रमात्
पश्चात्तत्तत्प्रदेशेषु योजयेत्स्थपतिस्तथा ३४
एवं तु षट्प्रकारेण अशक्तश्चेन्न कारयेत्
कूटे च मालिकायां तु जीर्णकाले ततोद्धरेत् ३५
नव कर्म प्रकुर्यात्तु यथा लाभं च संगृहेत्
बाणलिंगस्य जीर्णे तु त्र्यंगुलादधिकं यथा ३६
उद्धारक्रममार्गेण समुद्रे निक्षिपेद्बुधः
अन्यद्वा बाणलिंगं वा स्थापयेद्विधिना बुधः ३७
पौराणिकस्य लिंगस्य यवमानक्षयं यदि
संप्रोक्षणं ततः कुर्यात् शास्त्रदृष्टेन कर्मणा ३८
येन कर्म प्रकारेण न निर्दिष्टं न निश्चयम्
एतत्पौराणिकं लिंगं पारंपर्येण नामकृत् ३९
तस्य लिंगस्य जीर्णे तु खण्डस्फोटादिके सति
तस्यैव पुरतः सम्यङ्गिश्रलिंगं प्रतिष्ठयेत् ४०
यवान्तरप्रमाणेन हीनं चापि न दोषभाक्
तस्मादधिकहीनं चेत्स्वर्णेन रजतेन वा ४१
ताम्रपट्टेन वा कुर्याद् अथ संपूरणं बुधः
पुनःस्थापनमार्गेण कारयेल्लिंगवद्धवेत् ४२
एकद्रव्यकृतं लिंगं तत्पुराणं न विद्यते
अष्टादशपुराणेषु लिंगं पौराणमार्गतः ४३
मूलशास्त्रविधानेन कुर्यात्पौराणिके विधौ

महाबेरेषु यद्यंगं जीर्णितं यदि संभवेत् ४४
तत्तदंगं पुनः कुर्यात् सन्धानं तस्य वस्तुना
उत्तमांगविहीने तु तत्र पंचाग्निनाद्रवम् ४५
पुनस्सलक्षणं कुर्यात्तद्रूपं च विशेषतः
संप्रोक्षणं ततः कुर्यात्पूर्वोक्तविधिना बुधः ४६
एतत्सामान्यमित्युक्तं विशेषस्त्वधुनोच्यते
प्रासादे जीर्णिते काले सद्यः सन्धानमाचरेत् ४७
न तिथिर्न च नक्षत्रं न वा राह्वंशकास्ततः
वर्जयेत्तु प्रयत्नेन शीघ्रं कृत्वा प्रदक्षिणम् ४८
प्रमादाज्जीर्णिते काले पूजानैवेद्यकादिभिः
उत्सवादीनि सर्वाणि कृतं चेदाक्षसास्पदम् ४९
भूतगन्धर्वयक्षादिपिशाचा ब्रह्मराक्षसाः
प्रेताश्चैवाल्पशून्यत्वादाश्रयन्ति न संशयः ५०
कुर्वन्ति ते भयं व्यग्रं दुर्भिक्षं मरणं नृणाम्
तस्मात्सर्वप्रयत्नेन कालापेक्षं विना कुरु ५१
देहं प्रासादमित्युक्तं देही लिंगमिति स्मृतम्
उभयोरन्तरं नास्ति तस्मादित्थं + भावयेत् ५२
स्थूललिंगं विमानं च सूक्ष्मलिंगं सदाशिवः
सदाशिवस्य तन्मध्ये शिवमेवं विचिन्तयेत् ५३
अथवान्यप्रकारेण स्थूललिंगे सदाशिवम्
अन्तर्लिं गे शिवं ज्ञेयं भावयेद्देशिकोत्तमः ५४
व्यापकव्याप्तिरूपेण लिंगमेवं विमानकम्
तत्तद्व्याप्तमिदं ज्ञेयं +++ तत्क्रमात्ततः ५५
लिंगाभावे तु पीठं स्याद्विमानं लिंगवद्विदुः
आवाहनादिपूजां च बलिं सर्वं समाचरेत् ५६
विषयादि यजेत्कर्म विमाने सर्वमाचरेत्
विमानहीने यत्कर्म तत्कर्मनिष्फलं भवेत् ५७
भौमादिस्तूपिपर्यन्तं शिवरूपमिति स्मृतम्
देहपूर्णं यथा काल देहीदेहं न मुञ्चति ५८

सांगोपांगप्रत्यंगं शरीरांगं तदुच्यते
शिरस्थूपिगळहीनं च प्रायश्चित्तमिति स्मृतम् ५९
आदौ तु निश्चयद्रव्यं हीने वा दोषकारकम्
तद्दोषशमनार्थाय प्रायश्चित्तं तु कारयेत् ६०
अकल्पितं तु तद्द्रव्यं हीने दोषं न विद्यते
मार्जनप्रोक्षणाहीने स्नानकर्म करस्तथा ६१
सौरपूजाविहीने च पुण्याहं गव्यहीनके
लम्बोदरार्चनाहीने रन्ध्रार्चनविहीनके ६२
पाद्यमाचमनं चार्घ्यहीने स्नानविहीनके
वस्त्रमाभरणाहीने गन्धपुष्पविहीनके ६३
नैवेद्यं चोपदंशं च हीने पानीयहीनके
मुखवासविहीने च हुन्तत्वमुत्सवेऽपि च ६४
धूपदीपविहीने च आरात्रिकविहीनके
भस्मताम्बूलहीने च दर्पणच्छत्रहीनके ६५
चामरं खड्गहीने च वेदस्तोत्रविहीनके
पुराणश्रवणे हीने पंचांगश्रवणेऽपि च ६६
नृत्तगानं च वाद्यं च चण्डार्चनविहीनके
एवमादिसमुत्पन्ने निष्कृतिं च वदाम्यहम् ६७
मार्जनप्रोक्षणे हीने गोगणानां विनाशनम्
जलसंप्रोक्षणं कुर्याद्द्रव्येन प्रोक्ष्य भूतले ६८
कालातिक्रमणार्थाय शान्तिकुंभाभिषेचयेत्
तद्दोषशमनार्थाय व्योमव्यापि शतं जपेत् ६९
हीने कर्मकलास्थानं दुर्भिक्षं जायते भुवि
स एव स्पर्शितं द्रव्यं वर्जयेत्तत्प्रयत्नतः ७०
अथवालिंगबिम्बस्य स्पर्शितं चेद्विशेषतः
मृद्भाण्डानि विसृज्याथ स्नपनैरभिषेचयेत् ७१
सौरपूजाविहीने च भूपते रोगसंभवः
शान्तिहोमं ततः कृत्वा स्नपनैरभिषेचयेत् ७२
जप्त्वा दिनकरं मंत्रं सहस्रं वा तदर्धकम्

नित्यपुण्याहहीने च तद्राष्टे नश्यति श्रियम् ७३
तद्दोषशमनार्थाय पंचगव्याभिषेचयेत्
पंचगव्यविहीने च महामारी प्रवर्तते ७४
घृतेन स्नापयेच्छंभुं ब्रह्ममंत्रं शतं जपेत्
विघ्नेश्वरार्चनाहीने वाजिवारणनाशनम् ७५
स्नपनं शान्तिहोमं च कारयेत्तु गणेश्वरम्
भक्ष्यापूपादिकं दत्वा विघ्नमंत्रं शतं जपेत् ७६
रन्ध्रार्चनविहीने च दुर्भिक्षं जायते भुवि
शान्तिकुंभस्तु तोयेन देवेशमभिषेचयेत् ७७
द्वारस्थदेवतानां च तत्तन्मंत्रशतं जपेत्
पाद्यं तु हंसदानं च हीने राज्ञा सुनाशनम् ७८
तद्द्रव्यं द्विगुणं दद्यात्कन्यसं दध्या सुपादयेत्
मूर्तिकुंभस्थतोयेन पूजयेत्परमेश्वरम् ७९
आचम्यार्घ्यविहीने च पाद्यद्रव्यं विधानवत्
स्नानद्रव्यविहीने च तद्द्रव्यं जलवर्जितम् ८०
तद्द्रव्यं द्विगुणं दद्यात् पंचाशत्कलशोदकैः
स्नापयेत्परमेशानं व्योमव्यापि समुच्चरन् ८१
वस्त्रदानविहीने च महाव्याधिसमुद्भवः
त्वक्कषायोदकेनैव स्नापयेत्परमेश्वरम् ८२
वस्त्रयुग्मं ददेच्छंभोः युवा वस्त्रेति मंत्रतः
अष्टोत्तरशतं जप्वा अन्यसंध्यासु दापयेत् ८३
भूषणं चोपवीतं च हीने दारिद्र्यसंभवः
शान्तिकुंभोदकैः स्नाप्य अघोरेण शतं जपेत् ८४
गन्धद्रव्यविहीने च तद्द्राष्ट्रं भयमावहेत्
अस्त्रोदकेन संस्नाप्य तद्द्रव्यद्विगुणं भवेत् ८५
पुष्पपत्रविहीने च अनावृष्टिर्भविष्यति
अन्यैश्च सर्वदेवांश्च तृप्तिराप्नोति दापयेत् ८६
पादप्रक्षाळनं कृत्वा पश्चाद्वास्तु प्रवेशयेत्
ब्रह्मस्थानं तु संकल्प्य देवाग्रे वीथिमध्यमे ८७

भूतपीठेन्द्रमध्ये वा वास्तुमध्ये प्रकल्पयेत्
पूर्वाग्निश्च यमश्चैव निर्ऋतिर्वरुणवायुषु ८८
कुबेरमीशसंयुक्ता यथादेवबलिं क्षिपेत्
बलिस्थाने मया तस्य अन्यस्थानेषु वर्जयेत् ८९
मृगयात्रादिति सश्च वास्तुबाह्येषु यानकम्
मध्याह्ने वाथ सायाह्ने अर्धरात्रे बलिं ददेत् ९०
ग्रामशान्तिबलिं कुर्यात् सर्वाभीष्टफलप्रदम्
तद्ग्रामवासिनः सर्वे बलदं बलिरुच्यते ९१
ग्रामशान्तिबले हीने तद्ग्रामे वास्तुनाशनम्
परचक्राद्भयं राज्ये राजा निर्जयमाप्नुयात् ९२
तद्राष्ट्रवासिनः सर्वे ज्वरमार्यादिपीडिताः
तस्मात्सर्वप्रयत्नेन ग्रामशान्तिबलिं ददेत् ९३
तदन्ते चोत्सवं कुर्यात् सर्वकर्मफलप्रदम्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ९४
इति सूक्ष्मशास्त्रे जीर्णोद्धारविधिः सप्तपंचाशत्पटलः

४९
महाशान्तिमहं वक्ष्ये शृणु त्वं तत्प्रभंजन
शिवलोकपदं नित्यं शिवप्राप्तिकरं शुभम् १
सर्वशत्रुक्षयकरं सर्वपातकनाशनम्
प्रजावृद्धिकरं पुण्यं भोगमोक्षप्रदायकम् २
श्रावणे श्रोणनक्षत्रे प्रोष्ठे तु पूर्वभाद्रके
आश्विने मासि चाश्वक्षे कार्तिके मासि कार्तिके ३
आर्द्रर्क्षे चार्द्रमासे तु पुष्ये पुष्यं प्रशस्यते
माघमासे मघर्क्षे तु फाल्गुने मासि चोत्तरे ४
चैत्रमासे तु चित्रर्क्षे वैशाखे मासि शूर्पके
मूलर्क्षे ज्येष्ठमासे तु आषाढे चोत्तराढके ५
अथवा पूर्वपंचम्यां मासे मासे व्रतं चरेत्
नद्यब्धिवापि कूले वा नगाग्रे वा महावने ६

ग्राममध्ये सभास्थाने देवरागसमीपके
भूमिं संशोध्य विधिवत् प्रपां कृत्वातिसुन्दरम् ७
शिवलिंगं समापाद्य सहस्त्रं वा तदर्धकम्
तदर्धं वा शतं वापि तदर्धार्धमथापि वा ८
मृद्दारुशैललोहैर्वा धातुजैः क्षणिकैस्तु वा
रत्नजैर्वा विशेषेण पूजार्थं संप्रकल्पयेत् ९
यवत्रयं समारभ्य यवैरेको विवर्धनात्
यावद्द्विशतसंख्यान्तं मृल्लिंगस्योदयं भवेत् १०
कल्पयेत्क्षणिकं लिंगं अर्धार्धां गुलविवर्धनात्
एकांगुलं समारभ्य अर्धार्धां गुलवर्धनात् ११
चतुर्विं शांगुलं यावद्दारुलिंगं प्रकल्पयेत्
यथालाभप्रमाणेन रत्नलिंगं प्रकीर्तितम् १२
माषत्रयं समारभ्य माषैकेन विवर्धनात्
यावदष्टसहस्त्रान्तं शैललिंगोदयं भवेत् १३
कल्पयेत्क्षणिकं लिंगं यथा कामप्रमाणकम्
मृद्दारुशैललोहानां विशेषः कश्चिदस्ति हि १४
लिंगयामे तु वेदांशे त्वेकांशं लिंगविस्तृतम्
अथवा गुणभागैकं पंचांशे द्व्यंशविस्तृतम् १५
लिंगायामे गुणांशेंशं तन्मूले चतुरश्रकम्
अर्चाभागमिदं वृद्धि शेषं पिण्डप्रवेशनम् १६
शेषं सुवृत्तरूपं ++ वा सर्वं विशेषतः
लिंगायामं त्रिधा कृत्वा व्योमांशं भूगतं भवेत् १७
एकांशं पीठबन्धं स्याद् एकांशमर्चनार्हकम्
अथवा पंचभागे तु त्र्यंशपीठनिवेशनम् १८
पूजाभागं त्रिभागं स्यात् सप्तभागे द्विकोलकम्
अर्चाभागमिदं विद्धि शेषं पिण्डप्रवेशनम् १९
पूजांशोदयतुंगं तु पंचविंशतिभाजिते
एकैकं विभजेद्धीमान् चत्वारिंशतिसंख्यकम् २०
सहस्त्रलिंगमेवं हि अधमस्य विधिं शृणु

लिंगोदये तु पंचाशत् भागं कृत्वा विचक्षणः २१
चत्वारिंशेंशपंचांशं कृत्वा लिंगयुतं भवेत्
पूजांशोदयतुंगं तु दशभागविभाजिते २२
एकंपंचाशदंशेन लिंगं पंचाशतं भवेत्
शिवोदये तु वेदांशे एकेन क्षेत्रभागयेत् २३
अष्टोत्तरशतं लिंगं परितः संप्रकल्पयेत्
शिवोदये तु पूजांशे एके पंचविभाजिते २४
पंचविंशतिलिंगः स्यात् पंचांशद्विभजे सति
लिंगद्विशतपंचांगं लिंगस्य परिकल्पितः २५
अल्पलिंगस्य तारार्धं पादं वाष्टांशमेव वा
महालिंगस्य विस्ताराद् ऊर्ध्वे संयोज्य पार्श्वयोः २६
तन्मानामल्पलिंगस्य महालिंगद्विनिर्णिका
लिंगोपरि भवेल्लिंगं न कर्तव्या कदाचन २७
अन्तराळे भवेल्लिंगमध्यसंकल्पयेत्क्रमात्
शिरोवर्तेन युक्तं वा हीनं वा कल्पयेद्बुधः २८
रत्नलिंगविधानोक्तमार्गेण स्थापयेद्बुधः
एवं संस्थाप्य पूर्वेद्युर्नवमे सप्तमेऽपि वा २९
निश्चित्य दिवसात्पूर्वे सायाह्नसमये बुधः
स्नानं कृत्वा विधानेन यजमानसमन्वितम् ३०
प्रपामण्डपमाविश्य भूतशुद्धिवदाचरेत्
सकळीकरणं कृत्वा प्रदक्षिणमथाचरेत् ३१
लिंगं संस्थापयेन्मूलं यजमानसमन्वितः
जपान्ते पराङ्मुखो भूत्वा मौनी तु विजितेन्द्रियः ३२
मण्डपस्योत्तरे पार्श्वे स्नावयेत्सैकतोपरि
ब्राह्मे मुहूर्ते उत्थाय पादप्रक्षाळनं कुरु ३३
मुखशुद्धिं ततः कृत्वा चाचम्य देशिकोत्तमः
भस्मना तिलकं दत्वा मूलमंत्रं जपेत्ततः ३४
यजमानसमोपेतं स्नानं कृत्वा यथाविधि
संध्यादिवन्दनं कृत्वा नित्यकर्मसमाप्य च ३५

प्रपामराडपमाविश्य सकळीकृतविग्रहः
मराडपं पूजयेद्विद्वान् मराडपं कल्पयेऽपि वा ३६
चतुर्द्वारं समभ्यर्च्य पूर्वोक्तविधिना सह
पूजयेदथ रक्षार्थं अस्त्रराजं सशक्तिकम् ३७
प्रपामराडपमध्ये वा पश्चिमे वा विचक्षणः
विन्यसेत्तु महापीठमत्रेन्वद्दारुमयैस्तु वा ३८
उपर्यास्तरणं कृत्वा शुद्धवस्त्रादिकैर्यथा
शिवासनं च तस्योर्ध्वे लिंगसंख्यां प्रकल्पयेत् ३९
पुरायाहं वाचयेत्तत्र पंचगव्यामृतं तथा
संकल्प्य लिंगान्संगृह्य स्नानवेद्युपरि न्यसेत् ४०
प्रक्षाळ्य चास्त्रमंत्रेण पंचगव्यामृतादिकैः
लिंगमंत्रेण संस्थाप्य स्थापयेत्तांच्छिवासने ४१
तन्मंत्रेण तु चाभ्यर्च्य गन्धपुष्पसधूपकम्
दीपं नैवेद्यताम्बूलं दापयेत्तदनन्तरम् ४२
नीलोत्पलैर्वा कह्लारैः पद्मैर्वा श्वेतपंकजैः
अर्कैरारग्वधैश्चापि चम्पकैर्वा विचक्षणः ४३
रत्नैर्वा कनकेनाथ कर्पूरशकलेन वा
अथवा बिल्वपत्रेण पूजयेल्लिंगमंत्रतः ४४
पूजार्थमाहृतं पुष्पं सुगृह्य शुद्धपात्रके
निरीक्षणादिभिः शोध्य धूपदीपं प्रदापयेत् ४५
यजमानमथाहूय संप्रोक्ष्यार्घ्यजलेन च
भस्मना तिलकं कल्प्य शिवमंत्रेण देशिकः ४६
शिवहस्तं च संकल्प्य यजमानस्य मूर्धनि
तं संस्थाप्य यजेन्मंत्री मूलमष्टोत्तरं शतम् ४७
पूजार्थमाहृतं पुष्पं शंखध्वनिसमन्वितम्
यजमानकरे दद्याद् अर्चयित्वा विचक्षणः ४८
अंशं प्रतिददेत्पुष्पं तत्तन्मंत्रं समुच्चरन्
एकलिंगे विशेषोऽस्ति परितः पीठबाह्यके ४९
त्रिहस्तं वा तदर्धं वा स्थलमानं व्यपोह्य च

पूजांशोदयद्वारान्तं तन्मानं व्याप्य मण्डलम् ५०
तद्बाह्ये वेदिकामानं सप्ततालसमुन्नतम्
उत्सेधसमविस्तारं तदर्धार्धमथापि वा ५१
त्रिमेखलयुतं वापि द्विमेखलयुतं तु वा
चतुरश्रं सुवृत्तं वा परितः कल्पयेत्क्रमात् ५२
सुधया सिकतैस्तत्र पूरयेच्छुद्धवारिणा
तद्वारिमण्डलं दृष्ट्वा लिंगसाहस्रकं बुधः ५३
पूर्ववत्पूजयेद्विद्वान् लिंगस्य परितः क्रमात्
अग्रादिमूलपर्यन्तं भुक्तिमुक्तिप्रदायकम् ५४
मूलादिचाग्रपर्यन्तं पूजा मुक्तिफलप्रदा
लिंगे चावरणं यद्यत्क्रमेण वारिमण्डले ५५
यजमानेन चाभ्यर्च्य पूर्ववद्देशिकोत्तमः
लिंगं प्रत्याढकार्धेन नैवेद्यं परिकल्पयेत् ५६
धूपदीपं ततो दत्वा लिंगावरणमार्गतः
नृत्तान्तं पूजयेद्विद्वान् लिंगस्यावरणं प्रति ५७
गीतनृत्तादिकं सर्वं लिंगस्य परितः क्रमात्
संकल्प्य लिंगपूजान्ते शिवमंत्रशतं जपेत् ५८
इष्टबन्धुजनैस्सार्धं यजमानसमन्वितम्
तद्वारिमण्डले स्नात्वा यद्देवादेति मंत्रतः ५९
अनेन विधिमार्गेण स्नात्वा तद्वारिमण्डले
आचार्यं पूजयेत्तत्र गोभूमीकांचनादिकैः ६०
सोऽपि पापैर्विनिर्मुक्तः शिवसायुज्यमाप्नुयात्
महाशान्तिव्रतं दृष्ट्वा नत्वा लिंगसहस्रकम् ६१
यः कुर्वं च्छिवलोकेऽपि शिवेन सह मोदते
आचार्यं पूजयेत्तत्र गोभूमिकांचनादिकैः ६२
अस्य व्रतोपकाराणां नववस्त्रं प्रदापयेत्
महाशक्तिव्रतं प्रोक्तं गौरीव्रतमतः शृणु ६३
इति सूक्ष्मशास्त्रे क्रियापादे महाशक्तिव्रतविध्यष्टपंचाशत्पटलः

५०

वक्ष्ये नित्यार्चने हीने प्रायश्चित्तविधिक्रमम्
प्रायो विनाश इत्युक्तं चित्तं संधानमुच्यते १
विनाशस्य तु संधानं प्रदाधिष्ठानमंगळम्
उपांगं कूटशाला च पंक्त्यंगं नासिपंजरम् २
अमंत्रमर्चने काले चसावादीं स्पृशेत्ततः
अंगहीनादिना स्पृष्ट्वा प्रासादांगविहीनके ३
बेरालयाद्गता शक्तिर्वसेदादित्यमण्डले
द्वादशाब्दावसाने तु शिवे शक्तिर्विलीयते ४
तदूर्ध्वे स्थानशक्तिश्च गम्यते परमे पदे
शून्यालयमिति प्रोक्तं सर्वदोषसमुद्भवम् ५
तस्मादुद्धारणं चाशु शास्त्रदृष्टेन कर्मणा
कर्षणादिप्रतिष्ठान्तं यन्नवीकरणं कुरु ६
प्रासादजीर्णिते काले योजयेल्लिंगमध्यमे
लीयन्ते सर्वतत्वानि तस्माल्लिंगं समर्चयेत् ७
पूर्वलिंगे विहीनं चेत् शिवे शैवं नियत्नयेत्
यज्जीर्णोद्वासनं कृत्वा विमाने पूजयेच्छिवम् ८
एवमन्योन्यभावेन शिवयोगं विचिन्तयेत्
पंचावरणदेवांश्च धामपालांस्तथैव च ९
अन्यांश्च सर्वदेवांश्च मूले चैव समर्पयेत्
एवं ज्ञात्वा विशेषेण स्थपतिः स्थापकाज्ञया १०
जीर्णोद्धृतिं ततः कृत्वा विमानं लक्षणान्वितम्
देशिकः सुप्रसन्नात्मा शिवद्विजकुलोद्भवः ११
स्नानोक्तविधिना स्नात्वा शुक्लवस्त्रोत्तरीयकः
शुक्लयज्ञोपवीती च पंचांगभूषणैर्युतः १२
प्रासादं च प्रविश्याथ पादप्रक्षाळनं कुरु
देवदेवं नमस्कृत्य त्रिपुण्ड्रं विधिना नयेत् १३
सकळी करणं कृत्वा सद्योंकुराणि वापयेत्
प्रासादाग्रे विशेषेण गोमयालेपनं कुरु १४

पिष्टचूर्णैरलंकृत्य शालिभिः स्थरिण्डलं कुरु
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् १५
तण्डुलैश्च तिलैर्दर्भैः पुष्पैश्चैव परिस्तरेत्
सौवर्णं राजतं ताम्रं अथवा मृण्मयं भवेत् १६
पक्वबिम्बफलाकारान् कलशान्गृह्य देशिकः
तन्तुना वेष्टयित्वा तु एकद्वित्रियवान्तरम् १७
प्रक्षाळ्य धूपितान्सर्वान् स्थापयेद्वामपार्श्वके
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्तु शिवास्त्रकैः १८
कुंभानुद्धृत्य संप्रोक्ष्य स्थापयेत्स्थरिण्डलोपरि
सकूर्चान्सापिधानांश्च वस्त्रहेमसमन्वितान् १९
गन्धोदकेन संयुक्तान् साधयेत्साधकोत्तमः
व्याप्तिव्यापकभावेन ज्ञात्वा सर्वं विशेषतः २०
सर्वव्यापिगतं देवं निष्कळं सकळाकळम्
कुंभमध्ये समाबाह्य पंचावरणसंयुतम् २१
अष्टादशगणांश्चैव लोकपालान्न्यसेत्क्रमात्
त्रयस्त्रिंशादिदेवांश्च ध्वजादिपरिवारकान् २२
पंचावरणदेवांश्च स्थापयेत्कुंभमध्यमे
आवाहनोक्तमार्गेण ध्यात्वा देवं सदाशिवम् २३
शक्तिबीजं च वर्धन्यां विन्यसेत्तु विधानतः
अभितः कलशानष्टौ अष्टविद्येश्वरात्मिकान् २४
स्वस्वबीजैः समभ्यर्च्य गन्धपुष्पादिना सह
अग्न्याधानादिकं सर्वं प्रागुक्तविधिना कुरु २५
तत्वव्याप्तिक्रमेणैव हुत्वा पूर्वोक्तसंख्यया
समिदाज्यचरूंश्चैव तिलसर्षपमुद्गकान् २६
गुळं च सक्थुलाजं च कदळीफलसंयुतम्
सद्यादिकास्त्रपर्यन्तं हुत्वा पूर्वोक्तवद्बुधः २७
सहस्रं वा तदर्धं वा मूलेन जुहुयाद्घृतम्
तद्दशांशं हुनेच्चांगमंत्रैश्चैव पृथक्पृथक् २८
एवं जागरणं रात्रौ प्रातः संकोचितं कुरु

देशिकः सुप्रसन्नात्मा स्नानं कृत्वा विधानतः २९
सकळीकरणं कृत्वा हुनेद्देवान्पृथक्पृथक्
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्ततः ३०
अघोरास्त्रं शिवास्त्रं च तथा पाशुपतास्त्रकम्
प्रत्येकं शतकं हुत्वा मृत्युंजयसमन्वितम् ३१
पूर्णाहुतिं च शिरसा घटमुद्धारयेत्ततः
हर्म्यप्रदक्षिणं कुर्यात् स्वस्तिसूक्तसमन्वितम् ३२
प्रविश्य गर्भगेहं तु स्थापयेत्स्थण्डिलोपरि
अत्र किंचिद्विशेषोऽस्ति स्थिरराश्युभयं विना ३३
चरराशिषु सर्वेषु योजयेल्लिंगमध्यमे
प्राणप्रवाहमार्गेण ध्यात्वा देवं सदाशिवम् ३४
वर्धन्यां बीजमादाय शक्तिभागे न्यसेद्बुधः
कुम्भोदैः स्नापयेद्देवं वर्धन्यद्भिस्तु पिण्डकाम् ३५
अभितोष्टघटोदैश्च स्नापयेत्स्वस्वकुंभकैः
अर्चनोक्तं समभ्यर्च्य प्रभूतहविषं ददेत् ३६
मण्डपाभ्यन्तरे पूर्वे पीठोपरि बलिं ददेत्
ध्वजादिबलिपीठान्ते देवानभ्यर्च्य एकशः ३७
नित्यनैमित्तिकं चैव नित्योत्सवमहोत्सवम्
अन्यानि सर्वकर्माणि योग्यलिंगे समाचरेत् ३८
पुनः स्थपतिमाहूय स्थापक ++ तिश्रयेत्
संवत्सरं समावाह्य यावदाद्वादशाब्दकम् ३९
तेष्वन्तरे गृहं कृत्वा त्वां पुनःस्थापयाम्यहम्
स्थपतिं प्रतिज्ञया कर्तुः ज्ञापयेद्देशिकोत्तमः ४०
विज्ञापयेत्तु देवेशं प्रणम्यांजलिमुद्रया
जीर्णोद्धारोक्तमार्गेण स्थपतिस्सम्यगाचरेत् ४१
शिल्पकर्मणि संजाते संधाने तु विशेषतः
शिल्पिसंस्पर्शमात्रेण नित्यपूजा विरोधकृत् ४२
पुण्याहं वाचयेत्तत्र पंचगव्याभिषेचनम्
गन्धोदकेन संस्नाप्य पवमानमुदीरयन् ४३

शान्तिहोमं ततः कृत्वा ब्राह्मणान्भोजयेत्ततः
अर्चनोक्तं समभ्यर्च्य दिनं प्रति दिनं प्रति ४४
जीर्णदोषो न दोषः स्यात् शिवयागं समाचरेत्
पूजान्ते शिल्पिभिः स्पृष्ट्वा विमानाप्तावमानकम् ४५
कमपूर्णान्तिमेवोक्तं पुनश्च स्थापनं कुरु
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः ४६
भक्तांश्च परिचारांश्च यथा शक्त्या तु भोजयेत् ४७
इति सूक्ष्मशास्त्रे जीर्णोद्धारणविध्येकोनषष्टिपटलः

५१
मकुटस्य विधिं वक्ष्ये शृणु त्वं तत्प्रभंजन
तल्लक्षणं त्रिधा प्रोक्तं किरीटं च करण्डकम् १
जटामकुटमेतेषु जटामकुटलक्षणम्
वक्ष्यते निष्कळस्यापि सकळस्य च सांप्रतम् २
स्वर्णसंख्याविधानं च श्रेष्ठमध्याधमक्रमात्
त्रिसहस्त्रं सत्रिशतं सत्रित्रिंशतिनिष्ककम् ३
त्रिगुञ्जेस्त्रिंशतं सत्रित्रिंशन्निष्कं तु गुंजकम्
सत्रिंशच्छतनिष्कं तु त्रिगुब्जैः शिवमौक्तिषू ४
शतं विना तु तन्मानं सोमास्कन्देषु मौलिषु
तन्मानद्विगुणं वाथ त्रिगुणं वा विधीयते ५
तत्तत्संख्याविधानेन शुद्धजाम्बूनदं गृहेत्
हैमे वा ताम्रपात्रे वा क्षिप्त्वा तन्मूलमंत्रतः ६
सर्वालंकारसंयुक्तं अरोप्यज ++र्णतः
अथवा गब्लिकोर्ध्वे वा नयेद्ग्रामप्रदक्षिणम् ७
शिवस्य पुरतो वापि देवालयसमीपतः
स्नानं कृत्वा गुरुश्रेष्ठः कर्तृदैवज्ञसंयुतः ८
स्वर्णकारेण संयुक्तं कर्मारम्भं समाचरेत्
तदर्च्य पंचब्रह्मेण होमं कुर्याद्यथाविधि ९
पीठहोममये तत्र निधायास्त्रेण हाटकम्

अवसा कल्पते वापि तन्मंत्रेण प्रभाकरम् १०
गन्धपुष्पादिनाभ्यर्च्य त्रिधा तेनैव देशिकः
संतापयेत्ततः पश्चात् स्वर्णकारः क्रियां चरेत् ११
देहबन्धांगुलं गृह्य सकळे तत्प्रमाणतः
चतुर्विं शांगुलं वापि त्रिस्सप्तांगुलमेव वा १२
अष्टादशांगुलं वाथ मकुटोत्सेधकं कुरु
सकळेऽप्येवमेवं स्यान्निष्कळे तु विधीयते १३
शिरो वर्तनतस्तारं नाहं तत्सममुच्यते
विस्तारसमतुंगं स्यात् सप्ताष्टनवकांशके १४
एकांशेनाधिकं वापि कुर्यादायादिसंयुतम्
तुंगतारवशेनैव आयादीनपि कारयेत् १५
विस्तारसमतुंगं स्यात् सप्ताष्टनवकोणके
एकांशेनापि कं वापि कुर्यादायादिसंयुतम् १६
तुंगतारवशेनैव आयानामपि कारयेत्
ललाटमुकुळान्तं च मानयेन्मानसूत्रकम् १७
युग्मस्याख्याजटायुक्तं तज्जटापरितो वृतम्
अथवा तिर्यगूर्ध्वस्थजटाभिः परिमण्डितम् १८
अर्का गे तु तदुत्सेधे एकांशेन जटोदयम्
कनिष्ठानामिकामध्यांगुळीनाहमथापि वा १९
ललाटपट्टसंयुक्तं शिरसो वर्तनोर्ध्वतः
चतुष्पूरितसंयुक्तं तदुत्सेधवशेन च २०
अथवा पूरितोत्सेधं तदर्धेन विराजितम्
मौलिमूलविशालं च तत्त्रिभागैकमेव वा २१
तदग्रविस्तरं चैव क्रमेण तु शतं नयेत्
तज्जटोदरमानेन द्विगुणं मुकुळोदयम् २२
तद्रूपं मुकुळं वाथ ++ तद्वत्समाचरेत्
वाचामेन्दुसुगंगाश्च तदर्धं द्वयमानतः २३
वामेर्धशशिसंयुक्तं सव्ये रागर्कपुष्पकैः
नागार्कपुष्पसंयुक्तं नानारत्नोपशोभितम् २४

नानाचित्रक्रियोपेतं मकुटं कारयेद्बुधः
अत्रानुक्तं तु यत्सर्वं युक्त्यालंकारमाचरेत् २५
मकुटस्य विधिः प्रोक्तो मकुटारोपणं शृणु
इति सूक्ष्मशास्त्रे मकुटविधिपटलः

५२
मकुटारोपणं वक्ष्ये शृणु त्वं तत्प्रभंजन
आयुरारोग्यफलदं पुत्रपौत्रविवर्धनम् १
सर्वसिद्धिकरं पुण्यं शत्रुनाशकरं परम्
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने २
राजग्रामानुकूलर्क्षे देवनक्षत्रकेऽपि वा
युद्धारम्भावसाने वा यजमानदिनेऽपि वा ३
मकुटारोपणं कुर्याद्विधिनानेन बुद्धिमान्
प्रासादपूर्वदिग्भागे दक्षिणे चोत्तरेऽपि वा ४
पश्चिमे कांम्यदेशे वा नैर्ॠते वायुगोचरे
ऐशाने पावके वाथ गोपुरद्वारपार्श्वके ५
पंचप्राकारबाह्ये वा भ्यन्तरे वास्तुमध्यमे
मण्डपं कारयेद्विद्वान् मकुटारोपणार्थकम् ६
मकुटारोपणात्पूर्वे ++ स्नानादीनि कारयेत्
रत्नलोहशिलामृद्भिः कर्तव्यं सिंहमासनम् ७
अथवा यज्ञवृक्षैर्वा सिंहासनं प्रकल्पयेत्
आसनं शैलदार्वं चेद्रत्नसंग्रहविधानतः ८
संगृह्यासनमापाद्य पूर्वोक्तलक्षणैस्सह
स्थापनात्पूर्वरात्रौ तु अधिवासनमाचरेत् ९
मकुटं मण्डपात्पूर्वे सौम्ये वा दक्षिणेऽपि वा
नैर्ॠते दिशि देशे वा कलयेद्रंगमण्डपम् १०
गुणवेदकराभ्यां वा द्विद्विहस्तविवर्धनात्
नवमानं प्रकर्तव्यं विंशमेकोनविंशकम् ११
मण्डपं वा प्रवाहं वा कूटाकारमथापि वा

विमानाकृतिकं वापि कल्पयेदंगमरडपम्  १२
चतुर्द्वारसमायुक्तं वेदिकस्य समन्वितम्
परितो ळिन्दमेकांशं द्विभागं वा प्रकल्पयेत्  १३
तत्समं द्विगुणं वापि बाह्ये संचारपंक्तिका
अक्ष्यग्निवेदभूतांशैः चतुर्दिशि मुखभद्रकम्  १४
विस्तारसदृशायामं तलोत्सेधांशमानकम्
अष्टाष्टस्तंभसंयुक्तं दर्भमालासमन्वितम्  १५
द्वारतोरणसंयुक्तं गात्रवेष्टनसंयुतम्
वितानध्वजसंयुक्तं मुक्तादामै विभूषितम्  १६
आढ्यचित्रसमोपेतं तरंगवेष्टनान्वितम्
नानाश्चर्यसमोपेतं मरडपं परिभूषयेत्  १७
मार्जनप्रोक्षणं कृत्वा गोमयेनानुलेपयेत्
स्नानं कृत्वा विशेषेण आचार्यः सकळीकृतः  १८
सामान्यार्ध्यकरो भूत्वा मकुटं मरडपं विशेत्
वास्तुहोमं ततः कृत्वा बलिदानपुरस्सरम्  १९
पर्यग्निकरणं कृत्वा गोमयेनानुलेपयेत्
आचार्यः शिष्यसंयुक्तः स्नानं कृत्वाऽस्त्रमंत्रतः  २०
अन्तर्यागं ततः कृत्वा प्रविशेद्रंगमरडपम्
स्थरिडलं कारयेत्तत्र चाष्टद्रोणेन शालिना  २१
शाल्यर्धतरडुलैः पुष्पैः तिलैर्लाजैः परिस्तरेत्
कुंभानस्त्रेण संक्षाळ्य तन्तुना परिवेष्टयेत्  २२
पूरयेद्गन्धतोयेन कूर्चपल्लवसंयुतम्
सवस्त्रं सहिररायं च नाळिकेरफलैर्युतम्  २३
शिवासनपदं मध्ये विन्यसेत्स्थरिडलोपरि
पूर्वादीशानपर्यन्तं लोकपालघटान्न्यसेत्  २४
आसनाधिपतीनिष्ट्वा मध्यकुंभे तु देशिकः
लोकपालान्समभ्यर्च्य तत्तद्धि घटमध्यमे  २५
नैर्ऋते पीठमध्ये तु ध्यात्वा मरडपरूपिणीम्
संपूज्य गन्धपुष्पाद्यैः नैवेद्यं दापयेत्ततः  २६

कुंभाग्रे स्थरिडलं कृत्वा शिवाग्निं विधिना न्यसेत्
समिदाज्य चरुं लाजान् माषशालियवांस्तिलान् २७
सद्यादीशानपर्यन्तं प्रत्येकं षोडशं हुनेत्
द्रव्यान्ते व्याहृतिं हुत्वा स्पर्शाहुतिमथाचरेत् २८
हैमेन कूर्मं संस्थाप्य पात्रे संस्थाप्य देशिकः
कूर्मं स्पृष्ट्वा हुतिं कुर्यात् पूर्वमंत्रैर्यथाक्रमम् २९
एवं रात्रौ प्रकर्तव्यं प्रभाते स्नानमाचरेत्
देशिकः सकळीकृत्य सोष्णीषः सोत्तरीयकः ३०
मरडपस्य घटान्दृष्ट्वा हुत्वा पूर्णाहुतिं नयेत्
मुहूर्ते समनुप्राप्ते कृत्वाभिषेकमरडपे ३१
मध्यसूत्रं समास्तीर्य पूर्वदक्षिरणमार्गतः
तत्सूत्रवामभागे तु नीत्वा देवांगुलत्रयम् ३२
प्रासादस्य शिवं सूत्रं तत्सूत्रं मध्यमासने
स्थानकस्यासनं चेत्तु दैविके पदमध्यमे ३३
ग्रासीनासनकं यत्तु ग्रात्मार्थं स्थापयेद्बुधः
पुरयाहं वाचयेत्तत्र प्रोक्षयेदस्त्रमंत्रतः ३४
पंचगव्येन संसिध्य पवमानमुदीरयन्
शिलागर्ते न्यसेत्कूर्म पारदेन समन्वितम् ३५
ग्राधारशक्तिमंत्रेरा पूजयेद्देशिकोत्तमः
तस्योर्ध्वे वेदिकां कुर्याद् दिग्दशांगुलमुन्नतम् ३६
उत्सेधाष्टगुणायामं चायताश्रसमन्वितम्
सुधयेष्टकया वापि शालिनैवापि कारयेत् ३७
सिंहासनं तदूर्ध्वे तु स्थापयेच्छिल्पिभिः सह
तस्य कर्मावसाने तु शिल्पिनं परिवर्जयेत् ३८
ग्राचार्यः शिष्यसंयुक्तः तदन्ते स्नानमाचरेत्
सकळीकरणं कुर्यात् सर्वालंकारसंयुतम् ३९
संगृह्य सर्वकलशान् स्वस्तिसूक्तसमन्वितम्
ततः प्रदक्षिरणं कुर्याद् ग्रभिषेकार्हमरडपम् ४०
ग्रासनस्यैव परितः स्थापयेत्कलशान्क्रमात्

शक्रशांकरयोर्मध्ये तदासनघटान्न्यसेत् ४१
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्सिंहमासनम्
मण्डपं चैव संप्रोक्ष्य नैर्ऋतस्तंभमूलके ४२
कुंभान्मंत्रं समादाय चासने परिविन्यसेत्
अन्यकुम्भोदकैः स्नाप्य तत्तदुक्तेन मंत्रतः ४३
मण्डपाधिपतीन्यष्ट्वा नैर्ऋते स्तम्भमूलके
सिंहासनं समभ्यर्च्य पूर्वमंत्रैर्यथाक्रमम् ४४
धूपदीपं ततो दत्वा पुष्पांजलिमथाचरेत्
एवं कृत्वा दिवाकाले सायाह्नसमये बुधः ४५
गणेशमपि संपूज्य पायसान्नं निवेदयेत्
विज्ञाप्य देवदेवस्य मकुटारोपणक्रमम् ४६
आचार्यः शिष्यसंयुक्तः सोष्णीषः सोत्तरीयकः
अस्त्रराजं समादाय चण्डेश्वरसमन्वितम् ४७
छत्रचामरसंयुक्तं वाद्यघोषसमन्वितम्
धूपदीपसमोपेतं सर्वालंकारशोभितम् ४८
पर्वताग्रे नदीतीरे क्षेत्रे वा सिन्धुतीरके
क्षीरवृक्षसमीपे वा मृत्तिकां ग्राहयेद्बुधः ४९
पुण्याहं वाचयेत्तत्र बलिं दत्वा विचक्षणः
पंचगव्येन संसिच्य वाममंत्रेण संगृहेत् ५०
पात्रे संस्थाप्य संपूज्य वस्त्रेणाच्छादयेद्बुदा
देवाग्रमण्डपे वापि अभिषेकार्हमण्डपे ५१
रंगमण्डपके वापि परिवारालयेऽपि वा
प्रविशेत्पूर्वमार्गेण कारयेदंकुरार्पणम् ५२
कौतुकं बन्धयेद्धीमान् देवदेवस्य देशिकः
सहासनेपमाचेत्तु क्रियाभेदो न विद्यते ५३
आचार्यः शिष्यसंयुक्तः प्रविशेद्रंगमण्डपम्
तोरणादीन्समभ्यर्च्य द्वारकुंभपुरस्सरम् ५४
नवकुंभान्समादाय तन्तुना परिवेष्टयेत्
सकूर्चान्वारिसंपूर्णान् सहेमान्वस्त्रसंयुतान् ५५

नाळिकेरफलोपेतान् चूतपल्लवसंयुतान्
कुंभान्संगृह्य वामेन स्थण्डिलोपरि विन्यसेत् ५६
कुम्भमध्ये समभ्यर्च्य मकुटासहमीश्वरम्
अभिषेकार्थमादाय शुद्धपात्रे तु विन्यसेत् ५७
गजकण्ठे समारोप्य सर्वालंकारसंयुतम्
ग्रामप्रदक्षिणं कृत्वा संगृहेद्देशिकोत्तमः ५८
पंचगव्येन संस्नाप्य क्षाळयेच्छुद्धवारिणा
श्वेतवस्त्रेण संमार्ज्य शिवं प्रतिसमाचरेत् ५९
मंजूषे शुद्धपात्रे वा हृदयेन तु विन्यसेत्
कौतुकं स्वर्णपात्रेण बध्वा तेनैव मंत्रतः ६०
क्षौमवस्त्रेण संछाद्य विन्यसेद्वेदिकोपरि
गन्धपुष्पैः समभ्यर्च्य धूपदीपं हृदा ददेत् ६१
ततः शिवाग्निं संकल्प्य पूर्वमार्गेण देशिकः
समिदाज्येन चरुणा प्रत्येकं होममाचरेत् ६२
शतमर्धं तदर्धं वा सद्यास्त्रहृदयेन तु
द्रव्यं प्रति विशेषेण स्पृष्ट्वा मुकुटवीक्षणात् ६३
षड्रसैर्मिश्रचरुणा मूलेन जुहुयाच्छतम्
सर्वद्रव्यं समादाय हव्यवाहेति मंत्रतः ६४
जयादिरभ्याधानं च क्रमाद्राष्ट्रभृतं हुनेत्
पूर्णाहुतिं ततो दत्वा संपूज्य शिवपावकम् ६५
संकल्प्य वायुदिग्भागे स्नपनं पंचविंशतिः
ततौ नैर्ऋृतदिग्भागे देवचिह्नाधिवासरेत् ६६
शक्त्यग्निनागखट्वांग पट्टसं पत्रदण्डकम्
क्षूरिकापद्मचासी च खड्गं वज्रांकुशं गदाम् ६७
धनुः परशुशूलास्त्रं इत्यष्टादशकं भवेत्
सर्वास्त्रं नैर्ऋृते स्थाप्य समभ्यर्च्यास्त्रनामतः ६८
काहळं मुरजं शंखं दर्पणं छत्रचामरम्
मधुपूरितकुंभं च दधिपूरितकुंभकम् ६९
घृतपूरितकुंभं च दूर्वाग्रकदळीत्रयम्

नाळिकेरफलं चैव कर्त्रिका नखशोधनम्  ७०
केशशोधनकं चैव दन्तशोधनमंजनम्
ओड्याणं योगपट्टं च मात्रादण्डं सवेत्रकम्  ७१
धर्मबुद्धोपकरणं भस्मकुंभं मृगाजिनम्
कालाची जलभाण्डं च पादुके चाग्निकोणके  ७२
प्रणवे चैव चाभ्यर्च्य मध्ये शय्यागृहे बुधः
तद्वारोचितवस्त्रं च भूषणं चैव विन्यसेत्  ७३
कपिलाश्वगजं चैव बन्धयेदल्पदूरके
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत्  ७४
आचार्यः सकळीकृत्य सोष्णीषः सोत्तरीयकः
हेमांगुळीयकटकहारकुण्डलमण्डितः  ७५
सितचन्दनलिप्तांगो हेमयज्ञोपवीतकः
प्रातस्संध्यावसाने तु देवदेवं प्रणम्य च  ७६
शिबिकादौ समारोप्य नयेत्तद्रंगमण्डपे
द्रव्याणि दर्शयित्वा च पूर्णाहुतिमथाचरेत्  ७७
शिवाग्निं च विसृज्याथ कुम्भे संयोज्य देशिकः
पुण्याहं वाचयेत्तत्र स्नानकर्म समाचरेत्  ७८
पंचगव्यामृतैः स्नाप्य स्नपनार्हैश्च कुंभकैः
ब्रह्मकुंभोदकैश्चापि सौरादिकलशोदकैः  ७९
संस्नाप्य च महादेवं मंत्रपुष्पं प्रदापयेत्
मंत्रान्नं दापयेत्पश्चाद् देवं शय्यागृहं नयेत्  ८०
गन्धपुष्पैः समभ्यर्च्य नैवेद्यं दापयेद्गुरुः
धूपदीपं ततो दत्वा ताम्बूलं दापयेत्ततः  ८१
अस्त्रेशान्पूजयेत्तत्र स्तोत्रनृत्तादिकारयेत्
तद्द्वारोचितवस्त्राद्यैः अलंकृत्य महेश्वरम्  ८२
सर्ववाद्यसमोपेतं सर्वालंकारसंयुतम्
जयशब्दसमोपेतं विशेन्मकुटमण्डपम्  ८३
सिंहासने समारोप्य व्याघ्रचर्माम्बरान्विते
भूषणैर्गन्धमाल्याद्यैः अलंकृत्यातिसुन्दरम्  ८४

आचार्यः शिष्यमाहूय वस्त्रबन्धं समाचरेत्
पंचांगभूषणं दत्वा परिवेषसमन्वितम् ८५
शंखदुंदुभिघोषैश्च गीतनृत्तसमाकुलम्
सर्वभक्तजनैस्सार्धं यजमानसमन्वितम् ८६
ग्रामप्रदक्षिणं कृत्वा देवाग्रे विन्यसेद्बुधः
पुण्याहं वाचयेत्तत्र मकुटारोपणासनम् ८७
मुहूर्ते समनुप्राप्ते शंखघोषसमन्वितम्
गीतमंगळवाद्यैश्च स्तोत्रशब्दसमन्वितम् ८८
अभिषेकं समादाय मंत्रेणैव तु भूषयेत्
गन्धपुष्पैस्समभ्यर्च्य धूपदीपादिकं ददेत् ८९
परिवेषक्रमं कल्प्य पूर्वोक्तविधिना ततः
रथे वा गजकण्ठे वा समारोप्य वृषध्वजम् ९०
नानाच्छत्रसमायुक्तं नानाध्वजसमन्वितम्
नानावाद्यसमोपेतं नानाकाहलसंयुतम् ९१
नानावस्त्रसमोपेतं नानाभक्तजनैर्युतम्
अणुपूजसमोपेतं गजवाजिसमन्वितम् ९२
देवचिह्नसमोपेतं कृत्वा ग्रामप्रदक्षिणम्
शुभैर्देवालयं गच्छेन् नीराजनमथाचरेत् ९३
यात्रार्थस्नपनं कृत्वा संध्याशेषं समाचरेत्
संध्यान्ते देवदेवेशं आरोप्य शिबिकामथ ९४
देवचिह्नसमोपेतं नयेत्तद्रंगमण्डपे
सिंहासने समारोप्य परिवेषक्रमान्न्यसेत् ९५
पाद्यमाचमनं दत्वा महाहविर्निवेदयेत्
नानादेशकथावाक्यैः धामं युद्धादिदर्शनैः ९६
विनोदवाक्यैरन्यैश्च महाजालादिदर्शनैः
वीणावेणुमृदंगादि वाद्यैर्गानैश्च तोषयेत् ९७
ततोऽस्तमयवेलायां अभिषेकार्हमण्डपे
सिंहासने समारोप्य परिवेषक्रमं नयेत् ९८
परिवेषक्रमान्ते तु संगृह्य परमेश्वरम्

देवालयं प्रविश्याथ नित्यकर्म समाचरेत् ९९
भोगपूजावसाने तु पूर्ववत्परमेश्वरम्
शिबिकादौ समारोप्य शय्यागृहं प्रवेशयेत् १००
मृदुतल्पसमायुक्ते सुगन्धकुसुमान्विते
शयने देवमारोप्य तन्मूलेनैव देशिकः १०१
संपूज्यगन्धपुष्पाद्यैः भक्ष्यादींश्च निवेदयेत्
मकुटारोपणं प्रोक्तं दिनचर्याक्रमं शृणु १०२
इति सूक्ष्मशास्त्रे मकुटारोपणपटलः

५३
दिवाकरोदयात्पूर्वे देवयामार्धकालके
श्रुत्वा पंचमहाशब्दं स्नानं कृत्वा गुरूत्तमः १
पंचांगभूषणोपेतः शिष्यवर्गैः समन्वितः
मूललिंगं समभ्यर्च्य धूपदीपं प्रदापयेत् २
भस्म दत्वाथ मूलेन ताम्बूलं दापयेत्ततः
तत्कालोचितगानैश्च वीणावेणुरवादिभिः ३
अन्यैर्विविधवाद्यैश्च तोषयेद्वृषभध्वजम्
दर्पणं शिवमंत्रेण दर्शयेद्देशिकोत्तमः ४
ततो दैवज्ञमाहूय पंचांगं श्रावयेद्गुरुः
पुरन्दरैश्च नाथैश्च दक्षिणद्वारमर्चयेत् ५
शिवास्त्रं दक्षिणे चेत्तु पश्चिमाभिमुखं भुविम्
पश्चिमे शास्त्रनाथश्चेद्देवमुत्तरदिङ्मुखम् ६
उत्तरस्थो भवेदस्त्रं पूर्वाभिमुखमीश्वरम्
संपूज्य घृतकुम्भं च दर्शयेदस्त्रमंत्रतः ७
कुंभं च नेत्र ++++++
भस्म कवचमंत्रेण शिखया बृहतीफलम् ८
दर्शयेत्साधनद्रव्यान् अन्यानस्त्रेण देशिकः
नादायष्ट्वा सगायत्र्या दूर्वाग्रकदळीं ददेत् ९
ततो मातं गमाहूय सर्वशिक्षासमन्वितम्

शिवमंत्रेण संदृश्य नाळिकेरफलं ददेत् १०
तदन्ते पंचकल्याणं अश्वशिक्षासमन्वितम्
सर्वालंकारसंयुक्तं आहूयाग्रे विचक्षणः ११
गन्धमाल्यैः समभ्यर्च्य सैन्धवं दापयेद्गुरुदा
ततो देवं समारोप्य खेटके शिबिका तथा १२
प्रदक्षिणक्रमेणैव स्नानमण्डपमाविशेत्
स्नानवेद्युपरि न्यस्त्वा संपूज्य परमेश्वरम् १३
गन्धतैलेन संस्नाप्य तदन्ते चन्दनेन तु
लवंगामलकेनैव फलसारेण भस्मना १४
कर्पूरधूळिना स्थाप्य पंचगव्यामृतैस्तथा
फलपुष्पास्त्रतोयैश्च मृत्कषायोदमार्जनैः १५
कान्ते कान्त्युदकैः स्नाप्य नवकेनाभिषेचयेत्
पुष्पमारोप्य मालैश्च मंत्रान्नं च निवेदयेत् १६
शुद्धवस्त्रेण संमृज्य तद्रंगमण्डपेऽष्टदिक्
दूर्वार्धेन समारोप्य पार्श्वयोः परमेश्वरम् १७
महाहविर्विधानेन नैवेद्यं दापयेद्गुरुः
ताम्बूलं दापयेद्विद्वान् मुखवाससमन्वितम् १८
धूपदीपं ततो दत्वा नीराजनमथाचरेत्
परिवेषक्रमं कल्प्य विनोदालोकनं नयेत् १९
ततः सायाह्नसमये मन्दीभूते दिवाकरे
तद्वारोचितवस्त्राद्यैः अलंकृत्य महेश्वरम् २०
पूर्वयानक्रमेणैव कृत्वा ग्रामप्रदक्षिणम्
सिंहासने समारोप्य परिवेषं समाचरेत् २१
नीरांजनं ततः कृत्वा गीतनृत्तादिभिस्सह
ततो मूलगृहं प्राप्य देवेन सह देशिकः २२
हविर्निवेदयेत्पश्चात् षडाशेषं समाचरेत्
ततः शय्यागृहे देवं आनीय पूर्ववद्गुरुः २३
खट्वोपरि समारोप्य भक्ष्यपानादिकं ददेत्
अष्टमेऽहनि संप्राप्ते भूकाभिषेकमाचरेत् २४

भूकाभिषेकदिवसात् पूर्वद्वित्रिदिनेऽपि वा
मृगयात्रां प्रकुर्वीत वनदेवादितृप्तये २५
मकुटारोपणं त्वेवं प्रत्यब्दं परिकल्पयेत्
अत्रानुक्तं तु यत्किंचित्सर्वं राजोपचारवत् २६
मकुटारोपणं प्रोक्तं रथारोहविधिं शृणु
इति सूक्ष्मशास्त्रे मकुटारोपणविधिपटलः

५४
रथारोहविधिं वक्ष्ये शृणु त्वं तत्प्रभंजन
शान्तिहोमं च कुर्यात्तु रथाग्रे तु विशेषतः १
क्षाळयेच्छुद्धतोयेन प्रोक्षयेत्पंचगव्यकैः
ततो विघ्नेशमभ्यर्च्य सर्वविघ्नप्रशान्तये २
तत्तत्स्थाने विशेषेण सर्वदेवान्समाचरेत्
दिक्पालकान्प्रपूज्याथ स्वनामेनैव मंत्रतः ३
चक्रेषु चन्द्रसूर्यं च क्षये वाधारशक्तिनम्
अष्टनागाग्निपाशेषु चार्चयेत्साधको वरः ४
मेघनादं सुराष्ट्रं च रथपूर्वापरेषु च
तस्माद्रक्तबलिं दद्याद्यथाविधिपुरस्सरम् ५
एवमेवं प्रकर्तव्यं रात्रिमध्ये विशेषतः
नित्यार्चनादिकं सर्वं प्रातर्निर्वर्त्य देशिकः ६
सुमुहूर्ते सुलग्ने तु देवदेवं रथे नयेत्
पुरुषाकारधारिण्या मत्कन्या च सहैव तु ७
सर्ववाद्यसमायुक्तं रथाकर्षणमारभेत्
पूर्वस्थाने रथं नीत्वा जनान्सर्वान्प्रतोषयेत् ८
विघ्नाद्यैर्यानविच्छिन्ने संधानं शीघ्रमाचरेत्
कालातिक्रमणे प्राप्ते यापुराजाकरोद्यदि ९
संपूजानिषुकालादि ज्ञयपरचक्राद्भयं भवेत्
मध्याह्नसमयं यावद्यानं चैव न योग्यकम् १०
रथे दीपान्तमभ्यर्च्य आलये तु निवेद्यकम्

भानोरस्तमनादूर्ध्वे अशक्तं चेत्तु यानकम् ११
शिबिकादिषु चारोप्य यानशेषं समाप्य च
कालातिक्रमणार्थाय शान्तिहोमपुरस्सरम् १२
राजराष्ट्रहितार्थाय भीमरूपं जपेच्छतम्
तत्संख्यया च होतव्यं कारयेत्साधकोत्तमः १३
नित्यं निर्वर्तयेद्धीमान् अन्यदावानुपूर्वशः
रथारोहविधिः प्रोक्तः प्रभामण्डलकं शृणु १४
इति सूक्ष्मतंत्रे रथारोहणविधिपटलः

५५
वक्ष्यामि सकळादीनां प्रभामण्डललक्षणम्
सौवर्णं राजतं लोहं कारयेत्तु प्रभंजन १
बिम्बस्य शोभनार्थाय मण्डलं त्रिविधं कुरु
वह्निमण्डलमादौ तु द्वितीयं भानुमण्डलम् २
तृतीयं चन्द्रवृत्तं च त्रिविधं मण्डलं भवेत्
एकं वा द्विविधं वापि त्रयं वापि प्रकल्पयेत् ३
बिम्बादायार्थं संग्राह्य भ्रामयेच्चन्द्रबिम्बवत्
जानुभ्यामवसानुं च जंघमध्यावसानकम् ४
सिंहांश्च मकरांश्चैव अधो भागे प्रकल्पयेत्
मण्डलस्य तु विस्तारं अग्निवाणाद्रिनन्दतः ५
मध्यविस्तारमेवोक्तं पंचभागांशहीनके
मूलाग्रस्य विशालं तु क्रमेण परिकल्पयेत् ६
उत्तरस्य तु संयोज्य मकारं वृत्तमेव वा
त्रयोदशांगुलं ख्यातमकारस्येष दीषकः ७
विस्तारं रुद्रया हन्यामुक्तादामं द्विरंशकम्
वेत्रमर्धां शकं प्रोक्तं इन्दूत्सेध द्विरंशकम् ८
अर्धां शं वेत्रतुंगं तु महावेत्रं त्रियंशकम्
तद्वेत्रं तुंगमध्यांशं इन्दूत्सेधं द्विरंशकम् ९
वेत्रमर्धां शमित्युक्तं तस्योर्ध्वेऽग्निं प्रकल्पयेत्

पंचांगुलसमुत्सेधं विस्तारं च त्रियंगुलम् १०
सप्तजिह्वासमायुक्तं अथवा पंचजिह्वकम्
पार्श्वेष्वग्नित्रिजिह्वन्तु क्रमात्क्षीणं प्रकल्पयेत् ११
सर्वां गानां प्रकर्तव्यं शोभाबलसमन्वितम्
वह्निमण्डलमेवोक्तं भानुमण्डलकं शृणु १२
वह्निमण्डलबाह्ये तु कल्पयेद्भानुमण्डलम्
विस्तारायाममानं तु पूर्वोक्तविधिना कुरु १३
विस्तारं सप्तधा भज्य वेत्रमंशे तु कल्पयेत्
पुष्पोच्चं पंचभागं च वेत्रभागेन कल्पयेत् १४
पुष्पमष्टदळोपेतं पंचभागं सकर्णिकम्
रत्नानि विन्यसेन्मध्ये वृत्ताकारं प्रकल्पयेत् १५
नक्षत्रसंख्यया पुष्पं तत्संख्यापद्मकुड्मलम्
पद्मस्य मुकुळाकारं तस्योर्ध्वे तु प्रकल्पयेत् १६
भानुमण्डलमेवोक्तं चन्द्रमण्डलकं शृणु
भानुमण्डलबाह्ये तु कल्पयेच्चन्द्रमण्डलम् १७
तस्य विस्तारतुंगं च पूर्वोक्तविधिना कुरु
वेत्रद्वयसमायुक्तं मध्येष्वजं प्रकल्पयेत् १८
दळैः षोडशभिर्युक्तं कल्पयेत्पूर्ववत्सुधीः
कुंमुदं कुड्मलाकारं तस्योर्ध्वे तु प्रकल्पयेत् १९
नक्षत्रसंख्यया पुष्पं कुर्यात्कुमुदकुड्मलम्
पुष्पस्याभ्यन्तरे चैव रज्जुबन्धं प्रकल्पयेत् २०
चन्द्रमण्डलमेवोक्तं कल्पयेदतिसुन्दरम्
अत्रकिंचिद्विशेषोऽस्ति वह्निमण्डलकस्य च २१
महावेत्रस्य मध्ये तु कल्पयेद्रत्नपुष्पकम्
प्रभामण्डलमेवोक्तं पुष्परंगविधिं शृणु २२
इति सूक्ष्मतंत्रे प्रभामण्डलविधिपटलः

५६
सकळस्थापनं वक्ष्ये शृणु त्वं तत्प्रभंजन

आयुरारोग्यजयदं पुत्रश्रीकीर्तिवर्धनम्  १
केवलं सहजं चैव पौनः पुन्यं त्रिधा स्मृतम्
केवलं चैकबेरं स्यात्स्थापनं त्विति विद्यते  २
महेश्वरादिबिम्बानां तच्छक्तिप्रतिमादिकम्
परिवारामरादीनां वाहनायुधविग्रहान्  ३
भक्तादिप्रतिमां चैव एकस्मिन्नेककालके
एकभार्येण कर्तव्यं स्थापनं सहजं स्मृतम्  ४
वर्णानि स्फोटनं चैव अंगोपांगानि हानके
त्याज्यं बिम्बं तु संस्थाप्य पौनः पुन्यं च संस्मृतम्  ५
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
सुवारे सुमुहूर्ते च स्थापनं सम्यगाचरेत्  ६
शैलरत्नं च लोहैश्च सधामृद्दारुबिम्बयोः
भित्तिचित्रे प्रयोक्तव्यं विशेषः किंचिदुच्यते  ७
चलं चैवाचलं चैव प्रासादं प्रतिमां ततः
अचलं गर्भसंयुक्तं तत्स्थानेषु दृढीकृतम्  ८
गर्भहीनं तु यद्वस्तु चलमेवं प्रकीर्तितम्
अचलं स्वस्वदेशे तु चलं सर्वत्र देशके  ९
रत्नजैश्चित्रबिम्बैश्च रत्नन्यासादिकं विना
प्रथमं बेरनिर्माणं द्वितीयं द्रव्यसंग्रहम्  १०
पश्चान्मण्डपनिर्वाणं चतुर्थं दृष्टिमोचनम्
पंचमं प्रतिमाशुद्धिं षष्ठं ग्रामप्रदक्षिणम्  ११
सप्तमं तु जले वासं अष्टमं मण्डपार्चनम्
रक्षाबन्धं च नवमं द्रव्याधिवासनं दश  १२
एकादशाधिवासं च द्वादशं होमकर्म च
एवं विंशतिरंगानि प्रतिष्ठाविधिरुच्यते  १३
यागार्थमण्डपादींश्च पूर्वोक्तविधिना कुरु
अंकुरं चाग्निकार्यस्य परिवारघटादिकम्  १४
मण्डपस्यार्चनादींश्च एवमेव प्रकल्पयेत्
तत्तद्ब्रह्मघटादींश्च पृथक् चैतान्प्रकल्पयेत्  १५

प्रतिष्ठाऋृक्षपूर्वं तु त्रिदिने तद्दिनेऽपि वा
अंकुरार्पणकार्यं च पूर्वोक्तविधिना कुरु १६
नेत्रद्वययुते ऋृक्षे अक्षिमोक्षणमाचरेत्
ततस्तक्षकमाहूय देशिकानुज्ञया ततः १७
भ्रूरेखा चक्षूरेखा च शिल्पं कुर्याद्विचक्षणः
गोभूहिरण्यवस्त्रादि दत्वा शिल्पिं विसर्जयेत् १८
स्थण्डिलं शालिभिः कृत्वा पद्ममष्टदळं लिखेत्
तण्डुलैश्च तिलैर्लाजैः दर्भैः पुष्पैः परिस्तरेत् १९
तस्य मध्ये तु संस्थाप्य महेशप्रतिमादिकम्
पुण्याहं वाचयित्वा तु रक्तपुष्पैरलंकृतम् २०
कलशानष्टसंख्याकान् ससूत्रान्सापिधानकान्
सवस्त्रान्पल्लवोपेतान् नाळिकेरफलान्वितान् २१
गन्धपुष्पैः समभ्यर्च्य विद्येशानभितो यजेत्
गन्धपुष्पैः समभ्यर्च्य प्रच्छन्नपटमालिखेत् २२
ईशानेन तु मंत्रेण पक्ष्मरेखां समालिखेत्
कृष्णमण्डलमालिख्य सद्योजातेन मंत्रतः २३
ज्योतिर्मण्डलमालिख्य नेत्रमंत्रमनुस्मरन्
मधुवाता ऋृतायेति मधुपात्रं सुदर्शयेत् २४
घृतं मिक्षेति मंत्रेण धान्यराशिं प्रदर्शयेत्
आप्यायस्वेति मंत्रेण क्षीरपात्रं प्रदर्शयेत् २५
दधिक्राबिण्णेतिमंत्रेण दधिपात्रं प्रदर्शयेत्
शिवगायत्रिमंत्रेण घृतपात्रं प्रदर्शयेत् २६
गौर्धेनुभव्यमंत्रेण धान्यराशिं प्रदर्शयेत्
ब्रह्मजज्ञानमंत्रेण ब्राह्मणान्दर्शयेत्ततः २७
सुमंगलीति मंत्रेण ब्राह्मणानां प्रदर्शयेत्
येषामीशेति मंत्रेण धान्यराशिं प्रदर्शयेत् २८
प्रच्छन्नपटमावर्ज्य जनान्सर्वान्प्रदर्शयेत्
बेरशुद्धिं ततः कृत्वा पंचमृत्पंचगव्यकैः २९
रत्नोदैः शुद्धतोयैश्च स्नापयेद्देशिकोत्तमः

वस्त्रैराभरणैर्माल्यैः अलंकृत्य विशेषतः ३०
रथे वा शिबिकायां वा देवानारोप्य भक्तितः
ग्रामप्रदक्षिणं कृत्वा सर्वालंकारसंयुतम् ३१
जलतीरं समाश्रित्य प्रपां कृत्वातिसुन्दरम्
तन्मध्ये स्थण्डिलं कल्प्य साष्टपत्रं सकर्णिकम् ३२
दर्भैः पुष्पैः परिस्तीर्य कलशान्नवसंख्यकान्
संस्थाप्य हृदयेनैव पुण्याहं वाचयेत्ततः ३३
प्राक्छिरश्चोश्रयं कुर्यात् मूलेनैव जले क्षिपेत्
त्रिरात्रमेकरात्रं वा याममेकमथापि वा ३४
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु
पुण्याहं वाचयेत्तत्र मण्डपस्यार्चनं कुरु ३५
जलादुत्तीर्यबिम्बं तु शुद्धिं कृत्वा विचक्षणः
महामण्डपमासाद्य रक्षाबन्धनमाचरेत् ३६
पुण्याहं तु ततः कृत्वा प्रोक्षयेद्वेदिकोपरि
स्थण्डिलं शालिभिः कृत्वा तण्डुलैश्च सुशोभितम् ३७
शयनं कल्पयेत्तत्र अण्डजाद्यैरनुक्रमात्
अर्चयित्वा तु गन्धाद्यैः तत्र मूलेन देशिकः ३८
शयितं शयनं तत्र प्रतिमां वस्त्रवेष्टिताम्
प्राक्शिरस्कं ततो देवं पूजयेत्स्वस्वमूलतः ३९
तस्य दक्षिणपार्श्वे तु शिवकुंभं च वर्धनीम्
सवस्त्रान्पल्लवोपेतान् सकूर्चान्फलसंयुतान् ४०
हेमरत्नसमायुक्तान् शुद्धाम्बुपरिपूरितान्
कुंभे शंभुं समावाह्य तन्मूलेनैव देशिकः ४१
अभितः कलशानष्टौ विद्येशान्संप्रपूजयेत्
गन्धपुष्पादिनाभ्यर्च्य तत्तन्मूर्तिदशाहुतिम् ४२
समिदाज्येन चरुणा लाजांश्च सर्षपं तिलम्
यवश्चैव तु सप्तैते आज्यं मूलेन होमयेत् ४३
समिधादीनि षड्द्रव्यैः हृदादींश्चैव हूयते
प्रत्येकं षोडशं हुत्वा व्याहृतीर्जुहुयात्क्रमात् ४४

तत्तत्स्वमूलमंत्रेण आज्येनाष्टादशाहुतिः
एकत्रिंशत्कलेनैव तत्तत्स्थाने स्पृशेद्धुनेत् ४५
सर्वद्रव्यैर्विशेषेण हव्यवाहेन हूयते
गेयनृत्तसमायुक्तं रात्रिशेषं व्यपोह्य च ४६
ततः प्रभाते विमले आचार्यो मूर्तिपैस्सह
कृत्वा स्नानत्रयं तत्र सकळीकरणं कुरु ४७
शयने शाययेद्बिम्बं गन्धपुष्पादिनार्चयेत्
नानावाद्यसमायुक्तं नानादीपसमन्वितम् ४८
नानाच्छत्रसमायुक्तं नानालंकारसंयुतम्
नाना भक्तजनैः सार्धं स्वस्तिसूक्तसमन्वितम् ४९
हर्म्यप्रदक्षिणं कृत्वा स्नानवेद्युपरि न्यसेत्
पुण्याहं वाचयेत्तत्र एकत्रिंशत्कलान्यसेत् ५०
ब्रह्मकुंभं समुद्धृत्य पूर्ववत्समलंकृतम्
आलयप्रदक्षिणं कृत्वा देवाग्रे स्थापयेद्बुधः ५१
मुहूर्तं निरीक्ष्य दैवज्ञो गन्धपुष्पाक्षतैर्यजेत्
ताम्बूलं दापयित्वा तु दक्षिणां दापयेत्ततः ५२
जीवन्यासं ततः कृत्वा सुमुहूर्ते विचक्षणः
तत्तत्स्वबीजमूलेन कुंभतोयाभिषेचयेत् ५३
मंत्रान्नं दापयेत्पश्चात्परिवारघटादिकम्
स्वस्वस्थानेऽभिषेकं तु गन्धपुष्पादि वादयेत् ५४
वस्त्रैराभरणैर्माल्यैः प्रभूतहविषं ददेत्
धूपदीपं ददेच्छम्भोः ताम्बूलं च निवेदयेत् ५५
आचार्यं पूजयेत्पश्चाद् वस्त्रहेमांगुळीयकैः
गोभूहिरण्यधान्याद्यैः मनं संतोषयेत्क्रमात् ५६
उत्सवं कारयेत्तत्र यथा वित्तानुसारतः
भक्तानां परिचाराणां दक्षिणां दापयेत्सुधीः ५७
दीनान्धकृपणादीनां यथा शक्त्या तु दक्षिणा
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ५८
यान्याकामयते कामान् तांस्तान्वर्णेन साधयेत्

इहैव धनवांच्छ्रीमान् सोन्ते सायुज्यमाप्नुयात्  ५६
इति सूक्ष्मशास्त्रे सकळस्थापनविधिपटलः

५७
पचनालयविधिं वक्ष्ये शृणु त्वं तत्प्रभंजन
सुधाकर्मावसाने तु स्थापयेद्देशिकोत्तमः  १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
सुमुहूर्ते सुलग्ने च स्थापनं सम्यगाचरेत्  २
निश्चित्यदिवसात्पूर्वे कारयेदंकुरार्पणम्
शिल्पिनं तु विसृज्याथ पुण्याहं वाचयेत्ततः  ३
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु
ब्राह्मणान्भोजयेत्तत्र पुण्याहं वाचयेत्ततः  ४
तद्दिनात्पूर्वरात्रौ तु प्रारभेदधिवासनम्
प्रथमस्तंभमूले तु बन्धयेत्कौतुकं हृदा  ५
मण्डपस्य ततो मध्ये वेदिकां संप्रकल्पयेत्
विमलैर्व्रीहिभिश्चाष्टद्रोणैः स्थण्डिलमालिखेत्  ६
तस्य मध्ये लिखेदब्जं दर्भैश्चैव परिस्तरेत्
पश्चात्कुंभं न्यसेन्मध्ये सूत्रोदकादिसंयुतम्  ७
अभितःकलशानष्टौ वामादीनि समर्चयेत्
मध्ये कुंभेऽन्नपूर्णेशीं अर्चयेत्तु स्वनामतः  ८
नैवेद्यं दापयेत्तेषां धूपदीपादिकं ददेत्
ऋगाद्यध्ययनं कुर्यात् चतुर्दिक्षु विशेषतः  ९
ब्रह्मसूक्तं जपेद् +++++++
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्  १०
समिदाज्यचरुं लाजान् सर्षपांश्च यवांस्तिलान्
होमद्रव्याणि सप्तैते सम्यगादिशिरोन्तकम्  ११
शतं वापि तदर्धं वा प्रत्येकं जुहुयात्क्रमात्
एवं जागरणं रात्रौ प्रभाते स्थापनं कुरु  १२
जयादिरभ्याधानं च क्रमाद्राष्ट्रभृतं हुनेत्

पूर्णाहुतिं तथा हुत्वा ब्रह्मबीजेन बुद्धिमान् १३
पश्चादग्निं विसृज्याथ कुंभमध्ये तु योजयेत्
ब्रह्मकुंभं समुद्धृत्य धामपदक्षिणं कुरु १४
प्रधानस्तंभमूले तु स्थापयेत्स्थण्डिलोपरि
पुण्याहं वाचयेत्तत्र दैवज्ञं संप्रपूजयेत् १५
कुंभान्मंत्रं समादाय तद्गात्रे विन्यसेत्ततः
शेषगात्रेषु सर्वेषु रुद्रमंत्रं न्यसेत्क्रमात् १६
वामादिकलशानष्टौ पूर्वादीन्यभिषेचयेत्
पूजयेत्सर्वगात्राणि पायसान्नं ददेत्पृथक् १७
शिवं संपूज्य विधिवद् यथाविभवविस्तरम्
महेश्वरं समभ्यर्च्य गणकोर्ध्वे तु विन्यसेत् १८
भक्ष्यभोज्यान्नपानादि देवाग्रे स्थाप्य देशिकः
सर्वालंकारसंयुक्तं दीपज्वालासमन्वितम् १९
शंखघोषसमायुक्तं सर्वमुत्थापयेद्बुधः
हर्म्यप्रदक्षिणं कुर्यात् पचनालयमाविशेत् २०
एकत्र स्थण्डिलं कल्प्य पंचचूर्णैरलंकृतम्
वस्त्रेणास्तीर्य तन्मध्ये स्थापयेत्तु महेश्वरम् २१
संस्थाप्य भोजनद्रव्यैः प्रोक्षयेदस्त्रवारिणा
वीरार्द्रकं च लवणं तिंत्रिणीफलसंयुतम् २२
देवीगायत्रिमंत्राणि सर्वद्रव्याणि निक्षिपेत्
तदग्रेष्वन्नपूर्णेशीं स्वनाम्ना तु समर्चयेत् २३
सर्वं तु भोजनद्रव्यैः द्रव्यं दद्याच्छिवाज्ञया
गृहीत्वा त्वन्नपूर्णेशीं पूर्त्वा तु परिचारकान् २४
हविष्यविधिमार्गेण पायसान्नपुरस्सरम्
पाचयेत्सर्वद्रव्याणि शिवाय विनिवेदयेत् २५
माहेश्वरं समानीय पूर्वस्थानं समाविशेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः २६
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् २७

इति सूक्ष्मशास्त्रे पचनालयविधिपतलः

५८
बालस्थानविधिं वक्ष्ये शृणु त्वं तत्प्रभंजन
प्रथमं द्वितीयमेवेति बालहर्म्यं द्विधास्मृतम् १
मूलस्थानस्य पूर्वं यत् प्रथमं तरुणालयम्
बाललिंगप्रतिष्ठान्ते मूलस्थानं प्रकल्पयेत् २
विनाबालगृहं यत्र कुलक्षयकरं भवेत्
तस्मात्सर्वप्रयत्नेन बालगेहं प्रकल्पयेत् ३
प्रासादपूर्वदिग्भागे दक्षिणे चोत्तरेऽथवा
ईशाने पावके वाथ बालगेहं प्रकल्पयेत् ४
त्रिवेदहस्तमारभ्य हस्तैकेन विवर्धनात्
नव धर्मकरान्तं यद् बालगेहविशालकम् ५
देवबालगृहं चेत्तु युगांशं परिकल्पयेत्
वेदिमानायताश्रं वा कल्पयेत्तु यथाक्रमम् ६
वेदांगुलं समारभ्य अंगुलांगुलवर्धनात्
सप्तविंशांगुलं यावद्बालबिम्बोदयं भवेत् ७
आयामसदृशं नाहं छत्रशीर्षं च संयुतम्
बाललिंगं प्रकर्तव्यं सूत्रहीनं प्रकल्पयेत् ८
स्वयोनिं कारयेत्पीठं अथवा चेष्टकामयम्
पंचभागे द्विभागं वा तच्चतुर्थां शमेव वा ९
सप्तभागे त्रिभागं वा तत्त्रिभागैकमेव वा
पीठवेशं प्रकर्तव्यं शेषं लिंगोदयं भवेत् १०
लिंगानां सहमंत्राणां ताराधं पीठकोदयम्
तारादष्टांशमाधिक्यं पीठमूलविशालकम् ११
पीठतारत्रिभागैकं गोमुखदीर्घविस्तरम्
तत्त्रिभागैकभागेन गोमुखाग्रं प्रकल्पयेत् १२
त्र्यहे वाथ सप्ताहे पंचाहे नवमेऽथवा
सद्योंकुरार्पणं वापि कारयेद्देशिकोत्तमः १३
बालधामाग्रके कुर्यान्मण्डपं चतुरश्रकम्
षोडशस्तंभसंयुक्तं चतुर्द्वारसमन्वितम् १४

चतुस्तोरणसंयुक्तं दर्भमालाभिरावृतम्
मण्डपं पंचधा भज्य मध्यभागेन वेदिकाम् १५
अरत्निमात्रमुत्सेधं दर्पणोदरसंनिभम्
उपवेदीं ततः कृत्वा चतुरंगुलतत्समम् १६
नवपंचैककुण्डं वा स्थण्डिले वापि होमयेत्
गोमयालेपनं तत्र भूसुरान्भोजयेत्ततः १७
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं नयेत्
पुण्याहं प्रोक्षणं कुर्यान् मण्डपं संप्रपूजयेत् १८
वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि १९
लाजैः पुष्पैः परिस्तीर्य शयनं संप्रकल्पयेत्
बालबिंबं समादाय जले चैवाधिवासयेत् २०
पंचरात्रं त्रिरात्रं वा एकरात्रमथापि वा
यामं वा चार्धयामं वा जले स्नानमथापि वा २१
कौतुकं बन्धयेद्विद्वान् शयने चाधिवासयेत्
नवकुंभान्समादाय तन्तुना वेष्टयेद्बुधः २२
क्षाळयेदस्त्रमंत्रेण जलेनैव तु पूरयेत्
सहिरण्यं सवस्त्रं च सकूर्चं पल्लवान्वितम् २३
कुंभान्विन्यस्य वेद्यूर्ध्वे पूजयेद्देशिकोत्तमः
मध्यकुंभे शिवं यष्ट्वा वर्धन्यां च मनोन्मनीम् २४
अभितः कलशानष्टौ विद्येशावरणान्यजेत्
ऋग्यजुः सामवेदैश्च जपं संकल्पयेद्गुरुः २५
शिवाग्नियजनं कुर्यात् समिदाज्यान्नलाजकैः
माषशालितिलैर्विद्वान् हुत्वा सद्याच्छिरोन्तकम् २६
खादिरं बिल्वमश्वत्थं पालाशं वह्निशाखिकम्
पूर्वादिषु चतुर्दिक्षु समिद्धोमं प्रकल्पयेत् २७
आग्नेय्यां वटवृक्षं स्यान्नैर्ऋत्यां प्लक्षशाखया
औदुम्बरं वायुदेशे त्वर्कमीशानगोचरे २८
औदुम्बरसमिद्भिर्वा सर्वहोमं समाचरेत्

द्रव्यं प्रति विशेषेण स्पर्शाहुतिमथाचरेत् २९
सर्वद्रव्यैः सकृद्धुत्वा हव्यवाहेति मंत्रतः
रात्रौ जागरणं कुर्यात् प्रभाते स्नानमाचरेत् ३०
तोरणान्कलशान्कुंभान् यजेत्तु पूर्ववर्त्मना
अग्निमभ्यर्च्यगन्धाद्यैः हुत्वा चित्रादिमंत्रतः ३१
यदस्य कर्ममंत्रेण पूर्णाहुतिमथाचरेत्
शंखध्वनिसमायुक्तं ब्रह्मघोषसमन्वितम् ३२
छत्रचामरसंयुक्तं वाद्यध्वनिसमन्वितम्
बालबिम्बसमोपेतं प्रदक्षिणमथाचरेत् ३३
बालगर्भगेहं गत्वा पुण्याहं वाचयेत्ततः
सुमुहूर्ते समनुप्राप्ते स्थापयेद्बालमूर्तिनम् ३४
अष्टबन्धं त्रिबन्धं वा योजयेत्पीठरन्ध्रके
शिवकुंभं समादाय कृत्वा धामप्रदक्षिणम् ३५
विन्यस्य बालबिम्बाग्रे स्थण्डिलोर्ध्वे विचक्षणः
मन्त्रन्यासं ततः कृत्वा चलमार्गेण मंत्रवित् ३६
कुंभाद्देवं समादाय लिंगमध्ये प्रकल्पयेत्
कुंभोदकेन संस्नाप्य पायसान्नं निवेदयेत् ३७
स्थापितैः सर्वकलशैः अभिषिच्येन्दुशेखरम्
नैवेद्यं दापयेद्विद्वान्पानीयाचमनं ददेत् ३८
पीठान्तं वा वृषान्तं वा बलिदानं समाचरेत्
धूपदीपं ततो दत्वा ताम्बूलं दापयेद्बुधः ३९
नृत्तगीतादिभिस्तोष्य प्रणम्य परमेश्वरम्
धरातलसमाप्ते वा चोत्तराविधिकोऽपि वा ४०
अण्डमाप्तालये वाथ प्रोक्षणं सम्यगाचरेत्
बाललिंगविधिस्त्वेवं बालदेवीविधिं शृणु ४१
देवोक्तमखिलं कर्म देव्याश्चापि समाचरेत्
मंत्रभेदो भवेदत्र वाक्यभेदो न विद्यते ४२
कामकोष्ठाग्रके वापि दक्षिणे चोत्तरेऽपि वा
ईशे वा पश्चिमे वापि गौरीबालगृहं भवेत् ४३

देवबालगृहे वापि स्थापयेद्बालरूपिणीम्
संपूज्य शिवपूजान्ते बलिहोमादिकं विना ४४
पृथग्बालगृहं चेत्तु देवपूजोक्तमार्गतः
समभ्यर्च्य महादेवी मंत्रेणैव तु देशिकः ४५
क्रोधारो वा वसाने वा उत्तरारोपणान्तिके
मूर्धेष्टकावसाने वा प्रोक्षणं सम्यगाचरेत् ४६
किंचिदस्य विशेषोऽस्ति शृणु त्वं तत्प्रभंजन
देवीबालप्रतिष्ठा चेद्देवस्य तरुणालये ४७
देवालयं समासाद्य गौरीं संस्थापयेद्बुधः
शिवसंप्रोक्षणं कृत्वा ततः कल्याणमाचरेत् ४८
गौरी संस्थापनात्पूर्वे शिवसंप्रोक्षणं भवेत्
ततो बालालये गौरीं समाकृत्य शिवालये ४९
देवाग्रे मण्डपे त्वीशे नैर्ऋते वायुगोचरे
दक्षिणे चोत्तरे स्थाप्य पूर्वमार्गेण देशिकः ५०
प्रदक्षिणं जले वासं नयनोन्मीलनं क्रमम्
अंकुरं कौतुकं चैव स्पर्शनं कौतुकं विना ५१
देव्यग्रे स्थण्डिलं कृत्वा शिवाग्निं विधिना नयेत्
गौरीमावाह्य तन्मध्ये मूलेनैव शतं हुनेत् ५२
अघोरेण शतं हुत्वा समिदाज्येन देशिकः
होमान्ते स्थापयेद्गौरीं घटे तु पूर्ववर्त्मना ५३
देवालयसमाप्ते तु प्रोक्षणं सम्यगाचरेत्
पूजयित्वा विधानेन पश्चात्कल्याणमाचरेत् ५४
इति सूक्ष्मशास्त्रे बाललिंगस्थापनविधिपटलः

५९

पंचगोचरमूर्तेस्तु चार्चनं वक्ष्यतेऽधुना
आयुःप्रदं च पुष्टिं च श्रीकरं च यशस्करम् १
सदेशं मोक्षकामार्थं धनार्थं विष्णुपूजनम्
पापभक्षणं मंत्रस्य रूपं भिन्नांजनप्रभम् २

लेलिहानं दुराधर्षं घनादं सुदुर्जयम्
विवृतास्य महादंष्ट्रं शुक्लवर्णं त्रिलोचनम् ३
रक्तमुक्तजटाजूटं सर्पमराडनमरिाडतम्
शूलपाशधरं भीमं वरदाभयपाणिनम् ४
व्याघ्रचर्मपरीधानं नागयज्ञोपवीतिनम्
सिंहपद्मासनासीनं ध्यायेद्घोरविनाशिनम् ५
ओम् खड्गसहक्ष्मृयूं खट् खट् फट् फट् पापभक्षणाय नमः ६
रथस्य पट्टिकायां तु नेत्रोन्मीलनमाचरेत्
पंचवक्त्रे तु नैवेद्यं ऊर्ध्ववक्त्रेऽथवा पुनः ७
अंगानामपि सर्वेषां पृथङ्नैवेद्यमर्धतः
चरुपाकः प्रकर्तव्यं पृथक्पात्रे सुसंभवे ८
स्थिरलिंगं तावल्लोकानुग्रहार्थत्वात् तेषां साधकभिमुखमेव
ऐशान्यवक्त्रं तस्मिन्नेव वक्त्रेनैवे नैवेद्योदयम् । यदुक्तम् ।
भक्ष्यभोज्यान्नपानादि लेह्यशोष्याणयनेकशः
ऊर्ध्ववक्त्रे तु दातव्यं यत्किंचिद्विधिचोदितम् ९
सर्वज्ञानोत्तरे ।
भक्ष्यभोज्यं च पेयं च लेह्यं शोष्यं च पंचधा
ऊर्ध्ववक्त्रे प्रदातव्यं हृदयेन षडाननेति १०
द्वादशशतीकायाम् ।
नैवेद्यं दक्षिणे हस्ते दद्यात्पानीयमुत्तममिति
कामिकश्रुत्या साधकेन शिवस्य दक्षिणे हस्ते
नैवेद्यादिदेयम् । तेनोर्ध्ववक्त्रेण भोज्यादिति भावयेत् ।
तदाहस्तोद्वर्तनस्य शिवस्य सिद्धिः । अन्यथा साधकेन नैवेद्यं
ऊर्ध्ववक्त्रे देयं चेच्छिवस्य हस्तोद्वर्तनस्य नावकाशः ।
साधकहस्तस्य निर्माल्यानुषंगं च भवति ॥
तस्माद्धस्ते नैवेद्यमेव साधुमतम्
इत्यूर्ध्ववक्त्रस्य वचनात् आगमवाक्येन युक्त्या दक्षिणवक्त्रत्वं
तद्वत्स्थहृद्गुह्यपादं च स्वेष्टलिंगस्य साधितः ॥ तस्य
पूजकस्याभिमुख्यप्रसादः संनिधानम् ॥ क्षुधापंचकदष्टस्य

विषदग्धस्य देहिनः ।
एकाशीतिपदोपेतं विद्यापादे तवोदिता
सा योनिस्सर्वमंत्राणां तस्या वक्ष्यामि लक्षणम् ९
प्राक्पद्यं प्रणवं तस्य एकवर्णं शिवात्मकम्
व्योमव्यापि चतुर्थ्यं द्विविधं पंचवर्णकम् १०
तृतीयं व्योमरूपाय पंचार्णं परमं तथा
सर्वव्यापि चतुर्थ्यन्तं शिवायेत्यथ पंचमम् ११
त्रियक्षरं विजानीयात् पंचैतानि शिवस्य तु
अर्हाणयुक्तानि तंत्रेऽस्मिंस्तेषां नामानि मे शृणु १२
सर्वात्मा सुशिवश्चैव ज्वालिनी पिंगळस्तथा
क्रमाच्छिवास्त्रमंत्रं स्यात् तत्तल्लक्षणतो मया १३
अनन्तायेत्यनन्तस्य वाचकश्चतुरक्षरम्
अनाथायेति सूक्ष्मस्य पदं स्याच्चतुरक्षरम् १४
अनाश्रिताय पंचार्णं पदं शिवपदस्य तु
ध्रुवायेति पदं त्र्यर्णं एकनेत्रस्य कीर्तितम् १५
शाश्वतायैकरुद्रस्य पदं स्याच्चतुरक्षरम्
संस्थितायपदं ज्ञेयं योगपीठपुरस्सरम् १६
अष्टार्णकं विजानीयाद्वाचकं तु त्रिमूर्तिनः
श्रीकण्ठस्य पदं नित्यं योगिने पंचवर्णकम् १७
ध्यानाहाराय पंचार्णं पदमेतच्छिखण्डिनः
चतुर्थ्यन्तानि सर्वाणि विद्येशानां महात्मनाम् १८
नमः शिवायेति पदं षड्वर्णं प्रणवादिकम्
चतुर्थ्यार्णं हि गायत्र्या वाचकं सर्वकामदम् १९
सर्वप्रभुश्चतुर्थ्यन्तं पंचार्णं मंत्रसन्ततौ
विद्याय तद्विजानीयाद् दीक्षाकर्मणि देशिकैः २०
शिवाय पदमन्यच्च चतुर्थ्यन्तं त्रिवर्णिकम्
विद्येश्वराणां विज्ञेयं उपचारविधौ सतौ २१
पदमीशानमूर्धाय षड्वर्णं मुनिसत्तम
इतीशानस्य बोद्धव्यं सप्तार्णं पुरुषस्य तु २२

स्यात्तत्पुरुषवक्त्राय अघोरहृदयाय च
सप्तार्णं बहुरूपस्य तद्वद्वामस्य कीर्तितम् २३
स्याद्वामदेवगुह्याय सद्यस्याप्यथ कीर्त्यते
अक्षरैः सप्तभिस्तद्धि स्यात्सद्यो जातमूर्तये २४
पंचैतानि पदानि स्युः चतुर्थ्यन्तानि ब्रह्मणाम्
प्रोक्तानि मंत्रमुख्येऽस्मिन्नर्चनार्थमयं तव २५
पंचार्णं परस्सिद्धं च पिण्डबीजं नमो नमः
प्रणवादि प्रयोक्तव्यं सिद्धये स्वरकर्मणि २६
गुह्यातिगुह्याय पदं षड्वर्णं हृदयं विभो
गोप्त्रे वर्णद्वयं तस्य शिवः प्रोक्तः सनातन २७
चतुर्वर्णं निधनं निधनाय पदं हि तत्
सर्वविद्याधिपायेति कवचं सप्तवर्णकम् २८
ज्योतीरूपाय पंचार्णं अभ्रमुक्तं महोजसः
नेत्रमष्टाक्षरं प्रोक्तं परमेश्वरपूर्वकम् २९
पराय चण्डनाथस्य षडंगानि शुभानि तु
चतुर्थ्यन्तानि सर्वाणि नेत्रान्तानि पदानि तु ३०
सप्तार्णमासनं तस्य यत्पदं चेतनात्मकम्
चेतनाचेतनायेति पूजाकाले प्रकल्पते ३१
व्योमिन्व्योमिन्पदं ज्ञेयं चतुर्वर्णं तथापरम्
व्यापिन्व्यापिन्द्विरभ्यस्तं षड्वर्णमपरं तथा ३२
तच्चारूपिद्विरभ्यस्तं षड्वर्णमपरं तथा
प्रथमे च द्विरभ्यासात् प्रयोक्तव्याऽस्त्रवित्तमैः ३३
तेजस्तेज इति प्रोक्तं चतुरर्णं पदं विभोः
ज्योतिर्ज्योतिपदद्वन्द्वं विज्ञेयं चतुरक्षरम् ३४
सप्तैतानि द्विरभ्यासात् पदान्युक्तानि शासने
चण्डेशस्यासने हेके षडंगानि पदानि तु ३५
प्र ++ सं प्रयोज्यानि देवदेवस्य नित्यशः
धर्मज्ञानं च वैराग्यं ऐश्वर्यं कर्णिकं तथा ३६
अनन्तेन सहैतानि षट्पदानि क्रमान्न्यसेत्

त्रिवर्णं पदरूपाख्या ततोऽनग्निपदं शुभम् ३७
त्रिदयस्यादधूमाख्यं अभस्माख्यं च यत्पदम्
पदं त्वनादिसंज्ञाख्यं नानानेति परं पदम् ३८
धूम्रवर्णं च यत्प्रोक्तं त्र्यक्षराणि शिवस्य तु
निर्देशे वेदितव्यानि सम्यक् सप्तपदानि तु ३९
ॐ भूर्द्व्यक्षरं त्र्यक्षरं चापि अधोभुवः
ॐ स्वरेत्यर्णद्वयेन त्रिपदमन्यत्प्रकीर्तितम् ४०
त्रीण्येतान्यपि दिशत् पदान्युक्तानि शासने
अनिधनपदं ज्ञेयं चतुरर्णं महामुने ४१
निधनाख्यं त्र्यक्षरं स्यात् पदं व्योमशरीरिणः
पंचाक्षरं विजानीयात् पदं संनिधनोद्भवात् ४२
सद्भावेश्वर एवोक्तं पंचार्णं मुनिसत्तम
महातेज इति प्रोक्तं पदं वर्णचतुष्टयम् ४३
पदं पंचाक्षरं ज्ञेयं योगाधिपतिसंज्ञितम्
आमंत्रिणपदं तद्धि प्रयोगाद्विनियोजयेत् ४४
अनिधनात्पदं यावत् योगाधिपतिसंज्ञितम्
पदं तावद्भवत्संख्यादसैकं च न संशयः
आमंत्रिणपदानां तु तंत्रेऽस्मिन्पारमेश्वरे ४५
मुंच मुंच चतुर्वर्णं षडर्णं प्रथमात्मकम्
शर्वशर्वपदं तन्त्रे बोद्धव्यं चतुरक्षरम् ४६
भवयुगपदं तद्वत् चत्वार्येतानि शासने
द्विरभ्यासपदानि स्युः बोद्धव्यानि गुरूत्तमैः ४७
भवोद्भवपदं सिद्धं वर्णानां तु चतुष्टयम्
पदमष्टाक्षरं चान्यत् सर्वभूतसुखप्रदम् ४८
सर्वसांनिध्यशब्दार्थं करान्तं पदमत्र तु
सप्ताक्षरं विजानीयात् पदमष्टाक्षरं युतम् ४९
तद्धि रुद्रपदान्तस्य ब्रह्मविष्णुपुरस्सरम्
एतान्यपि हि चत्वारि संबोधनपदानि तु ५०
अनर्चितद्विरभ्यस्तं अष्टानां पदमुच्यते

अ्रसंस्तुतमपि तथा पदपूर्वपदं स्थिता ५१
++++++ यावन् निरूपाख्यात्पदात्क्रमात्
द्वात्रिंशति नियोज्यानि केसराएयासने विभोः ५२
साक्षिसाक्षि चतुर्वणं द्विरुक्त्या पदसंततौ
बोद्धव्यं कमलस्यैव वाचकं पदमुत्तमम् ५३
कुरुशब्दपदं प्रोक्तं द्विरुक्त्या चतुरक्षरम्
पतंगमपि षड्वर्णं पदं स्यात्पूर्ववत्स्थितम् ५४
चतुरर्णं द्विरुच्चारात् पिंगाख्यमुदितं परम्
तद्वज्ज्ञानपदं ज्ञेये शब्दशब्दपदं तथा ५५
सूक्ष्मसूक्ष्मपदव्यापिसंख्या शब्दपदात्मिका
द्विधनं स्याच्छिवपदं तच्च संबोधनात्मकम् ५६
तद्वच्छर्वपदं विद्धि बोधनेऽर्णद्वयात्मकम्
कुर्वादिशब्दपर्यन्तं पदान्यष्टशुभानि तु ५७
शक्रादावीशपर्यन्तं पालकानां महात्मनाम्
वाचकानि मुनिव्याप्प्रयज्ञकर्मएयनुक्रमात् ५८
त्र्यक्षरं सर्वपदं स च विद्याधिपदं स्मृतम्
अ्रामंत्रिणपदं तच्च बोद्धव्यं शास्त्रवित्तमैः ५९
पंचाक्षरं ब्रह्मशिरः प्रणवादि नमो नमः
त्रकयमपि तद्वत्तु रुद्राएया वाचकं परम् ६०
शिवाय प्रणवाद्यं यत् चतुर्वर्णं पुरु ++ ष्टुतम्
नमो नमः पाशुपतं पदं स्याच्चतुरक्षरम् ६१
चतुर्थ्यन्तानि विप्रेन्द्र पंचैतानि पदानि तु
अ्रोमित्येकपदं चान्ते अ्रर्चादीनां विधैः स्मृतः ६२
एकत्रैव समाप्तानि एकाशीति पदानि तु
अ्रष्टषष्ट्यधिकं प्रोक्तं वर्णानां तु शतत्रयम् ६३
अ्रर्चात्तु देवदेवस्य समस्तव्यस्तरूपिणः
व्योमव्यापि समाप्तम् ६४
सकृत्संध्या विलोपे तु सद्योजातशतं जपेत्
प्रतिसंध्यं शतं स्यात्तु संध्या लोपेत्वकामतः ६५

कामतस्तूपवासः स्यात् लुप्ते देवार्चने यथा
एककालार्चको वापि द्विकालाद्यर्चकोऽपि वा ६६
एकाहे घोरसाहस्त्रं जपस्त्वज्ञानतो भवेत्
उपवासोऽपि विज्ञेयः कामतस्तदनुष्ठिते ६७
बहुकालार्चकस्यापि द्विकालादिविलोपने
लुप्तसंख्यावशेनैव प्रायश्चित्तं समाचरेत् ६८
द्वित्रिदिनविलोपे तु बहुरूपसहस्त्रकम्
प्रत्यहं त्रिशतार्धं स्यात् पक्षपूजाविलोपने ६९
अयुताघोरजापः स्यात् तदूध्या प्रतिमासकम्
संवत्सरात्तदूर्ध्वे तु दीक्षया शुद्धिरिष्यते ७०
स्वेष्टलिंगे परिभ्रष्टे नष्टे दग्धे हृतेऽपि वा
नरवानरकाकाद्यैः लक्षघोरजपात्ततः ७१
लिंगान्तरं प्रतिष्ठाप्य भवेच्छुद्धो न संशयः
हस्तादेः पतिते लिंगे त्वंगुलात्तद्विवृद्धितः ७२
सहस्राघोरवृद्धिः स्यात्सहस्रात्प्रभृति क्रमात्
साधारे पतिते लिंगे ताले तालेऽयुतं जपेत् ७३
द्विगुणं तु निराधारे कल्पनीयं गुरूत्तमैः
एकहस्ताद्द्विहस्तान्तं पतने घोरमंत्रतः ७४
जप्त्वा दशसहस्त्रं तु पंचगव्यामृतादिना
संस्नाप्य पूजयेद्देवं विशेषेणार्चयेद्बुधः ७५
अभ्यंगेत्वेतदुद्दिष्टं स्पृष्टे वा दीक्षितेन तु
ब्राह्मणेन नृपाद्यैस्तु शिवसंस्कारवर्जितैः ७६
क्रमाज्जपेदघोरस्य शतं वृद्ध्या द्विजोत्तम
द्विहस्तादूर्ध्वतः पाते त्वभ्यंगे लक्षजापतः ७७
संस्कारेणैव शुद्धिः स्यात् प्रतिष्ठा चात्र संमतम्
अकामतो यदा लिंगं विशीर्णं पिण्डिकाथवा ७८
प्रागुक्तद्विगुणं कुर्यात् कामतो निष्कृतिर्न हि
पादलग्नरजः स्पृष्टे बहुरूपायुतं जपेत् ७९
श्लेष्माद्युपहते लिंगे तत्तद्युक्तोदकादिभिः

त्र्ययुतं द्व्ययुतं कुर्याद्बहुरूपं नरोत्तम ८०
मूत्रोदकेन संस्पृष्टे जपेत्सार्धायुतद्वयम्
रक्तमूत्ररजः शुक्लदूषितेऽयुतपंचकम् ८१
तत्संयुक्तोदकस्पर्शात् पादहीनं जपेदिदम्
विष्ठास्पर्शे तु लक्षं स्यात् पादहीनं तदम्भसा ८२
तद्वन्निर्माल्यगर्तेऽपि पतनाच्छुद्धिमादिशेत्
विष्ठादिगर्तपाते तु लक्षमर्धादिकं जपेत् ८३
स्पृष्टेऽनुलोमजैर्लिं गे कुर्यान्मंत्रकुलोचितम्
प्रतिलोमादिभिः स्पृष्टे लक्षमावर्त्य शुध्यति ८४
वामदीक्षादिमार्गस्थैः स्पृष्टे लिंगेऽयुतं जपेत्
चाण्डालभाण्डकाद्यैश्च स्पृष्टे शुद्धिः प्रतिष्ठया ८५
लक्षणे स्थिरमुन्मूल्यस्थापयेच्च तदेव हि
श्रीपारमेश्वरे ॥
पूर्वाह्ने पंचभारं तु मध्याह्ने दशभारकम् ८६
सप्तभारं तु सायाह्ने भारमेकार्धयामके
उपसंध्योपसंध्येषु अष्टभारमिति स्मृतम् ८७
दीप्ते ॥
पूर्वाह्ने चाभिषेकं तु ब्रह्मवर्गस्य वर्धनम्
मध्याह्ने चाभिषेकं तु क्षत्रियस्य तु वर्धनम् ८८
सायाह्ने चाभिषेकं तु वैश्यानां वर्धनं क्रमात्
अर्धरात्रौ तथा प्रोक्तं शूद्रवर्गस्य वर्धनम् ८९
भीमसंहितायाम्
प्रातः कालशिवार्चनं द्विजहितं ब्रह्मप्रियं पौष्टिकं
मध्याह्ने शिवपूजनं नृपहितं विष्णोः प्रियं शान्तिदम् ।
सायं वैश्यहितं शिवस्य यजनं शंभोः प्रियं सौख्यदं
शूद्राणां हितमर्धरात्रकमुमाप्रीत्यै भवेत्काम्यदम् ९०
सुप्रभेदे ॥
पूर्वाह्ने सितवस्त्रं तु मध्याह्ने रक्तवस्त्रकम्
पीतवस्त्रं तु सायाह्ने अर्धयामे दुकूलकम् ९१

सूक्ष्मशास्त्रे ॥
एवं क्रमेण पुरायाहं कारयेत्सर्वकर्मसु
पूर्वाह्ने चैव मध्याह्ने प्रदोषे चार्धयामके ९२
अन्यसंधिषु सर्वेषु अन्यजात्यभिवृद्धये
वातुळे ॥
पंकजार्कपलाशं च नन्द्यावर्तं च मल्लिका ९३
करवीरं चम्पकं च नीलोत्पलमथाष्टकम्
अष्टपुष्पमिति प्रोक्तं प्रातः काले समर्चयेत् ९४
द्रोणपुष्पं तथा चैव मन्दारं शंखपुष्पकम्
श्वेतपाटलधूर्धूरं व्याघातं व्याघ्रपुष्पकम् ९५
शमी चैव तु मध्याह्ने पुष्पाराष्टापि योजयेत्
बकुळी कृष्णमल्ली च मल्लिकाद्वयमेव च ९६
जातिचम्पकपुन्नागं कह्लारं पट्टिका गुहा
अष्टपुष्पमिति प्रोक्तं सायं चैवार्धयामके ९७
योगजे ॥
श्वेतपुष्पं तु पूर्वाह्ने मध्याह्ने रक्तपुष्पकम्
साये तु मल्लिकापुष्पं अर्धरात्रे च कर्णिकम् ९८
सात्विकं श्वेतपुष्पं तु रक्तपुष्पं तु राजसम्
तामसं कृष्णपुष्पं च पीतपुष्पं तु शोभितम् ९९
कामिके
रात्रौ नीरांजनं कुर्यात् दीपदानावसानके
द्वारमस्त्रेण संप्रोक्ष्य द्वारपानर्चयेत्क्रमात् १००
संपूज्याभ्यन्तरे शस्त्रं प्रविश्यान्तः पुनः पुनः
दत्वा पुष्पं च वास्त्वीशे दत्वार्घ्योदं शिवस्य तु १०१
हुंफट्कारमनुस्मृत्य महाघराटां प्रताडयेत्
प्रच्छिन्नपटमुद्वेष्ट्य हृदयेन विचक्षणः १०२
संध्यादौ तु कृतं नृत्तं संध्यानृत्तं समाचरेत्
ततो लिंगान्तिकं गत्वा दत्वार्घ्यं लिंगमस्तके १०३
पिरिडकासहितं लिंगं जलेन स्नापयेत्सुधीः

आमंत्रिणहविर्दत्वा धूपदीपं क्रमाद्ददेत् १०४
ततो नीरांजनं कृत्वा यथा वित्तानुसारतः
महाहविस्ततः कुर्याद् यथा विभवविस्तरम् १०५
स्वायंभुवे ॥
रात्रौ प्रथमसंध्यायां सायरक्षाधुनोच्यते
शौचमाचमनं स्नानं संध्योपासनमेव च १०६
विधाय पूर्ववन्मंत्री शिवधाम प्रविश्य च
नृत्तमूर्त्यालयं प्राप्य प्रणवार्घ्यं प्रकल्प्य च १०७
द्वारमस्त्रेण संप्रोक्ष्य द्वारपानर्चयेत्क्रमात्
अन्तः प्रविश्य देहळ्यां अस्त्रद्वारपमर्चयेत् १०८
वास्तुनाथं च संपूज्य दत्वार्घ्यं नृत्तमूर्तये
ताडयित्वा महाघण्टां प्रच्छिन्नं विसृजेत्पटम् १०९
संध्यानृत्ताय तत्काले पंचवाद्यं महारवम्
कल्पयित्वा महामंत्री गत्वा मूलालयं ततः ११०
द्वारपालार्चनं लिंगशोधनं चासनादिकम्
सकळीकरणाद्यं च सर्वं कृत्वा तु पूर्ववत् १११
अभ्यंगादिसमायुक्तं अभिषेकं समाचरेत्
वस्त्राभरणमाल्यादि मंत्रान्नान्तं विधाय च ११२
धूपदीपं ततो दत्वा सायरक्षां समारभेत्
भीमसंहितायाम् ॥
वस्त्रपूतेन संशोध्य जलेन स्नापयेच्छिवम् ११३
उपवीतोत्तरीयं च भूषणं गन्धपुष्पकम्
दाप्यं तु हृदयेनैव पश्चाद्धण्टां तु ताडयेत् ११४
हृदयेन पटं नीत्वा धूपदीपौ ददेद्धृदा
पश्चान्नीराञ्जनं कुर्यात् शास्त्रदृष्टेन कर्मणा ११५
ग्रन्थान्तरे ॥
पूर्वसंध्यार्चिते पुष्पे माल्ये वा समुपस्थिते
पूजितं लिंगबेरादि यदि दोषकरं नृणाम् ११६
अघोरेण शतं जप्त्वा पुनः पूजां समाचरेत्

स्वदेशकालयैरेव यज्ञायुतफलप्रदाः ११७
अन्यदेशेऽन्यकाले वा त एवारिष्टहेतवः
उपचारविधिः ॥
आसनावाहनार्घ्याणि स्वागतं चानुमान्यकम् ११८
पाद्यमाचमनं स्नानं वस्त्रं चैवोपवीतकम्
भूषणं गन्धपुष्पं च धूपदीपं तथैव च ११९
नीरांजनं च व्यजनं चामरं छत्रदपणम्
दर्शनं दशमुद्राणां पंचावरण पूजनम् १२०
नैवेद्यं होमकर्माणि बलिदानं जपस्तथा
ध्यानं स्तोत्रनमस्कार उत्सवो गीतवाद्यकम् १२१
नृत्तमर्घ्यं विसृज्याथ षट्त्रिंशदुपचारकम

अथातस्संप्रवक्ष्यामि आचार्यस्य च लक्षणम्
चोरस्सत्यवादी च पूर्वाचार्यप्रयोगवित् १
शास्त्रज्ञश्शिवतन्त्रज्ञश्शिवदीक्षाभिषेचकः
मन्त्रज्ञस्तत्वभेदज्ञो गुरुदेवाग्निपूजकः २
सिद्धान्तनिपुणो दक्षश्श्रीमान्भक्तजनप्रियः
नक्तभोजी जितेन्द्री च व्यक्त्याचारः प्रियं वदः ३
न हीनाङ्गो विशुद्धात्मा दीक्षितः प्रतिवादकः
पञ्चयज्ञपरो नित्यं शूद्रान्नं परिवर्जयेत् ४
ऋग्यजुस्सामाथर्वज्ञश्शिवशास्त्रज्ञसूक्ष्मवान्
निष्कळान्सकळो जातस्तद्वदाचार्यपुत्रकः ५
आचार्यः पुत्रपौत्रो वा दौहित्रो वा विशेषतः
तेषामभावनाचार्यं पुत्रेणैव च तं यदि ६
पुष्पे नष्टे फलं नाहं रूयूषरे सत्यवत्फलम्
परद्रव्यं न गृह्णीयाद्भक्तानुग्रहकारणः ७
परशास्त्रमविज्ञेय अन्यदीक्षां निवर्जयेत्
चतुर्णामपि वर्णानां ब्राह्मणेभ्यो विशिष्यते ८

ब्राह्मणानामलाभे तु क्षत्रियाणां विशेषतः
क्षत्रियाणामलाभे तु वैश्यानान्तु विशेषतः ९
एवमेव क्रमात्प्रोक्तश्शेषाचार्यव्यवस्थितः
अनुलोमस्तथाचार्यः प्रतिलोमस्तु वर्जितः १०
ब्राह्मणात्क्षत्रियकन्यायां जातो वै क्षत्रियोत्तमः
ब्राह्मणात्किञ्चिदूनञ्च क्षत्रियात्किञ्चिदुत्तमः ११
ब्राह्मणाद्वैश्यकन्यायां जातो वैश्योत्तमस्तु यः
क्षत्रियस्य प्रसूतेऽपि वैश्यः किञ्चिदिवोत्तमः १२
प्रविष्टाश्शिवदीक्षायां सर्वलक्षणलक्षितः
क्षत्रियाद्वैश्यकन्यायां जातो वैश्योत्तमो भवेत् १३
वैश्यस्य शूद्रकन्यायां जातश्शूद्रस्य चोत्तमः
सर्वलक्षणसम्पन्नदीक्षिताश्शिवगोचरः १४
एवमेव गुणैर्युक्तश्शैवसन्तानमुख्यवान्
पट्टवीरज्ञस्सर्वकत्व स
शैवं पाशुपतं सोमत्रयसिद्धान्तभेदिनः १५
केवलं शैवसिद्धान्तश्शिवलीलाप्रसङ्गकात्
अष्टवृत्तानुमुख्येनाष्टसन्दर्शनप्रियः १६
मुख्यवान्पट्टवीरज्ञस्सर्वकत्वस्य पाठकः
स्निग्धाङ्गो लळिताङ्गज्ञस्सर्वावयव शोभितः १७
नखी वा केशसंयुक्तो भस्मरुद्राक्षधारकः
सूत्रत्यागी शिखात्यागी मन्त्रसाध्यादिभिश्शिवः १८
सर्वाङ्गमेषु निपुणस्सर्वसङ्गनिवर्तितः
सोऽपि वै नैष्ठिको नाम आचार्यश्रेष्ठ उच्यते १९
तस्य पुत्रो न शास्त्रज्ञस्सोऽपि कर्मार्हो भवेत्
एते वा कृतिसंयुक्तो वस्त्राभरणभूषितः २०
इत्थं रूपमिदं शैवमाचार्यश्चाभिधीयते
दीर्घाङ्गी चैव ह्रस्वाङ्गी शठधीर्गुणमत्सरः २१
शपलः कृपलश्चैवानाचार्यकुलोद्भवाः
विटधूर्तश्च दूतश्च दूतोन्मत्तप्रमत्तवान् २२

कुष्ठरोगी च कुण्डश्च शिपिविष्टश्च दुष्टवान्
अग्निदग्धतनुश्चैवाङ्गहीनो विकारवान् २३
दुश्चर्मी वेदविक्रीवो दुस्थितो दुर्लभस्तथा
नैष्टशौचो व्रताहीनो नामधारकविग्रहः २४
पापेर्ष्यारतो नित्यं देवाग्निगुरुनिन्दकः
अनाचार्यस्य पुत्रो वा मुहुश्च मृतभार्यकः २५
धातुक्षयविकाराङ्गी सत्वनष्टोह्यबुद्धिमान्
व्यापारी देवविक्रीतविद्यानष्टश्च नष्टवान् २६
दुर्जनो दुष्टसंसर्गदुर्नीतः पतितस्तथा
स्वकर्मणि फलं न स्यात् प्रतिष्ठादिषु यस्तु सः २७
एवमेव समायुक्तो स्थापनाद्यं विसर्जयेत्
आदिशैवेन कर्तव्यं प्रतिष्ठास्थापनादयः २८
अनुशैवादयस्सर्वे आत्मार्थविषये क्रमात्
सकळस्सर्वदेशेषु गतागतविनिश्चयः २९
इत्याचार्यलक्षणं प्रोक्तं शिष्यादेर्लक्षणं शृणु
इति सूक्ष्मतन्त्रे आचार्यलक्षणपटलः

अतः परं प्रवक्ष्यामि शिष्यादीनाञ्च लक्षणम्
स्वमूर्तिमूर्तिधाराश्च पर्यष्टिपरिचारकाः १
चोदका बोधकश्चैव होताऽध्वर्युरिव च
आदिशैवकुलोद्वान्ताश्शिवदीक्षाभियुक्तकाः २
सर्वलक्षणसम्पन्ना देवभक्ता महायशाः
शैवागमेषु सम्पन्ना धर्मशास्त्रार्थतत्पराः ३
वेदवेदाङ्गपाठज्ञास्सर्वकर्मसु योग्यताः
महाशैवास्तु विख्यातास्तदभावे नृपास्तथा ४
तेषामभावे वैश्यास्तु क्रमवैवाहिकास्तथा
समयी पुत्रकश्चैव साधको मूर्तिधारकः ५
गुरोराज्ञा च शङ्कर्याद्देशान्तरस्थिते यदि
एवमेव विधानेन प्रतिष्ठासु च कारयेत् ६

प्रथमं येन निर्माणस्तेनैव सकलं नयेत्
कर्षणादिप्रतिष्ठान्तमेकसन्तानमार्गतः ७
भिन्नाभिन्नक्रियायाञ्च एवमेवं विधीयते
प्रासादकरणं यत्तत्तथा लिङ्गादधस्तथा ८
जीर्णोद्धारविधानं यद्वास्तुकर्मादधस्तथा
अन्यं वा चिरकालात्तु प्रतिसंवत्सरोत्सवम् ९
एतानि सर्वकर्माणि भिन्नं सम्यक्प्रकीर्तितम्
अर्चनञ्चाग्निकार्यञ्च स्नपनं दीपकर्म च १०
दीक्षाविधानमार्गञ्च शीतकुम्भादयस्तथा
दिनसंख्याविधानं यदभिन्नमिति कीर्तितम् ११
अभिनन्नक्रियाकालो न यायाद्देशिको बहिः
अवश्यं गन्तुमिच्छा चे न्नरात्र वसतिद्ध्रुवम् १२
भिन्नक्रियाविधानन्तु देशिकस्सर्वतो व्रजेत्
अभिन्नकविधानेऽपि संख्यादीनविधेः पुरा १३
गतागतं न कर्तव्यं कर्तव्यञ्चेत्तु दोषकम्
आचार्यादि चतुर्णान्तु एवमेव विधीयते १४
स्वायम्भुवादिलिङ्गानां यामेषु सकळानि च
परिवाराणि चान्यानि यः करोति पुरा ततः १५
तेषां जीर्णेषु कालेषु तस्य सन्तानमार्गतः
कुर्यादिह विशेषोऽस्ति रूपान्तरकृतं यदि १६
गोत्रान्तरेण वा कुर्यात्पूर्वसन्तानहेतुना
कारणं किं विशेषोऽस्ति मन्त्रसम्बन्धकारणात् १७
तस्मात्सर्वप्रयत्नेन पुरातनकृताज्ञया
कुर्यात्तु स्थावरादीनामेवमेवं विधीयते १८
अनभिज्ञातगोत्रस्तु सादाख्यं वस्त्रके लिखेत्
तस्यैवानुग्रहेणैव कुर्याद्गोत्रान्तरेण वा १९
विद्याविहीनोऽपि तन्मन्त्रैः कुर्याद्वा पूर्वमार्गतः
पितुश्च करणं यत्स्यात्तस्य पुत्रेण तत्कृतम् २०
पुत्राभावे तु दौहित्रस्तदभावे +++

++++ कुर्याद्भिन्नक्रियां चिरात् २१
स्वष्टकाले च एवं स्याद्विस्पष्टे देवताज्ञया
एवमेव प्रकारेण +++++ २२
+++++ राजाराष्ट्रविनाशनम्
ग्रामादीनां विनाशाय कर्तृनाशो न संशयः २३
शिष्यादेर्लक्षणं प्रोक्तं +++++++++ २४

इति शिष्यादिलक्षणः पटलः

Reference (Pages 1-240):
*Sūkṣmāgama*, Manuscript No. T0036 of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry. This manuscript attributed to P. Neelakanta and M.S. Ramamoorthy, and dated Aug. 2, 1967, is copied from a Manuscript belonging to Kilvelur. The last two paṭalas, Ācāryalakṣaṇa and Śhiṣhyalakṣaṇa were copied from a Manuscript of the Government Oriental Manuscripts Library, Madras.

शिवमयम्

सूक्ष्मागमः

प्रथमः संपुटः

पुण्याहविधिपटलः

अथ वक्ष्ये विशेषेण पुण्याहं तु विधीयते
पुकारः पापनाशः स्याण्णयकारो देहशुद्धिदः १
हकारो धान्यशुद्धिः स्यात्पुण्याहं तु विधीयते
नित्ये नैमित्तिके काम्ये स्नानबिम्बादिशुद्धिषु २
अथवा मङ्गले कार्ये पुण्याहं तु समाचरेत्
प्रासादस्याष्टदिग्देशे विदिशास्विष्टदेशके ३
मण्डपं कारयेद्धीमान् पूर्वोक्तविधिना कुरु
स्थण्डिले द्रोणमेवोक्तं तदर्धं मध्यमं भवेत् ४
अधमं चाढकं प्रोक्तं तदर्धं तण्डुलं भवेत्
तिलैर्लाजैश्च पुष्पैश्च दर्भैश्चैव परिस्तरेत् ५

उत्तमं स्वर्णपात्रं तु मध्यमं रजतं भवेत्
अधमं ताम्रमित्युक्तमथवा मृण्मयं भवेत्  ६
द्वादशाङ्गुलमुत्सेधं नाहं विंशदङ्गुलम्
कुक्ष्युत्सेधं षडङ्गुल्यं पादमर्धाङ्गुलं भवेत्  ७
घ्राणं वेदागुलं प्रोक्तमोष्ठमष्टाङ्गुलं भवेत्
काळं भिन्नं च सुषिरं भेदश्छेदं च लीनकम्  ८
दुग्यं चैव पुराणं च वर्जयेत्तु प्रयत्नतः
बिम्बफलसमाकारं वर्धनीं ग्राह्य देशिकः  ९
तन्तुना वेष्टयेत्पात्रं गवाक्षसदृशान्तरम्
प्रक्षाळ्य चास्त्रमन्त्रेण स्थापयित्वा विशेषतः  १०
आचार्यं दापयित्वा तु नववस्त्रोत्तरीयकम्
भस्मन्यासं ततः कृत्वा सकळीकृतविग्रहः  ११
गणेशस्य निवेद्यार्थमविघ्नं प्रार्थयेत्ततः
सामान्यार्घ्यं च संकल्प्य विघ्नेशं पूजयेत्ततः  १२
भक्ष्याणि विविधान्याथ भोज्यानि विविधानि च
पात्रेषु विधिना पूर्य गणानां त्वेति मन्त्रतः  १३
गणेशस्य निवेद्याथ अविघ्नं प्रार्थयेत्ततः
भक्ष्यादिषु च सर्वेषु नाळिकेरं विशिष्यते  १४
तस्माद्गणेशनैवेद्यं नाळिकेरेण कारयेत्
कर्मारम्भस्य तत्काले संकल्पमिति बुद्धिमान्  १५
वेदवेदाङ्गसंयुक्तान् भूसुरान्ब्राह्मणसंख्यकान्
आहूयस्थापयित्वा तु प्राङ्मुखो वाप्युदङ्मुखः  १६
दर्भद्वयं तु संगृह्य द्वादशाङ्गुलमायतम्
आचार्यदक्षिणे हस्तेऽनामिकायां सुबन्धयेत्  १७
प्राणायामत्रयं कृत्वा प्रणवेन समन्वितम्
वामहस्ते तु संयोज्य दक्षजानूपरि न्यसेत्  १८
एतत्कर्म करिष्यामि दर्भे चासनमुत्तमम्
स्थण्डिले तु रमां पूज्य धूपधूमेन पूरयेत्  १९
वह्न्याधोमुखसंस्थाप्य दर्भेणाच्छाद्य वर्मणा

पात्रमुद्धारणं कृत्वा गन्धतोयेन पूरयेत् २०
आपो वा इति मन्त्रेण अस्त्रेणैवाथ कारयेत्
सकूर्चं सापिधानं च सर्वत्र हेमसंयुतम् २१
चलासनमथाभ्यर्च्य पूजयेत्कलशाधिपान्
मूले ब्रह्माणमभ्यर्च्य मध्यमे विष्णुदैवतम् २२
ओष्ठं वै रुद्रदैवत्यं पार्श्वयोर्नन्दिकाळकौ
घ्राणे विघ्नेश्वरं चैव जले चैवाष्टतीर्थकम् २३
गङ्गे च यमुने चैव नर्मदा च सरस्वती
सिन्धुर्गोदावरी चैव कावेरी ताम्रपर्णिका २४
शिवतण्डुलमुत्कृष्टं मध्यमं तु तदर्धकम्
द्विप्रस्थमधमं ज्ञेयं तण्डुलैरिसुसन्निभैः २५
कांस्यपात्रं तु संस्थाप्य ताम्बूलं च सुसंयुतम्
बृहतीफलसंयुक्तं दर्भपुष्पसमन्वितम् २६
स्थलिके चन्द्रमभ्यर्च्य तण्डुले तारकान्यपि
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् २७
पुण्याहं वाचयिष्येति भवद्भिः पदपूर्वकम्
वाचयित्वा गुरुः पूर्वं वाच्यतामिति भूसुराः २८
वाचयित्वा गुरुः पूर्वं वाच्यतामिति भूसुराः
आपः प्ययो गुरोर्वाक्यं शिवापास्सुरवाक्यकः २९
गन्धाभ्यर्चनमाचार्यः सुगन्धः प्रतिवाचनम्
देशिकः सुमनश्चैव सौमनस्यं च भूसुराः ३०
अक्षतं देशिकश्चैव चारिष्टास्य च भूसुराः
अन्वाहार्य तथाचार्य विप्रोऽस्तु प्रतिवाचकम् ३१
देशिकस्तु जपित्वा तु भूसुराश्च जपेत्सह
उत्थाय वर्धनीं कृत्वा चोर्ध्वे तण्डुलपात्रकम् ३२
मनस्समाधेयेत्यादि ब्राह्मणः प्रतिवाचकः
यद्देवोदस्य पुण्याहं ताण्डवप्रियवाचकः ३३
प्रीयतां देव इत्युक्त्वा प्रीयतामिति भूसुराः
स्वस्ति मध्ये तु यत्कर्म तत्कर्म स्वस्तिवाचकः ३४

ऋद्धिवाचकमाचार्यः ऋद्ध्यतामिति भूसुराः
घ्राणेन स्नावयेत्तोयं पूर्वे वा चोत्तरे भुवि ३५
तेनैव राक्षसाश्चैव तृप्तिमाप्नोति ते ध्रुवम्
स्थापयेत्तण्डुलस्योर्ध्वे पुनश्चासनमर्चयेत् ३६
आपो हिष्ठेति मन्त्रेण हिरण्यं पवमानकम्
जपान्ते शान्तीत्युक्त्वा धूपदीपादिनार्चयेत् ३७
एवं क्रमेण पुण्याहं कारयेत्सर्वकर्मसु
पूर्वाह्ने चैव मध्याह्ने प्रदोषे चार्धयामके ३८
अन्यसंधिषु सर्वेषु अन्यत्राप्यभिवर्धयेत्
माषमग्नजलं पीत्वा देहशुद्ध्यर्थकारणम् ३९
पुण्याहं फलमेवोक्तमाचार्यादीन्सुपूजयेत्
एवं पुण्याहमाख्यातं पञ्चगव्यविधिं शृणु ४०

इति सूक्ष्मागमे पुण्याहवाचनपटल एकः

## पञ्चगव्यविधिपटलः

पञ्चगव्यविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः १
अन्यपुण्यदिने चैव ग्रहणे चन्द्रसूर्ययोः
प्रायश्चित्ते च जन्मर्क्षे स्नापयेत्पञ्चगव्यकम् २
मण्डपे त्विष्टदेशे वा स्थण्डिलं शालिना कुरु
दर्भैः पुष्पैः परिस्तीर्य नवकोष्ठेन लेखयेत् ३
शिवं सदाशिवं विद्यात्कालं च पुरुषं तथा
कालो नियतिरागश्च ईशैः कोष्ठं प्रपूजयेत् ४
क्षाळनं चास्त्रमन्त्रेण संधूपं हृदयेन तु
संस्थाप्याधोमुखान्सर्वान्शिरोमन्त्रेण देशिकः ५
निरीक्ष्य हृदयेनैव आसनं कुशया शिव
नेत्रेणोन्मीलनं चैव स्थापयेत्कलशांस्तदा ६
सुप्रतिष्ठं सुशान्तं च तेजोवदमृतं तथा
रक्तोदकं च पात्राणि तत्तन्नाम्नाभिपूजयेत् ७

मध्यादीशानपर्यन्तं क्रमेणैव तु विन्यसेत्
कपिलापञ्चगव्येन ग्राहयेद्देशिकोत्तमः ८
आप्यायस्वेति तं क्षीरं दधिमन्त्रेण विन्यसेत्
शुक्रमसीति चाज्यं स्याद्गायत्र्या मूत्रकं न्यसेत् ९
गोमयं गन्धद्वारेति देवस्यत्वा कुशोदकम्
मूलमन्त्रेण संस्पृश्य अमृतीकरणं कुरु १०
मध्यादिब्रह्ममन्त्रेण योजयेत्तु क्रमेण तु
शिवगायत्रिमन्त्रेण योजयेत्तु कुशोदकम् ११
त्रियम्बकेन मन्त्रेण समाप्लावनमर्दयेत्
कूर्चेन सापिधानेन मूलमन्त्रमनुस्मरन् १२
एकद्वित्रिचतुःपञ्च कृत्वश्चैवाभिमन्त्रयेत्
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् १३
त्रिकाले दापयेच्छम्भोर्ब्रह्ममन्त्रमनुस्मरन्
पञ्चगव्यविधिः प्रोक्तः पञ्चामृतविधिं शृणु १४

पञ्चामृतविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
दुर्भिक्षे दुर्निमित्ते च ज्वरमार्यादिपीडिते १
विषुवायनकालेषु नित्यनैमित्तिकेऽपि च
पञ्चामृतेन संस्नाप्य सर्वसिद्धिकरं नृणाम् २
देवाग्रे त्विष्टदेशे वा स्थण्डिलं शालिना कुरु
भूतकोष्ठं समालिख्य ईशपद्रं समालिखेत् ३
दर्भैः पुष्पैः परिस्तीर्य पूर्ववत्क्षालनादिकम्
अव्यक्ते नियतिः कालो वृत्तावृत्तसुमङ्गलम् ४
कोष्ठषट्कं प्रपूज्याथ पात्रं तन्मध्यमे न्यसेत्
अमृतं सोमपात्रं च विद्यारत्नोदपात्रकम् ५
सुधामृतसुरप्रीतिपात्रमेवं प्रपूजयेत्
मधुक्षीरं दधि सर्पिर्गुळं चैव विनिक्षिपेत् ६
नालिकेरोदकं चैव पद्मे संस्थाप्य देशिकः
मधु वाता ऋतायेति मधुपात्रं तु पूरयेत् ७

आप्यायस्वेति च क्षीरं सोमपात्रं तु पूरयेत्
दधिक्राविरणेति दधि दक्षपात्रे तु विन्यसेत् ८
घृतमिक्षेति मन्त्रेण चोत्तरे विन्यसेद्धृतम्
एषामीशेति मन्त्रेण शर्करां पश्चिमे न्यसेत् ९
आपो वा इति मन्त्रेण नालिकेरोदकं न्यसेत्
शिवगायत्रिमन्त्रेण स्पृश्य जप्वाथ देशिकः १०
ईशानादीनि सद्याञ्च मन्त्रैः संयोज्य देशिकः
नालिकेरोदक संयोज्य शिवगायत्र्या बुधः ११
मूलमन्त्रेण संयोज्य समृडं कदलीफलम्
त्रियम्बकमन्त्रेण मर्दयेत् अमृतं सुधीः १२
दर्भेणाच्छाद्यते स्पृष्ट्वा मूलमन्त्रं जपेत्सुधीः
गन्धपुष्पादिनाभ्यर्च्य स्थापयेत्परमेश्वरम् १३
त्रिकालं द्विकालं वा एककालमथापि वा
संस्नाप्य परमेशानं दशाक्षरमनुस्मरेत् १४
एवं यः कुरुते मर्त्यः स पुरयां गतिमाप्नुयात्
पञ्चामृतमिति प्रोक्तमर्चनाङ्गविधिं शृणु १५
इति सूक्ष्मागमे पञ्चामृतविधिपटलस्तृतीयः

## अर्चनाङ्गविधिपटलः

अर्चनाङ्गविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
स्वकारनियतं पूर्वं द्वितीयं द्रव्यनिर्णयम् १
कालं द्विविधमित्युक्तं स्थूलसूक्ष्ममिति द्विधम्
स्थूलं लौकिकसंज्ञं तु सूक्ष्मं चात्मको ततः २
स्थूलकाले प्रयोक्तव्यं शिवपूजादि सर्वदा
योगिनां निमिषं योगभागं त्रुटिरिति स्मृतम् ३
लवं तद्द्वयसंख्या च तद्द्वयं निमिषं तथा
निमिषं त्रिषु संज्ञा च काष्ठा चेति प्रकीर्तितः ४
काष्ठा च त्रिषु संज्ञा च कला चेति प्रकीर्तितः
कलाशतं मुहूर्तं च तथैव च कलाद्वयम् ५

मुनिसंख्या सनडी याममित्युच्चरेद्बुधः
तत्संख्याष्टर्ह्यहोरात्रं यजनं प्रतियामकम् ६
अष्ठसंध्या तु यजनमुत्तमं चेति कीर्तितम्
चतुस्संध्यार्चनं कार्यं मध्यमं चेति कीर्तितम् ७
त्रिस्संध्यार्चनं कुर्यादधमं चेति कीर्तितम्
पूजायामष्टसंध्या चे महासन्धिचतुष्टयम् ८
उपसन्धिचतुष्कं स्यात्त्रिसन्ध्यामुत्सवं कुरु
चतुस्संध्यार्चनं कुर्याद् उपसन्धि च मेव च ९
नित्योत्सव विधानेन त्रिसंध्यासु विशेषतः
उपसन्ध्येकसंयुक्तं द्विसन्धिबलिमाचरेत् १०
अथवा एकसन्ध्याया आचरेद्बलिं भ्रमति
उपसन्ध्योर्विशेषेण बलिदानं विवर्जयेत् ११
तत्सन्धौ च विशेषेण स्नाननैवेद्यकान्तकः
अथवा दीपदानान्तमाचरेदुपसन्धिषु १२
नित्यमेवं समाख्यातं कुर्यान्नैमित्तिकं स्मृतम्
नित्यसन्ध्यासमायुक्तं नैमित्तिकं समाचरेत् १३
नित्यपूजासमायुक्तमयुक्तं काम्यमाचरेत्
प्रायश्चित्तादिकं सर्वं नित्यकाले समाचरेत् १४
असंध्यामाचरेद्विद्वान् अभिचारसमुद्भवः
नित्यनैमित्तिकं चैव प्रायश्चित्तं तथैव च १५
नित्यसंध्यासमायुक्तं कारयेत्सर्वसिद्धिदम्
संध्यादिक्रमणे दोषं न्यूनं चेत्तन्न दोषकृत् १६
शास्त्रातिक्रमणं तस्य सर्वदेवं न यच्छति
संध्यालक्षणमेवोक्तं तत्कालनियमं कुरु १७
आतवोदयमाराभ्य आभूतद्व्यनाडिका
मध्याह्नमिति विज्ञेयं सायंकालमथ शृणु १८
मध्याह्नान्तं समारभ्य यावन्तु दशनाडिका
सायंकालमिति प्रोक्तं प्रदोषमथ वक्ष्यते १९
अस्तमयं समारभ्य सार्धेन सप्तनाडिका

अर्धयाममिति प्रोक्तमाभूतद्द्वयनाडिका २०
मध्यरात्रमिति प्रोक्तं त्रिपादेन त्रिनाडिका
रात्र्यान्तरमिति प्रोक्तं यावत्तु भूतनाडिका २१
उषः कालमिति प्रोक्तं ज्ञात्वा कर्म समाचरेत्
ब्राह्मं तत्कालनामं हि पूजोपकरणानि च २२
सर्वाण्याहृत्य देवेशं पूजयित्वा तु देशिकः
अङ्कुरार्पणकार्यं च अधिवासनकर्म तु २३
रक्षासूत्रप्रबन्धं च सायंकाले समाचरेत्
स्थापनं प्रोक्षणं चैव गर्भन्यासं तथैव च २४
प्रातःकालेऽर्धयामे च न रात्रान्तेव समाचरेत्
रात्र्यन्तेवं शब्दं हि कुर्यात्प्राणितमोपहम् २५
स्वकालनियमं प्रोक्तं पाद्यादीनां विधिं शृणु
विद्धायचन्दनोशीरं कुङ्कुमं भस्ममिश्रितम् २६
पाद्यमुत्तममित्युक्तं उशीरं चन्दनं तथा
दूर्वासिद्धार्थकं चाषं पाद्यं मध्यममुच्यते २७
चन्दनोशीरसंमिश्रं अभः कन्यसपाद्यकम्
द्रव्याणां च प्रमाणेन निष्कं चोत्तममुच्यते २८
तथार्धमधमं प्रोक्तं तदर्धं कन्यसं भवेत्
पाद्यद्रव्यमिदं प्रोक्तं त्रुटितिम्बुलवङ्गकम् २९
उशीरं जातिकर्पूरं मुरमम्भोविमिश्रितम्
श्रेष्ठमाचमनं प्रोक्तमेलं जातिलवङ्गकम् ३०
मुरं कर्पूरतोयेन युक्तं मध्यममाचमम्
भस्ममेलं लवङ्गञ्च कन्यसाचमनं मतम् ३१
एषां द्रव्यप्रमाणं तु पूर्ववत्समुदीरितम्
आपक्षीरकुशाग्राणि तण्डुलैरक्षतैर्यवैः ३२
सिद्धार्थैश्च तिलैर्युक्तमर्घ्यमुत्तममुच्यते
सर्षपं यवशाल्यद्भिः तण्डुलैर्मध्यमार्घ्यकम् ३३
तण्डुलैः शाल्यद्भिः अर्घ्यं कन्यसमुच्यते
एतद्द्रव्यप्रमाणं तु पूर्वोक्तविधिवद्ग्रहेत् ३४

स्नानं भारत्रयं षड्ढि उत्तमं तु प्रशस्यते
तस्यार्धं मध्यमं प्रोक्ते तदर्धमधमं स्मृतम् ३५
एलालवङ्गकर्पूरफलपत्रघनैर्युतम्
चन्दनं मोदपुष्पं च स्नानद्रव्यमिति स्मृतम् ३६
पाद्यं स्नानादिकैर्द्रव्यैर्हीनं गन्धकुशैः सह
जलेनैव समायुक्तं द्रव्यभागे प्रकल्पयेत् ३७
खड्गपत्रं च कर्पूरं कुङ्कुमं च फलत्रयम्
चन्दनोशीरलोहैश्च श्रेष्ठं गन्धमिति स्मृतम् ३८
कर्पूरं चन्दनं चैव फलत्रयमुशीरकम्
खड्गं घनसमायुक्तं गन्धं मध्यममुच्यते ३९
घनं हिमं च कर्पूरं गन्धं कन्यसमुच्यते
चन्दनं पलं श्रेष्ठं तस्यार्धं मध्यमं भवेत् ४०
तदर्धमधमं ज्ञेयं द्रव्यपूर्वोक्तसंख्यया
गन्धद्रव्यैर्विशेषेण पूर्वे निष्कमात्रकम् ४१
गन्धद्रव्यमिति प्रोक्तं पुष्पाणां लक्षणं शृणु
सत्वराजससर्वाणि तामसानि तथैव च ४२
सितान्यरुणकृष्णानि मिश्रकानि चतुर्विधम्
श्रियावर्तं च मन्दारं नन्द्यावर्तं च मालती ४३
श्वेतार्कं वकुलं चैव पुन्नागं शङ्खपुष्पिका
द्रोणं च श्वेतलोध्रं च जाती च शतपत्रकम् ४४
लक्ष्मी च बेरपत्री च सात्विकानि विनिर्दिशेत्
रक्तोत्पलं रक्तपद्मं पलाशं पाटली तथा ४५
दुर्धूरं मौसली चैव बृहती करवीरकम्
व्याघ्री च रुद्रपर्णी च पट्टिका वेदिका तथा ४६
रक्तमन्दारकुसुममेतानि राजसानि वै
आरग्वधं च दूर्धूरं कर्णिकारं च चम्पकम् ४७
केतकी गिरतं चैव कौशिकं कर्णिकारकम्
अर्जुनं पूगपुष्पं च सरलं तामसान्वितम् ४८
सात्विकं मोक्षदं स्याद् राजसं पौष्टिकं तथा

मिश्रकं द्वयसिद्धिः स्यात्पत्रं पुत्रसमृद्धिदम् ४९
मुनिपत्रद्वयं चैव सहपत्री च धातकी
अपामार्गं शमी दूर्वा पञ्चबिल्वं त्यथा तथा ५०
निर्गुण्डिका च तुलसी जम्बू चन्द्रप्रवर्तिका
कदलीकुसुमं चैव एकपत्रारविन्दकम् ५१
श्वेतपत्रं त्रियावर्तं श्वेतार्कं षोडशमेव च
मालती नन्दिकावर्तपुन्नागमुदये ददेत् ५२
पङ्कजं करवीरं च व्याघ्री ख्यासतकी तथा
बृहती पाटली द्रोणं मध्याह्ने तु प्रदापयेत् ५३
मालती मल्लिका चैव चम्पकं वैजिका तथा
दुर्धूरं बहुकर्णी च दद्यात्तु प्रदोषके ५४
नातिनीलोत्पलं चैव दान्तं पूगं च पुष्पकम्
घनं च बिल्वपत्रं च दापयेदर्धयामके ५५
विहाय शेषपुष्पाणि अन्यसंध्यासु दापयेत्
उक्तपत्राणि सर्वाणि सर्वसंध्यासु दापयेत् ५६
अतिपक्वमपक्वं च एकाहोषितमेव च
केशकीटोपविद्धं च लूतासूत्रावृतं तथा ५७
स्वयं पतितपुष्पं च संचितानि च वर्जयेत्
उत्सवादिषु यात्रायां रथाद्यलंकृतेन वा ५८
सकलानामलंकारे वर्ज्यपुष्पाणि संग्रहेत्
पुष्पलक्षणमाख्यातं धूपानां लक्षणं शृणु ५९
चन्दनं कुन्दरुष्कं निर्यासं चैव गुग्गुलु
मेघं कर्पूरलोहं च भागभागविहीनकम् ६०
आहत्य चूर्णयित्वा तु मधुना च परिप्लुतम्
श्रिया व्याघ्राणो रूपं शिवप्रीतिकरं भवेत् ६१
निर्यासं चन्दनं चैव लोहकर्पूरसंयुतम्
उत्तमं धूपमित्युक्तं मधुना च परिप्लुतम् ६२
चन्दनोशीरलोहं च मधुना च परिप्लुतम्
मध्यमं धूपमेवोक्तं गुग्गुलं घृतसंयुतम् ६३

अधमं दीपमाख्यातं दीपद्रव्यमथ शृणु
कपिला या घृतं श्रेष्ठमन्यसर्पिस्तु मध्यमम् ६४
अधमं शुद्धतैलं स्यात् पद्मकार्पासतूलिकाम्
अथवा चित्रवस्त्रेण वर्तिनीं कारयेद्बुधः ६५
कर्पूरं वर्तिकं कुर्यात् संसिद्धिमृगनाभिका
स्वर्णपात्रे विनिक्षिप्य दीपाण्यारोप्य देशिकः ६६
दापयेत्परमेशानं सर्वसिद्धिकरं परम्
चतुस्त्रिद्व्यङ्गुलायामं श्रेष्ठमध्याधमं स्मृतम् ६७
दीपज्वालाप्रमाणं तु कल्पयेत्तु पृथक्पृथक्
दीपप्रियो हि भगवान् देवदेवः सदाशिवः ६८
अर्चनाङ्गविधिप्रोक्तं शिवस्याराधनं शृणु
इति सूक्ष्मागमे अर्चनाङ्गविधिपटलश्चतुर्थः

शिवपूजाविधिपटलः

अतः परं प्रवक्ष्यामि शिवपूजाविधिक्रमम्
आयुरारोग्यजयदं सर्वयज्ञफलप्रदम् १
ब्रह्महत्यादिदोषघ्नं पूजावृद्धिकरं परम्
शिवपूजासमं पुण्यं न भूतं न भविष्यति २
द्विविधं तत्समाख्यातमात्मार्थं च परार्थकम्
शुद्धकेवलसंमिश्रमात्मार्थं परिकीर्तितम् ३
अष्टाविंशतिभेदेन परार्थं संप्रकीर्तितम्
शैवादि पैतृकान्तानामष्टाविंशतिकं स्मृतम् ४
तेषु भौतिकमाख्यातं समासाच्छृणु सौवृतम्
प्रातरुत्थाय मनसा शिवं संचिन्तयेद्बुधः ५
तद्ग्रामाद्बहिर्निर्गत्य विण्मूत्रं च विसर्जयेत्
शौचमाचमनं दन्ततालुसंशोधनं कुरु ६
ऋग्वेदादिकमन्त्रेण स्नानं कृत्वा विचक्षणः
संशुद्धवस्त्रखण्डेन मार्जेद्देहगतं जलम् ७
धौतवस्त्रेण संवेष्ट्य आर्द्रवस्त्रं परित्यजेत्

ततस्संध्यामुपासीत क्रमाद्वैदिकशैवकम्  ८
ततो देवालयं गत्वा प्रदक्षिणमथाचरेत्
पादप्रक्षाळनं कृत्वा द्वारदेवान्समर्चयेत्  ९
मण्डपं तु प्रविश्याथ रुचिरासनसंस्थितः
भस्म तु वामहस्तेन दक्षेणैवाभिमन्त्रयेत्  १०
असुरां स परित्यज्य दिग्बन्धं चास्त्रमन्त्रतः
दक्षहस्तजलं पीत्वा अङ्गुल्येनैव मर्दयेत्  ११
शिरोललाटकर्णे तु कण्ठे च हृदयेऽपि च
बाह्वे नाभ्यां शिरस्तेन भस्मन्यासं समाचरेत्  १२
रुद्रो विष्णुर्विरिञ्चिश्च ऊर्ध्वाधस्तात्त्रिरेखिका
दिग्बन्धनं ततः कृत्वा प्राणायामत्रयं कुरु  १३
भूतशुद्धिं ततः कृत्वा पञ्चग्रन्थिं तु घातयेत्
मूर्धादिपादपर्यन्तममृतप्लावनं नयेत्  १४
करन्यासं ततः कृत्वा अङ्गुळीन्यासमाचरेत्
अङ्गन्यासं ततः कुर्यादष्टत्रिंशत्कला न्यसेत्  १५
हृत्पद्मे चार्चयेद्देवमात्मशुद्धिरिति स्मृतम्
शक्रपावकयोर्मध्ये दिवानाथं प्रपूजयेत्  १६
आदित्यं जातवेदोऽदि गन्धादि स्नापयेद्रविम्
अलंकृत्य विशेषेण गन्धपुष्पस्त्रगादिभिः  १७
दण्डिपिङ्गगणेशं गुरो प्रभूतमासनम्
विमलासनमाराध्य परमान्युपपद्मज  १८
दीप्ता सूक्ष्मा जया भद्रा भूत्यैर्विमलमेव च
विद्युतो सर्वमुख्यै च अर्कासनखषोल्ककम्  १९
नादं वह्निस्वरोपेतं द्वितीयस्वरसंयुतम्
तृतीयस्वरसंयुक्तं नादाद्यं शिवसंयुतम्  २०
नमोऽन्तं सौरमुच्चार्य सौरं संपूजयेद्गुरुः
सौरं कुङ्कुमसंकाशं सर्वाभरणभूषितम्  २१
द्विनेत्रं चारुवदनं रक्तमाल्यानुलेपनम्
चतुर्भुजसमोपेतं वरहस्ताम्बुजद्वयम्  २२

अभयं वरदोपेतं प्रभामण्डलमण्डितम्
उपवीतसमायुक्तमुषादेवीसमन्वितम्  २३
पद्मस्थं वा रथारोहमरुणेन समन्वितम्
ध्यात्वाभ्यर्च्य षडङ्गानि परिवारसमन्वितम्  २४
सोमांगारबुधांश्चैव गुरुं शुक्रं शनैश्चरम्
राहुं केतुं क्रमेणैव पूर्वादीशान्तमर्चयेत्  २५
मुद्गान्नं पायसान्नं च धूपदीपादिकं ददेत्
तेजश्चण्डेश्वरं पूज्य पणिवत्यार्थपावयेत्  २६
भान्वालयं विना चेत्तु देवाग्रे मण्डलं यजेत्
प्रणवेनार्घ्यं संकल्प्य तेनैव प्रोक्ष्य भूतले  २७
चतुर्विं शाङ्गुलायामं चतुरश्रसमन्वितम्
समाज्य वामदेवेन दक्षपाणितलेन वै  २८
भूमिर्भूम्नेतिना पूज्य स्थानशुद्धिरिति स्मृतम्
पाद्यमाचमनं चार्घ्यं पात्रसंपूज्य देशिकः  २९
अथवाद्येकपात्रे वा पाद्यमाचमनार्घ्यकम्
क्षाळनं चास्त्रमन्त्रेण हृदयेन निरीक्षयेत्  ३०
वर्ममन्त्रावकुण्ठ्याथ तेनैवोन्मीलनं कुरु
शिवाम्भसा तु संस्थाप्य ब्रह्माङ्गैनैव चार्चयेत्  ३१
षडङ्गाय दक्षहस्तेन शिवगायत्रिमन्त्रतः
घेनुमुद्रां प्रदश्याथ हृदिना प्रोक्ष्य पात्रकान्  ३२
पूजोपकरणद्रव्यैरस्त्रेण प्रोक्ष्य देशिकः
द्रव्यशुद्धिरिति प्रोक्तं पुण्याहं वाचयेत्ततः  ३३
पञ्चगव्यं तु संकल्प्य पञ्चामृतं तथैव च
अन्यैश्च स्नपनद्रव्यैर्विधानं स्थाप्य देशिकः  ३४
विघ्नेश्वरं समभ्यर्च्य फलभक्ष्यादिकं ददेत्
वृषभं पूजयेत्पश्चात् द्वारदेवान्समर्चयेत्  ३५
तस्यैव वामपार्श्वे तु वाग्देवीं च प्रपूजयेत्
तयोर्वामे महालक्ष्मीं द्वारदक्षिणपार्श्वयोः  ३६
नन्दीं गङ्गां समभ्यर्च्य वामपार्श्वे विशेषतः

महाकाळं च यमुनां समभ्यर्च्य कवाटयोः  ३७
विमलं च सुबाहुं च भुवङ्गं च पतङ्गकम्
ऊर्ध्वेऽधस्संप्रपूज्याथ शिवास्त्रं संप्रपूजयेत्  ३८
धूपान्तं वाथ दीपान्तं हविष्यन्तं यजेत्ततः
घण्टां तु ताडयेत्तत्र परिघातत्रयेण तु  ३९
सद्योजातं समुच्चार्य अर्धमण्डपमाविशेत्
यवनिकां परित्यज्य गर्भद्वारसमन्वितम्  ४०
स्थाणुमन्त्रं जपित्वा तु गर्भगेहं विशेद्बुधः
षडङ्गैरुद्रमभ्यर्च्य धूपदीपं समाचरेत्  ४१
निर्माल्यं तु विसृज्याथ ईशानेन तु देशिकः
तद्विसर्जनकाले तु पुष्पं मूर्ध्नि च दापयेत्  ४२
लिंगं प्रक्षाळ्यास्त्रेण पीठं पाशुपतेन तु
स्थलशुद्धिं ततः कृत्वा चास्त्रमन्त्रेण बुद्धिमान्  ४३
मूलाधारात्समादाय ब्रह्मरन्ध्रेषु योजयेत्
गुरूपदेशवत्तेयं मन्त्रशुद्धिरिति स्मृतम्  ४४
प्रणवादिनमोऽन्तं च मन्त्रं जीवमिहोच्यते
विमलासनं तथा पूर्वमनन्तं च द्वितीयकम्  ४५
पद्मासनं तृतीयं तु चतुर्थं  योगमासनम्
योगासने निवेद्यं स्याद्विनोदं हरिरासने  ४६
देवस्य पिण्डकोर्ध्वे तु कल्पयेदासनं क्रमात्
मण्डलत्रितयं कल्प्य सोमसूर्याग्निमेव च  ४७
ब्रह्मा विष्णुश्च रुद्रश्च मण्डलस्याधिदेवताः
शक्तिकुण्डलिनी चैव सदाशिवाय नमोऽन्तकम्  ४८
शिवासनं तदूर्ध्वे तु मूर्तिमावाहयेद्बुधः
विद्यादेहं तु संकल्प्य स्वनाम्ना चैव पूजयेत्  ४९
तस्य मध्ये समावाह्य प्रासादेन तु मन्त्रतः
शरच्चन्द्रनिभाकारं पञ्चवक्त्रसमन्वितम्  ५०
दशबाहुसमायुक्तं हृद्गळं चैकमेव च
द्विपादं चित्रवस्त्राढ्यं सर्वाभरणभूषितम्  ५१

जटामकुटसंयुक्तं टङ्कशूलसमन्वितम्
असिखड्गसमायुक्तमभयं दक्षिणैर्युतम् ५२
सपाशं वरदं घण्टां दहनं चाङ्कुशं तथा
वामहस्तधृतं देवं तन्मध्ये द्वेतिणाणावकम् ५३
एवं सदाशिवं ध्यात्वा पाद्यमाचमनं ददेत्
अर्घ्यं गन्धं च पुष्पं च धूपदीपं ददेत्प्रभोः ५४
अनन्तमासनं कल्प्य स्वस्थानैश्च शक्तयः
कन्दाय अङ्कुरश्चेति नाळानन्तस्तथैव च ५५
चतुर्दिक्षु च मध्ये च अर्चयेत्तत्स्वनामतः
तस्य मध्ये समभ्यर्च्य स्नानकर्म समाचरेत् ५६
गव्येन स्नापयेद्विद्वान् ईशानादिक्रमेण तु
शुद्धोदकेन संस्नाप्य तैलाभिष्टामलादिना ५७
तत्तन्मन्त्रेण संस्नाप्य जलस्नानान्तरान्तरे
नाळिकेरफलं क्षौद्रं दधिक्षीरं घृतं गुलम् ५८
इक्षुसारं च गन्धोदं रत्नशुद्धोदकान्तकम्
अभिषिच्य महादेवं शिवमन्त्रेण सुव्रत ५९
मन्त्रपुष्पं ततो दत्वा मन्त्रान्नं च निवेदयेत्
वस्त्रखण्डेन संमार्ज्य लिङ्गपीठं विशेषतः ६०
दुकूलचित्रवस्त्राद्यैरलंकृत्य विशेषतः
पद्मासनं तथाभ्यर्च्य दळेभ्यः केसरेभ्य च ६१
कर्णिकांश्च नमश्चेति बीजेभ्यो नम इत्यपि
वामादिशक्तयश्चाष्टा वर्चयेद्दळाष्टके ६२
शुद्धस्फटिकसंकाशं पीठमध्ये मनोन्मनीम्
तस्योर्ध्वे शिवमावाह्य पञ्चावरणमर्चयेत् ६३
तस्य पश्चिमतो जातं वामदेवं तथोत्तरे
अघोरं दक्षिणेऽभ्यर्च्य पूर्वे तु पुरुषं स्मरेत् ६४
ईशानमीशदेशे तु कर्णिकोर्ध्वे शिवं यजेत्
अम्बिकां वरुणे देशे उत्तरे तु गणाम्बिकाम् ६५
याम्ये भागीरथी चैव पूर्वदेशे तु गौरिका

उमां वै त्वीशदेशे तु सद्यादीशानमन्त्रकः  ६६
स्वनाममन्त्रैरभ्यर्च्य ब्रह्मपञ्चकशक्तयः
हृदयं चाग्निदेशे तु शिखा निर्ऋतिगोचरे  ६७
कवचं चानिले देशे ऐशान्ये शिरसार्चयेत्
नैर्ऋते चास्त्रमभ्यर्च्य नयनं त्वीशगोचरे  ६८
वामनी चाग्निदेशे तु नीलिनी निर्ऋतिगोचरे
चक्री चानिलदेशे तु पाशाङ्गीमीशगोचरे  ६९
खड्गिनी नैर्ऋते देशे गम्भनीमीशगोचरे
गर्भावरणदेवानां स्वस्वनाम्ना तु पूजयेत्  ७०
अनन्तेशस्तथा रुद्रे ++ देशे समर्चयेत्
स्वाहादेवी च सूक्ष्मा च अग्निदेशे समर्चयेत्  ७१
शिवोत्तमस्वधादेवी याम्ये देशे यजेद्बुधः
एकनेत्रश्च क्षान्तिश्च नैर्ऋतं च समर्चयेत्  ७२
एकरुद्रश्च पुष्टिश्च वरुणे तु समर्चयेत्
त्रिमूर्तिश्च श्रुतिश्चैव वायुदेशे समर्चयेत्  ७३
श्रीकण्ठः कीर्तिशक्तिश्च उत्तरे तु यजेद्बुधः
मेधाशक्तिं शिखण्डिं च ऐशान्यां तु प्रपूजयेत्  ७४
विद्येशावरणं प्रोक्तं स्वस्वनाम्नैव पूजयेत्
भद्रादेवीं च वृषभं पूर्वदेशे समर्चयेत्  ७५
नन्दिनं कुन्दलीं शक्तिमाग्नेय्यां दिशि विन्यसेत्
गणेशं भृंगिणीं चैव दक्षिणे तु यजेद्बुधः  ७६
पदिनीं च महाकाळं नैर्ऋते तु समर्चयेत्
गृहं च देवसेनां च पश्चिमे तु समर्चयेत्  ७७
भृङ्गीशं ह्लादिनीशक्तिं वायुदेशे समर्चयेत्
गौरीं चोत्तरदेशे तु रूपणीचण्डमीशके  ७८
गणेशावरणं प्रोक्तं स्वस्वनाम्नार्चयेत्क्रमात्
अद्रेश्च देहिनी स्वाहा शक्त्याग्निदेवतास्तथा  ७९
यमश्च कालकण्ठी च दाहिनी निर्ऋतिस्तथा
वरुणं भोगिनीशक्तिं वायुश्चासोरशक्तयः  ८०

कुबेरं गम्भनीशक्तिं हर्षिणीमीशगोचरे
विष्णुं लक्ष्मीं च निर्ऋतौ सावित्रीं च विरिञ्चकम् ८१
दिक्पालावरणं प्रोक्तमिन्द्रादिषु प्रकल्पयेत्
कुलिशं पूर्वतोऽभ्यर्च्य शक्तिं चैवाग्निगोचरे ८२
सदण्डं याम्यदेशे तु खड्गं निर्ऋतिगोचरे
पाशं वै वारुणे देशे चाङ्कुशं वायुदेशके ८३
गदा चैवोत्तरे देशे त्रिशूलमीशगोचरे
त्रिशूलवामपार्श्वे तु पद्मायुधमथार्चयेत् ८४
खड्गस्य दक्षिणे पार्श्वे चक्रायुधं समर्चयेत्
देशे प्रसन्नात्मको पाद्मा याम्यदेशके ८५
गुणात्मी नैर्ऋते देशे वारुणे गोमळात्मनि
विषात्मी वायुदेशे तु विकृतात्मीशगोचरे ८६
महात्मी चक्रशक्तिश्च गळार्घ्याब्जशक्तयः
अस्त्रेशावरणं प्रोक्तं क्रमेणैव समर्चयेत् ८७
गन्धैः पुष्पैस्तथा धूपैर्दीपैश्चैव प्रपूजयेत्
अव्यक्तमिन्द्रदेशे तु नियतिं याम्यदेशके ८८
कलाख्यं वारुणे देशे कालाख्यमुत्तरे तथा
ऊर्ध्वच्छद +++ मध्यमे माधवं न्यसेत् ८९
योगासनतन्मध्ये चार्चयेन्नाममन्त्रकैः
एवं योगासनं प्रोक्तं तस्योर्ध्वे चार्चयेच्छिवम् ९०
धूपदीपं ददेत्पश्चान् नैवेद्यं चापि देशिकः
पानीयं मुखवासं च ताम्बूलं च निवेदयेत् ९१
पश्चान्नित्याग्निकार्यं च बलिभ्रमणमाचरेत्
उत्सवान्तेषु मतिमान् सिह्मासनं प्रकल्पयेत् ९२
धर्माख्यं चाग्निदेशे तु ज्ञानाख्यं नैर्ऋते यजेत्
वैराग्यं वायुदेशे तु ईशानैश्वर्यमेव च ९३
अधर्ममिन्द्रदेशे तु अज्ञानं याम्यदेशके
अवैराग्यं पाशिदेशे अनैश्वर्यं तथोत्तरे ९४
सिह्मासनाय तन्मध्ये चार्चयेन्नाममन्त्रकैः

एवं सिह्मासनं प्रोक्तं तन्मध्ये तु महेश्वरम्  ९५
अभ्यर्च्य गन्धपुष्पाद्यैर्धूपदीपादिकं ददेत्
किंचिदस्मिन्विशेषोऽस्ति महेशयजनं विधा  ९६
स्नाने स्नानं प्रकर्तव्यं गन्धपुष्पा हृदादिभिः
नैवेद्यान्ते निवेद्यं स्याद् धूपान्ते दीपमाचरेत्  ९७
वेदस्तोत्रं सनृत्तं च गीतवाद्यं तथैव च
मूलबिम्बे तु संदोष्यं महेशाभ्यर्चनान्तके  ९८
महेशस्तु स्वतन्त्रश्चेद् आसनावरणादिकम्
चण्डपूजादिकं कुर्यान् मूलबिम्बवदाचरेत्  ९९
लोहजप्रतिमादीनां स्नानं पर्वणि पर्वणि
आभासचित्रबिम्बानां संमार्ज्याबेरशोभितम्  १००
भस्मं च दर्पणं छत्रं चामरं खट्टवस्त्रके
पुष्पाञ्जलित्रयं कृत्वा दद्यान्नित्यपवित्रकम्  १०१
ऋग्वेदं च यजुर्वेदं सामवेदमथर्वणम्
ततः सूत्रपुराणं च स्तोत्रसंघोषयेत्क्रमात्  १०२
नृत्तगीतं च वाद्यं च प्रदक्षिणमतः परम्
नमस्कारेण संतोष्य जपं संतर्पयेद्बुधः  १०३
पञ्चाङ्गश्रवणेनैव कवचे रुद्रबन्धयेत्
पूजासमाप्तिं विज्ञाप्य अर्चयेत्संहिताणुभिः  १०४
चुळुकोदकं ततः कृत्वा अर्घ्यं विसर्जयेद्गुरुः
पूजापर्युषितद्रव्यैश्चण्डेशमर्चयेद्बुधः  १०५
ध्वनिश्चण्डेश्वरायेति हुंफडन्तेति बुद्धिमान्
तद्ब्रह्माङ्गैः समभ्यर्च्य निर्माल्यं तु निवेदयेत्  १०६
रजन्यामर्चनान्ते तु धूपदीपादिकं ददेत्
सन्ध्यां प्रति समभ्यर्च्य स्नाननैवेद्यकान्तकम्  १०७
न्यूनातिरिक्तं विज्ञाप्य क्षमस्वेति प्रणमेत्
मृद्भाण्डानि च सर्वाणि मासादूर्ध्वं परित्यजेत्  १०८
दार्विष्टकाशिलालोहांस्तल्लयान्तं परित्यजेत्
शिवपूजाविधिप्रोक्तमग्निकार्यविधिं शृणु  १०९

इति सूक्ष्मागमे शिवार्चनविधिपटलः पञ्चमः

## अग्निकार्यविधिपटलः

अग्निकार्यविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
स्थापने प्रोक्षणे चैव गर्भन्यासे तथैव च १
प्रायश्चित्तादिके चान्ये मङ्गळे यागकर्मणि
स्नपने तु विशेषेण अग्निकार्यं समाचरेत् २
अग्निकार्यं द्विधा ज्ञेयं कुण्डे वा स्थण्डिलेऽपि वा
अश्राकृतिर्यथा कुण्डं सर्वकार्यस्य सिद्धये ३
योनिः पुत्रकरं प्रोक्तं धनुषाभं रिपुक्षयम्
शान्तिकं स्यात्त्रिकोणाभं वर्षार्थं चैव वर्तुलम् ४
भूतार्थं रोगनाशार्थं पद्मकुण्डं जयार्थकम्
वस्वर्थं कामदं ज्ञेयं सप्ताश्रं धान्यवृद्धये ५
षडश्रं मोक्षदं ज्ञेयं कुण्डानां च चलं क्रमात्
स्थण्डिलं सर्वकामार्थसिद्धिदं चेति कीर्तितम् ६
गोमयालेपनं कृत्वा हृद्य संमृज्य भूतले
हस्तविस्तरतः खात्वा प्रोक्ष्य स्नम्ये विवर्जयेत् ७
सुशुद्धसूक्ष्मसिकतैः पूर्वमानेन विस्तृतः
एकत्र्यङ्गुलोत्सेधं समं निम्नोन्नतं च न ८
प्रागश्रं तिसृरेखास्तु उदगश्रं तथैव च
विधाता विवस्वतः सोमो मध्ये दक्षे च वामके ९
रुद्रो विष्णुश्च शक्रश्च मध्ये पश्चिमपूर्वके
प्रागश्र उदगश्राश्च तिसृरेखाधिदेवताः १०
अथवान्यप्रकारेण कुण्डं चेश्शोधनादिकम्
शोधनं क्षाळनं चैव शोषणं पाचनं तथा ११
प्रोक्षणं चैव पञ्चैते सद्यादीशानमन्त्रकैः
सूर्यकान्तोद्भवं श्रेष्ठमरण्युद्भवमध्यमम् १२
श्रोत्रियागारजो वह्निरधमश्चेति कीर्तितः
ताम्रपात्रे शरावे वा पावकं तु समानयेत् १३

होतुरग्रे तु विन्यस्य कृत्वार्धां शं परित्यजेत्
संप्रोक्ष्य बहुरूपेण हृदागन्धादिनार्चयेत् १४
वर्मणाचावकुण्ठ्याथ वह्नौ निक्षिप्य चेन्धनम्
वह्निमावाहयेन्मध्ये नाभौ कूर्चं विनिक्षिपेत् १५
वागीवागीश्वरं ध्यात्वा ऋतुस्नातां स्वमन्त्रतः
अर्चयेद्गन्धपुष्पाद्यैरेकीकृत्यानलत्रये १६
संपूज्याश्रं समादाय संभ्राम्यायसकं त्रिधा
योनिमार्गेण निक्षिप्य वह्निबीजमनुस्मरन् १७
दर्भेण चेन्धनं क्षिप्त्वा हृदा चार्घ्यं प्रदापयेत्
गर्भाधानविधिप्रोक्तं वह्निर्हं पूजयेद्धृदा १८
एतत्पुंसवनं प्रोक्तम् अर्घ्यं घोरेण दापयेत्
सीमन्तस्य दितं प्रोक्तं प्रज्वाल्याग्निं नरेण तु १९
पुष्पाक्षतैः समभ्यर्च्य शिरोमन्त्रेण देशिकः
जातकर्मविधिप्रोक्तं प्रोक्षयेदस्त्रमन्त्रतः २०
द्विमुखं चैकहृदयं चतुःश्रोत्रं द्विनासिकम्
षण्णेत्रं सप्तजिह्वं च पिङ्गळं सप्तहस्तकम् २१
त्रिपादं चैकहृदयमुपवीतसमन्वितम्
जटामकुटसंयुक्तं ज्वालादित्यसमप्रभम् २२
सव्ये चतुर्भुजं विद्यादपसव्ये त्रिहस्तकम्
अक्षमालां स्रुवं शक्तिं सृग्दक्षिणकरैर्धृतः २३
व्यजनं घृतपात्रं च तोमरं वामहस्तके
हिरण्या कनका रक्ता कृष्णा वै दक्षिणास्यके २४
सुप्रभा चातिरक्ताभसुर्वा च वामके
वारुणे मध्यमे सौम्ये याम्ये पूर्वाग्निगोचरे २५
ईशे हिरण्यकादित्यान् जिह्वास्थानं प्रकीर्तितम्
चतुःशृङ्गं वृषारूढं पद्मपीठोपरि स्थितम् २६
एवं ध्यात्वाग्निमभ्यर्च्यसर्वसिद्धिप्रदायकम्
वह्निं मध्ये तु तं ध्यात्वा आसीनं पश्चिमाननम् २७
ईशमन्त्रेण संप्रोक्ष्य दत्वार्घ्यं पुष्पमिश्रितम्

तन्नामकरणाख्यातं तदा संस्कारपञ्चकम् २८
दर्भेणेन्धनमग्नस्तु क्षिपोपस्थानकं स्मृतम्
दर्भैश्चैव परिस्तीर्य प्रतिदिक्त्रिभिः पञ्चकैः २९
उत्तरे दक्षिणे चैव अधरा उत्तरास्तथा
प्रागग्रं चोत्तराग्रं च प्रागादीनि च विन्यसेत् ३०
नवभिः सह काशैश्च चतुर्दिग्विष्ठरं न्यसेत्
ब्रह्मासनं च पात्रं च प्रणीतासनमेव च ३१
दक्षिणे पश्चिमे सौम्ये त्रिभिः काशैः परिस्तरेत्
घृतस्थालीं प्रणीतां च प्रोक्षणीं स्रुक्स्रुवं तथा ३२
चरुः कूर्चं समिद्दर्वीं विरिञ्चिं चैव कुण्डकाम्
होमद्रव्याणि सर्वाणि वामभागे तु विन्यसेत् ३३
पात्राण्यधोमुखान्यत्र द्वन्द्वरूपेण साधयेत्
प्रोक्षणीपात्रमादाय जलेनापूरयेत्ततः ३४
मध्यग्रन्थिसमायुक्तं कूर्चं मध्ये विनिक्षिपेत्
अंगुष्ठानामिकाभ्यां तु मन्त्रेणोत्प्लावनं कुरु ३५
संस्कृतेनैव तोयेन पात्राणि प्रोक्ष्य वर्मणा
आदाय होमयोग्यानि स्थाप्य दक्षिणभागतः ३६
अस्त्रेणैव तु संप्रोक्ष्य तेन तोयेन देशिकः
दर्भैश्च भूतसंख्यैस्तु कूर्चं हेतुश्च दक्षिणे ३७
संस्थाप्य ब्रह्मबीजेन अर्चयेत्तु स्वनामतः
प्रणीतापात्रमादाय कूर्चं ब्रह्मविक्षन्यसेत् ३८
तोयेनापूर्य पात्रं तु आपो वा इति मन्त्रतः
होतुर्वामे तु विन्यस्य विष्णुबीजेन पूजयेत् ३९
याम्ये वह्निस्तथा पूर्वे ऐशान्ये चोत्तराननः
राक्षसे वरुणे वायौ सोमे पूर्वाननस्तथा ४०
आज्यस्थालीं समादाय आज्येनापूर्य देशिकः
पश्चिमेंगारकं नीत्वा तस्योर्ध्वे विन्यसेत्ततः ४१
द्विकुशाग्रं तु निक्षिप्य पर्यग्निकरणं कुरु
पश्चात्पर्यग्निकरणं वह्निमध्ये विनिक्षिपेत् ४२

मध्यग्रन्थिसमायुक्तं कूर्चग्रन्थिं विनिक्षिपेत्
हृदयेन तु मन्त्रेण त्रिरुत्प्लवनमाचरेत् ४३
ग्रन्थिं मुक्त्वाम्बुसंस्पृश्य वह्निमध्ये विनिक्षिपेत्
घृतप्रदक्षिणं कृत्वा योनिरूर्ध्वे तु विन्यसेत् ४४
प्रक्षाळ्य स्रुक्स्रुवौ वह्नौ दर्भे वामकरेण तु
अग्निरूर्ध्वे समारोप्य दर्भस्याग्रे हृदा ततः ४५
मध्यमं मध्यमं चैव संमृज्य मूलमूलके
अधोमुखानि संस्थाप्य दर्भनग्रेण निक्षिपेत् ४६
पलाशोदुम्बराश्वत्थप्लक्षन्यग्रोधमेव च
शमीखदिरबिल्वार्कमपामार्गहुतन्त्यथा ४७
आम्रवेणुस्तथा दूर्वा समिधः समुदाहृताः
द्वादशांगुलमायामं नागं स्यात्प्रमाणतः ४८
समिद्द्वयांगुलायामं परिधित्तत्रमुच्यते
वरुणयाम्ये सौम्ये वा वर्मनेत्रास्त्रमन्त्रकैः ४९
विन्यस्य परिधिस्तत्र अघोरे चैव सृञ्चिरे
अनृयाजसमित्तत्र प्रणीतोर्ध्वे समिद्धृतम् ५०
वह्निं संपूज्य विधिवल्लोकपालान्समर्चयेत्
अदितेन्वादिमन्त्रेण परिषेचनमाचरेत् ५१
प्रागग्रं प्रथमं याम्ये उदगग्रं तु पश्चिमे
पूर्वाग्रं सौम्यदेशे तु चतुर्थं तु समूहनम् ५२
नेत्रास्त्रेणैव मन्त्रेण आस्ये त्वाज्याभिघारकम्
क्षुरिकेणोद्धट्टनं चास्ये आज्येनैव तु हूयते ५३
भूतसंख्यावद्धृह्ये मूलेनैव तु होमयेत्
अप उपस्पृश्य चाग्ने तु बन्धनादि च संस्पृशेत् ५४
संग्राह्य सद्यमन्त्रेण वायव्याग्नेयमाहुतिः
नैर्ऋतैशानदेशे तु स्रावयेद्धृदयेन तु ५५
एवमासारमित्युक्तमाज्यभागमतः परम्
सौम्ये याम्ये तथैवद्रे पश्चिमे मध्यमेऽपि वा ५६
पुरुषं बहुरूपं च शिखानेत्रशिखेन तु

पञ्चविंशतिसंख्या च वह्निबीजेन हूयते ५७
अन्नप्राशनमेवं हि चौळोपनयनं तथा
व्रतसमावर्तनोद्वाहं सद्यादिभिश्च होमयेत् ५८
मन्त्रसंख्यासुनेदेतान् क्रमेणैव पृथक्पृथक्
आज्यभागादिकं प्रोक्तं तदूर्ध्वे तु पृथक्पृथक् ५९
वह्निहृदयमध्ये तु कल्पयेदासनं क्रमात्
यथातथोक्तदेवानां परिवारसमन्वितम् ६०
ध्यात्वान्वासोर्ध्वमूले तु धूपदीपं तु कारयेत्
दशाहुतिः प्रधानस्य अन्येष्वेकैकमाहुतिः ६१
वह्नौस्तु जायते देवान् होमं कुर्याद्यथाविधि
इन्धनाज्यचरून्लाजांस्तिलसिद्धार्थमेव च ६२
तिलं हुत्वा हिरण्यादिसर्वासु व्याहृतिं हुनेत्
अन्यानि सर्वद्रव्याणि कनकायां हुनेत्क्रमात् ६३
स्विष्टकृद्वहुरूपेण हव्यवाहेन हूयते
जयादिरभ्यधानं च राष्ट्रभृच्चैव हूयते ६४
शब्दं वर्णं च गन्धं च शिखा धूम्रं तथारुणम्
शुभाशुभं परीक्ष्यैव प्रायश्चित्तं तु कारयेत् ६५
अस्त्रेणैव शतं हुत्वा मित्याहुतिद्वयम्
व्याहृतीभिश्च जुहुयाददितेन्वादिमन्त्रकैः ६६
परिषिच्य यथान्यायं वर्मणा परिधीन्क्रमात्
तन्मन्त्रेण क्षिपेदग्नौ अघोरसमिदादिकम् ६७
ब्रह्मकूर्चं समादाय ग्रन्थिं मुक्त्वा विसर्जयेत्
अनुयाजं समादाय अग्निमारोप्य रक्षयेत् ६८
विष्णुपात्रं समादाय प्रोक्षयेत्तु सेचयेत्
प्रतीच्यादि प्रणीताद्भिः स्रावयेत्प्रोक्ष्य सर्वशुः ६९
हुतशेषं समादाय स्रावयेद्राक्षसे दिशि
असुराद्यैश्च सर्वेण प्रीतिमाप्नोति नित्यशः ७०
विष्टरं तु समादाय ग्रन्थिं मुक्त्वा विसर्जयेत्
परिस्तरणमानीय आज्येनैव तु सेचयेत् ७१

एकदर्भं समादाय शेषमग्रादिकं ददेत्
तदेकमग्नौ निक्षिप्य तद्भस्म तिलकं कुरु ७२
तद्भस्मधारणात्पुंसामायुःश्रीकीर्तिवर्धनम्
विजयं रोगशान्त्यर्थं सर्वाभीष्टफलप्रदम् ७३
महाग्निकार्यमित्युक्तं लीलावतिमथ शृणु
इति सूक्ष्मागमे अग्निकार्यविधिपटलः षष्ठः

## लीलावत्यग्निकार्यम्

लीलावतीमहं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
स्थापनादिक्रिया सर्वा संक्षेपाद्वक्ष्यते क्रमात् १
कुण्डे वा स्थण्डिले वापि वह्निकार्यं द्विधा स्मृतम्
निरीक्षणं च मूलेन प्रोक्षणं सद्यमन्त्रतः २
दर्भेणास्त्रेण संताड्य द्रव्यादंशं परित्यजेत्
वर्मणाभ्युक्षणं चैव बीजेनैव तु विन्यसेत् ३
वह्निमूर्तिं समभ्यर्च्य बिन्दो नाराचमुद्रया
पूरकेण तथा नाभौ विश्य दोदौवमुद्रया ४
रेचकेण समादाय बीजेनाभ्यर्च्य देशिकः
अग्निं प्रज्वाल्य पत्रेण दर्भैश्चैव परिस्तरेत् ५
प्रणीतासारसमिधा ब्रह्मकूर्चं विनाचरेत्
परिषेचनं ततः कृत्वा गन्धपुष्पादिनार्चयेत् ६
आज्यं मूलेन हुत्वा च पञ्चविंशतिसंख्यया
आसनं कल्पयेन्मध्ये यथा तन्त्रोक्तदेवताः ७
अभ्यर्च्य गन्धपुष्पाद्यैः परिवारसमन्वितम्
भूताहुतिः प्रधानस्य परिवारमेकाहुतिः ८
यथा तन्त्रोक्तमन्त्रेण तत्तद्रोख्येण हूयते
व्याहृतीभिश्च जुहुयाद् हव्यवाहेन हूयते ९
जयादिरभ्यधानं च मन्त्रहोमं विवर्जयेत्
मिन्दाहुतिं च जुहुयाद् बीजमुख्येन हूयते १०
महा पाशुपतास्त्रेण प्रायश्चित्तं तथा हुनेत्

अदितेन्वादिमन्त्रेण परिषेचनमाचरेत् ११
दर्भास्तरणमादाय अग्निनिक्षिप्य देशिकः
तद्भस्म संगृहीत्वा तु त्रिपुण्ड्रं धारयेन्नरः १२
लीलावती इति ख्यातं सर्वकर्मसु योग्ययः
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् १३
नित्याग्नियजनं प्रोक्तं नित्योत्सवविधिं शृणु
इति सूक्ष्मे लीलावत्यग्निकार्यविधिपटलः सप्तमः

## नित्योत्सवविधिपटलः

नित्योत्सवविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
नित्यहोमावसाने तु बलिं दद्यात्तु देशिकः १
प्रातर्मध्याह्नसायाह्ने त्रिकालं बलिमाचरेत्
द्विकालमथवा कुर्याद् एककलमथापि वा २
इन्दुशेखरमभ्यर्च्य गन्धपुष्पादिनार्चयेत्
छत्रचामरसंयुक्तं सर्वालंकारशोभितम् ३
परिचारकमाहूय सोष्णीषं सोत्तरीयकम्
शिरसा बाहयित्वा तु रथे वाऽरोपयेत्ततः ४
देवताह्वानवाद्यैश्च घोषयेत्तु पुरस्सरम्
विज्ञाप्य देवदेवेशं बलिं दद्याद्विचक्षणः ५
दीपज्वालासमायुक्तं प्रदक्षिणक्रमं नयेत्
पीठप्रक्षाळनं कृत्वा मद्वास्यं वा विशेषतः ६
पाद्यमाचमनं चार्घ्यं गन्धपुष्पं च धूपकम्
दीपं ततो बलिं दद्यादर्घ्योदकं हृदाञ्जलिम् ७
द्वारस्योभयपार्श्वे तु नन्दीकालबलिं ददेत्
उषं पूर्वे समभ्यर्च्य भानुमेवाग्निकोणके ८
मनीशं याम्यदेशे हि मातृश्च वीरभद्रकम्
विघ्नेशं चैव तत्स्थाप्य समभ्यर्च्य बलिं ददेत् ९
गणेशं नैर्ऋते देशे वारुणे च जनार्दनम्
स्कन्दं च वायुदिग्भागे दुर्गां चोत्तरतो दिशि १०

क्षेत्रेशमीशे संपूज्य बलिं दद्यात्स्वनामतः
गोपुरे वादिद्यतिश्शब्दं शंखघोषसमन्वितम्  ११
द्वारस्य दक्षिणे वामे दण्डेशं भृंगिणं तथा
बलिं दद्याद्विशेषेण भूतपीठप्रदक्षिणम्  १२
इन्द्रश्च पूर्वदिग्भागे आग्नेय्यां वह्निमूर्तिनः
दक्षिणे धर्मराजं च निर्ऋतौ निर्ऋतिं यजेत्  १३
वारुणे वरुणं चैव अनिलं वायुदेशके
कुबेरं सोमदिग्भागे ईशस्तत्रैव देशतः  १४
निर्ऋतेर्दक्षिणे विष्णुं विरिञ्चिं शम्भुवामके
समभ्यर्च्य बलिं दद्यात्स्वस्वनामविशेषतः  १५
भूतपीठस्य पुरतः अस्त्रेश्वरबलिं ददेत्
अष्टादशगणाश्चैव दीप्ताश्चित्रस्सपूजयेत्  १६
आमोदस्य बलिं कुर्यादग्रपीठे विशेषतः
आमोदमिन्द्रदेशे तु प्रमोदं दक्षिणे ततः  १७
पश्चिमे सुमुखं चैव दुर्मुखं चोत्तरे यजेत्
विघ्नकर्तारमीशे च अविघ्नं कर्णिकोर्ध्वके  १८
समभ्यर्च्य बलिं दद्यात्स्तोत्रनृत्तादिगानकम्
अग्रपीठाग्रके कुर्याद्बलिदेवस्य तृप्तये  १९
शनैः प्रदक्षिणं कुर्याद् एवमावरणं प्रति
पादप्रक्षाळनं कृत्वा द्वारदेशं प्रविश्य च  २०
देवाग्रे स्थापयेद्देवं स्वस्थाने स्थापयेत्तु वा
पाद्यमाचमनं चार्घ्यं पुष्पमारात्रिकं ददेत्  २१
इन्दुशेखरमभ्यर्च्य बलिबिम्बे समर्चयेत्
नित्योत्सवविधिः प्रोक्तः सायरक्षाविधिं शृणु  २२
इति सूक्ष्मागमे नित्योत्सवविधिपटलोऽष्टमः

## सायरक्षाविधिपटलः

सारक्षाविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
आदित्यास्तमये काले शम्भोरग्रे तटाद्यकम्  १

वादयेद्वाद्यकांश्चैव ताळेन ताळवित्क्रमात्
देवस्यायनोच्छिष्टं तन्निवृत्यर्थकारणम् २
सायरक्षा प्रकर्तव्यं सर्वदेवेषु योग्यकम्
विघ्नेश्वरं समभ्यर्च्य धूपदीपादिकं ददेत् ३
मण्डपे स्वेष्टदेशे वा स्थण्डिलं शालिना कुरु
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पुरुषेण तु ४
त्रिपाद्यूर्ध्वे न्यसेद्धीमानभ्यर्च्यारात्रिकं हृदा
बहुरूपेण मन्त्रेण दीपमारोप्य देशिकः ५
गन्धपुष्पादिनाभ्यर्च्य धूपदीपास्त्रमन्त्रतः
गर्भगेहं प्रविश्याथ पूर्वोक्तविधिना यजेत् ६
धूपदीपं ददेच्छम्भोः पश्चादारात्रिकं ददेत्
सर्षपं च तिलं निम्बपत्रं कार्पासबीजकम् ७
लवणेन समायुक्तं भ्रामयेल्लिंगमूर्धनि
निक्षिप्यारात्रिकं मध्ये तदन्तं भसितं ददेत् ८
आरात्रिकं तु संग्राह्य वाद्यघोषसमन्वितम्
वृषाग्रे तु विनिक्षिप्य पादप्रक्षाळनं कुरु ९
एवं कृत्वा तु विधिवल्लोकरक्षाकरं भवेत्
सायरक्षाविधिः प्रोक्त उपचारविधिं शृणु १०
इति सूक्ष्मागमे सायरक्षाविधिपटलो नवमः

## उपचारविधिपटलः

उपचारविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
भुक्तिमुक्तिप्रदातव्यं पुत्रपौत्रविवृद्धिदम् १
सावश्यं चैव सौभाग्यं सौख्यं सौचकमेव च
चतुर्विधोपचारास्तु अर्चयेद्देशिकोत्तमः २
आसनावाहनं चैव पाद्यमाचमनार्घ्यकम्
स्नानं वस्त्रं च गन्धं च पुष्पं नैवेद्यमेव च
दशोपचारमेवं च सावश्यकमिति स्मृतम् ३
आसनावाहनं चैव पाद्यमाचमनार्घ्यकम्

स्नानं वस्त्रं च गन्धं च पुष्पं नैवेद्यमेव च ४
ताम्बूलं चैव धूपं स्याद्दीपं नैवेद्यमेव च
आरात्रिकं च भसितं चुळुकोदमतः परम् ५
षोडशोपचारेण सौभाग्यमिति स्मृतम्
आसनावाहनं चैव पाद्यमाचमनार्घ्यकम् ६
स्नानं वस्त्रं च गन्धं च पञ्चमावरणं तथा
नैवेद्यं चैव पानीयं ताम्बूलं सुतमेव च ७
नित्योत्सवं च धूपं च दीपमारात्रिकं तथा
वेदस्तोत्रध्वनिर्युक्तं नर्तनं गीतवाद्यकम् ८
भस्म मन्त्रार्पणं पञ्चविंशत्सौख्यमिति स्मृतम्
आसनावाहनं चैव सान्निध्यं पाद्यमेव च ९
आचमनार्घ्यदानं च स्नानं वस्त्रोपवीतकम्
भूषणं गन्धपुष्पं च तथैवावरणान्वितम् १०
नैवेद्यं चैव पानीयं करोद्वर्तनमेव च
मुखवासं च ताम्बूलं सुतं नित्योत्सवं तथा ११
धूपदीपं तथारात्री व्यजनं चामरं तथा
छत्रं च दर्पणं वेदस्तोत्रगानं च नृत्तकम् १२
गीतवाद्यं च पञ्चांग श्रवणं भस्म एव च
मन्त्रार्पणं चाष्टपुष्पस्यार्चनं चुळुकोदकम् १३
पञ्चकालेषु मतिमान् पाद्यमाचमनं कुरु
पूजादावभिषेकान्ते पूजान्ते च विशेषतः १४
षट्त्रिंशदुपचारेण सौचकं त्विति विद्यते
स्नानादौ च तदन्ते च निवेदादौ तदन्तके १५
धूपादौ च विशेषेण पाद्यमाचमनं ददेत्
विलेपनं च नैवेद्यं चोत्सवान्ते विशेषतः १६
त्रिकालेष्वर्घ्यदानं स्यात्त्रिकाले गन्धमर्चयेत्
आवाहनार्घ्यकाले च स्नानान्ते धूपकालके १७
पूजान्ते च प्रदातव्यमष्टपुष्पाणि योजयेत्
स्नानान्ते चार्चनान्ते च नैवेद्यं स्यात्त्रिकालके १८

पूजाकाले तु तत्पूर्वे स्नानान्ते चार्चनान्तके
नैवेद्यं तु विशेषेण धूपदीपं समाचरेत् १९
चतुष्कालेषु मतिमान् धूपदीपं ददेत्प्रभोः
स्नानादौ च तदन्ते च अर्चनान्ते तथैव च २०
निवेद्यादौ चोत्सवादौ तदन्ते नर्तनान्तके
विमानादिषु कालेषु महाघण्टां तु ताडयेत् २१
स्नानकाले निवेद्यं च बलिभ्रमणकालके
धूपदीपादिकाले च उषःकाले समन्वितम् २२
द्विकाले च विशेषेण वाद्यघोषं तु कारयेत्
आरात्र्याराधने काले पूजान्ते तु विशेषतः २३
बलिभ्रमणकाले च तल्लक्षणपुरस्सरम्
त्रिषु कालेषु गणिका मद्दासी नर्तनं चरेत् २४
स्नानादौ च तदन्ते च पूजान्ते च विशेषतः
नैवेद्योथापने काले पुष्पकाले तथैव च २५
पञ्चकाले विशेषेण शंखध्वनिं समाचरेत्
स्नानकाले निवेद्यं च धूपदीपं तदन्तके २६
ऋगाद्यं ध्ययनं कुर्यात्त्रिकाले चैव बुद्धिमान्
स्नाने नैवेद्यधूपे च पूजान्ते च विशेषतः २७
भक्तादिस्तोत्रभाषाद्यैः चतुष्काले समाचरेत्
स्नानकाले निवेद्ये च उत्सवे धूपकालके २८
पटावरोहणं कार्यं चतुष्काले समाचरेत्
एतेषामुपचारेण एककालं समाचरेत् २९
एवं क्रमेण विधिवत्सर्वेषां तु समाचरेत्
त्रिपादेन त्रिनाड्या तु सावश्यकमिति स्मृतम् ३०
सौभाग्यं पञ्चनाडी तु सौख्यकं याममेव च
सौचकं दशनाडी स्यादेवं संपूज्य देशिकः ३१
कालातिक्रमणाद्दोषं न्यूनं चेत्तु न दोषभाक्
एवं क्रमेण चाभ्यर्च्य सर्वसंपत्समृद्धिदम् ३२
इति सूक्ष्मागमे उपचारविधिपटलो दशमः

## वास्तुहोमविधिपटलः

वास्तुहोमविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
स्थापने प्रोक्षणे चैव गर्भन्यासे तथैव च १
विमानस्थापने चैव चोत्सवे यागमण्डपे
आद्योपलेष्टकायोगे शक्ते च नृत्तरंगके २
प्रायश्चित्तादिके चान्ये स्थापने च समारभेत्
वास्तुपूजाविधिः प्रोक्तः सर्वसंपत्समृद्धिदः ३
वास्तु पूजाविहीनं चेत्तद्द्राष्ट्रं तु विनश्यति
तस्मात्सर्वप्रयत्नेन वास्तुपूजां समाचरेत् ४
आचार्यशिष्यसंयुक्तं पूर्ववत्स्नानमाचरेत्
सुशुद्धवस्त्रैराच्छाद्य सकळीकरणं कुरु ५
सामान्यार्घ्यं च संकल्प्य विघ्नेशं पूजयेत्ततः
पुण्याहं वाचयेद्धीमान्पञ्चगव्यं तु विन्यसेत् ६
तदग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैः शुभैः
नन्दनन्दपदं कृत्वा मध्ये नवपदं लिखेत् ७
चतुर्दिक् षट्पदं कृत्वा कोणे द्वन्द्वपदं ग्रहेत्
परितस्तत्पदं त्वेकं कोणाग्रे शूलसंयुतम् ८
वृत्तं कुर्याच्चतुर्दिक्षु पदं परमशायिकम्
ब्रह्माणं मध्यमेऽभ्यर्च्य गन्धपुष्पैश्च नामतः ९
समलीयको विवस्वांश्च मित्रश्च पृथिवीधरः
पूर्वादिषु चतुर्दिक्षु पूजयेत्तत्स्वनामतः १०
आपश्चैवापवत्सश्च सावित्रश्च सावित्रकः
इन्द्र इन्द्रजयश्चैव रुद्रो रुद्रजयस्तथा ११
आग्नेयादि समारभ्य पूजयेत्तत्स्वनामतः
ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः १२
आदित्यस्सत्यको भ्रंशो अन्तरिक्षश्च पूर्वभाक्
अग्निः पूषा च वितथो ग्रहक्षतो यमस्तथा १३
गन्धर्वो भंगराजश्च ऋषयश्चैव दक्षिणे
निर्ऋतिर्दौवारिकश्च सुग्रीवः पुष्पदन्तकः १४

वरुणः शोषरोगौ च पापयक्ष्मा च पश्चिमे
वायुर्नागस्तथा मुख्यो भल्लाटः सोम एव च १५
ऋगादितिर्दितिश्चैव बाशेत्येकांशभागिनः
चरकी च विदारी च पूतना पापराक्षसी १६
ईशानो जृम्भकश्चैव पिञ्चका बलिपिञ्चका
पूर्वादिषु चतुर्दिक्षु पूजयेन्नाममन्त्रकैः १७
पाद्यमाचमनं चार्घ्यं गन्धपुष्पं च धूपकम्
बलिनैवेद्यताम्बूलं पुष्पमर्घ्यं प्रणामकम् १८
स्वनाममन्त्रैरभ्यर्च्य दद्याद्दध्योदनं बलिम्
कुक्कुटाण्डप्रमाणेन बलिमेकं प्रदापयेत् १९
वामान्तं बलिनिर्दिष्टं स्वाहान्तेनैव हूयते
बलिमण्डलमैशान्यां स्थण्डिलं शालिना कुरु २०
लाजैः पुष्पैस्तिलैर्दर्भैः पञ्चचूर्णैरलंकृतम्
सकूर्चानुदकोपेतान् सहस्रान्सहिरण्यकान् २१
पलाशपल्लवैर्युक्तान् नारिकेळफलैर्युतान्
संस्थाप्य वास्तुकुण्डं च परिवारघटं विना २२
अर्चयेद्गन्धपुष्पाद्यैः कलशस्थापनोक्तवत्
ब्रह्मादिवास्तुदेवानां समभ्यर्च्य विशेषतः २३
बलिमण्डलपूर्वे तु अग्निकार्यं समाचरेत्
आधानादिविवाहान्तमग्निकार्योक्तमार्गतः २४

इति सूक्ष्मे वास्तुपूजाविधिपटल एकादशः

## अंकुरार्पणम्

बीजनिर्वापणं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
स्थापने प्रोक्षणे चैव गर्भन्यासे तथैव च १
नैमित्तिके च काम्ये च प्रायश्चित्तादिकेऽपि च
अन्ये च मंगळे काले कारयेटंकुरार्पणम् २
बीजानामधिपः सोमस्तस्माद्रात्रौ तो वापयेत्
अंकुरादंकुरं नास्ति तस्मात्कर्मा +++ ३

संकल्प्य दिवसात्पूर्वे नवमे सप्तमेऽपि वा
पञ्चाहे वा त्र्यहे वापि सद्यो वाथ समाचरेत् ४
प्रासादस्योत्तरे देशे कुर्यादंकुरमण्टपम्
मण्डपं स्वेष्टदेशे वा अन्यदेशे मनोरमे ५
वितानैश्च ध्वजैश्चैव भूषयेद्भूषणार्हकैः
गोमयालेपनं कृत्वा प्रोक्षयेच्छुद्धतोयकैः ६
स्थण्डिलं कल्पयेन्मध्ये मालाभिर्विमलैः शुभैः
स्वस्तिकं गोमुखं चैव द्विविधं परिकीर्तितम् ७
स्वस्तिकं भानुसंख्यं च गोमुखं तद्द्वयं भवेत्
पूर्वोक्तलक्षणेनैव पालिकादीनि संग्रहेत् ८
प्राक्सूत्रमिदसंख्या च उदक्सूत्रं तथैव च
मध्ये वेदपदं ग्राह्य पदमेकं परित्यजेत् ९
स्वस्तिकं पदमेवोक्तं क्रमेणैव तु विन्यसेत्
प्राक्सूत्रं वसुसंख्या च उदक्सूत्रं तथैव च १०
मध्ये नवपदं ग्राह्य चतुर्दिक् तत्पदं त्यजेत्
गोमुखं त्विति विख्यातं कल्पयेत्तु प्रभञ्जन ११
तिलैर्लाजैश्च पुष्पैश्च दर्भैश्चैव परिस्तरेत्
पालिकासुषिरादीनि दर्भेणैव निघट्टयेत् १२
आचार्यः शिष्यसंयुक्तः पूर्ववत्स्नानमाचरेत्
नवाम्बरधरोष्णीषः शुद्धगन्धानुलेपनः १३
शुद्धवस्त्रोत्तरीयं च सकळीकरणं कुरु
सामान्यार्घ्यं तु संकल्प्य पुण्याहं वाचयेत्ततः १४
भक्ष्यापूपादिकेनैव सन्तोष्य गणनायकम्
नाळिकेरफलं दद्याद्द्विखण्डं सर्वसिद्धिदम् १५
शैथिल्यं कर्मशैथिल्यं तद्दोषं परीक्षयेत्
विघ्नराज नमस्तेऽस्तु सततं मोदकप्रिय १६
विघ्ननेकसंभूति निर्विघ्नत्वं प्रसीद मे
एवं प्रार्थयते भक्त्या अस्त्रेशः पूजयेत्ततः १७
तद्देवं संस्कृत्य स्थापयेदंकुरार्पणम्

परिचारकमाहूय सोष्णीषं सोत्तरीयकम् १८
स्थलिकं कल्पयेद्धीमान् हविरस्त्रेशमूर्तयः
शिरसा वाहयित्वा तु सर्वालंकारशोभितम् १९
धामप्रदक्षिणं कुर्यात्पूर्वे वा चोत्तरेऽपि वा
ऐशान्ये वा प्रकर्तव्यं नादस्थानं समापयेत् २०
अस्त्रेशं पश्चिमे देशे विन्यसेद्दण्डकोपरि
तदग्रे स्थण्डिलं कल्प्य नवकोष्ठेन लेखयेत् २१
ईशे त्वेकपदं कल्प्य विघ्नेशं पूजयेत्ततः
पुण्याहं वाचयेत्तत्र प्रोक्षयेदस्त्रमन्त्रतः २२
ब्रह्माणं मध्यमेऽभ्यर्च्य गन्धपुष्पैः स्वनामतः
अनन्तविजयश्चैव जयन्ताभ्रमरीग्रमा २३
प्रस्थिता द्वरि जृम्भी च शूलिनी ईशगोचरे
पूर्वादीशानपर्यन्तमर्चयेत्स्वस्वनामतः २४
सर्षपं गुळसंमिश्रं दद्याद्दध्योदनं बलिम्
ताम्बूलं दापयेत्पश्चात् तृप्तिरर्घ्यं प्रदापयेत् २५
उद्वास्य सर्वदेवांश्च विष्णुरेणैव देशिकः
मृदमीश्वरकार्यार्थं गृहीत्वा तदनुज्ञया २६
एतत्स्थानाश्रित देवा गच्छध्वं हि यथासुखम्
इति विज्ञाप्य संपूज्य बलिमण्डलपूर्वके २७
पञ्चगव्येन संप्रोक्ष्य कुन्दळ्यां पृथिवीं तथा
नववस्त्रेण संवेष्ट्य कूर्चं बध्वा खनित्रके २८
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत्
देशिकस्य हृदम्भोजे शक्तिमाधाररूपिणीम् २९
++++++++ विन्यसेच्छक्तिमन्त्रतः
कुन्दळ्यां खातयेद्भूमिमस्त्रमन्त्रत्रयेण तु ३०
पिधाय नववस्त्रेण भूमिं समतलं कुरु
आधारशक्तिमभ्यर्च्य धूपदीपादिकं ददेत् ३१
परिचारकमाहूय सोष्णीषं सोत्तरीयकम्
शिरसा बाहयित्वा तु गजे वारोपयेद्रथे ३२

अथवा पादगमने सर्वालंकारसंयुतम्
कुर्यान्मंगळवाद्यैश्च स्वस्तिसूक्तसमन्वितम्  ३३
शनैः प्रदक्षिणं कुर्याद् विशेदंकुरमण्डपम्
पुण्याहं वाचयेत्तत्र प्रोक्षयेदस्त्रमन्त्रतः  ३४
संकल्प्य स्थण्डिले मध्ये चन्द्रकुम्भं निधाय च
सोदकं कूर्चसंयुक्तं हेमपल्लवसंयुतम्  ३५
अभ्यर्च्य गन्धपुष्पाद्यैर्मध्ये चन्द्रं समर्चयेत्
गन्धाद्यैरुपचारैस्तु तोषयेदोषधीश्वरम्  ३६
पालिकादीनि सर्वाणि न्यसेत्पूर्वोक्तवर्त्मना
मृदमीशानमन्त्रेण पालिकादिषु विन्यसेत्  ३७
तिलसर्षपमुद्गानि माषशिम्बाडकानि च
कुळुत्थयवकार्पासबीजं क्षीरेण सेचयेत्  ३८
याजाता इति मन्त्रेण धान्यपात्रं स्पृशेञ्जपन्
मूर्तिं निरीक्ष्य देवेशं पूजयेद्देशिकोत्तमः  ३९
पालिकादि समारभ्य वापयेद्धृदयेन तु
सहस्रांगी भूषणी च पुष्पणी मृगनी तथा  ४०
तृकर्तृणी शक्तिनी देवी शान्तिनी पुष्पणी तथा
सहस्रांगी उषा देवी संक्षणी शंखिनी तथा  ४१
स्वस्तिकादधिदेवाश्च पालिकादीनि देवता
श्रुतिः स्मृतिर्धृतिर्मेधा प्रशा स्वाहा स्वधा क्षमा  ४२
कान्तिर्महेजयभद्रा गोमुखादिधिदेवता
अभ्यर्च्य गन्धपुष्पाद्यैः शुद्धतोयेन सेचयेत्  ४३
पिधाय नववस्त्रेण पालिकादीनि सर्वशः
त्रिरात्रं कुरुते श्रेष्ठं भूतरात्रं कुरुतेऽधमा  ४४
तन्मध्ये मध्यमं प्रोक्तं तदूर्ध्वमशुभं भवेत्
श्वेता रक्ता च पीता च श्यामा चेति चतुर्विधा  ४५
श्वेताभे कलहं विद्याद् रक्ताभे राष्ट्रनाशनम्
पीताभे सर्वसंपत्तिः श्यामाभे वास्तुनाशनम्  ४६
अपूर्णानि च कृष्णानि श्यामलानि तथैव च

सुधूम्राणि च कृष्णानि तथा दिव्यद्रुतानि च ४७
चित्राकारोत्तमं वृद्धिः शिशिराकारमध्यमम्
ध्वजाकृत्यधमं प्रोक्तं दक्षिणावर्तकं शुभम् ४८
अशुभैर्लक्षणैर्युक्ते शान्तिहोमं समाचरेत्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ४९
इति सूक्ष्मे अंकुरार्पणविधिः द्वादशः पटलः

उत्सवस्य विधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
कीर्तिदं विजयं पुण्यमायुरारोग्यवर्धनम् १
भुक्तिमुक्तिप्रदं दिव्यं सर्वकामार्थसाधनम्
साकल्यं पावनं शान्तं मांगल्यं तु चतुर्विधम् २
ध्वजारोहादि तीर्थान्तं साकल्यमिति कीर्तितम्
ध्वजारोहं विना कुर्याच्छेषं पूर्ववदेव तु ३
पावनं तत्समाख्यातं शान्तिकं च ततः शृणु
बलिहोमादिकं हुत्वा पूर्वाह्ने वापराह्नके ४
सायाह्ने चोत्सवं कुर्याच्छान्तिकं त्विति विद्यते
यजमानेच्छया कुर्यात्प्रातः काले शिवोत्सवम् ५
मांगल्यं त्विति विख्यातं तत्कालमधुना शृणु
सावनं चान्द्रं नक्षत्रं सौरं चैव चतुर्विधम् ६
एतच्चतुर्विधं मासे चोत्सवं परिकल्पयेत्
सौरमासे विधेयं स्यात् साकल्यं पावनोत्सवम् ७
सावने चान्द्रनक्षत्रमासेषु शान्तिमंगळौ
उत्सवं कारयेद्विद्वान् सौरे सर्वोत्सवं कुरु ८
पुष्यमासे तु पुष्यान्तं माघमासे मघान्तकम्
फाल्गुने चोत्तरान्तं तु चैत्रे चैत्रान्तमुच्यते ९
वैशाखे तु विशाखान्तं मूलान्तं ज्येष्ठमासके
आषाढे चोत्तराषाढा श्रावणे श्रवणान्तकम् १०
पूर्वाषाढान्तन्मासे चाश्वान्तश्चाश्वमासके
कार्तिके कृत्तिकान्तं हि शैवान्तं मार्गशीर्षके ११

पौर्णयुक्तमयुक्तं वा मासऋक्षप्रधानकम्
चतुर्दश्याममावास्यां षष्ट्यष्टम्यां विशेषतः १२
राजाभिषेकजन्मर्क्षे युद्धारम्भावसानके
अन्यपुण्यदिनान्तेषु चोत्सवं संप्रकल्पयेत् १३
शैवं गौणं भौतिकं च भौवनं दैविकं तथा
पैतृकं चैव कौमारं सावित्रं चान्द्रमेव च १४
शैवमेकाहमित्युक्तं त्रियहं गौणमुच्यते
पञ्चाहं भौतिकं प्रोक्तं सप्ताहं भौवनं स्मृतम् १५
नवाहं दैविकं प्रोक्तं रुद्राहं पैतृकं तथा
त्रयोदशाहं कौमारं पक्षं सावित्रमेव च १६
चान्द्रं सप्तदशाहं स्याद् उत्तमादिक्रमादिके
शैवं गौणं भौतिकं च उच्यते कन्यसत्रयम् १७
भौवनं दैविकं चैव पैतृकं मध्यमत्रयम्
कौमारं चैव सावित्रं चान्द्रं चैवोत्तमत्रयम् १८
एवं नवविधं प्रोक्तमुत्सवं क्रमशो बुधैः
एषां तु क्रमं वक्ष्ये शृणु त्वं तत्प्रभञ्जन १९
वृद्धिदं विजयं सौख्यं त्रिविधं परिकीर्तितम्
तत्पूर्वरात्रिसंयुक्तसायंकाले समारभेत् २०
प्रातःकाले तु तीर्थं स्यादेकाहे तु बलिद्वयम्
एवं वै वृद्धिदं प्रोक्तं विजयं च ततः शृणु २१
तद्दिनस्य तु रात्रौ तु उत्सवं कारयेत्ततः
बलिमेकं समासाद्य अन्त्ये तीर्थं समाचरेत् २२
एकाहं वृद्धिकादिस्यात्त्रियहं शृणु सुव्रत
निर्दिष्टदिवसात्पूर्वे सायाह्ने तु समाचरेत् २३
यानमूर्ति समुद्दिश्य प्रभाते तीर्थमाचरेत्
त्रिदिनं चोत्सवं कुर्याद् बलिं कौशिकसंख्यया २४
चतुर्थेऽहनि संप्राप्ते प्रभाते तीर्थमाचरेत्
तद्दिने चास्त्रयागं च सायाह्नसमये बुधः २५
उत्सवान्ते समारभ्य बलिना तु चतुर्थकम्

तृतीये दिवसे चैव तीर्थकर्म समाचरेत्  २६
नित्यपूजावसाने तु त्रिदिने चोत्सवं कुरु
त्रियहेषु च यानान्ते जलक्रीडां समाचरेत्  २७
एवं त्रयाहमित्युक्तं पञ्चाहं च ततः शृणु
सायंकाले समारभ्य तत्पूर्वदिवसे युतः  २८
यानं कुर्याद्विशेषेण दशमं बलिमाचरेत्
षष्ठेऽहनि प्रभाते तु तीर्थं कुर्यात्तु देशिकः  २९
यथोद्दिष्टे तु दिवसे सायाह्ने तु समारभेत्
वसुसंख्याबलिं दद्यात्पञ्चाहे तीर्थमाचरेत्  ३०
तद्दिनाद्दिनमारभ्य नित्यपूजावसानके
पञ्चाहे चोत्सवं कुर्याद्यानान्तं तीर्थमाचरेत्  ३१
एतत्कन्यसमित्युक्तं मध्यमं च ततः शृणु
यथानिर्दिष्टदिवसात्पूर्वरात्रौ समारभेत्  ३२
होमं कुर्यात्तु तद्रात्रौ बलिं कुर्याच्चतुर्दशम्
चूर्णोत्सवं तथाष्टाह्नि कौतुकं तीर्थमाचरेत्  ३३
रात्रौ निर्दिष्टदिवसे उत्सवं तु समाचरेत्
होमं च बलिदानं च तद्रात्रौ कारयेद्बुधः  ३४
भानुसंख्याबलिं कुर्यात्सप्ताहे तीर्थमाचरेत्
निर्दिष्टदिवसादिव्यात्पूर्वाह्णे वापराह्णके  ३५
केवलं भ्रमणं कुर्यादन्त्ये तीर्थं समाचरेत्
भौवनं त्विति विख्यातं दैविकं च ततः शृणु  ३६
निर्दिष्टदिवसात्पूर्वे सायंकाले विशेषतः
स्मृतिसंख्यबलिं दद्याद्दशमे तीर्थमाचरेत्  ३७
नित्यपूजावसानान्ते यानमेकं समाचरेत्
तदन्ते कौतुकं तीर्थं ब्राह्मिकं त्विति विद्यते  ३८
दैविकं त्विति विख्यातं पैतृकं च ततः शृणु
तद्दिनात्पूर्वदिवसे चास्त्रयागं समाचरेत्  ३९
द्वाविंशतिबलिं दद्यात्तीर्थं तु द्वादशाह्निके
वृद्धिदं त्विति विख्यातं विजयं च ततः शृणु  ४०

यथा निर्दिष्टदिवसे साये चोत्सवमाचरेत्
रुद्राहे कौतुकं तीर्थं द्वाविंशद्बलिमाचरेत् ४१
पूर्वोक्तयानमार्गेण केवलं चोत्सवं कुरु
ब्राह्मिकं त्विति विख्यातमन्त्ये तीर्थं समाचरेत् ४२
मध्यमत्रितयं प्रोक्तमुत्तमत्रितयं शृणु
तत्पूर्वदिवसे विद्वानस्त्रयागं समाचरेत् ४३
चतुर्दशाहे तीर्थं स्याच्चतुर्विं शद्बलिं ददेत्
एतत्तु वृद्धिदं प्रोक्तं विजयं शृणु सुव्रत ४४
तद्दिने चास्त्रयागं स्याच्चतुर्विं शद्बलिं ददेत्
त्रयोदशाह्नि तीर्थं स्याद्विजयस्य प्रकीर्तितम् ४५
केवलं भ्रमणं कुर्यादन्त्ये तीर्थं समाचरेत्
कौमारं त्विति विख्यतं सावित्रं च ततः शृणु ४६
तत्पूर्वरात्रिमारभ्य त्रिंशद्बलिमथाचरेत्
षोडशेऽह्नि प्रकर्तव्यं तीर्थकर्म विशेषतः ४७
तद्दिने चास्त्रयागं स्याद् अष्टाविंशद्बलिं ददेत्
पक्षाहे कौतुकं तीर्थं विजयस्य प्रभञ्जन ४८
नित्यपूजावसाने तु यानमेकं समाचरेत्
तीर्थकर्म तदन्ते तु ब्राह्मिकं त्विति कीर्तितम् ४९
सावित्रं त्विति विख्यातं शृणु चान्द्रं प्रभञ्जन
तत्पूर्वदिवसे विद्वान् अस्त्रयागं समाचरेत् ५०
चतुस्त्रिंशद्बलिं दद्यात्तीर्थमष्टादशेऽहनि
एतद्वै वृद्धिदं प्रोक्तं विजयं च ततः शृणु ५१
तद्दिनस्य तु सायाह्ने चोत्सवान्तं समानयेत्
द्वात्रिंशद्बलिदानं च तीर्थं सप्तदशेऽहनि ५२
यानमेकं समासाद्य अन्त्ये तीर्थं समाचरेत्
ब्राह्मोत्सवमिदं प्रोक्तमत्यन्तं शृणु सुव्रत ५३
यानं चावभृतं रोह उत्सवांगत्रयं स्मृतम्
एकैकं त्रिविधं प्रोक्तमादिमध्यावसानकम् ५४
उत्सवं त्रिविधं प्रोक्तं ध्वजभेर्यं कुरादिकम्

ध्वजमारोपयेत्पूर्वं पश्चाद्भेरीं तु ताडयेत् ५५
अंकुरारायर्पयेत्पश्चाद्ध्वजारोहरापूर्वकम्
भेरीं तु ताडयित्वा तु ध्वजमारोपयेत्ततः ५६
अंकुरार्परामन्ते तु भेरीताडनपूर्वकम्
अंकुरारायर्पयेत्पूर्वे भेरीघोषमतः परम् ५७
पताकारोहरां पश्चाद् अंकुरार्परापूर्वकम्
एतेषु त्रययेष्वेषु ध्वजात्पूर्वं तु वक्ष्यते ५८
अस्त्रयागदिनात्पूर्वे ध्वजमारोपयेद्बुधः
ध्वजारोहदिनात्पूर्वे द्विदिने त्रिदिनेऽपि वा ५९
पञ्चाहे वाथ सप्ताहे नवाहे वांकुरार्परम्
अंकुरं प्रथमं प्रोक्तं द्वितीयं वृषयागकम् ६०
प्रदक्षिरां तृतीयं स्याच्चतुर्थं तत्वशुद्धिकम्
पञ्चमं कौतुकं कर्म कलशस्नानं तु षष्ठकम् ६१
सप्तमं दराडपूजा च अष्टमं चास्त्रपूजनम्
नवमं भेरिताडं च दशमं देवता बुधः ६२
एकादशार्चनं नित्यं द्वादशं तु बलिभ्रमम्
त्रयोदशं त्रयोदशं तत्पश्चादुत्सवांकुरः ६३
रक्षाबन्धं ततः प्रोक्तं षोडशं यागकर्मणि
सप्तादश सुतं विद्धि बलिकर्म ततः परम् ६४
एकोनविंशद्यानं स्यात्तत्परं परिवेषकः
नीराञ्जनं त्वेकविंशन्नृत्तावलोकनं परम् ६५
एकोनविंशद्यानं स्यात्तत्परं परिवेषकः
नीराजनं त्वेकविंशत् षड्विंशत्तीर्थकौतुकम् ६६
यात्रार्थस्नपनं पश्चाद् विशेषस्नपनं परम्
तीर्थां कुरं पञ्चविंशत् षड्विंशत्तीर्थकौतुकम् ६७
तीर्थाधिवासनं चैव तीर्थकर्ममतः परम्
अवभृतं तु नवविंशत् त्रिंशत्पूर्णाहुतिस्ततः ६७
यागकुम्भाभिषेकं च षोडशस्नपनं परम्
महाहव्यादिपूजा च दक्षिरादानतत्परम् ६९

अवरोहध्वजं पश्चात्पैशाचाय बलिस्ततः
एवं षट्त्रिंशदङ्गेन उत्सवं परिकीर्तितम् ७०
विघ्नेशं पूजयेद्विद्वान् क्रियां प्रति क्रियां प्रति
अंकुराण्यर्पयेत्पश्चात्पूर्वोक्तविधिणा सह ७१
शुक्लं श्वत्तणं सुत्मं छिद्यभिन्नादिवर्जितम्
उत्तमं नवहस्तं स्यान्मध्यमं सप्तहस्तकम् ७२
अधमं पञ्चहस्तं स्यात्तत्पदं द्विगुणीकृतम्
तत्त्रिभागैकभागं तु पटविस्तारमुच्यते ७३
मध्ये वेत्रसमायुक्तं बलयत्रयसंयुतम्
द्वातुना बन्धयेद्धीमान् सुधयालिप्य सर्वशः ७४
श्वेतं रक्तं तथा पीतं श्यामं रक्तं च कुंकुमम्
गोक्षीरशंखवर्णाभं ध्वजवर्णं प्रकीर्तितम् ७५
सर्वेषामेव वर्णानां सितवर्णं प्रशस्यते
मध्यमं श्वेतवर्णाभं वृक्षलक्षणवर्त्मना ७६
आस्यं शृंगे तथा कर्णौ खुरा रक्तनिभा स्मृताः
वालश्रं कृष्णवर्णं तु भ्रुवं तद्वर्णसंयुतम् ७७
धूमवर्णमलं चाक्षिमध्यमे कृष्णमण्डलम्
आसनं श्यामवर्णं तु तन्मध्ये रक्तपत्रकम् ७८
कर्णिका पीतवर्णं तु तद्वर्णं केसराणि तु
आसनायतवृत्तं तु परितश्चतुरश्रकम् ७९
पञ्चवर्णैः समालिख्य रक्तपुष्पैः समर्द्धितम्
प्राक्सूत्रमुदक्सूत्रं च पदा उरस्य सूत्रकम् ८०
पट्टाकारेण संलिख्य पञ्चवर्जेन बुद्धिमान्
घण्टा तु हेमवर्णं तु रज्जु रक्तनिभं भवेत् ८१
रक्तपुष्पैश्च संलिख्य गळभूषणसंयुतम्
एवं लक्षणसंयुक्तं स्थितं तु वृषभं लिखेत् ८२
शेषमङ्गलरूपाणि लेखयेत्परितः क्रमात्
अधोभागाम्बुजं लिख्य सितवर्णेन सुव्रत ८३
दर्पणं सितवर्णेन पूर्णकुम्भं हरीतकम्

चामरं शुक्लवर्णं तु तन्नाळं पीतवर्णकम् ८४
नाळाग्रे चोत्पलाकारं रक्तं पीतदळान्तकम्
श्रीवत्समरुणाभं च स्वस्तिकं पिङ्गळं भवेत् ८५
शंखं वै सितवर्णं च पिचाग्रे पीतसंयुतम्
दीपं वै काञ्चनं भासं दीपाधारं तथैव च ८६
धूपं पिञ्छकवर्णं स्याद्घण्टा रजतसन्निभा
मध्यभागे अधोभागे पूर्णकुम्भं समालिखेत् ८७
मध्यभागोर्ध्वभागे तु श्वेतचक्रं प्रकल्पयेत्
धूपं घण्टा गळाधस्ताद्दीपं तत्कुम्भपार्श्वयोः ८८
वृषाग्रे दर्पणं प्रोक्तं श्रीवत्सं चोत्तरांशके
शंखपीठसमायुक्तं पादयोरन्तरं लिखेत् ८९
श्वेतच्छत्रस्य पार्श्वे तु चामरद्वयमालिखेत्
पटस्योभयपार्श्वे तु तत्तदङ्गं समालिखेत् ९०
तयोरन्तरदेशेषु पद्ममष्टदळं लिखेत्
एवं ध्वजक्रमं प्रोक्तं तस्य यागविधिं शृणु ९१
संपूज्य देवदेवेशं नैवेद्यान्तं समाचरेत्
गणेशं पूजयेत्पश्चात्पायसान्नं निवेदयेत् ९२
शिवं प्रणम्य विधिवद्विज्ञाप्योत्सवमुत्तमम्
भूषणाद्यैरलंकृत्य सुमना देशिकोत्तमः ९३
अङ्गन्यास करन्यासं पूर्वोक्तविधिना कुरु
स्थण्डिलं कारयेद्विद्वान् सुश्वेतद्रोणशालिना ९४
आलिख्य मध्यमे पद्ममष्टपत्रसुकर्णिकम्
नवकुम्भान्समादाय त्रिसूत्रेणैव वेष्टयेत् ९५
क्षालयेदस्त्रमन्त्रेण पूरयेद्गन्धतोयकैः
वृषकुम्भान्यसेन्मध्ये तस्य वामे तु वर्धनीम् ९६
अभितः कलशानष्टौ पूर्वादीनि च विन्यसेत्
पाद्यं तु पूर्वतः स्थाप्य पञ्चगव्यं तथोत्तरे ९७
शेषाणि शुद्धतोयेन पूर्वादीनि ततो न्यसेत्
सकूर्चं सापिधानं च वस्त्रपल्लवशोभितम् ९८

स्वर्णशृङ्गसमायुक्तं श्यामदूर्वासमन्वितम्
पूर्वादीशानपर्यन्तं विन्यसेत्तु क्रमेण तु  ९९
प्रोक्षयेच्छङ्खतोयेन शुद्धैरिद्धैरिति ब्रवीत्
स्थण्डिलस्य चतुर्दिक्षु द्वारपालान्समर्चयेत्  १००
प्राचि नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ
पश्चिमे वृषभस्कन्दौ देवीचण्ड तथोत्तरे  १०१
आदित्यमग्निदिग्भागे नैर्ऋते वास्तुदैवतम्
वायव्ये गणनाथं तु गुरुमूर्तिं तथैशके  १०२
स्थण्डिलस्य तु मध्ये तु आधाराख्यमनन्तकम्
पद्मासनं तु संकल्प्य घटरूपं विचिन्तयेत्  १०३
गन्धाद्यैर्वृषबीजेन पूजयेत्तु विचक्षणः
पञ्चगव्यामृतैः कुम्भैः स्नापयेद्वृषदैवतम्  १०४
गन्धादिभिः समभ्यर्च्य मुद्गान्नं दापयेत्ततः
ताम्बूलं दापयेत्पश्चात्पुण्याहं वाचयेत्ततः  १०५
स्थण्डिलं कारयेत्तत्र पूजयेद्विधिना सह
वृषे चलासनं कल्प्य कुम्भमध्ये समर्चयेत्  १०६
तस्य वामे तु वर्धन्यां पूजयेद्विधिना सह
मन्त्रन्यासं ततः कृत्वा गन्धपुष्पादिना यजेत्  १०७
कुम्भमुत्थापयेत्पश्चात्स्थापयेत्स्थण्डिले बुधः
वर्धनीमुत्तरे स्थाप्य पूजयेत्स्थिरमासनम्  १०८
वृषभं मध्यमेऽभ्यर्च्य वृषणीं तस्य वामके
अभिता घटान्यस्त्वा पूजये वृषपालकान्  १०९
उक्षाणं शृङ्गिणीं वेदपादं च गोपतिम्
उग्रशृङ्गं वृषानाथं वृषेश्वरमथाष्टकम्  ११०
पूर्वादीशानपर्यन्तमर्चयेत्स्वस्वनामतः
तस्योर्ध्वे स्थण्डिलं कृत्वा शिवाग्निं विधिना नयेत्  १११
तन्मध्ये वृषमावाह्य पूर्ववद्धोममाचरेत्
समिदाज्यचरून्लाजान्सर्षपांश्च यवांस्तिलान्  ११२
सद्यादीशानपर्यन्तं प्रेत्येकं भूतसंख्यया

द्रव्यान्ते व्याहृतिं हुत्वा तदन्ते देशिकोत्तमः ११३
तद्धटं हृदयेनैव स्थरिडलं स्थापयेत्ततः
गोर्धेनुगव्यमन्त्रेण पटमालोकयेत्सुधीः ११४
वृषगायत्रिया पश्चात्प्रोक्षयेदर्घ्यवारिणा
संमार्ज्य द्विगुणेनैव वृषमूलमनुस्मरन् ११५
त्रिलिङ्ग्यां वर्णसंयुक्तं द्विकुशाग्रेण देशिकः
तेनाक्षिमोक्षणं कुर्यात्सूर्यसोमाधिदैवतम् ११६
वृषाधिवासनार्थाय वृषगायत्रिया बुधः
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन् ११७
गोपतेरम्बिकानाथं दर्शनाद्भक्तवत्सलम्
सर्वानुकूलसंभोगवृषभं शयनो भवेत् ११८
पुष्पाञ्जलित्रयं कृत्वा वृषेन्द्रं शयितत्वति
मनसा भावयेद्विद्वान्मन्त्रन्यासं समाचरेत् ११९
मूर्धादिगलपर्यन्तं शिवतत्त्वं प्रकीर्तितम्
गलाद्युरः स्थलान्तं च विद्यातत्त्वं प्रकल्पयेत् १२०
हृदयादिकुरान्तं तु आत्मतत्वं प्रकीर्तितम्
तत्त्वतत्त्वेश्वरान्यष्ट्वा गन्धपुष्पादिना यजेत् १२१
अन्यायतनमापाद्य स्थरिडलं त्वब्जपूर्वके
नवकुम्भं समादाय स्थरिडले पूर्ववद्बुधः १२२
पूरयेद्गन्धतोयेन वस्त्रकूर्चाभिधानयुक्
पूजयेद्गन्धपुष्पाद्यैर्घटं कुम्भं यथाक्रमम् १२३
प्रसेदिरमन्त्रेण होमयेत्तदनन्तरम्
शतमर्धं तदर्धं वा दश पञ्चैकमाहुतिम् १२४
द्रव्यं प्रति विशेषेण हुत्वान्ते स्पर्शयेत्पटः
कुम्भे चलासनं दत्वा संग्राह्य देशिकोत्तमः १२५
होमसंख्याजपं कुर्यात्प्रोक्षयेत्तत्क्रमेण तु
पूर्ववत्स्थापयेत्कुम्भमर्चयेत्स्थिरमासनम् १२६
ध्वजकुम्भान्समाराध्य गन्धपुष्पादिना बुधः
ध्वजकुम्भाग्रके विद्वान् वास्तुनाथं प्रपूजयेत् १२७

स्थण्डिले विन्यसेत्कुम्भं रत्नवारिप्रपूरितम्
पूजयित्वा विधानेन नैवेद्यान्तं विशेषतः  १२८
तुभ्यं नमोऽस्तु ते सर्वे वास्तुनाथ वरप्रभो
एतद्बलिं समादाय रक्षयेद्देवमन्दिरम्  १२९
इति विज्ञापयेद्विद्वान् रात्रौ जागरणं कुरु
विजयस्य क्रमं ह्येवं वृद्धिदमधुना शृणु  १३०
मण्डपं कारयेद्विद्वान् अष्टद्रोणेन शालिना
विधिना वृषमावाह्य स्थापयेत्स्थण्डिलोपरि  १३१
वृषगायत्रिमन्त्रेण पूजयित्वा विधानतः
वृषकुम्भादिलोकेशकुम्भान्संपूजयेत्ततः  १३२
अग्न्यायादिकं सर्वं  पूर्वोक्तविधिना यजेत्
तन्मण्डपस्य पुरतः क्षेत्रपायबलिं ददेत्  १३३
वृद्धिदं त्विति विख्यातं ध्वजस्यारोपणं शृणु
क्रमुकं चन्दनं वापि जातिनं नालिकेरकम्  १३४
त्वक्सारमन्तस्सारं वा संगृह्याद्देशिकोत्तमः
अग्न्यशुलोक्तवृक्षैर्वा अवृकं निर्व्रणकं ऋजुः  १३५
एकद्वित्रित न्तं वा वृषभस्थनसमं तु वा
गलान्तं वा शिरान्तं वामहानासीसमं तु वा  १३६
स्थूप्यन्तं गोपुरान्तं वा ध्वजदैर्घ्यं  प्रकल्पयेत्
पूर्ववच्छान्तिकादीति मात्राङ्गुलेन कारयेत्  १३७
चतुस्त्रिंशच्च षट्त्रिंशच्चट्वयाङ्गुलनाहकम्
षट्सप्तपञ्चतालेन ध्वजयष्टिर्विधीयते  १३८
तदायामं त्रिधाकृत्वा एकांशं चतुरश्रकम्
शेषदैर्घ्याकृतं कुर्यान्नानालंकारसंयुतम्  १३९
सुभिरद्वयसंयुक्तमर्धचन्द्रमथैककम्
उपदण्डसमायुक्तं तस्याग्रे बलयं न्यसेत्  १४०
तन्मध्ये रज्जुसंबन्धं द्विगुणं मूलमाश्रितम्
पीठगोपुरयोर्मध्ये वृषपीठग्रकेऽपि वा  १४१
स्थापयेद्विधिना विद्वांस्तन्मूले वेदिकां कुरु

दण्डशुद्धिं पुरा कृत्वा पूजयेत्तु विधानतः १४२
परिचारकमाहूय सोष्णीषं चोत्तरीयकम्
संग्राह्य विधिवत्कुम्भं ध्वजं वै चास्त्रमूर्तिनम् १४३
देवेशेन समायुक्तं ग्रामप्रदक्षिणं कुरु
सर्वातोद्यसमायुक्तं ध्वजस्नानं समाचरेत् १४४
पुण्याहं वाचयेत्तत्र वृषकुम्भेन तत्पटम्
स्थापयेद्विधिना विद्वान्पूजयेत्तु क्रमेण तु १४५
रज्जुना बन्धयेत्पश्चाद् वृषगायत्रिमन्त्रतः
दर्भमालासमायुक्तं क्षुद्रघण्टासमन्वितम् १४६
विज्ञाप्य देवदेवेशं प्रणम्याभ्यर्च्य देशिकः
आरोपयेत्ततो मन्त्रीं बहुरूपमनुस्मरन् १४७
पटस्य दर्भमालाश्च आचार्यो मूर्तिपैः सह
ग्रन्थिं पश्चिमभागे तु शीघ्रं शिष्यावरोहणम् १४८
दण्डसव्यक्रमेणैव कुशैर्मूलेन बन्धयेत्
वृषविद्येशकुम्भैश्च वेद्यूर्ध्वे चाभिषेचयेत् १४९
गन्धपुष्पादिनाभ्यर्च्य मुद्गान्नं दापयेत्ततः
पानीयाचमनं दत्त्वा धूपदीपं प्रदर्शयेत् १५०
ताम्बूलं दापयेत्तत्र आशीर्वादं समब्रुवन्
स्तोत्रसंगीतनृत्ताद्यैः संतोष्य वृषभध्वजम् १५१
विजयं त्विति विख्यातं वृद्धिदं च ततः शृणु
रथे वा शिबिकायां वा समारोप्य वृषध्वजम् १५२
धामप्रदक्षिणं कृत्वा नीत्वा दण्डस्य संनिधिम्
पुण्याहं वाचयेत्तत्र ध्वजमारोपयेत्ततः १५३
संस्थाप्य पञ्चगव्याद्यैराधाराख्यं प्रपूजयेत्
पुनः पूर्णाहुतिं दत्त्वा कुम्भान्संग्राह्य देशिकः १५४
धामप्रदक्षिणं कृत्वा स्नापयेद्वेदिकोपरि
नैवेद्यं दापयेद्विद्वान् गुलदधिघृतादिकैः १५५
अत्रान्योक्तं च यत्सर्वं विजयोक्तं समाचरेत्
वृद्धिदं त्विति विख्यातं भेरीताडनकं शृणु १५६

तस्मिन्नेव दिने रात्रौ सायरक्षावसानके
देवाग्रे ध्वजमूले वा देवताह्वानमाचरेत् १५७
स्थण्डिलद्वितयं कल्प्य शूलमेकत्र विन्यसेत्
तस्याग्रे स्थण्डिले भेरीं विन्यसेद् ++ णसंयुतम् १५८
पुण्याहं वाचयेत्तत्र अस्त्रेशं पूजयेत्ततः
मध्यपात्रे भवेद्रुद्रो ब्रह्मा दक्षिणपात्रके १५९
वामे विष्णुः समाख्यातः फलकायां तु पार्वती
सेनानीः कुम्भदेशे तु तदास्ये विघ्ननायकम् १६०
दण्डाग्रे मदनो ज्ञेयो भास्करो दण्डमध्यमे
दण्डमूले तु चण्डेशो लक्ष्मीः पूर्वदलाग्रके १६१
मातरः सप्त दक्षे तु ज्येष्ठा पश्चिमदिग्दले
कात्यायनी कुबेरस्य शूलमूले समाधिकम् १६२
रुद्रार्कवसवोऽश्विन्यावष्टादशगणाश्चयोः
संपूज्य गन्धपुष्पाद्यैः ताण्डवान्तं यथाक्रमम् १६३
ततः संपूजयेद्भेरीं नववस्त्रेण वेष्टयेत्
तन्मध्ये दक्षिणे वामे शम्भुं विष्णुं चतुर्मुखम् १६४
मातरः सप्त कीले स्युश्चन्द्रार्कौ बलयाधिपौ
चर्मसूत्रे भुजङ्गेन्द्रं स्कन्दं घोणाधिदैवतम् १६५
संपूज्य गन्धपुष्पाद्यैः स्वस्तिमन्त्रेण देशिकः
पूर्वं संताडयेद्भेरीं त्र्यम्बकेन तु मन्त्रतः १६६
द्वितीयं ताडयेद्विद्वान् इदं विष्णिवति मन्त्रतः
तृतीयं ब्रह्मजज्ञानमन्त्रेण ताडयेत्त्रिधा १६७
ततोऽस्त्रराजमभ्यर्च्य तन्मूले चतुराननम्
आहूय सकलान्देवान् अष्टादशगणेश्वरान् १६८
तत्तत्स्वनाममन्त्रैश्च अर्चयेद्देशिकोत्तमः
ततो वाद्यकमाहूय भस्म दत्त्वा नियोजयेत् १६९
तद्दत्वा शिवमन्त्रेण देशिकानुज्ञया सह
कण्ठे भेरीं समारोप्य ताडयेत्तु विचक्षणः १७०
वाद्यकस्ताडयेत्पश्चाद्बलितालं विशेषतः

पश्चात्स्तोकेन सर्वेषां श्रावयेदुत्सवान्तिकम् १७१
अस्त्रे समानयेत्पूर्वं सर्वातोद्यसमन्वितम्
धामप्रदक्षिणं कुर्याद्देवस्याग्रे ततो बुधः १७२
देवस्य देवताह्वानं संनिवेद्य स चोत्सवः
बलिबेरसमायुक्तं सर्वातोद्यसमन्वितम् १७३
वृषादिपरिवाराणां बलिं दद्यात्स्वनामतः
इन्द्रादीशानपर्यन्तं नित्यवत्सर्वमाचरेत् १७४
ब्रह्मस्थानादिकं वाथ इन्द्रस्थानादिकं तु वा
संधिदेवान्समावाह्य बलिमेवं समाचरेत् १७५
एवमावाह्य देवांश्च प्रविशेदालयं प्रति
विजयस्य क्रमं प्रोक्तं वृद्धिदस्य ततः शृणु १७६
अस्त्रं भेरीं च संपूज्य पूर्वोक्तविधिना सह
चच्चपुटेन तालेन वादयेत्सर्वतालवित् १७७
शिवादिसर्वदेवांश्च आहूयाभ्यर्चयेत्क्रमात्
अस्त्रराजं समादाय सर्वातोद्यसमन्वितम् १७८
देवालये प्रियुन्तानो बलिदानं समाचरेत्
स्थानसंकटधामेषु प्राकारादिविशेषतः १७९
लभ्यते यत्र देशे तु बलिं तत्र प्रकल्पयेत्
पादप्रक्षालनं कृत्वा प्रविशेदालयं प्रति १८०
देवेशं पूजयेत्तत्र नित्यपूजावसानकम्
भेरीताडनमेवोक्तमस्त्रयागाविधिं शृणु १८१
रवेरस्तमयात्पूर्वे निर्दिष्टदिवसे ततः
वास्तुहोमं पुरा कृत्वा पर्यग्निकरणं कुरु १८२
ततोऽङ्कुरार्पणं कुर्यादुत्सवार्थं यथाक्रमम्
कौतुकं बन्धयेद्धीमान् महेशाग्रे विशेषतः १८३
सालिभिः स्थण्डिलं कृत्वा पुण्याहं वाचयेत्ततः
स्थलिके स्थण्डिले पूर्वे दर्भपुष्पैः समन्वितम् १८४
क्रमुकं फलसंयुक्तं नारावल्लीदलैर्युतम्
भस्माधारं न्यसेन्मध्ये कौतुकं विन्यसेत्ततः १८५

सौवर्णं राजतं वापि क्षौमं कार्पासतन्तुना
नवाम्बरसमायुक्तं गन्धमाल्यैः समायुतम् १८६
स्थण्डिलोर्ध्वे तु विन्यस्य रक्षासूत्रमनुं जपेत्
पश्चात्संस्नाप्य यागेशं गन्धतोयेन देशिकः १८७
अभ्यर्च्य गन्धपुष्पाद्यैर्धूपदीपादिकं ददेत्
युग्मवस्त्रेति मन्त्रेण वस्त्रेणाच्छादयेत्प्रभोः १८८
त्रियम्बकेन मन्त्रेण सूत्रं संसिद्ध्य भस्मना
तण्डुलं धारयेद्धस्ते ॐ नमो ब्रह्मणेत्यपि १८९
देवस्य दक्षिणे हस्ते देवीवामकरे बुधः
ब्रह्मासोति मन्त्रेण कौतुकं बन्धयेत्ततः १९०
यो ब्रह्मा इति मन्त्रेण भसितं दापयेत्ततः
दूर्वाक्षतमन्त्रेण आशिषो वाचमब्रुवन् १९१
शूलस्य मध्यपत्रे तु बल्यर्थं कौतुकं क्रियात्
उत्सवार्थं च देवानां कौतुकं बन्धयेत्ततः १९२
हर्म्यस्य पूर्वदिग्भागे ईशाने चोत्तरेऽपि वा
पूर्वोक्तलक्षणोपेतं कारयेद्यागमण्डपम् १९३
गोमयालेपनं कृत्वा पिष्टसक्तेन तन्तुना
प्रागग्रं दशसूत्रं तु उदगग्रं तथैव च १९४
यागशालां प्रविश्याथ सकळीकरणं कुरु
पुण्याहं वाचयेत्तत्र प्रोक्षयेद्यागमण्डपम् १९५
सौरादिगुरुपर्यन्तं मण्डपं संप्रपूजयेत्
वेद्यूर्ध्वे स्थण्डिलं कृत्वा अष्टद्रोणेन शालिना १९६
तण्डुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत्
नव कुम्भान्समादाय तन्तुना परिवेष्टयेत् १९७
क्षालयेदस्त्रमन्त्रेण पूरयेच्छुद्धवारिणा
सकूर्चान्पल्लवोपेतान् नालिकेरफलान्वितान् १९८
सरत्नान्वस्त्रसंयुक्तान् स्थापयेद्देशिकोपरि
मध्यमे शिवकुम्भं तु तस्य वामे मनोन्मनी १९९
पूर्वादिष्वष्टकुम्भेषु विद्येशान्संप्रपूजयेत्

दशायुधानि परितः पूजयेत्कुम्भवर्जितम्  २००
तद्बाह्ये पूजयेद्विद्वान् अभितश्चाष्टमङ्गलम्
तत्तत्स्वनाममन्त्रेण गन्धपुष्पैः समर्चयेत्  २०१
विधिना कुण्डसंस्कारं कृत्वा चाग्निं प्रकल्पयेत्
समिदाज्यचरुं लाजं माषशालियवं तिलम्  २०२
सद्यादिशिवपर्यन्तं प्रत्येकं होममाचरेत्
शतमर्धं तदर्धं वा नव पञ्चैकमेव वा  २०३
द्रव्यान्ते व्याहुतिं हुत्वा पूर्णाहुतिं समाचरेत्
नैवेद्यं दापयेत्पश्चाद्धूपदीपादिकं ददेत्  २०४
अस्त्रयागमिति प्रोक्तं बलियागक्रमं शृणु
होमान्ते तु बलिं दत्त्वा सायं प्रातः क्रमेण तु  २०५
द्रोणं वापि तदर्धं वा बल्यर्थं तण्डुलं पचेत्
कटाहं स्थलिकां चैव क्षालयेत्पुरुषेण तु  २०६
तत्पात्रे निक्षिपेदन्नं बलिद्रव्यसमायुतम्
पाचयेदन्नलिङ्गस्थं तण्डुलं पात्र सोदकम्  २०७
स्थलिकाभ्यन्तरे स्थित्वा फलं दधिसमायुतम्
द्वादशाङ्गुलमुत्सेधं तन्नाहं द्विगुणं भवेत्  २०८
अग्रमग्न्यङ्गुलं प्रोक्तं मध्यमूलं क्रमात्कृशम्
लिङ्गं कृत्वा तु तच्छेषमन्नमप्सु विनिक्षिपेत्  २०९
तल्लिङ्गस्य तु मध्ये तु रौद्रं पाशुपतं यजेत्
ततोऽलंकृतमाहूय वस्त्रपुष्पस्रगादिषू  २१०
ग्राहयित्वा विशेषेण ततो गर्भगृहं ततः
देवदेवाय विज्ञाप्य बलिदानं समन्त्रकम्  २११
कुर्यात्पञ्चमहाशब्दं बलितालसमन्वितम्
अस्त्रेशमन्नलिङ्गं च बलिबेरसमन्वितम्  २१२
छत्रचामरसंयुक्तं बुदारुसमन्वितम्
सर्ववाद्यसमायुक्तं गणिकादिभिरावृतम्  २१३
बलिदीपसमायुक्तं बलिपात्रसमन्वितम्
स्वस्तिसूत्रसमायुक्तं बन्दत्वा च विचक्षणः  २१४

नन्दिकालौ वृषं चैव भानुकृणिमनि मातरः
वीरभद्रो गणेशश्च विघ्नेशश्चाच्युतं गुहम्  २१५
दुर्गां  चण्डेश्वरं चैव प्रथमावरणे यजेत्
द्वितीयावरणे चैव दण्डी भृङ्गी वृषध्वजः  २१६
महापीठं वृषं शूलं त्रिःकृत्वा तु प्रदक्षिणम्
महापीठाग्रके देवराजानं बलिमाचरेत्  २१७
अग्निर्यमो निर्ऋतिश्च अपां पतिश्च मारुतः
यक्षेशं क्षेत्रपालं च ईशे विष्णुं विरिञ्चकम्  २१८
द्वितीयावरणं चैव प्रविश्य नगरादिकम्
प्रासादान्तहर्म्यद्वारदेशे द्वारबलिं ददेत्  २१९
प्रविश्य चोत्तरे भागे कुर्यात्कुम्भोदरं बलिम्
तस्य दक्षिणभागे तु बलिं दत्त्वा विशेषतः  २२०
तयोर्मध्ये महायेत बलिं दत्त्वा विशेषतः
ब्रह्मस्थानादितो वापि इन्द्रस्थानादि वा क्रमात्  २२१
इन्दिक वा मृतं वापि कारयेद्बलिपीठके
गोमयालेपनं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः  २२२
ज्वालाजिह्वज्वलत्केशं महात्योशमहाबलः
मर्त्यान्यश्च चण्डवेगो वास्तुपालो बलिप्रियः  २२३
महाभूतश्च विज्ञाय ब्रह्मस्थानादितः क्रमात्
पूर्वं  त्यक्त्वार्थदेवाश्च इन्द्रस्थानादितो बलिः  २२४
एवं भूतबलिं दत्त्वा ग्रामशान्तिकरं भवेत्
पीठाग्रे गोपुराग्रे वा ऐशान्यां पीठवामतः  २२५
दिनमेवं बलिं दद्याद्दिनं प्रति बलिद्वयम्
सर्वदेवाश्च तृप्यर्थमीशेऽस्त्राय बलिं ददेत्  २२६
षोडशोपचारैश्च बलिं दद्याद्विचक्षणः
पाद्यमाचमनं चार्घ्यं  गन्धपुष्पं च धूपकम्  २२७
दीपं बलिप्रदानं च बलिं मुद्रां प्रियार्थकम्
गान्धारस्वरसंयुक्तं पुष्पाञ्जलिस्तु संपुटा  २२८
वाराटीस्त्विन्यदेशे तु देवताप्रतीकारणम्

कोल्वीश्वरसमायुक्तं प्रत्यालीथं च मट्टयम् २२९
भूपालभूगिनिगानं च अग्निदेशे प्रियार्थकम्
नट्टभाषा भुजङ्गं च तालं च च्चपुटं तथा २३०
वासन्तगानसंयुक्तं याम्ये देशे प्रियार्थकम्
कौशिकं मङ्गलावर्तं मेघतालसमन्वितम् २३१
गानदेशेऽग्निरीयुक्तं नैर्ऋते तु प्रियार्थकम्
श्रीकामनं च नामर्थं तालं च चपुटं तथा २३२
गानं सोमगिनीयुक्तं वारुरायां दिशि चाचरेत्
तत्वेशी भुजगालीढं बलितालसमन्वितम् २३३
गानं मालवसंयुक्तं वायुदेशे प्रियार्थकम्
पञ्चचोद्धटितं चैव कुम्भतालसमन्वितम् २३४
शुद्धगोडसमायुक्तं सौम्यदेशे प्रियार्थकम्
ऐशान्यां चैन्दलं प्रोक्तं कुञ्चितं वर्मतालकम् २३५
फयाषौड्डसमायुक्तमीशदेशे प्रियार्थकम्
एवं प्रदक्षिरां कृत्वा प्रविशेदालयं प्रति २३६
पादप्रक्षालनं कृत्वा महापीठे बलिं क्षिपेत्
धामप्रदक्षिरां कृत्वा प्रविशेद् ++ मराडपम् २३७
नीराजनं ततः कृत्वा बलिबेरस्य देशिकः
अन्नलिङ्गं जले क्षिप्त्वा चास्त्रेरौव यागमराडपे २३८
पुष्पाञ्जलित्रयं कृत्वा मूलबेरस्य संनिधौ
पूर्वोक्तेन विधानेन सन्ध्याशेषं समापयेत् २३९
ततः संध्यावाहने तु सकले समलंकुरु
रथे वा शिबिकायां वा खेटे वारोपयेत्ततः २४०
वीथीसंमार्जनं कृत्वा सफलैः पूर्णकुम्भकैः
कदलीक्रमुकैश्चैव सफलैः पूर्णकुम्भकैः २४१
चित्रवस्त्रं च गन्धं च कुन्तुकं हिमतोयकम्
दर्पणं केशशोधं च कृष्णगन्धं च साञ्जनम् २४२
उशीरं ह्रीबेरं च कल्हारं जातिचम्पकम्
नालिकेरसमायुक्तं ताम्बूलं क्रमुकं तथा २४३

शतपुष्पं च दीपं च गृहद्वारं प्रति प्रति
नानारूपसमायुक्तं नानाभूतजनैर्युतम्  २४४
नानाच्छत्रसमायुक्तं नानाध्वजसमायुतम्
नानावाद्यसमायुक्तं नानास्त्रीपरिसेवितम्  २४५
चामरं तालवृन्तं च दासिकैश्च प्रदापयेत्
महाशैवास्तदन्ते तु तदन्ते भूसुरास्तथा  २४६
तदन्ते रुद्रगणिकाः सर्वालंकारसंयुताः
तदन्ते वाहनादीनि तदन्ते वाद्यघोषकाः  २४७
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम्
ग्रामप्रदक्षिणं कृत्वा प्रविश्यास्थानमण्डपम्  २४८
सिंहासने समारोप्य पाद्यं दत्त्वा विचक्षणः
गण्डूषार्थं जलं देयं करसंपूर्णमानतः  २४९
एकत्रिपञ्चवारं वा विसृजेदस्त्रमन्त्रतः
भूमिशुद्धिं ततः कृत्वा नालिकेरफलादिकम्  २५०
निवेदयित्वा देवाय पानीयं दापयेत्ततः
ताम्बूलं दापयेद्विद्वान् कर्पूरेण समन्वितम्  २५१
कर्पूरकालेनैव धूपान्ते दीपमाचरेत्
नीराजनं प्रकुर्वीत सर्वप्राणिहिताय वै  २५२
शुद्धनृत्तावसाने तु बहुरूपं समाचरेत्
चित्रालंकारसंयुक्तं मद्दासीभिः प्रकल्पयेत्  २५३
नानादेशकथावाक्यैर्धर्मयुक्तादिदर्शनैः
विनोदवाद्यैरन्यैश्च महाजालादिदर्शनैः  २५४
बीणाबेणुमृदङ्गाद्यैर्वाद्यैरन्यैश्च शोभितम्
आचार्यसव्यभागे तु स्वामिनो वामके पुनः  २५५
तयोश्च पृष्ठभागे तु शिष्यभृत्यैस्तु शोभितम्
गायको वंशकश्चैव सव्यभागे तु संस्थितौ  २५६
मर्दको नर्तकश्चैव वामभागे तु संस्थितौ
पार्श्वयोरुभयोश्चैव रुद्रस्य गणिकाः स्थिताः  २५७
शेषभक्तजनाः सर्वे वामभागे तु संस्थिताः

महेशाग्रे विशेषेण बहुरूपं समाचरेत् २५८
गीतवाद्यादिभिः सर्वस्तोत्रैः स्तुत्वा महेश्वरम्
शुद्धमाल्यावरोहश्च स्नानवेद्युपरि न्यसेत् २५९
स्नपनैः स्नापयेद्विद्वान् शुद्धान्नं च निवेदयेत्
ततो देवं समादाय स्वस्तिसूक्तसमन्वितम् २६०
धामप्रवेशनं कुर्यात्सर्वघोषसमन्वितम्
धामाग्रे चोत्तरे वाथ दक्षिणे पश्चिमेऽपि वा २६१
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत्
मध्यमे विन्यसेद्देवं दिनबेरसमन्वितम् २६२
पाद्यद्रव्यादिकान्सर्वान् अपरे दिवसेऽर्चितान्
द्रव्याण्याहृत्य देवाग्रे स्थापयेद्देशिकोत्तमः २६३
पाद्यमाचमनीयं च स्नानार्थद्रव्यचन्दने
वस्त्रं विलेपनद्रव्यं भूषणं दक्षिणे दिशि २६४
धूपाद्यारात्रिकं द्रव्यं पश्चिमे दिशि विन्यसेत्
उत्तरे मुखवासं च पानीयं द्रव्यसंयुतम् २६५
पावके विन्यसेद्धीमान् नैवेद्यार्थं च तण्डुलम्
मरीचिलवणाहंशं जीरकं चोपदंशकम् २६६
विन्यसेन्नैर्ऋते भागे वायव्ये छत्रचामरम्
फन्नवस्त्रं च तैलं च दीपदण्डं तथैशके २६७
अन्यानि सर्वद्रव्याणि देवाग्रे विन्यसेत्ततः
पुण्याहं वाचयेत्तत्र द्रव्याधिवासनार्थकम् २६८
प्रणवेन समभ्यर्च्य अमृतीकरणं कुरु
इत्थं यागोपकरणं सर्वं धाम्नि प्रवेशयेत् २६९
धामप्रवेशनाद्यन्ते सर्वालंकारसंयुतम्
उत्सवे समलंकृत्य सुगन्धकुसुमादिभिः २७०
शिबिकादौ समारोप्य भवान्यालयमाविशेत्
अलंकृत्य वितानाद्यैरालयं शयनार्हकम् २७१
तन्मध्ये शयनं कृत्वा मृदुपुष्पसमन्वितम्
तस्योर्ध्वे वस्त्रमास्तीर्य स्थापयेत्प्राङ्मुखं विभुम् २७२

तस्य दक्षिणपार्श्वे तु गौरीं संस्थापयेद्गुरुः
सप्तमातृगणं पूर्वे रोहणीगणमुत्तरे  २७३
गुह्यमातृगणं दक्षे पश्चिमे विष्णुमातरम्
ब्रह्ममातृगणं त्वीशे पावके मदनं रतिम्  २७४
वसन्तं नैर्ऋते देशे क्षेत्रपालं च वायवे
पादुकं राजचिह्नं च पूर्वादिनी प्रदक्षिणम्  २७५
वस्त्रोपरि न्यसेद्विद्वान् तत्तन्मन्त्रैः समर्चयेत्
नैवेद्यं दापयेत्तत्र यथा भक्तिसमन्वितम्  २७६
धूपदीपं ततो दत्त्वा ताम्बूलं दापयेत्ततः
दशास्त्रं परितोऽभ्यर्च्य कवचेन च रक्षयेत्  २७७
वस्त्रेण च पिधानं च कुर्यात्कवाटबन्धनम्
रात्र्यन्ते तु गुरुः स्नात्वा प्रविशेद्देवमन्दिरम्  २७८
संध्यावन्दनकं कृत्वा प्रविशेद्देवमन्दिरम्
तद्द्भैः पननं कृत्वा पर्यव्यापिसमन्वितम्  २७९
गर्भालयं समाविश्य कवाटोद्घाटनं कुरु
प्रच्छन्नपटमावर्ज्य प्रणम्य सकलेश्वरम्  २८०
ॐ नमो देवदेवेश सर्वलोकैकनायक
उत्तिष्ठ स्नानकर्मार्थं सर्वलोकाभिवृद्धये  २८१
इत्युक्त्वा देवमादाय पूर्वशक्तिसमन्वितम्
शिबिकादौ समारोप्य सर्वालंकारसंयुतम्  २८२
ग्रामं वा निलयं वापि प्रदक्षिणमथाचरेत्
आस्थानमण्डपं गत्वा पूजां पर्यद्युति क्रमात्  २८३
संस्नाप्य गन्धतैलाद्यैः पिष्टामलकचन्दनैः
पञ्चगव्यामृतैरन्यैर्नालिकेरफलादिकैः  २८४
स्नापयेद्देवदेवेशं स्नपनेन तु देशिकः
तदन्ते कोष्ठकस्तूरीकुङ्कुमैः स्नापयेत्प्रभुम्  २८५
तत्तत्संमार्ज्य वस्त्रेण कौपीनाद्यं विसर्जयेत्
शुद्धवस्त्रेण संवेष्ट्य नयेदाहार्यमण्डपे  २८६
वेद्यूर्ध्वे दक्षिणे पार्श्वे उत्तरे वा विशेषतः

पद्मासने समारोप्य पूजयेत्कलशादिकम् २८७
पाद्यमाचमनं चार्घ्यं दिनयुक्ताम्बरादिभिः
हविर्निवेदयेद्विद्वान् भक्त्याचारोपचारवत् २८८
शिवाग्नियजनं कुर्याद्दिवाधिपतिबीजकम्
पूर्वोक्तेन विधानेन यागहोमं समाचरेत् २८९
होमान्ते धूपदीपाद्यैस्तोषयेत्सकलेश्वरम्
आयुधानर्चयेत्तत्र ऐशान्यां वेदिकोपरि २९०
ततः स्वनाममन्त्रेण दिनदेवादिबीजकम्
गन्धपुष्पाक्षतैरेव पूजयेद्देशिकोत्तमः २९१
ततश्च वैदिकं स्तोत्रं नित्यनृत्तं च वाद्यकम्
भस्मना तिलकं कृत्व विप्राशीर्वचनैः सह २९२
देवेशाग्रे प्रकर्तव्यं बलिं विज्ञापयेद्बुधः
ततोऽस्त्रराजमादाय बलिबेरसमन्वितम् २९३
अन्नलिङ्गसमोपेतं घण्टारवसमन्वितम्
छत्रचामरसंयुक्तं नानादीपसमन्वितम् २९४
बलिदानसमोपेतं प्रदक्षिणमथाचरेत्
बल्यन्ते चोत्सवं कुर्यात्सर्वालंकारसंयुतम् २९५
प्रभामध्ये स्थितं देवं रत्नसिंहासनेऽपि वा
पाद्यमाचमनं चार्घ्यं फलभक्ष्यादिकं ददेत् २९६
धूपदीपादिकं दत्वा सौख्यस्यालोककं कुरु
अथ मध्याह्नवेलायां सकलेशं यजेत्ततः २९७
यत्रार्थं स्नपनं कृत्वा नैवेद्यान्तं समर्चयेत्
मूलबेरार्चनं सर्वं पूर्वोक्तविधिना न्यसेत् २९८
प्रासादस्योत्तरे चैव पश्चिमे वा विशेषतः
आस्थानमण्डपे वाथ नैमित्तिकार्चनं चरेत् २९९
भूयोऽपि विमलीकृत्य सकलेशमलंकुरु
विनोदालोकनार्थाय सायाह्नस्यापरार्धके ३००
ग्रामप्रदक्षिणं कृत्वा परिवेषक्रमान्वितम्
अजसूकरयुद्धं वा मल्लयुद्धमथापि वा ३०१

एणशार्दूलयुद्धं वा अजशार्दूलमेव वा
समकुक्कुटयुद्धं वा श्वानसूकरमेव वा  ३०२
श्येनेन शशपुञ्जैर्वा व्याघ्राणश्चाकुलैश्च वा
गजमानवसंघैर्वा विनोदार्थं प्रकल्पयेत्  ३०३
अन्योन्यानेकजात्यादिविनोदानि प्रदर्शयेत्
सभामण्डपमासाद्य धूपदीपं समाचरेत्  ३०४
नीराजनं ततः कृत्वा सायरक्षाविधानतः
भूयोऽपि स्नापयेद्विद्वान् स्नपनाद्यैर्महेश्वरम्  ३०५
हविर्निवेदयेत्तत्र यागहोमं समाचरेत्
पूर्वोक्तेन विधानेन बलिं दत्त्वा विचक्षणः  ३०६
धूपदीपादिकं दत्त्वा मूलबेरस्य देशिकः
यानार्थं पूजयेद्विद्वान् तदन्ते चोत्सवेश्वरम्  ३०७
शिबिकादौ समारोप्य सर्वालंकारसंयुतम्
परिवेषक्रमेणैव प्रदक्षिणमथाचरेत्  ३०८
आस्थानमण्डपे मध्ये सिंहासनोपरि न्यसेत्
धूपदीपादिकं दत्त्वा नृत्तावलोकनं कुरु  ३०९
स्नपनैः स्नापयेद्विद्वान् नैवेद्यं दापयेत्ततः
संध्याशेषं ततः कृत्वा तस्यान्ते चोत्सवेश्वरम्  ३१०
गन्धमाल्यैरलंकृत्य भवान्यालयमाविशेत्
विजयस्य क्रमं प्रोक्तं वृद्धिदस्य ततः शृणु  ३११
अङ्कुराद्धोमपर्यन्तं पूर्वोक्तविधिना ततः
अपरे तु दिने प्राप्ते होमान्ते बलिमाचरेत्  ३१२
बल्यन्ते चोत्सवं कुर्यात्क्रमेणैव समन्वितम्
वृद्धिदं त्विति विख्यातं दिनदेवांस्ततः शृणु  ३१३
प्रथमं विघ्नरात्रं स्याद्द्वितीयं भूतरात्रकम्
तृतीयमृषिरात्रं स्याच्चतुर्थं चन्द्ररात्रकम्  ३१४
गन्धर्वं पञ्चमं रात्रं षष्ठं चैवेन्द्ररात्रकम्
सप्तमं गुहरात्रं स्यादष्टमं विष्णुरात्रकम्  ३१५
नवमं चाग्निरात्रं स्याद्दशमं नागरात्रकम्

रौद्रमेकादशं रात्रं द्वादशं मातरप्रिया ३१६
त्रयोदशाहं युग्मारडं पितृरात्रं चतुर्दश
भानुपञ्चदशं रात्रं कलारात्रं तु राक्षसम् ३१७
सप्तदशं शिवं दद्यादित्येता दिनदेवताः
वारुणं योगवाद्यं च ब्रह्मचन्द्रेशवाद्यकम् ३१८
शिशिरं गौरवाद्यं च धौतं विशुद्धवाद्यकम्
श्रीवाद्यं सौख्यवाद्यं च भूवाद्यमलवाद्यकम् ३१९
पाचनो वृद्धिवाद्यं च शान्तवाद्यं सुवाद्यकम्
गणेशादि शिवान्तं च वाद्यं दद्याद्विशेषतः ३२०
शश्वभोगं च वीर्यं च शाश्वताचमनं ततः
षडङ्गं विश्वशान्तं च भुवनाचमनुं ततः ३२१
अर्काचमनपुष्यं च प्रियादमृतमेव च
मानसाचमनं गन्धं सोमाचमनमेव च ३२२
आत्मसंदीपनं सौख्यं मानसाचमनं ततः
गणेशादीशपर्यन्तं दिनेष्वाचमनं स्मृतम् ३२३
निरोधार्घ्यं च नलिनं पाशमोचनमेव च
देवार्घ्यं केवलार्घ्यं च शशिधार्घ्यं श्रियावहम् ३२४
श्रीभोगार्घ्यं च मन्त्रार्घ्यं विशेषार्घ्यं तथैव च
दुःस्वप्ननाशकं चैव शिवार्घ्यं पापमोचनम् ३२५
पराङ्मुखार्घ्यकं चैव गणेशादि शिवान्तकम्
बीजवल्कलमुत्कन्दं कन्दमध्योदकं ततः ३२६
परिमार्जविरोमदं धातु धातुरत्नकषायकम्
गन्धपुष्पास्त्रालोहात् पत्रं चैव स्नानादिकम् ३२७
गणेशादि शिवान्तं च स्नानार्थमुदकं ग्रहेत्
शपिरं पिङ्गलध्यानं कपोतं विकचं मधुः ३२८
लोहतत्त्वं सुवर्णं च कर्पूरं बकुलं तथा
काषायं श्यामवर्णं च कृष्णं रक्तं च धूम्रकम् ३२९
पीतं चतुवर्णं च विघ्नेशादि शिवान्तकम्
भौक्तिकाभरणं चैव शङ्खं तिलकमेव च ३३०

स्फटिकं त्रपु गोमेधं रजतं पद्मबीजकम्
स्वर्णाभरणसंकीर्णं वैडूर्यं च प्रवालकम् ३३१
मौक्तिकं चैव रुद्राक्षं माणिक्यं चेन्द्रनीलकम्
पुष्परागं क्रमेणैव गणेशादि शिवान्तकम् ३३२
कपिलं ब्रह्मगन्धं च श्रीगन्धं विमलं तथा
शिवप्रियाष्टगन्धं च राजक्यर्धाङ्गरागकम् ३३३
श्रियामेदं च गीर्वाणं निर्यासं भद्रमेव च
श्रीगन्धं च लवङ्गं च कृष्णगन्धं तथैव च ३३४
गरुडामोदगन्धं च श्रीगन्धं पद्मगन्धकम्
गन्धं दद्याद्विशेषेण गणेशादि शिवान्तकम् ३३५
नन्द्यावर्तं श्रियावर्तं पुन्नागं चतुरङ्गुलम्
मल्लिका मालती चैव मन्दारं बृहती तथा ३३६
बकुलं पद्मपुष्पं च करवीरं तथैव च
जातिश्वेतार्कचाम्पेयं पाटलोत्पलमेव च ३३७
द्रोणपुष्पं च विघ्नेशादीशानान्तं प्रकल्पयेत्
प्रियानदप्रियामोदं विश्वप्रियमनोरमम् ३३८
गणेशादि शिवान्तं च धूपं दद्याद्दिने दिने
नागदीपं शिवान्तं च शिवमङ्गलदीपकम् ३३९
शिखारे नागदीपं च भूमिपं चन्द्रकान्तकम्
भद्रदीपं शिखानादं दीपशेखरमेव च ३४०
मन्त्रदीपं रुद्रदीपं राजदीपं शिवप्रियम्
इन्द्रावरुणदीपं च गणेशादि शिवान्तकम् ३४१
घृतान्नं दधिमध्वन्नं भोगान्नं फलोदकम्
राजान्नं चैव शुद्धान्नं यामान्नं कृसुरोन्नकम् ३४२
क्षीरान्नं चैव शुद्धान्नं मुद्गान्नं च गुलोदनम्
पिष्टान्नं चैव हारिद्रं पक्वान्नं सिद्धमोदनम् ३४३
गणेशादि शिवान्तं च हविर्दद्याद्विचक्षणः
गीताम्बु वा ततेदी च षडङ्गामोदमेव च ३४४
सुन्धवं पो संध्यान मङ्गशीतालमेव च

श्रीपानीयं प्रियामोदं सन्तापहरमेव च ३४५
सौभद्रं चित्तसंतोषं गीतशेखरमेव च
वारुणं माधवं चैव मन्त्रसन्तानमेव च ३४६
चित्तं +++ चैव चित्तन्यं न्दाम्बुशेखरम्
पानीयमिति विख्यातं गणेशादि शिवान्तकम् ३४७
सुतवेदिसुतानाभं सुतनादेयमेव च
कर्मसंधानकं चैव कामदायिकमेव च ३४८
कर्मपूरणिकाकोलं विकचं सुतशेखरम्
विधिपूर्णं प्रसिद्धं च सुतदीपकमेव च ३४९
गणेशादीशपर्यन्तं होमद्रव्यं समाचरेत्
इक्षुपूर्णं पुरोडाशं वैणवं कुमुदप्रियम् ३५०
कर्पूरं लाजपूर्णं च सतुपूरिकमेव च
नालिकेरं च कौशेयं गोमंमारुयं शिवप्रियम् ३५१
बबदं बबदुध्यानं बलिकारिकमेव च
यवावृत गणेशादि शिवान्तं बलिमाचरेत् ३५२
तक्केशी नट्टरागं च मेघरागं च कौशिकम्
सैन्धवं ताराडवं चैव पञ्चमं नट्टभाषया ३५३
कान्ताली कामरं चैव गान्धारं पञ्चमं तथा
तक्केशी नट्टरागं च व्याला च श्वेतकौशिकम् ३५४
कान्ताली कामरं चैव कोल्ली कान्तारपञ्चकम्
गान्धारं तर्करागं च मेघनादं च कौशिकम् ३५५
पूर्वं पञ्चरगं स्तोत्रं विघ्नेशादि शिवान्तकम्
श्रीरागमादितालं च रंगद्योतं च दर्पणम् ३५६
जर्झरी हंसनादं च मल्लिकामोदमेव च
मरदः कीर्तितालायां हंशनादं च गारुडम् ३५७
क्रीडातालकरी तालं जनकं कुम्भतालकम्
झम्पा च वर्णतालं च लक्ष्मीतालं क्रमेण तु ३५८
गणेशादीशपर्यन्तं कल्पयेत्कल्पवित्तमः
कालारि कामनाशं च चराडेशानुग्रहं ततः ३५९

गङ्गाधरस्वरूपं च गजभेत्तृ उमासखम्
भिक्षाटनं च कङ्कालं हरिरर्धार्धनारिकम्  ३६०
कल्याणसुन्दरं चैव दक्षिणामूर्तमेव च
नृत्तं सुखासनं चैव किरातं त्रिपुरान्तकम्  ३६१
बेरनिर्णयमेवोक्तं गणेशादि शिवान्तकम्
गण्डिका मृगराशिं च रक्तधाम खेशरी  ३६२
मकरं भूतधानं च शिबिका पुष्पि प्रभा
मौण्डिरत्नप्रभायानवृषभं रङ्गमेव च  ३६३
पुष्पायामं नागं तु रक्षाखेटकं क्रमात्
गणेशादीशपर्यन्तं वाहनं परिकल्पयेत्  ३६४
चैवादि चन्द्रपर्यन्तं पूर्वं  त्यक्त्वा परं ग्रहेत्
तत्पाद्यादिमादीनि संगृहेद्देशिकोत्तमः  ३६५
धामप्रदक्षिणं पूर्वं  ततो विन्यार्चनं परम्
यात्रार्थं  स्नपनं पश्चाद्धोमं बल्युत्सवान्तकः  ३६६
ततो नीराजनं चैव विनोदालोकनं ततः
मध्याह्नपूजनं पश्चात्ततो नैमित्तिकार्चनम्  ३६७
प्रदोषपूजनं पश्चात्पुनर्होमनिवेशनम्
यामार्धे तिष्ठते काले दिनं प्रति दिनं प्रति  ३६८
षष्ठे ह तु विशेषेण शाम्भवोत्सवमाचरेत्
अष्टमेऽहनि दातव्यं मृगयागयात्रां समाचरेत्  ३६९
स्वकालहनितं योग्यदमृदघ्नं प्रकल्पयेत्
तीर्थमङ्कुरं पश्चात्पश्चात्कौतुकबन्धनम्  ३७०
तीर्थाधिवासनं कुर्याच्चण्डोत्सवमथाचरेत्
देवाग्रे वा सभास्थाने तीर्थान्ते वा मनोरमे  ३७१
चूर्णोत्सवं ततः कुर्याज्जलक्रीडां समाचरेत्
पूर्णाहुतिं ततः कुर्याद्यागकुम्भाभिषेचनम्  ३७२
स्नपनं कारयेत्तत्र प्रभूतं हविषं ददेत्
ध्वजावरोहणं पश्चान्मौनयागं समाचरेत्  ३७३
विजयं त्विति विख्यातं शृणु वृद्धिं प्रभञ्जन

जलक्रीडावसाने तु पूर्णाहुतिमथाचरेत् ३७४
यागकुम्भाभिषेकं च ध्वजावरोहणं परम्
चण्डयागं ततः कृत्वा स्नपनं कारयेत्ततः ३७५
संपूज्य देवदेवेशं प्रभूतहविषं ददेत्
वृद्धिदं त्विति विख्यातं ब्राह्मकं च ततः शृणु ३७६
विघ्नेशं पूजयेत्पश्चाद्विज्ञापनमतः परम्
बिम्बशुद्धिस्तृतीयं स्यादलंकारश्चतुर्थकम् ३७७
रक्षाबन्धनकर्माथ वास्तुशुद्धिस्ततः परम्
पञ्चगव्यविधानं च नित्यपूजाविधिः परम् ३७८
उत्सवेश्वरयागं च ततो माध्याह्नपूजनम्
प्रदोषपूजनं पश्चात्ततो नीराञ्जनं क्रमात् ३७९
परिवेषक्रमं कृत्वा जलक्रीडां समाचरेत्
स्नपनं कारयेदन्ते भूरिपान्नं निवेदयेत् ३८०
ब्राह्मिकं त्विति विख्यातमुत्सवानां क्रमेण तु
कन्यसत्रितयस्यापि विशेषं किंचिदस्ति हि ३८१
अङ्कुरं भेरियागं च देवताह्वानमेव च
अस्त्रयागबलिर्यानं तीर्थं चण्डेश्वरार्चनम् ३८२
स्नपनं भूरिपानं च कल्पयेत्तत्क्रमेण तु
अन्येषामपि सर्वेषां वर्जयेत्तु प्रयत्नतः ३८३
आदौ मध्ये तदन्ते वा भक्तानामुत्सवं कुरु
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ३८४
इति सूक्ष्मागमे उत्सवविधिपटलस्त्रयोदशः

## पवित्रोत्सवविधिपटलः

पवित्रकमथो वक्ष्ये श्रूयतां तत्प्रभञ्जन
मनोन्मनीं समुद्दिश्य किंचिद्भेदं वदाम्यहम् १
न्यूनातिरिक्तं तत्सर्वं कर्मणां मनसामपि
पतन्तं त्रायते यस्मात्पवित्रं तदिहोच्यते २
आषाढादित्रिमासे च तुलावृश्चिकमेव च

न्यूनादिपूरणार्थं च पवित्रारोहणं कुरु ३
पूर्वपक्षे चतुर्दश्यामाषाढे वा पवित्रकम्
इतरेष्वपि मासेषु पक्षयोः शुक्लकृष्णयोः ४
चतुर्दश्यामथाष्टम्यां पवित्रविधिमाचरेत्
वृश्चिके दीपतः पश्चात्पवित्रं वर्जयेद्बुधः ५
क्षौमादिसूत्रमेवं तु त्रिगुणीकृत्य बुद्धिमान्
रोमाद्यं तु विसृज्याथ क्षालयेद्घोरमन्त्रतः ६
वामादि नव शक्त्यश्च नवसूत्राधिदेवताः
तत्सूत्रं त्रिगुणीकृत्य दशवृद्ध्य नवान्तकम् ७
उत्तमोत्तममेवं स्यात्पदसंख्या च मध्यमम्
अष्टत्रिंशत्समाख्यातं तन्तुना कन्यसं स्मृतम् ८
अथवान्यप्रकारेण तन्तुसंख्या च कथ्यते
मनसा कर्मणा वाचा यन्न्यूनं कर्मणात्यपि ९
एकाद्यनेकवृद्ध्या तु पञ्चाशत्संख्यया ततः
ग्रन्थयस्तन्तुसंख्याता बन्धयेत्तु यथाक्रमम् १०
ग्रन्थयस्त्विष्टदेशे वा नानाचित्रविचित्रितम्
अथवान्यप्रकारेण ग्रन्थिसंख्यां शृणुष्वथ ११
चित्रमेकशिरो मालो वसुग्रन्थिसमन्वितम्
कण्ठालसनमेकं स्याद्द्वादशग्रन्थिसंयुतम् १२
शिरोमाला शिरोमानं जानुगौर्यावतारकम्
बाहुमाला प्रकोष्ठा च पञ्चग्रन्थियुतं तु वा १३
कृतग्रन्थिपवित्रं च पञ्चग्रन्थिसमन्वितम्
अथवान्यप्रकारेण एकग्रन्थिसमन्वितम् १४
तद्देवीपरिवाराणां पवित्रमेकं प्रदापयेत्
ततो गौर्यवतारं च किंचिद्भेदं विशेषतः १५
मूर्धादिपादपर्यन्तं स्पृष्ट्वा गङ्गावतारकम्
युग्मं वा शोभनार्थं वा एकविंशतिधारणम् १६
देवीगायत्रिमन्त्रेण पूर्वद्रव्येण रञ्जयेत्
आत्मतत्त्वपवित्रं च तदेकं गौरिमूर्धनि १७

गौर्यवतारमेकं वा कराठे वा मूर्ध्नि विन्यसेत्
प्रासादं यागशाला च प्राकारं पचनालयम् १८
एकं द्वित्रीणी सूत्रं वा बन्धयेत्तु यथाक्रमम्
एवं क्रमेण कर्तव्यमङ्कुरार्पणमाचरेत् १९
प्रासादस्याग्रदेशे वा महाशासु प्रकल्पयेत्
यागशालां समारभ्य सर्वं पूर्ववदुच्यते २०
देवीं सम्यक्समारभ्य नैवेद्यादीनि दोषयेत्
विघ्नेश्वरं समभ्यर्च्य अविघ्नं प्रार्थयेद्गुरुः २१
तत्र देवीं नमस्कृत्य तापयेत्तु विशेषतः
ततो मराडपमारभ्य सौरादिगुरुरन्तकम् २२
वेदिमध्ये विशेषेण मराडलं कल्पयेत्सुधीः
रासिमराडलमेवं स्यान्नासिमराडलमेव च २३
शताब्जकुराडलं वापि पञ्चचूर्णैरलंकृतम्
तत्र देवीं समभ्यर्च्य भानुवारसमन्वितम् २४
कुम्भस्योत्तरदेशे तु स्थापयेत्तु पवित्रकम्
कुम्भस्य पश्चिमे भागे न्यसेन्नित्यपवित्रकम् २५
देवीमन्त्रेण संप्रोक्ष्य नववस्त्रेण च्छादयेत्
अस्त्रेण शान्तिना प्रोक्ष्य कवचेनावकुराठयेत् २६
अभ्यर्च्य हृदयेनैव धेनुमुद्रां प्रदर्शयेत्
नववस्त्रेण संच्छाद्य बहुरूपमनुस्मरन् २७
कर्त्रिका दन्तकाष्ठं च तालुशोधनमेव च
सूदिका श्रोत्रशोधी च नखशोधनमेव च २८
पूर्वभागे न्यसेद्धीमान् गौरीमन्त्रं समुच्चरन्
कौपीनं दराडवस्त्रं च तैलमामलकं तथा २९
पञ्चगव्यामृतं चैव दक्षिणे विन्यसेत्ततः
बहुरूपमनुस्मृत्य अर्चयेत्तु गुरूत्तमः ३०
पुष्पमाभरणं चैव अञ्जनं केशशोधनीम्
चन्दनं पश्चिमे देशे गायत्र्या च प्रविन्यसेत् ३१
चतं भसितसंयुक्तमुत्तरे वाममन्त्रतः

अस्तमन्त्रैः समभ्यर्च्य पश्चात्ततो कुण्डान्तिकम् ३२
अग्निकार्योक्तवत्कुर्याद् अग्निकार्यं समाचरेत्
स्थालीपाकविधानोक्तमार्गेणैव चरुं पचेत् ३३
चरुं त्रिभागं भज्याथ नैवेद्यांशं शिवांशकम्
होमार्थं त्वेकमेवं तु बल्यर्थं त्वेकभागथा ३४
द्रव्यान्ते व्याहृतिं हुत्वा प्रायश्चित्तं हुनेत्ततः
सौरादिगुरुपर्यन्तं दद्यान्नित्यपवित्रकम् ३५
चारुदेवीं समभ्यर्च्य स्वनाम्नैव प्रपूजयेत्
ततो नित्यपवित्रं च देवीमूलेन दापयेत् ३६
परिवारामरादीनां दद्यान्नित्यपवित्रकम्
निवेदयेच्छिवांशं तु धूपदीपं ददेत्क्रमात् ३७
प्रायश्चित्तार्थहोमं चेदस्त्रेणैव शतं हुनेत्
भान्वादिगुरुपर्यन्तं दद्याद्गन्धपवित्रकम् ३८
सर्ववाद्यसमायुक्तं हर्म्यप्रदक्षिणं कुरु
द्वारदेवीं समभ्यर्च्य दद्याद्गन्धपवित्रकम् ३९
स्वस्वमन्त्रैः समभ्यर्च्य गर्भगेहं प्रविश्य च
पाद्यादीनि ददेत्कार्यं मूलमन्त्रेण देशिकः ४०
दद्याद्गन्धपवित्रं च अष्टपुष्पेण दापयेत्
पश्चान्नित्याग्निकार्यं च संध्याशेषं समाचरेत् ४१
देशिको मूर्तिपैः सार्धं प्रातः स्नानादिकं कुरु
संप्रोक्ष्य चास्त्रमन्त्रेण पवित्राण्येव वापयेत् ४२
ऐशान्ये स्थण्डिलं कल्प्य पात्रे संरक्ष्य देशिकः
अष्टपुष्पक्रियां देवीं समभ्यर्च्य यथाविधि ४३
यागशालां प्रविश्याथ प्रोक्षयेदस्त्रमन्त्रतः
भान्वादिगुरुपर्यन्तं तत्क्रमेणैव पूजयेत् ४४
प्रायश्चित्तं ततो हुत्वा स्पृष्ट्वागौरीवतारकम्
सर्वद्रव्यसमायुक्तं पूर्णाहुतिमथाचरेत् ४५
देवीं संपूज्य विधिवन्नैवेद्यादिक्रमेण तु
भान्वादिगुरुपर्यन्तं दद्याच्छुद्धपवित्रकम् ४६

द्वारं संपूज्य विधिवद्गर्भगेहं प्रविश्य च
पञ्चगव्यादि संस्नाप्य देवीं सम्यक्समर्चयेत् ४७
साधनद्रव्यसर्वाणि गर्भगेहे प्रवेशयेत्
तत्तद्द्रव्यं समादाय तत्तद्योग्येषु दापयेत् ४८
तत्तन्मन्त्रैः समायुक्तं तत्तत्स्थानेषु योजयेत्
चन्दनादि समालिप्य नैवेद्यादिषु तोषयेत् ४९
तदन्ते मण्डपं प्राप्य पूर्णाहुतिं च योजयेत्
परिचारकमाहूय स्वस्तिमङ्गलवाचकैः ५०
पवित्रं वाहयित्वा तु सर्वालंकारसंयुतम्
द्वारदेवीं समभ्यर्च्य दद्याच्छुद्धपवित्रकम् ५१
देवीमारात्समाविश्य पूजयेद्वीरमन्त्रतः
शङ्खघोषसमायुक्तं दद्याच्छुद्धपवित्रकम् ५२
परिवारामरादीनां दद्याच्छुद्धपवित्रकम्
प्रभूतहविषं दत्त्वा धूपदीपादिकं ददेत् ५३
शेषद्रव्याणि तत्काले दर्शयेत्परमेश्वरीम्
पूर्वस्थाने च संस्थाप्य दद्यान्नित्यपवित्रकम् ५४
पश्चान्नित्याग्निकार्यं तु संध्याशेषं समाचरेत्
माहेश्वरीं समभ्यर्च्य पूजयेत्तु विशेषतः ५५
सर्वालंकारसंयुक्तं बल्यन्ते यानमाचरेत्
नवसप्ताहपञ्चाहं त्र्यहमेकाह मुच्यते ५६
अत ऊर्ध्वं न कर्तव्यं सर्वशास्त्रेषु बुद्धिमान्
दिनं प्रति विशेषेण पवित्रं विसृजेद्बुधः ५७
अरुणोदयस्नानकाले शुद्धपात्रोपरि न्यसेत्
प्रोक्षयेद्वाममन्त्रेण मूलमन्त्रेण होमयेत् ५८
शतं वापि तदर्धं वा होमयेद्द्रव्यसंयुतम्
होमे च स्नानकाले तु पवित्राद्यैरलंकृतम् ५९
नैवेद्यं दापयेत्पश्चान्नित्यहोमादि पूर्ववत्
अन्यथा स्नानकाले तु पवित्राण्यवरोपयेत् ६०
अस्त्रमन्त्रेण संप्रोक्ष्य पवित्राद्यैरलंकृतम्

एवं दिने दिने कुर्यान्नवाहान्तं क्रमेण तु ६१
अवरोहदिने चैव प्रातः संधिविनिश्चितम्
प्रायश्चित्तार्थहोमं तु पूर्णाहुतिमथाचरेत् ६२
कुण्डेष्वग्निं विसृज्याथ कुम्भे संयोजयेत्सुधीः
तत्कुम्भबीजमादाय मूलेनैव हृदि न्यसेत् ६३
सर्वालंकारसंयुक्तं पूर्ववत्पूजयेद्बुधः
मध्याह्नस्नानकाले तु पवित्रान्यवरोपयेत् ६४
शिष्यस्तत्तत्पवित्राणि पवित्राणि समाहरेत्
चण्डयागं ततः कृत्वा पुनर्गृह्य पवित्रकम् ६५
चण्डयामस्त्र जुहुयाच्चण्डयागं समापयेत्
अन्यसर्वपवित्राणि यजमानाय दापयेत् ६६
एवमेव क्रमेणैव पवित्रारोपणं स्मृतम्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ६७
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इति सूक्ष्मागमे पवित्रारोहणविधि पटलः षोडशः

शिवमयम्
श्रीजटाधरेश्वरगुरुभ्यो नमः
श्रीबृहन्नायक्यम्बासमेतश्रीमायापाण्डीश्वराभ्यां नमः
दीक्षातुरीयपवित्रेण गृहभक्तेन धीमता
विश्वनाथेन लिखितं सूक्ष्मागममुत्तमम्
द्वितीयं संपुटम्
शिवमयम्
श्रीगुरुभ्यो नमः
सूक्ष्मागमद्वितीयसंपुटप्रारंभः
शिवलिंगप्रतिष्ठाविधिपटलम्

कल्याणं कुरुतां कश्चित् करुणावरुणालयः
मयूरनगराधीशो मम नृत्तविनायकः १
अथातस्संप्रवक्ष्यामि लिंगस्थापनमुत्तमम्

अयने पक्षनक्षत्रे तिथिवारंशनाशयः २
मुहूर्तं तत्र संवीक्ष्य स्थापनञ्च समारभेत्
पुष्यमासादि षरामासे देवानान्तु दिवा स्मृतः ३
तत्राषाढादिषरामासं देवानान्तु निशा स्मृतम्
दिवाकाले प्रकर्तव्यं लिंगस्थापनमुत्तमम् ४
सितपक्षे द्वितीयात्तृतीया पञ्चमी तथा
षष्टी सप्तमी चैव दशमी च त्रयोदशी ५
एकादशी च तिथयः प्रतिपत्पौर्णमास्यपि
प्राजापत्यं च सौम्यं वै मादित्य पुष्यके ६
पेष्णौर्के बृहस्पत्यां वसुवैष्णवनैर्ऋतः
वायव्याञ्चाश्वर्कत्वष्ट्रे पैतृकं चोत्तरं त्रयम् ७
एषां नक्षत्रयोगेषु प्रतिष्ठाञ्च समारभेत्
शेषां कर्कटकतुल्यं मकरञ्च विवर्जयेत् ८
शेषेषु स्थापयेल्लिंगं धनुराशिञ्च वर्जयेत्
गुरुभार्गसौम्यानां वारा सौम्यस्य शोभनाः ९
एषां द्रेक्काराहोरञ्च अंशानां दशमं शुभम्
एषामेवोदयं अंशं वर्ज सोमोदयं तथा १०
भानुमुद्रारसोमाश्च त्रिषडायगताः शुभाः
सर्वग्रहा विवर्जा स्युः अष्टस्था विशेषतः ११
षट्सप्तदशमं हित्वा शुक्रश्चर्थश्वशोभनः
उत्तराषाढसंयुक्तं सोमवारस्त्वशोभनम् १२
हस्ताश्वयुजी वह्नी बुधवारेण वर्जयेत्
मृगशीर्षोत्तरा शोभा वन्यवरुणवर्जयेत् १३
वैष्णवञ्चैव मिष्यञ्च शुक्रवारेण वर्जयेत्
द्वन्धयुक्तद्वितीये च षष्टीयुक्तं बृहस्पतिम् १४
चन्द्री एकावरीयुक्तं प्राणहीनञ्च कारयेत्
सप्तमी पौष्णसंयुक्ता वह्निनादहते प्रजाः १५
अर्कषरडं च नक्षत्रं वर्जान्धीपनकर्मणि
पांसुलोहितवर्षेषु मेघानां ध्वनितेषु च १६

उत्कापाते दिशादाहे ग्रहण चन्द्रसूर्ययोः
षडशीतिमुखे चैव स्थापनञ्च समाचरेत् १७
प्रतिष्ठादिवसात्पूर्वे नवाहे सप्तहेऽपि वा
अंकुरारार्पयेद्धीमान् शास्त्रदृष्टेन वात्मना १८
पालिका घटिका चैव शराभञ्च त्रिधा भवेत्
प्रागग्रं दशसूत्राणि उत्तराग्रं तथैव च १९
मध्यचोचपदं त्यक्त्वा लेपयेदभितोष्टकम्
चतुर्दिक्षु चतुर्द्वारं पदं मेकं परित्यजेत् २०
द्वारस्थापनपार्श्वे तु पदमेकं परित्यजेत्
मध्यमे तु पदे कुर्यात्स्थण्डिलं पद्मसंनिभम् २१
आग्नेर्यादिषु कोणेषु पञ्चपञ्चपदेष्वथ
स्थण्डिलं कारयेत्तत्र द्वारस्थं पदमध्यमे २२
तण्डुलै शोभितं कृत्वा तिलदर्भै परिस्तरेत्
गन्धादिना समभ्यर्च्य तत्स्थापनमारभेत् २३
कर्णिकायां न्यसेत्कुंभं वारिण्यामृतपूरितम्
सकूर्चं सापिधानञ्च सवस्त्रं हेमसंयुतम् २४
पूजयित्वा यथान्यायं वारुणीमन्त्रमुच्चरन्
पायसान्नं ददेद्धीमान् तांबूलन्तु निवेदयेत् २५
आग्नेयादिपदे न्यस्त्वा द्वादशं पालिकादिके
आदित्यसत्यकभ्रंशे याम्ये तु भृंगराजके २६
सुग्रीवे वरुणस्सोषे मुख्ये सोमपदेषु च
अदितौ जयतेकस्थाप्य पालिका च विशेषतः २७
शेषस्थाने शरावाणि न्यसेद्वेदिशिकोत्तमः
ब्रह्मविष्णीन्द्रदैवद्यान् पात्रान्मृण्मयपूरितान् २८
बीजनिर्वापयेत्पश्चात् चन्द्रमूलसमुच्चरेत्
तिलसर्षपमुद्गानि माषशिम्बाढकानि च २९
कुलुत्थसप्तबीजानि वापयेद्धृदयेन तु
पूजयित्वा विधानेन कुंभतोयेन सेचयेत् ३०
विधाय सर्ववस्त्राणि स्वनुगूले निधापयेत्

यागार्थं मराटपं कुर्यात् प्रासादस्याग्रतोऽन्तिके ३१
अस्त्रेण समतलं कृत्वा भूमिशल्यं विवर्जयेत्
द्वात्रिंशद्धस्तविस्तारं मराटपं चोत्तमं स्मृतम् ३२
अष्टाष्टस्तंभसंयुक्तं द्वादशं तालमुच्छ्र्यम्
मराटपस्य तु तन्मध्ये चतुर्गात्राणि संत्यजेत् ३३
विंशद्धस्तप्रविस्तारं मराटपं मध्यमं भवेत्
षट्त्रिंशद्गात्रसंयुक्तं दशतालसमुच्छ्र्यम् ३४
चत्वारि मध्यस्थंभानि त्यजेद्वेदिकोत्तमः
हस्तद्वादशभिर्युक्तं मराटपं चालयं भवेत् ३५
अधमत्रयलिंगस्य मराटपं चाधमं भवेत्
मराटपस्य त्रिभागैकं मध्यमे वेदिको भवेत् ३६
रत्निमात्रसमुत्सेधं दर्पणोदरसंनिभम्
वेद्याधश्चोर्ध्ववेदीन्तु कल्पयेत्तु समन्ततः ३७
विस्तारन्तु दशांगुल्यं उत्सेधं स्यात्तदर्धकम्
द्व्यंगुलं द्व्यंगुलहीनं मध्यमस्याधमस्ततु ३८
कुराडवेदिकयोर्मध्ये त्यक्त्वा हस्तद्वयं पुनः
चतुरश्रं धनुर्वृत्तं पद्मं पूर्वादिदिक्षु च ३९
योनिकोणपञ्चाश्रमष्टाश्रं स्याद्विदिक्षु च
उत्तमत्रयलिंगस्य द्वात्रिंशत्कुराडमारभेत् ४०
मध्यमत्रयलिंगस्य चतुर्विं शत्कुराडमुच्यते
अधमत्रयलिंगस्य कुराडमष्टौ प्रकल्पयेत् ४१
ऐन्द्र ईशानयोर्मध्ये वृत्तकुराडं प्रधानकम्
हस्तमात्रप्रविस्तारं एवं मात्रांगुलेन तु ४२
मेखलात्रयसंयुक्तं एकैकन्तु त्रयांगुलम्
नाभियोनिसमायुक्तं निम्नोन्नतविवर्जितम् ४३
अश्वत्थपत्रवद्योनि नाभिः पद्माकृतिर्भवेत्
त्रयंगुलं योनिविस्तारं द्विगुणं दीर्घमुच्यते ४४
चतुरंगुलविस्तारं पद्मकुराडस्य मध्यमे
कुर्याद्वै विष्टरं कुराडे परितोऽष्टांगुलेन तु ४५

दर्पणोदरशंखाशं विस्तारपरिशोभितम्
चतुर्द्वारसमायुक्तं कुण्डतोरणसंयुतम् ४६
पञ्चहस्तसमुत्सेधं विस्तारं स्यात्तदर्धकम्
शूलहस्तप्रमाणं स्यात् नागं तस्य षडंगुलम् ४७
अधमाधमएतत् हि वक्ष्यते परमं क्रमात्
पञ्चहस्तं समारभ्य ध्यात्वास्यां नवहस्तकम् ४८
तावनोधिकं कुर्यात् तत्तदर्धं तु विस्तृतम्
तस्मात् द्वयंगुलमादिक्यं नाहं प्रत्येकमुच्यते ४९
नवधा तोरणं प्रोक्तं नवलिंगस्य चक्रमात्
अष्टदिक्षु ध्वजान्यष्टौ लंबयेत्तु प्रदक्षिणम् ५०
नीलवर्णन्तु पूर्वायां आग्नेयां रक्तवर्णकम्
कृष्णवर्णन्तु याम्यायां धूम्रवर्णन्तु नैर्ऋते ५१
शंखकुन्दनिभाकारं वारुण्यां दिशि विन्यसेत्
वायव्यांश्च बलं ज्ञेयं शान्तिकुंभञ्च उत्तरे ५२
ऐशान्यां पीतवर्णन्तु तेषां लक्षणमुच्यते
पीठशक्त्यंगुलविस्तारं त्रिदशंगुलमायुतम् ५३
विस्तारेण समं पुंश्च तदर्धं शिखरं भवेत्
ध्वजमध्ये लिखेद्धीमान् दिग्गताञ्च विशेषतः ५४
ऐरावतं पुण्डरीकञ्च पुष्पदन्तन्तु कुमुदम्
अंजनं वामनञ्चैव सुप्रतीकन्तु सर्त्वकम् ५५
दर्भमालाभिरावृत्त्य समन्तान्मण्टपं ततः
पञ्चदर्भैस्तसंयुक्तं हस्तमात्रं प्रलंबयेत् ५६
पूर्वे पूर्वे तु संयोज्य रज्जुकुर्यान्मनोरमम्
मंगळाष्टकरूपाणि उपवेद्युपरि न्यसेत् ५७
द्वात्रिंशांगुलमायामं विस्तारं स्यात्तदर्धकम्
अधस्तात्पद्मपीठं स्यात् चतुरंगुलमानतः ५८
तन्मध्ये लिखेद्धीमान् दर्पणं पूर्णकुंभकम्
वृषभं भेरिमत्स्यञ्च श्रीवत्सं शंखदीपकम् ५९
स्रग्वस्त्रपट्टदेवांगै मुक्तादामैश्च भूषयेत्

मराटपस्योत्तरे पार्श्वे लक्षणोद्धारणाय च ६०
मराटपं कारयेद्धीमान् पूर्वोक्तार्थविधिक्रमात्
तन्मध्ये वेदिकां कुर्याल्लिंगमायामप्रमाणतः ६१
तालमात्र मुत्सेधं दर्पणोदरसन्निभम्
तस्यास्तु पश्चिमे भागे स्नानश्वभ्रं प्रकल्पयेत् ६२
लिंगानुरूपं तद्वेदी तस्य रूपसमंनिभम्
उत्तरे जलमार्गं स्यात् कपाटेन समायुतम् ६३
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
शिल्पिनं पूजयेत्तत्र वस्त्रसंगन्धधूपकैः ६४
संयुक्तश्छिल्पिभिस्सार्धं गच्छेत्कर्मकृतिं बुधः
लिंगं प्रक्षाळयेद्धीमान् अष्टमृत्सलिलेन तु ६५
पञ्चगव्येन तोयैश्च स्नापयेद्गन्धतोयकैः
रक्तवस्त्रेण संवेष्ट्य दर्भैष्पुष्पै विचक्षणः ६६
पिण्डिकां स्थापयेत्तत्र उमान्यासमनुस्मरन्
धरां सुपूज्य गन्धाद्यैरलंकृत्य विशेषतः ६७
तस्मिनारोपयेल्लिंगं सर्वतोद्य समन्वितम्
लक्षणोद्धारणार्थाय नयेदुत्तरमण्टपे ६८
स्थण्डिलं कारयेद्विद्वान् स्थालिभिस्तण्डुलैर्स्सह
तिलदर्भैः परिस्तीर्य लिंगं तथैव शाययेत् ६९
प्राक्शिरस्थं शाययित्वा परितोष्टौ घटं न्यसेत्
सकूर्चान्सापिधानञ्च सवस्त्रान्वारिपूरितान् ७०
लोकपालादिदैवत्यान् पूजयेत्स्वस्वनामतः
लिंगमूले न्यसेत्पीठं पीतवस्त्रेणवेष्टितम् ७१
वेदिकायास्तु पूर्वायां स्थण्डिले होमाचरेत्
आवो राजेन मन्त्रेण इदं विष्णुति मन्त्रतः ७२
ब्रह्मजज्ञानमन्त्रेण घृतमष्टशतं हुनेत्
पृथगष्टशतं हुत्वा स्वष्टान्तन्तु समाचरेत् ७३
अथवा सैकरात्रौ तु लिंगकौतुकमाचरेत्
पूजाभागे हृदा दत्वा कौतुकं शिलिनं ददेत् ७४

प्रभाते सुमुहूर्ते तु लक्षणोद्धारणं नयेत्
पायसं घृतसंयुक्तं शिरस्थाने बलिं क्षिपेत् ७५
मुद्गान्नं घृतसंयुक्तं दघ्ना गुळसमन्वितम्
लिंगमानप्रमाणेन रेखाविस्तारमुच्यते ७६
पूजाभागोश्च्रयं सर्वं काम्यषरणवतिक्रमात्
एकभागन्तु द विद्यात् आत्मानं सूत्रविस्तृतम् ७७
तस्मादन्यप्रकारेण वक्ष्यते विधिनाधुना
उत्तमोत्तमलिंगस्य सूत्रं पञ्चविधं भवेत् ७८
शेषाणाञ्चैव लिंगानां यवार्धं प्रतिहासयेत्
सूत्रविस्तारमेवं स्यात् आयतं मानमेव तु ७९
कान्यावर्तिसूत्रेण घटिका पूजितेन तु
विष्कंभमध्ये कृत्वा तु तत्र सूचिं विनिक्षिपेत् ८०
भ्रामयेच्चिरं सूत्रं अस्तकान्तन्तु पक्षणः
न काष्ठेन न लोष्ठेन नज्गारेण नवे चन ८१
ब्रह्मभागञ्चतुर्दिक्षु मध्यं ज्ञात्वा विशेषतः
अष्टाग्रं मध्यमं कृत्वा +++ +++ +++ ८२
ब्रह्मभागं समारभ्य यावल्लिंगस्य मस्तकम्
ततश्च स्फोटयेन्मध्ये रेखाया मध्यमाद्धृदम् ८३
रेखारेखान्तरं लक्ष्य ततः सूत्रं समालिखेत्
उभयोः पार्श्वयोश्चैव कारयेत्तु प्रभंजन ८४
सूत्रजाल्पालयेद्विद्वान् अष्टांगयवतारकम्
तयोरन्तरमानेन चतुर्दिक्षु च लेचयेत् ८५
अष्टारं हि समारभ्य रन्ध्रभागन्तु लक्षयेत्
मुखभागस्य तन्मध्ये नाळं कुर्यात्सलक्षणम् ८६
यवत्रयान्तरं नाळं सूत्रस्यादुभयोरपि
दृढसूत्राविधिज्ञेतौ ++ मायाञ्च बहिस्थितौ ८७
विस्तार यवमात्रं स्यात् सोतं वै तत्प्रमाणतः
पूजाभागं त्रिधाकृत्वा तद्भागे लाञ्चनं नयेत् ८८
पूजाभागं त्रिधा कृत्वा द्विभागे लक्षणं नयेत्

द्विभागं दशधा कृत्वा तद्भागे लाञ्छनं नयेत् ८९
मुकुळं मूलमारभ्य यावद्बिन्दुवत्कृतम्
तयोस्संग ++ कुर्यात् उभयोः पार्श्वयोरपि ९०
बिन्दोर्ध्वे तद्गतं सूत्रं यावत्पृष्ठान्तगोचनम्
दृढसूत्राविमौ ज्ञेयौ मणिरेकावधिस्मृतौ ९१
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु
बीजाभागं समन्तन्तु +++ +++ ९२
मुकुळं चैव भागं स्यात् नाळं सप्तांगमेव तु
मणिरेखाद्वयोकान्ये पूर्वोक्तविधिना सह ९३
द्वितीयं लक्षणं प्रोक्तं तृतीयं लक्षणं शृणु
पूजाभागं त्रिधा कृत्वा एकैकन्तु त्रिधा भवेत् ९४
ऊर्ध्वभागं त्रयं कृत्वा भागमेकमथाग्रजेत्
शेषन्तु पूर्ववत्कार्यं सर्वशास्त्रविशारदैः ९५
पद्मभं मुकुळाकारं पट्टाकारं त्रिकोणकम्
करं नेत्रपमं कार्यं करपुटाकृतिन्तु वा ९६
चक्राकारं त्रिशूलाभं लिंगाकारमथापि वा
दृढसूत्र समालिख्य धातुसूत्रं प्रमार्जयेत् ९७
नाळं वै रुद्रदैवद्यं रेखास्वै तु वैष्णवम्
दक्षिणे ब्रह्मरेखा स्यात् त्रिसूत्रस्याधिदैवताः ९८
हेमसूच्या लिखेद्विद्वान् तन्मन्त्रमुदाहरन्
आवोराजेति मन्त्रेण नाळनेत्रद्वयं लिखेत् ९९
इदं विष्णुर्विमन्त्रेण विष्णुरेखां समालिखेत्
ब्रह्मजिज्ञानमन्त्रेण ब्रह्मलेखां समालिखेत् १००
न कृशा न च विस्तीर्णा न च खण्डितरेखया
निम्नानि मनसा रज्जु सहसा इवसंस्थितः १०१
मधुना तर्पयेद्रेखां मधु वातेति मन्त्रतः
घृतं मिक्षेति मन्त्रेण तर्पयेद्वै घृतेन तु १०२
स्वर्णनखां शलाकञ्च हेमसूच्यन्तधानिकम्
तत्सर्वं शिल्पिने दत्वा तन्तुस्तं समारभेत् १०३

स्नानश्वभ्रे न्यसेत्पीठं यथाविभवशक्तितम्
हेमं वा रजतं ताम्रं कौशेयं दारुजन्तु वा १०४
तस्मिल्लिंगसमारोप्य आचार्य मूर्तिपैस्सह
नृत्तगेयसमायुक्तं सर्वातोद्य समन्वितम् १०५
अर्घ्यं दत्वा तु शिरसि स्नाप्य गन्धोदकेन तु
सकळीकृत्य तत्स्नाप्य पञ्चगव्यकुशोदकैः १०६
पञ्चब्रह्मं समुच्चार्य स्नाव लिंगं कषायकैः
भस्मना चाष्टमृद्भिश्च उद्वर्त्य शकृदा पुनः १०७
एतानिदिते मन्त्रेण शुद्धतोयेन सेचयेत्
यवगोधुमवर्णाञ्च हरिद्रं तिलचूर्णकै १०८
पत्रतोयेन संस्नाप्य पवमानमुदीरयन्
पाद्यमाचमनं चार्घ्यं वक्त्रमन्त्रेण दापयेत् १०९
चन्दनागरुगन्धैश्च विलिख्य शिवमातरान्
पुष्पं दत्वा हृदा मन्त्री संपूज्य च प्रभंजन ११०
प्रच्छाद्य वस्त्रयुग्मेन हृदयेन तु मन्त्रतः
पिण्डिकास्नापयेद्देवे आवेष्ट्य हतवस्त्रतः १११
अरोप्य मूर्तिपैस्सार्धं रथे लिंगानुदेशिकः
पिण्डिकाञ्च समारोप्य प्रवेश्याथ जलाशयम् ११२
जलमध्ये प्रपां कृत्वा विधानध्वजभूषितम्
दर्भमालासमायुक्तं पुष्पमालाप्रलंबितम् ११३
चतुर्गात्रस्य मध्ये तु प्राक्शिरस्या तु शाययेत्
नृत्तगेयञ्च वाद्यञ्च सदाकालं समाचरेत् ११४
एकरात्रं द्विरात्रं वा त्रिरात्रं जलशोषितम्
आरोपयेन्मन्दरे पश्चात् स्नानवेद्युपरि विन्यसेत् ११५
कृत्वा तु पूर्ववत् शुद्धं पिण्डिकासहितं बुधः
शुद्धवस्त्रञ्च संवेष्ट्य लिंगञ्च मस्तकान्तिकम् ११६
पीठञ्च वेष्टयित्वा तु स्यन्दने स्थाप्य देशिकः
आलयन्तु परिभ्राम्य नयेन्मण्टपमध्यतः ११७
पर्यग्निकरणं कृत्वा पुण्याहं तत्र कारयेत्

स्थरिडलं कारयेद्वेद्यां अष्टद्रोणैश्च शालिभिः ११८
तदर्धस्थरडुलैः भूष्य तदर्धैश्च तिलैरपि
मध्यमे पद्ममालिख्य दळाष्टकसमन्वितम् ११९
नवश्चक्तिस्तु तत्रैव पूज्य गन्धादिना बुधः
दर्भै पुष्पै परिस्तीर्य तिललाजसमन्वितम् १२०
पूर्वाग्रमुत्तराग्रञ्च स्थरिडलोपरि विन्यसेत्
चर्मजं रोमजञ्चैव मुरडजं +++ क्रमात् १२१
उपर्युपरि विन्यस्य यथा च परिपूरिणम्
उमागायत्रीमन्त्रेण शयनं पूजयेद्बुधः १२२
लिंगन्तु प्राङ्मुखं कृत्वा ब्रह्मांगानि कलान्यसेत्
त्रितत्वं विन्यसेत्पश्चात् त्रितत्वं हृदयेऽपि च १२३
मूर्ध्नि वक्त्राणि नेत्राणि विद्यांगनि च विन्यसेत्
प्राक्शिरस्तूर्ध्ववक्त्रं शयने शाययेत् शिवम् १२४
सद्यमन्त्रेण चावाह्य स्थापयेद्वाममन्त्रतः
स्वागतार्घ्यं हृदा दत्वा पादाभ्यां बहुरूपिणम् १२५
अघोरेणैव सान्निध्यं सुमुखं पुरुषेण तु
पाद्यं दत्वा हृदा मन्त्री शिरसा च समाचरेत् १२६
पुरुषेण ददेदर्घ्यं पुष्पमीशानमन्त्रतः
शी++धूपकन्दद्यात् कवचेन विचक्षणः १२७
हविर्निवेदयेत्पश्चात् हृदयेन तु मन्त्रतः
तांबूलं दापयेद्धीमान् पुरुषेण समन्वितम् १२८
कौतुकं बन्धयेल्लिंगे शिरस्थानं हृदा बुधः
हैमैर्वा रजतैर्वापि सूत्रैः कार्पासकैरपि १२९
मुकुळी पद्ममुद्राञ्च दर्शयेत्पञ्चवक्त्रके
पिरिडकामधिक्षायेत्तु मूले शयनस्योपरि १३०
पौर्विका पुनः पुरायञ्च सहजञ्च क्रियास्त्रकम्
उपलिंगवशात्पीठं पूर्वमेव सुकल्पयेत् १३१
तत्पौकामिति ज्ञेयं सहजश्च क्रिया स्मृतः
पूर्वकाले तु संस्थाप्य लिंगं पिरिडकया सह १३२

पुण्यलिंगेन सहजे मण्टपे बाधिवासनम्
नवशक्तिसमोपेतं पूजयित्वा यथाविधि १३३
पीठश्चाधिवासश्शुद्धस्नानं कृत्वा समन्वितम्
गौरीबीजं समुच्चार्य गन्धपुष्पादिभिर्यजेत् १३४
रक्तवस्त्रेण संवेष्ट्य लिंगमुद्रां प्रदर्शयेत्
पादाधारशिला चैव नन्द्या वर्तशिलापि वा १३५
पिण्डिकां विन्यसेत्पश्चात्पूज्य ब्रह्महृदा सुसः
शिरः प्रदेशलिंगस्य शिवकुंभञ्च विन्यसेत् १३६
ससूत्रं सापिधानञ्च सकूर्चं वस्त्रवेष्टितम्
पूरितं स्याच्चतुर्विं शत्प्रस्थतोयं सुगन्धभिः १३७
शिवकुंभमिदं प्रोक्तं सकूर्चं साधिदैवतम्
कुंभमध्ये न्यसेद्बीजं प्रासादाख्यं जगद्धितम् १३८
कुटिलान्तञ्च यान्तञ्च मान्तमाकाशिसंयुतम्
बिन्दुनादसमायुक्तं शिवमन्त्रमिति स्मृतम् १३९
रेभञ्चैवानलो ज्ञेयो यकारोग्निरुच्यते
व्योमं एकारमेवं स्यात्पञ्चभूतं +++ परम् १४०
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च
पञ्चभूताधिदैवत्यं भुक्तिमुक्तिफलप्रदम् १४१
ज्ञात्वा तु सर्वगं बीजं
कालोग्न्यादि शिवान्तस्यात् मन्त्रे सर्वं व्यवस्थितम् १४२
ज्ञात्वा तु सर्वगं बीजं छेदयेत्पशुपाशकम्
ज्ञात्वा सदाशिवं रूपं पञ्चमूर्तिसमन्वितम् १४३
पञ्चवक्त्रसमायुक्तं दशहस्तोपशोभितम्
दिव्यांबरधरां देवं दिव्याभरणभूषितम् १४४
शुधस्फटिकसंकाशं कुन्देन्दुधवळप्रभम्
कुण्डलै कर्णकैहारैः यज्ञसूत्रविभूषितम् १४५
शूलं परशु वज्रञ्च खड्गञ्चाभयदक्षिणे
पाशांगुशञ्च वह्निञ्च खेटकं वरदं परे १४६
कुंभे ध्यात्वा विशेषेण पद्ममुद्रां प्रदर्शयेत्

आवाहनादिकं सर्वं पूर्वोक्तविधिना कुरु १४७
शिवमन्त्रं समुच्चार्य गन्धपुष्पादिनार्चयेत्
वर्धनीं विन्यसेद्वामे द्रोणतोयप्रपूरितम् १४८
सकूर्चं सापिधानञ्च वस्त्रं हेमसंयुताम्
खान्तं यान्तसंयुक्तं मौकारस्वरसंयुतम् १४९
बिन्दुनादसमायुक्तं वर्धनीमध्यमे न्यसेत्
ध्यात्वा गणांबिकादेवी पीनोन्नतपयोधरी १५०
श्यामभां द्विभुजां शान्तां सर्वाभरणभूषिताम्
दुकूलवसनां देवीं ध्यात्वा वर्धनीमध्यमे १५१
महागायत्री मन्त्रेण गन्धपुष्पादिनार्चयेत्
दर्शयेल्लिंगमुद्राञ्च नमस्कारं मनोरमाम् १५२
अभितः कलशानष्टौ द्रोणार्धोदकपूरितम्
अष्टविद्येश्वरैर्युक्तान्सकूर्चान्सापिधानकान् १५३
सवस्त्रपल्लवैर्युक्तान् स्थापयेत्साधिदैवतान्
हेमशूलसमायुक्तान् हेमकुण्डलसंयुतान् १५४
स्वनामाद्यक्षरं बीजं बिन्दुनादसमन्वितम्
घटानां मध्यमे स्तुत्वा तत्तन्मूर्तिञ्च भावयेत् १५५
त्रिणेत्रां चतुर्भुजां देवां जटामकुटधारिणाम्
अनन्तादिशिखण्यन्तान् अष्टविद्येश्वरं न्यसेत् १५६
तत्तन्मन्त्रं समुच्चार्य गन्धपुष्पादिनार्चयेत्
उपवेदि परिन्यस्त्वा लोकपालाधिदैवतान् १५७
कलशाल्लक्षणोपेतान् हेमवस्त्रसमन्वितान्
ससूत्रान्सापिधानञ्च सकूर्चान्वारिपूरितान् १५८
तत्तन्मन्त्रं समुच्चार्य पूजयित्वा यथाविधि
अष्टमंगलरूपाणि उपवेद्युपरि न्यसेत् १५९
पूजयित्वा यथान्यायं तोरणानि च विन्यसेत्
द्वारकुंभं ततः स्थाप्य द्वारं द्वारं प्रतिद्वयम् १६०
नन्द्यादिपशुपर्यन्तं तत्तत्कुंभेषु योजयेत्
कुर्यादध्ययनं दिक्षु जपेन्मन्त्रं विदिक्षु च १६१

ऋग्वेदं दिशि पूर्वायां यजुर्वेदन्तु दक्षिणे
साममुत्तरदेशे तु पश्चिमेऽथर्वमेव च  १६२
प्रासादमीशकोणे तु अघोरं वह्निगोचरे
मृत्युंजयन्तु नैर्ऋत्यां उमाबीजन्तु वायवे  १६३
आचार्य मूर्तिपैस्सार्धं  होमं कुर्यात् विशेषतः
समिदाज्यचरून्लाजान् सक्तुसिद्धार्थमाषकान्  १६४
यवनीवारगोधूमान् स्तला एकादशी इमे
अश्वत्थोदुंबरप्लक्षो वटाः पूर्वाविदिक्षु च  १६५
समिखादिरश्रीवृक्षमधुराश्च विदिक्षु च
पालाशस्तु प्रधानस्य सर्वेषां इध्ममुच्यते  १६६
दिक्स्थिता मूर्तिपास्सर्वे सर्वसंभारसंमिताः
शिवाग्निं जनयेत्पूर्वं  आचार्य विधिना सह  १६७
सोष्णीषं चोत्तरीयञ्च दिव्यगन्धानुलेपनः
कुण्डन्तु शोधयेत्पूर्वं  क्षालनं तदनन्तरम्  १६८
तृतीयं शोषणं कृत्वा चतुर्थं  पावनं भवेत्
उल्लेखनं पुरास्त्रेण कवचेन वीक्षणं भवेत्  १६८
पूर्वाग्रेस्तिस्त्ररेखाश्च ब्रह्मरौद्राख्यवैष्णवम्
उत्तराभिमुखा ह्येते साशिवस्तनसंशयः  १६९
गन्धपुष्पाक्षतै पूज्य शिवाग्निं जनयेत् गुरुः
मधित्वा वह्निमादाय श्रोत्रांगारकजन्तु वा  १७०
शरावा ताम्रपात्रे वा निक्षिप्याग्नि परिग्रहेत्
अस्त्रमन्त्रेण संशोध्य कवचेनावकुण्ठयेत्  १७१
बीजमुख्येन मन्त्रेण अमृतीकरणं कुरु
अग्निबीजेनाभ्यर्च्य गन्धपुष्पादिभिः क्रमात्  १७२
विष्टरं कुण्डमध्ये तु हृदयेन प्रकल्पयेत्
स्थाप्या वागीश्वरीमन्त्रं ऋतुस्नातां विशेषतः  १७३
भ्रामयेत्तु त्रिधा वह्निं योनिमार्गेण विनिक्षिपेत्
स्थाप्य सद्यमन्त्रेण प्रशान्तेन त्रिधा स्मरन्  १७४
गर्भाधानमिदं प्रोक्तं ततः पुंसवनं शृणु

वामदेवेन शिखया गन्धेरभ्यर्च्य देशिकः १७५
भवेत्पुंसवनं मध्ये सीमन्तञ्च ततः शृणु
पुष्पं दद्यात् विशेषेण शिरसा बहुरूपिणा १७६
वक्त्रेण वामयुक्तेन अर्घ्यं दद्यात्सुजातकम्
ईशेन नेत्रयुक्तेन धूपदीपं प्रदापयेत् १७७
नामकर्ममिति प्रोक्तं पञ्च सङ्कार उच्यते
पाद्याचमनञ्चार्घ्यं गन्धपुष्पञ्च धूपकम् १७८
हृदयेनैव मन्त्रेण दद्यात्सर्वं विशेषतः
शिवाग्नेरग्निमादाय अग्निकुण्डेषु विनिक्षिपेत् १७९
प्रागाग्नेरुदगग्रैश्च कुण्डं दर्भै परिस्तरेत्
आज्यस्थालीं प्रणीताञ्च प्रोक्षणीं समिदः कुशान् १८०
सृक्स्रुवौ च चरुस्थालीं द्वंद्वरूपेण साधयेत्
प्रोक्षणीपात्रमादाय पूरयेदुदकेन तु १८१
त्रिरः पवित्रेणापूर्य कुशाग्रे तत्र निक्षिपेत्
पात्रान्संप्रोक्षयेत्तूष्णीं उत्तराणि सर्वशः १८२
ब्रह्माणं दक्षिणे स्थाप्य कूर्चं तत्रैव निक्षिपेत्
विष्णुं वै वामस्थाप्य ++ तत्र निक्षिपेत् १८३
पूर्वपुंश्चियाकुण्डेषु उत्तराभिमुखः स्थितः
अन्येषु प्राङ्मुखो भूत्वा होमं कुर्याद्विचक्षणः १८४
आज्यशुद्धिन्ततः कृत्वा पर्यग्निप्यवनादिभिः
स्रवसंस्कारमेवन्तु सृक्संस्कारमेव च १८५
तिसृः परिधयस्थाप्य पश्चिमे दक्षिणोत्तरे
अग्नीशानदिशि स्थाप्य त्रिवारसमिधावुभौ १८६
अदितेन्वादिमन्त्रेण परिषेचनमाचरेत्
अघोरवामभागञ्च विदिक्षु जुहुयात् बुधः १८७
पुरुषो घोरसद्यैश्च वामेन जुहुयाद्दिशि
ईशानं मध्यमे स्थाप्य वह्निबीजं दशाहुनेत् १८४
क्षुरिकेणोद्धटयेत् वाम अस्त्रेणैव तु निक्षिपेत्
शिवाग्निजनितो ह्येवं पञ्चाग्निं क्षिप्य विष्ठरम् १८५

आवाहनादि यत्कर्मं पूर्वोक्तविधिना कुरु
शिवाग्निं शिवमावाह्य पञ्चावरणसंयुतम् १८६
भवश्च पूर्वदिग्भागे आग्नेयामुग्र एव च
शर्वश्च दक्षिणे कुण्डे महादेवाश्च नैर्ऋते १८७
रुद्रश्च पश्चिमे भागे भीमो वै वायुगोचरे
पशुपतिश्चोत्तरे कुण्डे ऐशान्यामीश एव च १८८
त्रिणेत्र चतुर्भुजञ्चैव जटामकुटधारिणम्
कुण्डमध्य न्यसेदेतान् बाह्ये च वशवस्तथा १८९
तद्बाह्ये मारुतञ्चैव लोकबालाञ्च तत् बहिः
लोकपालविहीनं स्युः मध्यमे होमकर्मणि १९०
मरुतो वसवो हीनां मन्यसे होमकर्मणि
कुण्डाधिदेवतान्सर्वान् विन्यसेत्कुण्डमध्यमे १९१
पाद्यादिदीपपर्यन्तं अर्चयेत् विधिना ततः
शिवमन्त्रं समुच्चार्य शिवाग्नौ जुहुयाश्चतम् १९२
अन्येषां देवतानाञ्च तत्तन्मन्त्रं दशाहुतिः
ब्रह्मांगैश्च ततो हुत्वा प्रत्येकन्तु शताहुतिः १९३
त्रियंबकेन मन्त्रेण समिधाहुतिमाचरेत्
सहस्त्रं वा तदर्धं वा तदर्धार्धमथापि वा १९४
अष्टोत्तरशतं वापि प्रत्येकं जुहुयात्क्रमात्
आज्यं हुत्वा हृदा मन्त्री सर्वसंख्याक्रमेण तु १९५
घृतं मिमिक्षेति मन्त्रेण हुत्वा तत्संख्यया घृतम्
चरुं हुत्वा तु सद्येन देवस्य त्वा चरुं हुनेत् १९६
शिरसा लाजं हुत्वा तु एषाकमिशेति मन्त्रतः
सक्तु वामेति मन्त्रेण आवो राजेति मन्त्रतः १९७
सिद्धार्थान्शिखया हुत्वा यो रुद्रास्तदनन्तरम्
माषं हुत्वा ह्यघोरेण एषतेरुद्रमन्त्रतः १९८
कवचेन यवं हुत्वा त्रियंबकेनैव होमयेत्
नीवारं पुरुषेणैव आप्यायस्वेति मन्त्रतः १९९
अस्त्रेण जुहुयात्पत्रं अप्सुमेसोममब्रवीदिति

तिलान्हुत्वाघोरमन्त्रेण यत्तेयमिति मन्त्रतः  २००
द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेल्लिंगं समस्तकम्
तदन्ते होमयेद्धीमान् गौरीब्रह्मांगविद्यया  २०१
गौरीगायत्री मन्त्रेण गौरीमिमेति मन्त्रतः
हुत्वा हुत्वा स्पृशेत्पीठं पञ्चविंशति संख्यया  २०२
ब्रह्मजज्ञानमन्त्रेण हुत्वा ब्रह्मशिला स्पृशेत्
गर्भग्रहस्य तन्मध्ये वास्तुहोमं समाचरेत्  २०३
पुण्याहं वाचयित्वा तु दत्वादर्घ्यं  विशेषतः
एकरात्रं द्विरात्रं वा त्रिरात्रमधिवासयेत्  २०४
एवं जागरणं रात्रौ नृत्तगेयसमन्वितम्
आचार्य मूर्तिपैस्सार्धं  स्नानं कृत्वा विशेषतः  २०५
न्यासं कृत्वा यथान्यायं सोष्णीषञ्चोत्तरीयकम्
पञ्चांगभूषणैर्युक्तं वस्त्रांगुळीयभूषितम्  २०६
हेमकैर्यजसूत्रञ्च होमकैः पञ्चकैस्तथा
अधमं विंशति रिक्तं द्विगुणं मध्यमं भवेत्  २०७
उत्तमं त्रिगुणं प्रोक्तं आचार्यस्य तु दक्षिणा
पिण्डिकास्यापकस्यार्धं  अष्टांशं मूर्तिपस्य तु  २०८
द्विगुणं वास्तुहोमस्य तदर्धमध्ययनस्य तु
दैवज्ञस्य तथैव स्यात् तथैवाचास्त्रजप्तिनाम्  २०९
भक्तानां परिचाराणां यथा शक्त्या तु दक्षिणा
गत्वा तु मूर्तिपैस्सार्धं  प्रासादं शिल्पिभिस्सह  २१०
शिवांभसा तु संप्रोक्ष्य गर्भगेहं विचक्षणः
गोमयालेपनं कृत्वा पुण्याहं तत्र कारयेत्  २११
ब्रह्मसूत्रं पुरा कृत्वा पुनस्सोमवशात् बुधः
यमसूत्रं पुनः कृत्वा ततस्सोमवशात् बुधः  २१२
तत्र सूत्रं न्यसेत् भीतौ दक्षिणोत्तरपृष्ठतः
शालापिष्टमयं वाथ गेणिकामधमेव वा  २१३
भक्तिभावे विनासूत्रं प्रत्यग्रे तु महानलः
यष्टिमास्थापयेत्तत्र तन्मध्ये सूत्रमानयेत्  २१४

एवं सुनिश्चितं सूत्रं ब्रह्माख्यञ्च समाख्यकम्
एकविंशतिभागेन विभजेद्द्वारविस्तृतम् २१५
दशांशं दक्षिणे न्यस्त्वा वैलक्ष्यं चोत्तरे तथा
भजेत् षडांशं मध्यांशं दक्षिणे च तु योजयेत् २१६
द्वितीयमुत्तरे त्यक्त्वा सूत्रमाल्पयेच्छनैः
पृष्ठतो ब्रह्मसूत्रन्तु तन्मानञ्चोत्तरे न्यसेत् २१७
तत्रस्थं सूत्रमस्थाल्य तत्सूत्रं शिवसूत्रकम्
तत्प्रमाणं न्यसेत्सूत्रं यष्ट्याय तु विशेषतः २१८
तत्सूत्रं मध्यमे स्थाप्य तल्लिंगं सर्वगामिकम्
शिवसूत्रं न्यसेत्सूची भिन्नयद्वा विशेषतः २१९
सूच्या तु रजुना बद्ध्वा यथा रज्जुत्तथा बुधः
सूत्रं न्यसेत्सूचि उभयो पार्श्वयोरपि २२०
ताभ्यां रज्जुब्यबद्ध्वा तु ज्ञात्वा वै रज्जुमध्यमम्
दृढं मध्यमिति ज्ञात्वा लंबसूत्रान्तरं लंबयेत् २२१
शिवसूत्रोभयो पार्श्वे पिण्डिकासूत्रमानयेत्
यस्य पीठस्य विस्तारं परिमेयं प्रमाणतः २२२
तस्यार्थदक्षिणे चैव शिवसूत्रस्य मध्यमान्
शिवसूत्रान्तरेस्यार्धं रक्षायेत्तु विशेषतः २२३
तत्प्रमाणे न्यसेस्त्सूत्रमुभयोरपि पार्श्वयोः
पूर्वापरे तथा कुर्यात् पिण्डिकासूत्रमुत्तमम् २२४
मध्यमे ह्यवटं कुर्यात् पीठविस्तारमानतः
अधिवाश्वाग्रविस्तारं गर्भार्थार्थाद उच्यते २२५
ब्रह्मभागप्रवेशे तु ज्ञात्वा ब्रह्मशिलोच्छ्रयम्
आचार्यं शिल्पिभिस्सार्थं कारयेश्छन्त्रमादरेत् २२६
ब्रह्मभागं समस्तन्तु कृष्णाभे सन्निवेशयेत्
अष्टाश्रं पिण्डिकाबन्धमष्टबन्धसमन्वितम् २२७
नन्द्यावर्तशिला कार्या गर्भें च तलमाश्रयम्
श्वभ्रं समतलं कृत्वा खनिह्नत्वेभिवा ततः २२८
पादशैलन्यसेन्मध्ये जलेन समतां विदुः

नवेन शुक्लवस्त्रेण जलमाहृत्य देशिकः २२९
मध्यमं लंबसूत्रेण लक्षयित्वा प्रयत्नतः
अवगं पूजयित्वा तु गन्धपुष्पादिभिश्शुभैः २३०
त्वमेव परमा शक्तिः त्वमेवासनधारिके
आसनाधारभुताशादतिष्ठनैव शिवं कर्मणि २३१
उपलिंगप्रकर्तव्यं क्षीरधारो मधंशमम्
श्वभ्रेस्त्रप्रविदित्वा तु कौटिल्यमुज्वतानतः २३२
उपलिंगवशात्पीठं पूर्वमेव तु कल्पयेत्
विदित्वार्जपतां सम्यक् उपलिंगवशेन तु २३३
पूर्वलिंगं प्रतिष्ठाप्य पश्छाद्वयोज्यपिण्डिकाम्
प्रतिलिंगं सूत्रयष्टी व्यपोह्य सकलं ततः २३४
रत्नधाराणि रन्ध्राणि शोधयित्वा विशेषतः
विलिप्य चन्दनेनैव श्वभ्रं ब्रह्मशिलातलम् २३५
प्रदक्षिण ++ न्यस्त्वा स्वतिभिशेन मन्त्रतः
अथवा प्रणवेनैव न्यस्तव्य हृदयेन तु २३६
चन्द्रमैन्द्रे तु विन्यस्य वैडूर्यं वह्निगोचरे
मौक्तिकं दक्षिणे देशे प्रबालं यक्षदेशके २३७
वारुणं इन्द्रनीलं स्यात् वायवे पुष्परागकम्
सौम्ये मरकतं प्रोक्तं ईशानैव वज्रकं न्यसेत् २३८
माणिक्कं मध्यमे स्थाप्य नवरत्नमिति स्मृतम्
हरितालमनोसीलं विपुलं गौरिकाभ्रकम् २३९
सिन्धूरं गन्धकञ्चैव न्यसेत्पूर्वादितः क्रमात्
गोधूमं यवनीवारं तिलसर्षपमाषकम् २४०
व्रीहीमुद्गौ क्रमेणैव न्यसेत्पीठक्रमेण तु
कुंकुमागरुकञ्चैव रक्तचन्दनमेव च २४१
लोहं पूर्वादितः प्रोक्तमाग्नेयाधौषधीन्यसेत्
उशीरं विष्णुक्रान्तिञ्च लक्ष्मीं पूर्वादिकं न्यसेत् २४२
रत्नानामप्यलाभे तु वज्रं सर्वत्र विन्यसेत्
धातुनामप्यलाभे तु हरितालन्तु विन्यसेत् २४३

बीजानामप्यलाभे तु यवं सर्वत्र विन्यसेत्
गन्धानमप्यलाभे तु चन्दनं ग्राह्य विन्यसेत् २४४
ओषधीनामलाभे तु सहदेवी च विन्यसेत्
पृथिवी मेरुपद्मञ्च वृषभं हेमकामयम् २४५
यथावा ++ क्रमान्यस्त्वा मध्यब्रह्मशिलावटे
ब्रह्मबीजेन वृषभं क्रमान्यस्त्वा पूर्वादिदिमुखः २४६
शिलायां दापयित्वा तु पायसा च समन्वितम्
द्रव्याणां निश्चयार्थन्तु रत्नसारे विनिक्षिपेत् २४७
मुकुळी पद्ममुद्राञ्च लिंगमुद्राञ्च दर्शयेत्
पूजयित्वा तु रत्नानि गन्धपुष्पादिभिः हृदा २४८
आधारशक्तिं संकल्प्य ततोनन्तासनं न्यसेत्
तदेव विधिना न्यस्त्वा नवशक्तिसमन्वितम् २४९
ततो योगासनं न्यस्त्वा आग्नेयादियथाक्रमान्यसेत्
गुणत्रयेण संसाद्यं तत्तन्मन्त्रमनुस्मरन् २५०
कालाग्निरुद्रपर्यन्तं आसनोपरिकल्पयेत्
गन्धपुष्पादिना पूज्य वस्त्रेण वैष्ट्य सर्वतः २५१
ततो देवादिकं ध्यात्वा पूजयित्वा यथा विधि
अग्निं प्रज्वालयेत्पश्चात् ब्रह्मांगैर्जुहुयात्क्रमात् २५२
जयादिरभ्यधानञ्च राष्ट्रभृच्छक्रमात् हुनेत्
हव्यवाहेमनुस्मृत्य स्वष्टमश्चेति होमयेत् २५३
घृतं पूर्णाहुतिन्दद्यात् देवस्येति मन्त्रतः
हुत्वा पूर्णाहुतिं पश्चात् प्रणीताब्रह्मविसर्जनम् २५४
एवं कृत्वाग्निकार्योक्तं आचार्य मूर्तिपैस्सह
शंखभेरिनादैश्च स्वस्तिमंगळवाचकैः २५५
नृत्तगेयसमायुक्तं लिंगमुत्थाप्य देशिकः
सद्योजातेन मन्त्रेण संस्थापनमारभेत् २५६
तथेव वामदिक् बन्धं अघोरेणावकुण्ठयेत्
पूजयेत्सद्यमन्त्रेण पञ्चमे भार्घ्यमाददेत् २५७
चत्रचामरपिञ्चैश्च ध्वजधूमसमाकुलम्

ऋग्यजुस्सामशब्दैश्च स्तोत्रमंगळवाचकैः  २५८
प्रदक्षिणं ततः कृत्वा प्रासादेदु विशेषतः
आचार्या अग्रतो गश्चेत् अर्घ्यहस्तविशेषतः  २५९
यजमानोनुगश्चेतु पुत्रमित्रकलत्रकैः
अनुगच्छन्दिमेमर्त्याः लिंगं वै धार्थकामिकम्  २६०
पदे पदेश्वमेधस्या फलं प्राप्नोति मानवः
द्वारदेशं समानीय लिंगं संपूजयेत् गुरुः  २६१
काल निरीक्ष्य दैवज्ञाः गुणव सन्निवेदयेत्
शिवं प्रणम्य विज्ञाप्य पूजयित्वा विशेषतः  २६२
आचार्यो मूर्तिपैस्सार्धं लिंगस्थापनमारभेत्
पश्चात् द्यैनं ततः स्थाप्य लिंगं द्वारस्तु संमुखम्  २६३
++लितस्फटिकवक्त्रे भ्रमन्तचब्दिते यदि
चलिततू महादुःखं स्फुटितं द्रव्यनाशनम्  २६४
सवत्रं शिल्पिनं +++ बद्ध्यते रोगस्य सन्तवम्
दोषानेतान्समुद्दिष्य निष्कृतिञ्च समाचरेत्  २६५
बहुरूपेण मन्त्रेण सर्वदोषप्रशान्तये
शतमष्टोत्तरं हुत्वा शिवाग्नौ शिवमन्त्रतः  २६६
नन्द्यावर्तशिलायोज्य वालुकाभिस्सुपूरयेत्
गत्वन्तु पिण्डिका तत्र पूजयित्व विशेषतः  २६७
विलिप्य वस्त्रबन्धेन शतधूपेन धूपयेत्
उत्थाप्य गौरीबीजेन स्यनन्दतोरप्य देशिकः  २६८
प्रासादद्वारदेशे तु पूजाकर्म समारभेत्
नवलिंगे समायोज्य गौरीमन्त्रे मन्त्रवित्  २६९
सन्धाय मूर्तिपैस्सार्धं लिंगस्योपरि यत्नतः
शनेनकं वैशर्मकं पीठं वालुकाभिस्सुपूजयेत्  २७०
सुमं सुदृढं ज्ञात्वा बन्धयेदष्टबन्धनैः
शुद्धिं कृत्वा यथान्यायं ततः पुण्याहमाचरेत्  २७१
समभ्यर्च्य ततो लिंगं गन्धपुष्पादिभिश्शुभैः
निधाय दक्षिणं हस्तं गुरुलिंगस्य मूर्धनि  २७२

व्योमव्यापि समुच्चार्य एकचित्त प्रयत्नतः
अष्टत्रिंशत्कलान्यासं मकुटादिक्रमां न्यसेत्  २७३
शिवांगानि न्यसेद्विद्वान् नेत्राणि क्षुरिकां ततः
+++ न्ध्य वंहिनीं मुद्रां पुष्पस्त सुखासनम्  २७४
आवाह्यदेवदेवेशं सद्योजातेन मन्त्रतः
शुद्धस्फटिकसंकाशं तरुणादित्यसन्निभम्  २७५
तस्याक्षं दशभुजं शान्तं पद्महस्तं स्मिताननम्
दिव्यांबरधरं देवं दिव्यगन्धानुलेपनम्  २७६
पिण्डिकाया सुलावण्यं पञ्चवर्धानसंयुतम्
जटामकु संयुक्तं चन्द्रार्धं कृतशेखरम्  २७७
विद्यां विद्येश्वैरष्टगणेशैर्लोकेश्वै युतम्
ध्यात्वा सदाशिवं रूपं सर्वज्ञं कारणेश्वरम्  २७८
जटामकुटसंयुक्तं चन्द्रार्धकृतशेखरम्
अष्टविद्येश्वरैश्चैव गणलोकेश्वरैर्युतम्  २७९
ध्यात्वा सदाशिवं रूपं सर्वज्ञं कारणेश्वरम्
उमाषडंबुग्रीवाञ्च पीनोन्नतपयोधराम्  २८०
मकुटं कुण्डलाहारं नूपुराद्यैरलंकृतम्
ध्यात्वा तु पिण्डिकामध्ये गौरीमन्त्रं समुच्चरन्  २८१
स्थापनं सन्निरोधञ्च उमामन्त्रेण कल्पयेत्
दर्शलेल्लिंगमुद्रा तु मुकुळीपद्ममुद्रिकाम्  २८२
शिवकुंभं समादाय शिरसा धार्यदेशिकः
वर्धनी शिरसा धार्य विद्येशकलशास्तथा  २८३
शिरसा मूर्तिपैस्सार्धं शनैर्गत्वा प्रदक्षिणम्
द्वारपूजां ततः कृत्वा स्थाप्य लिंगस्य सन्निधौ  २८४
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समारभेत्
शिवकुंभात् शिवं बीजं लिंगस्य हृदयेन तु  २८५
लिंगस्य शिरसा न्यस्त्वा मेष्ट्रमूलन्तु विन्यसेत्
ब्रह्मांगञ्च यथास्थाने न्यसेद्वै देशिकोत्तमः  २८६
पिण्डिकायां न्यसेत्बीजं मुद्राख्यं वर्धनी घटात्

विद्येशबीजं विन्यस्य तत्स्थाने विचक्षणः २८७
पूजयित्वा यथान्यायं पञ्चमावरणैस्सह
स्नपनं कारयेत्तत्र पूर्वोक्तविधिना सह २८८
पाद्यमाचमनञ्चार्घ्यं हृन्मन्त्रेण प्रदापयेत्
ततो वस्त्रं हृदामन्त्री यज्ञसूत्रं हृदा तथा २८९
लेपनञ्चात्मनं पट्टं कुण्डलं पादुकं तथा
हारञ्च खगसूत्रञ्च कटकं शांगुलीयकम् २९०
केयूरं मकुटञ्चत्रं हृदयेन प्रदापयेत्
गीतानि धूपनैवेद्यं हृदयेन तु दापयेत् २९१
द्वारपालदिञ्च वृक्षाञ्च दीञ्चयक्षराक्षसपिशाचकान्
दिक्पालान्बलिदानेन तोषयेत् मातृदेवतान् २९२
देवस्याचमनं दद्यात् निर्माल्यन्तु विसर्जयेत्
तच्छेषं चण्डमूर्तिस्तु दद्या चमनीयकम् २९३
चण्डस्याचमनं दद्यात् निर्माल्यन्तु विसर्जयेत्
मुखवासञ्च कर्पूरं शिवस्य परिकल्पयेत् २९४
हरिद्रासर्षपां लोध्रमंजनन्तु मनश्शिला
घृतं गोरचनञ्चैव सप्तांगं लेपयेत्क्रमात् २९५
प्रतिष्ठोत्सवन्तु कर्तव्यं यावत् शब्दादिनान्तकम्
पूर्वोक्तविधिना कुर्यात् चण्डयागमतः परम् २९६
यस्मान् राष्ट्रे कृतं स्येवं राजा विजयमाप्नुयात्
पुत्रपौत्राभिवर्धन्ते तद्राष्ट्रमभिवर्धते २९७
सुभिक्षं क्षेममारोग्यं वर्धते च सदा भुवि
एवं यः कुरुते मर्त्यः त्रिसप्तकुलसंयुतम् २९८
शिवलोकमवाप्नोति +++ पुनर्वर्तते
शिवसायुज्यमाप्नोति क्रियते कालमक्षयम् २९९
लिंगस्थापनं प्रोक्तं पिण्डिकास्थापनं शृणु ३००

इति सूक्ष्मागमे द्वितीयसंपुटे शिवलिंगस्थापनविधिपटलो
चत्वारिंशति

## पिण्डिकास्थापनविधिपटलम्

अतः परं प्रवक्ष्यामि पिण्डिकास्थापनं परम्
आरोग्यबलदं पुत्रपौत्रादिरुलवर्धनम् १
पिण्डिकायामुमादेवी लिंगस्य परमेश्वरः
तयोर्योगाश्रया धातु सा प्रतिष्ठा प्रभंजन २
मनोन्मनी प्राणानि पीठर्ध्यायेत्समुच्यते
त्रिविधं स्थापनं प्रोक्तं पिण्डिकायां विशेषतः ३
पौर्विञ्च पौनः पुण्यं सहितञ्च त्रिधा स्मृतम्
उपलिंगवशात्पीठं ऊर्ध्वमेव प्रकल्पयेत् ४
तत्पौर्वी क्षिति ज्ञेयं पञ्चाल्लिंगस्य कल्पितम्
स्थापितस्यैव लिंगस्य पश्चात्पीठ सुयोजितः ५
पौनः पुण्यमिति ज्ञेयं सर्वकामार्थसाधनम्
पीठादिवासनं वक्ष्ये पुनः पुण्यस्य चालयम् ६
अधिवासेद्गर्भगेहे तु पौर्वकस्य विचक्षणः
तत्राधिवासेत्सहितं लिंगेन सह देशिकम् ७
पौर्णं पुण्यमधिवसेत्प्रासादाग्रे तु मण्टपे
यावत्पीठस्य विस्तारं तावत्स्यात् विस्तृतं ++ ८
रत्निमात्रं तदर्धं वा वेदिकाश्रयमुच्यते
कुण्डानि परितः कुर्यात् दिक्विदिक्षु समं ततः ९
उत्तमत्रयलिंगानां होमं षोडशमारभेत्
मध्यमत्रयलिंगानां होमाष्टौ प्रकल्पयेत् १०
पीठानामधमानान्तु चतुर्दिक्षु चतुष्वपि
चतुरश्रं धनुर्वृत्तं पद्मकुण्डं चतुर्दिशि ११
आग्नेयादीशकोणान्तं योन्यकाराणि कल्पयेत्
कुण्डं हस्तप्रविस्तारं मेखलात्रयसमन्वितम् १२
चतुत्रिद्व्यंगुलोत्सेध तावदेव तु मेखलम्
नाभियोनिसमायुक्तं घातं हस्तप्रमाणतः १३
चतुर्द्वारसमायुक्तं दर्पणोदरसन्निभम्
मण्टपं भूषयेद्धीमान् पूर्वोक्तविधिना सह १४

पिण्डिका स्थापयेत्तत्र पञ्चगव्यकषायकैः
हरिद्रातिलपूर्णैश्च पत्रतोयैश्च सेचयेत् १५
पावमानं समुच्चार्य पञ्चगव्याभिषेचनम्
कुर्यात् चूर्णोदकैश्चैव पत्रतोय हृदा तथा १६
गन्धपुष्पादिना पूज्य स्वस्वबीजमनुस्मरन्
शयनं कल्पयेद्धीमान् अण्डजात्यैरनुक्रमात् १७
पूजयित्वा यथान्यायं शन्नोदेवीमुदाहरन्
तत्रैव शाययेत्पीठं शयनोपरि देशिकः १८
हृदयं मन्त्रमुच्चार्य गन्धपुष्पादिना यजेत्
मुकुळीपद्ममुद्राञ्च बीजमुद्रां प्रदर्शयेत् १९
हविर्निवेदयेत्पश्चात् गौरीगायत्रीमन्त्रतः
पूर्वभागं न्यसेत् मध्ये पञ्चांगेन समन्वितम् २०
कान्तान्तं यान्तसंयुक्तं चतुर्दशसमन्वितम्
बिन्दुनादसमायुक्तं गौरीबीजमिति स्मृतम् २१
द्वितीयेन चतुर्थेन षष्ठेन च दशेन च
षोडशेन समायुक्तं पञ्चांगमिति कीर्तितम् २२
सुस्तनां चारुवदनं किञ्चित्प्रहसिताननाम्
सुश्रोणी तनुमध्याञ्च दुकूलवसनान्वितम् २३
सर्वाभरणसंयुक्तं कुभमध्ये तु भावयेत्
परितः पिण्डिकायास्तु कुंभानष्टौ तु विन्यसेत् २४
सकूर्चान्सापिधानाञ्च सवस्त्रान्वारिपूरितान्
सहेमान्पल्लवोपेतान् साधयेत्साधिदेवतान् २५
वामा ज्येष्ठा च रौद्री च काळी कलविकर्णिका
बलविकरणी चैव बलप्रमथिनी तथा २६
सर्वभूतदमनी तु वर्णमावा सुमुच्यते
वामां नीलप्रभाञ्चैव मकुटादिविभूषिताम् २७
शंखचक्रगदान्देवीं कुंभमध्ये तु भावयेत्
पीतवर्णां तथा ज्येष्ठां पद्मयुक्पद्मलोचनाम् २८
सर्वाभरणसंयुक्तां सुस्तनाञ्च सुयौवनाम्

रौद्रीमञ्च निभान्देवीं त्रिणेत्रां शूलधारिणीम् २९
नीलमेघनिभां देवीं कामिनीमुत्गधारिणीम्
कलविकरिणीं रक्तां पाशहस्तां महाबलाम् ३०
पीतांबरां बलविकरिणीं खट्गखेटकसंयुताम्
बलप्रमथिनीन्देवीं नीलात्मसदृशप्रभाम् ३१
दण्डधारीं महारूपां मकुटादिविभूषिताम्
तत्तत्कुंभे न्यसेदेताः पूजयेत्स्वस्वनामतः ३२
पीठे मनोन्मनीं न्यस्त्वा शुद्धस्फटिकसन्निभाम्
चतुर्भुजां त्रिणेत्राञ्च नीलाळकविभूषिताम् ३३
सुस्तनां चारुवदनां सुपाशांकुशधारिणीम्
पिण्डिकायान्न्यसेदेतान् स्वस्वबीजेन पूजयेत् ३४
द्वारकुंभान्न्यसेद्धीमान् द्वारं प्रति द्वयं द्वयम्
गङ्गा च यमुना चैव नर्मदा च सरस्वती ३५
सिन्धु गोदावेरी चैव शोणा पुष्करिणी तथा
पूर्वादिद्वारकुंभानामधिदेवाः प्रकीर्तिताः ३६
पूजयित्वा यथान्यायं स्वस्वनाम्ना तु देशिकः
एवमभ्यर्च्य विधिना ततो होमं समर्चयेत् ३७
पलाशखरिद्राश्वत्थप्लक्षञ्चेति दिशासु च
खदिरोदुंबराबिल्वमधूराश्च विदिक्षु वै ३८
समिदाज्यचरून्लाजान् तिलसर्षपमाषकान्
शतमर्धं तदर्धं वा जुहुयात्क्रमशः पुनः ३९
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
अयन्त इध्ममन्त्रेण इध्म हुत्वा विचक्षणः ४०
गौरीमिमाय मन्त्रेण समिद्धोमं समाचरेत्
गौरिगायत्रिमन्त्रेण घृतं हुत्वा विशेषतः ४१
हृदयेन चरुं हुत्वा शिरसा लाजमेव च
तिलं शिखामन्त्रेण सर्षपं कवचेन तु ४२
अस्त्रेण जुहुयात्माषं प्रत्येकं व्याकृतिं हुनेत्
शक्तिमन्त्रं समुच्चार्या प्रत्येकं जुहुया दिशि ४३

पूर्णाहुतिं ततो हुत्वा महाव्याहृतिमेव च
एवं जागरणं रात्रौ पौनः पुण्यं विशेषतः ४४
साययेत् गर्भगेहं तु शक्तिकुंभसमंततः
वर्धनी पूर्वभागे तु पूजयित्वा स्वनामतः ४५
अष्टौ वा चतुरो वाथ होम कुर्यात्प्रभंजन
पीठादिवासनं ह्येवं सहजं सहितं भवेत् ४६
आचार्यं मूर्तिपैस्सार्धं स्नानत्रयमथाचरेत्
पिण्डिकामर्चयित्वा तु ततो होमं समारभेत् ४७
गौर्या ब्रह्मांगबीजैश्च हुत्वा पीठं स्पृशेत् गुरुः
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमात् हुनेत् ४८
पुण्याहं वाचयेत्तत्र पीठलिंगन्तलं क्रमात्
पीठविस्तारमानेन लिंगस्य परितः क्रमात् ४९
सूत्राणि विन्यसेद्धीमान् गौरिकाक्तेन तन्तुना
विलिख्य पीठगन्धेन लिंगसर्वस्य मस्तकम् ५०
आचार्यं पूजयेत्तत्र कल्पोक्तविधिना सह
मूर्त्तिपाज पूजयेत्पश्चात् देवज्ञं पूजयेत्ततः ५१
गौरीगायत्रीमन्त्रेण पिण्डिकाञ्च समर्चयेत्
सर्वातोद्यसमायुक्तं नृत्तगीतसमन्वितम् ५२
पिञ्चचामरसंयुक्तं धूपदीपसमाकुलम्
शनैः प्रदक्षिणं कुर्यात् प्रासादं गुरुणा सह ५३
द्वारदेशं समानीय पूजयित्वा यथा विधि
मुहूर्तन्तिनिवेक्ष्येव गुरवे संनिवेदयेत् ५४
उमाबीजं समुच्चार्य पीठं लिंगे सुयोजयेत्
शिरोमार्गेण लिंगस्य वेशयेत् घृतवारिणि ५५
उत्तराभिमुखीनान्तु तस्येवं घोरनं भवेत्
वालुकाभिश्च संपूर्य बन्धयेदष्टबन्धनैः ५६
नवेन सितवस्त्रेण लिंगमावेष्ट्य सर्वतः
वाचयित्वा यथान्यायं सिले तस्य तु योजयेत् ५७
सुस्निग्धं कारयित्वाथ बन्धं कुर्यात् यथाविधि

ततोऽनन्तासनं कल्प्य योगसिह्मासनं तथा ५८
पद्मासनञ्च विमलं मराडलत्रयमेव च
गुणत्रयं तदात्मानं षडत्वा तत्र विन्यसेत् ५९
आचार्यो मूर्तिपैस्सार्धं कुंभानि शिरसा घृतः
प्रदक्षिणं ततः कृत्वा द्वारपूजां समारभेत् ६०
प्रविश्य गर्भगेहन्तु कुंभे शक्तिमुखस्थितः
सुमुहूर्ते सुलग्ने तु मातृन्यासं समाचरेत् ६१
उमाकुंभादुमाबीजं पिरिडकायन्तु विनयसेत्
ऊर्ध्वपद्मं ह्यधोपद्मं तत्करठे चैव विन्यसेत् ६२
पूर्वदीशानपर्यन्तं न्यस्त्वा वामादिशक्तयः
पूजयित्वा यथान्यायं गौरीगायत्रीमन्त्रतः ६३
पञ्चवर्णहविर्दद्यात् सोपदंशं शिवस्य तु
पायसं पिरिडकास्तत्र तन्मूलेनैव दापयेत् ६४
आचमनं हृदा दत्वा निर्माल्यन्तु विसर्जयेत्
मुखवासञ्च कर्पूरं शिवोमाभ्यान्तु दापयेत् ६५
स्नपनं कारयेत्पश्चात् यथाशक्ति विशेषतः
आचार्यं पूजयेत्पश्चात् वस्त्राभरणकुराडलैः ६६
स्वर्णयज्ञोपवीतञ्च हस्तहेमांगुलीयकम्
शय्याञ्च वाहनं दासि रत्नानि विविधानि च ६७
सुपुष्टां वा सुधाञ्चैव सवत्सां गां तथैव हि
एतानि गुरवे दद्यात् पश्चात्स्वमपि योजयेत् ६८
अधमं पञ्चनिष्कन्तु द्विगुणं मध्यमं भवेत्
त्रिगुणं उत्तमं प्रोक्तं शृणुदेशिकदक्षिणम् ६९
आचार्यं मनसा तुष्टिः एवं सन्तोष्य कारणम्
आचार्यमनसा कोपा देवताकोपमेव च ७०
तस्मात्सर्वप्रयत्नेन आचार्यं तोषयेत्प्रभुः
पिरिडकास्थापकस्यार्धं अष्टांशं मूर्तिपस्य तु ७१
द्विगुणं वास्तुहोमस्यात् तत्समं चास्त +++
देवज्ञस्य तथैव स्यात् तत्समं चास्त +++ ७२

भक्तानां परिचाराणां यथाशक्त्या नु दक्षिणा
इति सूक्ष्मागमे पिण्डिकाप्रतिष्ठाविधिपटलो पञ्चचत्वारिंशतिः

## आत्मार्थलिंगप्रतिष्ठाविधिपटलम्

अथातः संप्रवक्ष्यामि आत्मार्थस्य प्रभञ्जन
यागशालां प्रकर्तव्यं नवहस्तमथापि वा १
मध्ये वेदीं प्रकर्तव्यं नवपञ्चाग्निकुण्डकम्
मूर्तिकुंभान्प्रतिष्ठाप्य ऐशान्ये पाशपतास्त्रकम् २
सरत्नं सापिधानं च नाळिकेरस्तथैव च
पूर्वादीशानपर्यन्तं भ्रामयेत्सप्तविंशतिः ३
मंगळाष्टायुधानञ्च स्नापयेत् वेदिमन्दिरे
यथा वास्तुहुतं पूर्वं पर्यग्निकरणं तथा ४
अंकुरं पूर्ववत्कृत्वा रत्नं सम्पूज्य विन्यसेत्
नयन मोक्षणं कृत्वा बिम्बशुद्धिं ततः परम् ५
वेदध्वनि समायुक्तं जलमध्ये प्रपान्वितम्
वर्धन्यां तु मनोन्मन्यां अनन्तादे शिखण्डिकम् ६
धूपं दीपं परिभ्राम्य शयनं पञ्चकं तथा
ईशानेन समायुक्तं प्रधानं वृत्तमेव च ७
पुरुषं पूर्वकुण्डे तु अघोरं दक्षिणे यजेत्
उत्तरे वामदेवं तु सद्योजातं तु पश्चिमे ८
ईशाने तु शिरः प्रोक्तं हृदयमनलदेशके
शिखां च नैर्ऋते कुण्डे कवचं वायुदेशके ९
ईशानेन तु शिरःप्रोक्तं हृदयमनलदेशके
शिखा च नैर्ऋते कुण्डं कवचं वायुदेशके १०
अस्त्रञ्च नेत्रमेवोक्तं विन्यसेत्तु प्रधानके
पञ्चब्रह्मषडंगानि विन्यसेत्तु विशेषतः ११
ईशानस्सर्वदेवन्तु लिंगोर्ध्वादिविशेषतः
श्रीकण्ठकेशकं न्यस्त्वा मातृकान्यासमेव च १२

मन्त्रन्यासं तथान्यासं अध्वन्यासञ्च मूलवत्
लिंगमूर्ध्नि न्यसेत्सर्वं अग्निकार्योक्तमाचरेत् १३
तिलमीशानपूर्वे तु सर्षपं पुरुषेण तु
मुद्गञ्च दक्षिणे वक्त्रें माषाशिंबाडगुत्तरे १४
चरुञ्चैव घृतं प्रोक्तं सद्योजातं विशेषतः
प्रत्येकं पञ्चवक्त्रेण सहस्रेण पृथक्पृथक् १५
मन्त्रन्यासं ततः कृत्वा स्थापयेत्पञ्चगव्यकैः
प्रभाते विवत्स्नात्वा नित्यनैमित्तिकेषु च १६
यागशालां समाश्रित्य पुण्याह प्रोक्षणं कुरु
शान्तिनन्द्यादिदेवाहं पूर्ववत्पूजयेत् क्ष्वति १७
गन्धपुष्पाणि चाभ्यर्च्य उपचाराणि सर्वसु
नैवेद्यं धूपदीपञ्च होमयेत्तु सहस्रकम् १८
प्रत्येकं होमयेत्कुण्डे पूर्णान्तं सहितानि वै
बाणं वा स्फटिकादिं वा संग्राह्य स्नानवेदिका १९
तत्र लिंगं समुद्धृत्य प्रोक्षयेत्तस्य वारुण
आसनं मूर्तिमूलन्तु अष्टत्रिंशत्कलान्यसेत् २०
विद्यादेहन्तु विन्यस्य होमयेत्मूलमन्त्रतः
मूलेनैव शतं हुत्वा पूर्णाहुतिञ्च त्रिखण्डकम् २१
आत्मयेत् भ्रामयेत्त्यागे मूर्तिकुंभप्रदक्षिणम्
सन्निधौ मण्डलं कल्प्य शालिभिश्च दळान्वितम् २२
तन्मूर्ध्निं विन्यसेत्कुंभं पूर्ववत्पूजयेत्ततः
तत्र शंखं प्रतिष्ठाप्य पूर्णोदकशमन्धुतिम् २३
पाद्यमाचमनञ्चार्घ्यं विन्यसेद्देशिकोत्तमः
न्यासकर्माणि सर्वाणि आत्मार्थे च प्रपूजयेत् २४
आसनं शुद्धविद्यान्तं मूर्तिना त्यान्तगोचरम्
आवाह्यार्घ्यं शिरोमूर्ध्नि मूर्तिमानुपरि स्थितम् २५
बालसूर्यप्रभां देवं सहस्रकिरणोज्वलम्
कोटिचन्द्रप्रभाकारं चरत्नकाराप्रतिप्रतम् २६
पाद्यमाचमनञ्चार्घ्यं हृदयेन निवेदयेत्

नैवेद्यं धूपदीपञ्च पुरजीवं न्यसेच्छिवम्  २७
मूर्तिकुंभं न्यसेच्चन्द्र नाम्नी पथ विशेषतः
लिंगमूर्ध्निन्यसेत्कुंभं पिण्डिकाग्रे तु वर्धनीम्  २८
अनन्तादिशिखण्डयन्तं पिण्डिकाग्रे दळे न्यसेत्
वस्त्रेण तु समुद्धर्त्य रक्तवस्त्रेण वेष्टयेत्  २९
इण्डादिभिस्सुगन्धैश्च भूषणैर्गुग्गुलुं दहेत्
महाहविर्निवेद्यञ्च तांबूलं मुखवासकैः  ३०
धूपदीपादिभिर्देवं निरांजनं विशेषतः
आचार्यं  दक्षिणां दद्यात् दशपञ्चत्रिनिष्ककम्  ३१
आचार्यमनसा प्रीति शिवसान्निध्यकारणम्
इति सूक्ष्मागमे आत्मार्थलिंगप्रतिष्ठाविधिपटलो चतुश्चत्वारिंशति

Reference (Pages 240-334):
*Sūkṣmāgama*, Manuscript No. T0038 of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry. Copied from a MS belonging to J. Visvanatha Sivacharya of Melamankalam, Madurai Dt. It was copied from grantha script to devanāgarī.

तटाकस्थापनं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
तटाकं वाऽथ वापी वा पुष्करिण्यथवापि वा  १
आलयाभिमुखे मुख्यमैशान्यमुत्तरेऽपि वा
दक्षिणे वा प्रकुर्वीत आग्नेय्यां पश्चिमेऽपि वा  २
यथा मनोरमे देशे तटाकं कारयेत्सुधीः
अशक्तश्चेद्वापि मात्रं ममं प्रीतिकरं भवेत्  ३
पुष्पो द्यानादि रम्ये वा तटाकं वा प्रभञ्जन
सुशैला द्यभिषेकायां वा तत्स्थानं कारयेद्दृढम्  ४
सोपानसहितं कृत्वा यथा विभवविस्तरम्
यः कुर्यात्तीर्यमुद्दिश्य स हि सर्वमवाप्नुयात्  ५
धनधान्यसमृद्धिः स्यात् आरोग्यं पुत्रसम्पदम्

भुक्तिं मुक्तिञ्च सौख्यञ्च लभते नाऽत्र संशयः ६
कृत्वा तटाकसंशुद्धिं वारिणा च सुपूरितम्
तत्तीरे यागशालाञ्च दक्षिणे पूर्वभागके ७
उत्तरे ईशदिग्भागे कुण्डवेदिसमन्वितम्
अलंकृत्याङ्कुरं कृत्वा पञ्चाहं त्रियहन्तु वा ८
सद्योधिवासनं कुर्यादङ्कुरञ्च प्रपूजयेत्
वास्तुशान्तिं ततः कृत्वा पर्यग्निं कारयेत्सुधीः ९
पञ्च गव्येन संप्रोक्ष्य शुद्धिं कृत्वा विचक्षणः
वेदिमध्ये विशेषेण साष्टद्रोणैश्च शालिभिः १०
तन्मध्ये पद्ममालिख्य नव कुम्भांश्च विन्यसेत्
ससूत्रान् सापिधानांश्च नालिकेराम्रपत्रकान् ११
सुरत्नान् सुवर्णप्रतिमान् क्षौमवस्त्रसमन्वितान्
एवमेवमलंकृत्य गन्धपुष्पैः सुपूजयेत् १२
आसनं मूर्तिन्यासञ्च ध्यानञ्चैव विशेषतः
आवाह्य वरुणमन्त्रेण मध्यकुम्भे सुयोजयेत् १३
पूर्वादीशानपर्यन्तं निक्षिपेत् कुम्भमध्यमे
गङ्गाञ्च यमुनाञ्चैव नर्मदाञ्च सरस्वतीम् १४
सिन्धुं गोदावरीञ्चैव नर्मदाञ्च सरस्वतीम्
सिन्धुं गोदावरीं चैव काबेरीं ताम्रपर्णिकाम् १५
इत्यष्टशक्तीः समभ्यर्च्य विशेषद्रव्यमुच्यते
शङ्खञ्च वासुकिं पद्मं कुळीरञ्चैव कूर्मकम् १६
नक्रञ्चोत्पलं प्रोक्तं हैमेनैव सलक्षणम्
पूर्वादीशानपर्यन्तं निक्षिपेत्कुम्भमध्यमे १७
सुवस्त्रैर्वेष्टयेत्कुम्भान् तत्तन्नामभिः पूजयेत्
एवमावाह्य संपूज्य धूपदीपैर्विशेषतः १८
नैवेद्यं दापयेत्पश्चात् ताम्बूलञ्च निवेदयेत्
द्वारादि गुरुपूजान्तं यागशालां प्रपूजयेत् १९
एवं संस्थाप्य विधिना शिवाग्निं परिकल्पयेत्
+++ कुण्डमेकं तु पद्ममश्रमयाऽपि वा २०

आधानादि विवाहान्तमग्निकार्योक्तमाचरेत्
एवमावाह्य संपूज्य धूपदीपैर्विशेषतः २१
नैवेद्यं दापयेत्पश्चात् ताम्बूलञ्च निवेदयेत्
द्वारादि गुरुपूजान्तं यागशालां प्रपूजयेत् २२
एवं संस्थाप्य विधिना शिवाग्निं परिकल्पयेत्
पश्चिमे कुण्डमेकन्तु पद्ममश्रमथाऽपि वा २३
आधानादि विवाहान्तं अग्निकार्योक्तमाचरेत्
तद्देवं पूजयेदग्नौ पश्चाद्धोमं समाचरेत् २४
पलाशं वटशुक्लार्क अश्वत्थोदुम्बरस्तथा
प्लक्षः खदिरबिल्वौ च शमीञ्च समिधः क्रमात् २५
+++ वरुण मन्त्रेण पलाशं प्रथममन्ततः
गङ्गादि ताम्रवर्णान्तं स्वस्वनामभिः होमयेत् २६
आज्यं चरुं मधुक्षीरं हुत्वा वरुणमन्त्रतः
शालि गोधूममाषञ्च तिलं सिद्धार्थमाढकम् २७
निष्पावञ्च मुद्गाञ्च मध्यादीशान्तकं क्रमात्
नवधान्यानि सर्वाणि तत्तन्मन्त्रेण होमयेत् २८
द्विशतञ्च शतं वाऽपि पञ्चाशत्पञ्चविंशतिः
द्रव्यं प्रति क्रमेणैव होमयेत्तु प्रभञ्जन २९
पूर्णाहुतिं ततो हुत्वा बलिं क्षिप्त्वा समाप्य च
एवं रात्रौ प्रकर्तव्यं प्रभाते स्नानमाचरेत् ३०
यागशालां प्रविश्याय पूर्ववत्पूज्य होमयेत्
जयादिरभ्याधानञ्च प्रायश्चित्तं हुनेत् क्रमात् ३१
पूर्णां हुत्वाग्निसंस्थानं घटे संयोजयेद्गुरुः
दशदानानि सर्वाणि दापयेत्तु विचक्षणः ३२
आचार्य पूजनं कृत्वा यथोक्तां दक्षिणां ददेत्
कुम्भानुद्धृत्य शिरसा सुमुहूर्ते सुलग्नके ३३
धामप्रदक्षिणं कृत्वा तटाकञ्च प्रदक्षिणम्
तटाकाभिमुखः स्थित्वा कुम्भान् तत्रैव विन्यसेत् ३४
पुण्याहैः पञ्चगव्यैश्च तटाकं प्रोक्षयेद्गुरुः

अर्चयित्वा विशेषेण धूपदीपादिसंयुतम् ३५
साधितैः कलशैः संयक् वारिमध्ये सुयोजयेत्
मध्यादीश क्रमेणैव कुम्भद्रव्याभिषेचयेत् ३६
नैवेद्यं धूपदीपौ चोपभारान् समाचरेत्
तटाकपरितश्चाष्ट लोकेशबलिमाचरेत् ३७
तत्तीर्थे स्नापयेत्कर्ता बान्धवादिसमन्वितम्
तत्तीर्थं संगृहेत्कर्ता जनान् शिष्टांश्च दापयेत् ३८
भूरि दानं ददेत्पश्चात् यथावित्तानुसारतः
तत्तीरे भोजयेद्विद्वान् सर्वकार्याभिवृद्धये ३९
एवं यः कुरुते मर्त्यः सर्वान् कामान्नवाप्नुयात् ४०
इति सूक्ष्मशास्त्रे तटाकप्रतिष्ठाविधिरशीतितमः पटलः

कूपसंस्थापनं वक्ष्ये शृणुत्वं तत्प्रभञ्जन
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने १
सुवारे सुमुहूर्ते च स्थापनं सम्यगाचरेत्
तद्दिनात्पूर्वदिवसे अधिवासनमारभेत् २
मण्टपं समलंकृत्य पुण्याहं वाचयेद्गुरुः
शालिभिः स्थण्डिलं कृत्वा लाजैः पुष्पैः परिस्तरेत् ३
नवकुम्भान् समादाय क्षाळयेदस्त्रमन्त्रतः
स सूत्रान् सापिधानांश्च सवस्त्रान्वारिपूरितान् ४
फलपल्लवसंयुक्तान् हेमकूर्चसमन्वितान्
मध्यं कुम्भमनोन्मन्यां पञ्च रत्नं विनिक्षिपेत् ५
कूर्मवत्विन्द्रकुम्भे तु +++ ञ्चैव समर्चयेत्
मण्डूकमग्निकुम्भे तु यमुनाञ्च समर्चयेत् ६
सर्तस्याद्दक्षिणे स्थाप्य नर्मदाञ्च समर्चयेत्
मत्स्यं नैर्ऋतकुम्भे तु अर्चयेच्च सरस्वतीम् ७
कर्कटं वारुणे कुम्भे सिन्धुतीर्थं समर्चयेत्
नक्रं वायव्य कुम्भे तु गोदावरीं समर्चयेत् ८
सौम्येन पुष्पं तु कावेरीञ्च समर्चयेत्

उत्पलन्त्वीशकुम्भे तु ताम्रपर्णीं समर्चयेत्  ९
तत्तत्स्वनाममन्त्रेण चार्चयेद्देशिकोत्तमः
पञ्चमृत्पञ्चगव्यैश्च कूपमध्ये विनिक्षिपेत्  १०
अग्निकार्योक्तमार्गेणाऽग्निकार्यं समाचरेत्
समिदाज्यान्तलाजैश्च हुनेदष्टोत्तरं शतम्  ११
सद्यादिवक्रपर्यन्तं क्रमेणैव तु हूयते
सर्वद्रव्याणि संहुत्वा द्रव्यान्ते व्याहृतिं हुनेत्  १२
वारुणोग्रमनुं जप्त्वा मूलमन्त्र शतं जपेत्
आपो वा येतिमन्त्रेणाष्टोत्तरशतं जपेत्  १३
पूर्णाहुतिं ततो हुत्वा नैवेद्यादीन्प्रपूजयेत्
एवं रात्रौ प्रकर्तव्यं प्रभाते स्नानमाचरेत्  १४
सकळीकरणं कृत्वा कुम्भं वह्निं समर्चयेत्
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्  १५
पश्चादग्निं विसृज्याथ कुम्भमध्ये तु योजयेत्
नैवेद्यं दापयेद्भक्त्या धूपदीपादिकं ददेत्  १६
पश्चात् कुम्भान् समुद्धृत्य सर्वालंकारसंयुतम्
हर्म्य प्रदक्षिणं कृत्वा कूपस्थानं समाविशेत्  १७
पुण्याहं वाचयेद्धीमान् शुद्धैरुत्थेति मन्त्रतः
कूपमध्ये तु संप्रोक्ष्याऽस्त्रेणैव समर्चयेत्  १८
कुम्भान्मूर्तिं समादाय कूपमध्ये तु योजयेत्
कुम्भोदकेन संस्नाप्य अपोवेति मन्त्रतः  १९
गङ्गादिसर्वकलशैः स्नापयेत्तत्स्वनामतः
अर्चयेद्गन्धपुष्पाद्यैः धूपदीपादिकं ददेत्  २०
कूर्माणि चाष्टद्रव्याणि कूपमध्ये विनिक्षिपेत्
सघृतं गुळसंमिश्रं कूपबाह्ये विशेषतः  २१
चन्दादिपद्मपर्यन्तं बलिं दद्यात्स्वनामतः
कूपतोयं तु संग्राह्य सर्वभक्तेषु दापयेत्  २२
आचार्यं पूजयेत्पश्चात् वस्त्रहेमाङ्गुलीयकैः
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्  २३

इति सूक्ष्मशास्त्रे कूपस्थानविधिः द्व्यशीतितमः पटलः

अथातः संप्रवक्ष्यामि बाणलिङ्गस्य लक्षणम्
द्विविधं लक्षणं चैव स्थावरं जंघमं तथा १
नागरेति विमानेषु स्थावरञ्च प्रकल्पयेत्
ब्रह्मणाः क्षत्रियाश्चैव वैश्याश्शूद्रास्तथैव च २
जंगमं पूजयेन्नित्यं आत्मार्थे तु विशेषतः
नागरे नगरे चैव द्राविडे द्राविडं तथा ३
वेसरे वेसरञ्चैव मिश्रं चैव तु मिश्रकम्
तेषां मिश्रं पृथक्कल्प्य यथोक्तं देशिकोत्तमः ४
विप्रस्य श्वेतवर्णः स्यात् क्षत्रियस्य तु रक्तकम्
वैश्यस्य पीतवर्णं स्यात् शूद्रस्यैव तु नीलकम् ५
शिरो वर्तनहीनन्तु ब्रह्मसूत्रं विहीनकम्
निमेनान्तसमायुक्तं मूलं शीर्षकम् ६
व्यग्रवक्त्रसमायुक्तं त्र्यश्रं वर्तमयापि वा
पूजांशं द्विगुणं पीठं कर्णामूर्ध्वबलिर्भवेत् ७
लिङ्गं विष्कंभमानेन पीठं कुर्याद्विचक्षणः
वृत्तं वा चतुरश्रं वाऽष्टाश्रं वा षडश्रकम् ८
चतुरश्रन्तु वैश्यस्य शूद्रस्यैव तु वृत्तकम्
सर्वजातिः प्रकर्तव्या नृत्तं पीठं प्रकल्पयेत् ९
लिङ्गस्य यादृशं रूपं पीठस्यैव तथा भवेत्
सूत्रहीनस्य लिङ्गन्तु मुखभेदस्तु कारयेत् १०
यस्य लिङ्गस्य नाहन्तु तत्समं पीठविस्तरम्
गोमुखा कारमार्गेण मुखभावं विचारयेत् ११
यस्मिन्देशे तु निम्नन्तु तस्मिन् भावे मुखं भवेत्
यस्मिन् भागे तु दीपन्तु तस्मिन् भावे मुखं भवेत् १२
शिवशास्त्रोक्तमार्गेण पीठबन्धं प्रकल्पयेत्
अथवान्यप्रकारेण बाणलिङ्गन्तु वक्ष्यते १३
पर्वते वा वने वाऽपि नद्यां वापि जलेऽपि वा

इष्टलिङ्गं गृहीत्वा तु पश्चात्पीठं प्रकल्पयेत् १४
लिङ्गस्य नाह सदृशं पीठविस्तारमुच्यते
लिङ्गोत्सेधसमं पीठं कराठमानेन वा पुनः १५
लिङ्गानुरूपशैलेन स्त्रीशैलेन तु कारयेत्
श्वेतभावाशये वर्णास्ते ब्राह्मणा हि कीर्तिताः १६
इष्टलिङ्गसमं बाणं भेदमन्त्रं न विद्यते
ततो लिङ्गस्य पूजायां तेषां चैव तु कारयेत् १७
इष्टलिङ्गस्य पूजायां इष्टकाम्यमवाप्नुयात्
तस्माल्लोकेषु संपूज्य बाणलिङ्गे विशेषतः १८
पार्श्वाद्यत्कोष्टलिङ्गन्तु पूजयेत्तु विशेषतः
पर्वते पर्वतं लिङ्गं लक्षणेन समन्वितम् १९
संग्राह्या पीठवद्धीमान् एकवर्णेन बुद्धिमान्
तस्य रूपप्रमाणेन पीठं कुर्यात्त्रिकर्णिकम् २०
अथ वैककर्णं वाऽर्धचित्रं प्रयोजयेत्
पञ्चाङ्गसहितं वापि पद्मा कृतिमथापि वा २१
एवमेव विधानेन कारयेच्छिल्पिना सह
परार्थलक्षणैर्युक्तं आत्मार्थेन तु लक्षयेत् २२
भक्तिरेवविशिष्टं स्यात् भुक्तिमुक्तिफलप्रदम्
तस्मात्सर्वप्रयत्नेन गुरोराज्ञां समारभेत् २३
आत्मार्थे वा परार्थे वा शिवपूजां समारभेत्
अनु लोमैः प्रतिलोमैरात्मार्थं पूजयेत्सदा २४
परार्थं ग्रामाधिके स्थाप्याऽऽत्मार्थं संग्रहोद्भवे
गिरिसंबन्धिलिङ्गस्य नाहं षोडशभागिकम् २५
पञ्चहं पीठकोत्सेधं कनिष्ठं साम्यमुच्यते
सप्तांशं मध्यमं प्रोक्तं अधममष्टाङ्गभाजिते २६
प्रत्येकं पिङ्गोत्सेधं नवधा पीठमुच्छ्रयम्
उच्चति द्विगुणं तारं त्रिगुणं वा चतुर्गुणम् २७
शिला मये शिला पीठमथवा दारवेणवत्
इष्टकाभिस्तु वा कुर्यात्पीठबन्धार्थमेव च २८

पीठप्रमाणमानेन प्रासादं कारयेद्बुधः
उच्छति द्विगुणं तारं त्रिगुणं वा चतुर्गुणम्  २९
शिलामये शिला पीठमथवा दारवेण वा
इष्टकाभिस्तु वा कुर्यात्पीठबन्धार्थमेव च  ३०
पीठप्रमाणमानेन प्रासादं कारयेद्बुधः
पश्चात्प्रतिष्ठितं कुर्यादुक्तमार्गेण कारयेत्  ३१
लिङ्गहीने वरं पीठं स्थापनं तु समाचरेत्
लिङ्गात्कष्टवरं पीठं स्थपनं सम्यगाचरेत्  ३२
तस्मिन् स्थाने कृते लिङ्गे तस्मिन् स्थाने प्रतिष्ठयेत्
एकहस्तात्परं नास्ति द्वादशाङ्गुलहीनतः  ३३
एकयोरधिकं हीनं प्रकर्तव्यं कदा चरेत्
यजमानानुकूलेन रोचये चास्त्रमार्गतः  ३४
एकमार्गं समाश्रित्य पूर्वस्मिन् पूर्वमार्गतः
कारयेत्तत्प्रयत्नेन शुभकाले तु कारयेत्  ३५
माषत्रयासमारभ्य माषैकेन विवर्धनात्
यावद्द्वादशमाषान्तं लोहजं संप्रकल्पयेत्  ३६
अङ्गुलत्रयमारभ्य चाङ्गुलाङ्गुलवर्धनात्
यावद्दशसहस्रान्तं शैललिङ्गोदयं भवेत्  ३७
कल्पयेत्क्षणिकं लिङ्गं यथाकामप्रमाणकम्
वृद्दारु शैललोहा शेषमकश्चिदस्तिभि  ३८
लिङ्गायामे तु वेदांशिमाकाशे लिङ्गविस्तृतम्
अथवा गुणभागैकं पञ्चांशे द्व्यंशविस्तृतम्  ३९
लिङ्गयामे गुणांशेंशं तन्मूले चतुरश्रकम्
शेषं स्वपृक्तरूपं वा सर्वं सुवृत्तमेव वा  ४०
सूत्रोपेतविहीनं वा चित्राकारशिरोन्वितम्
एवं लक्षणसंयुक्तं प्रत्येकं होममाचरेत्  ४१
एकलिङ्गेऽथवा कुर्यात्सर्वलिङ्गं विशेषतः
लिङ्गायामं त्रिधा कृत्वा व्योमांशं भूगतं भवेत्  ४२
एकांशं पीठबन्धं स्यात् एकांशमर्चनार्हकम्

अथवा पञ्च भागे तु द्वयांशं पीठवेशनम् ४३
पूजाभागं त्रिभागं स्यात् सप्तभागे द्विकोलकम्
अर्चाभागमिदं विद्धि शेषं पिण्डप्रवेशनम् ४४
पूजां शोदय तुङ्गन्तु पञ्चविंशति भाजिते
एकैकं विभजेद्धीमान् चत्वारिंशति संख्यकम् ४५
सहस्रलिङ्गमेवं हि अयुतस्य विधिं शृणु
लिङ्गोदये तु पञ्चाशत् कृत्वा लिङ्गायुतं भवेत् ४६
पूजांशो ++ तुङ्गन्तु दश भागविभाजिते
एकपञ्चाशदंशेन लिङ्गे पञ्च शतं भवेत् ४७
शिवोदये तु शिवे दांशे त्वेकेन क्षेत्रि भागया
अष्टोत्तरशतं लिङ्गं परितः संप्रकल्पयेत् ४८
शिवोदये तु पूजांशे त्वेकपञ्चविभाजिते
पञ्चविंशतिलिङ्गं स्यात् पञ्चाशद्विभजेत्सति ४९
लिङ्गे द्विशतपञ्चाशत् लिङ्गं संपरिकल्पयेत्
अल्पलिङ्गस्य तारार्धं पादाङ्गुष्टांशमेव वा ५०
महालिङ्गस्य विस्तारं ऊर्ध्वं संयोज्य पार्श्वयोः
तन्मानं जपलिङ्गस्य महालिङ्गाद्विनिर्गतः ५१
लिङ्गोपरि भवेल्लिङ्गं न कर्तव्यं कदाचन
अन्तराळे भवेल्लिङ्गं मध्यं संकल्पयेत्क्रमात् ५२
शिरो वर्तनयुक्तं वा हीनं वा कल्पयेद्बुधः
एवं संस्थाप्य पूर्वेद्युर्नवमे सप्तमेऽपि वा ५३
निश्चित्य दिवसात्पूर्वे सायाह्नसमये बुधः
महालिङ्गशिरोमानमधः संकल्पयेत्क्रमात् ५४
लिङ्गानामपि सर्वेषां सूत्रहीनं प्रकल्पयेत्
नन्द्या वर्तशिलापीठं शिवलिङ्गविधानवत् ५५
एवं लक्षणसंयुक्तं लिङ्गं संग्राहयेद्बुधः
रत्नलिङ्गविधानोक्तं मार्गेण स्थापयेद्बुधः ५६
एवं संस्थाप्य पूर्वेद्युर्नवमे सप्तमेऽपि वा
निश्चित्य दिवसात्पूर्वे सायाह्नसमये बुधः ५७

स्नानं कृत्वा विधानेन यजमानसमन्वितः
प्रभामण्टपमाविश्य भूतशुद्धिं समाचरेत्  ५८
सकळी करणं कृत्वा प्रदक्षिणमथाचरेत्
लिङ्गसंख्यां जपेन्मूलं यजमानसमन्वितम्  ५९
जपान्ते पराङ्मुखो भूत्वा क्षीरं भुक्त्वा जितेन्द्रियः
मण्टपस्योत्तरे पार्श्वे शाययेत्सैकतोपरि  ६०
ब्राह्मे मुहूर्ते चोत्थाय पादप्रक्षाळनं कुरु
मुखशुद्धिं ततः कृत्वा मूलमन्त्रं जपेत्ततः  ६१
भस्मना तिलकं कृत्वा मूलमन्त्रं जपेत्ततः
यजमानसमोपेतं स्नानत्रयमथाचरेत्  ६२
सन्ध्यादिवन्दनं कृत्वा नित्यकर्मसमाचरेत्
मण्टपं पूजयेद्विद्वान् मण्टपे कलशेऽपि वा  ६३
चतुर्द्वारं समभ्यर्च्य पूर्वोक्तविधिना सह
बलिपीठविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन  ६४
भद्रक्षुद्रं द्विधाप्रोक्तं क्षुद्रमेवाल्पपीठकम्
भद्रं प्रोक्तं महापीठं लिङ्गं त्रिधैकरूपकम्  ६५
एतयोः क्षुद्रपीठानां लक्षणं वक्ष्यतेऽधुना
शिवलिङ्गस्य पीठं यत्तुङ्गतारं नवांशकम्  ६६
सप्तांशमुत्तमं प्रोक्तं पञ्चांशं मध्यमं स्मृतम्
त्रिभागं कन्यसं ख्यातं क्षुद्रपीठस्य विस्तरम्  ६७
तद्विस्तार चतुर्भाग क्षुद्रपीठस्य तुङ्गकम्
मानाङ्गुलवशाद्वारव्यष्टरसमातृकम्  ६८
अत्रोत्सेधांशमाने तु पञ्च भागे कृते सति
उपानमेकभागेन पद्मतुङ्गं गुणांशतः  ६९
एकेन कर्णिकां कुर्यादथवाऽन्यद्विधानतः
अशेषं फुल्लपद्माभं कारयेन्मानकोविदः  ७०
मातृपीठप्रकारन्तु अयुक्तं वा सयुक्तकम्
++ पूर्ववत्प्रोक्तं सयुक्तञ्चैकपीठजम्  ७१
चतुष्षडङ्गुलं वाऽपि सप्तपीठविशालकम्

उत्तुङ्गलक्षणाद्यादि पूर्ववत्परिकीर्तितम् ७२
नक्तदन्तरमानन्तु एकांगुलविशात्स्मृतम्
भद्रपीठविधिः प्रोक्तः परिवारविधौ पुरा ७३
एतत्सर्वं समापाद्य प्रतिष्ठाविधिमाचरेत्
द्वारपीठप्रतिष्ठा च प्रथमे वा द्वितीयके ७४
भद्रपीठप्रतिष्ठा च समतन्त्रेण कारयेत्
पृथक् तन्त्रेण वा कुर्याच्चतुरङ्गविधानतः ७५
एकं चाग्रेण कर्तव्यं एकस्मिन्नेककालके
अङ्कुरं वास्तु यागादि समतन्त्रैकमाचरेत् ७६
प्रासादपूर्वदिग्भागे मण्टपं विधिनाचरेत्
तन्मध्ये वेदिकां कुर्याद्धस्तमात्रप्रमाणतः ७७
रुद्रवेदीति संप्रोक्तं तत्तारत्र्यकतुङ्गकम्
तत्पूर्वादि चतुर्दिक्षु विधिं वेदिं प्रकल्पयेत् ७८
अनेनैवोत्सवं कुर्यात्तद्विधानप्रकारकाः
एवमेव प्रकारेण मण्टपं सम्यगाचरेत् ७९
नवाहे वाऽथ पञ्चाहे त्र्यहे वाङ्कुरमाचरेत्
जीर्णपीठपरित्यागं कृत्वाऽथ स्नापयेदथ ८०
तज्जीर्णं तु त्रिधा प्रोक्तं स्फुटितं छिन्नभिन्नकम्
भद्रपीठं विशेषेण महांगोपांगसंयुतम् ८१
उपानज्जगतीं चाथ कुमुदं कर्णपट्टिका
पद्मं च कर्णिकायाथ महाङ्गमिति कीर्तितम् ८२
दळोपदळनास्याद्यमुपाङ्गमिति कीर्तितम्
वर्जयेत्तं महाङ्गेषु स्फुटितञ्च प्रभञ्जन ८३
क्षुद्रपीठादिसर्वेषु विभिन्नं तस्य वर्जयेत्
तस्योद्धारक्रमं वक्ष्ये पीठ दक्षिणमण्डले ८४
संकल्पासनमावाह्य पूजामन्त्रं समाचरेत्
तत्पूर्वे स्थण्डिलं कृत्वा शालिभिर्विमलैः शुभैः ८५
तन्मध्ये पद्ममालिख्य साष्टपत्रसकर्णिकम्
द्रोणाम्बुपूरितघटं मध्ये विन्यसेद्बुधः ८६

आवाह्य पीठाद्देवांश्च कुम्भमध्ये तु विन्यसेत्
निवेद्यादीन्समाप्याथ चाग्निकार्योक्तमार्गतः ८७
आधानादि विवाहान्तं कृत्वा मधुघृतैरपि
दूर्वाभिस्तण्डुलैस्तत्र देवतामन्त्रमुच्चरन् ८८
शतमर्धं तदर्धं वा होमयेत्तु पृथक्पृथक्
क्षुरिका बीजमुख्येन पूर्णाहुतिमथाचरेत् ८९
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
अग्निस्थं मण्डलस्थं च कुम्भमध्ये समावहेत् ९०
भूतले निखनेत्तांश्च समुद्रेष्वथ वासने
जीर्णपीठादिसंभूतेऽस्ति चेदिदमाचरेत् ९१
पीठशुद्धिं ततः कृत्वा पञ्चमृद्गव्यबिल्वकैः
भद्रपीठे विशेषोऽस्ति तदग्रस्थितदर्पणैः ९२
धाराभिषेचनं कुर्याच्छुद्धैरुत्थेति मन्त्रतः
वास्तुहोमबलिञ्चाथ मण्टपाद्याम्बुना चरेत् ९३
रक्षाबन्धं ततः कुर्याद्भद्रपीठोर्ध्वकर्णिकैः
अन्येषामेव पीठानां कृतं वा तद्विना चरेत् ९४
वेदिषु स्थण्डिलं कुर्यादष्टद्रोणेन शालिना
तदर्धैस्तण्डुलैर्युक्तं तदर्धतिलसंयुतम् ९५
लाजैः पुष्पैस्तिलैर्दर्भैर्विकरैः समलंकृतम्
तत्पूर्वे वेदिकुम्भेषु दक्षिणोत्तरमध्यमम् ९६
चण्डेशमग्न्यादीशान्तमग्रे भूतेशमर्च्य च
प्रतीची वेदिकुम्भेषु अरिष्टं भुजगेश्वरम् ९७
धर्मदेवञ्च मामे च वामे मध्येष्वनुक्रमात्
उदीची वेदिकुम्भेषु इन्द्रं वैश्वानरं यमम् ९८
निर्ऋतिं वा शिवाय विन्दुपट्टकाख्यं महेश्वरम्
विष्णु पितामहश्चापि पूर्वादारभ्य पूजयेत् ९९

Reference (Pages 334-346) :
*Sūkṣmāgama*, Manuscript No. T0191 of the Muktabodha on-line
digital library, displaying the paper transcripts of the French Institute of

Pondicherry. Copied from a manuscript belonging to the Government Oriental Manuscripts Library, Madras, No. R 14448.

## नित्याग्निकर्मविधिः

नित्याग्नियजनं वक्ष्ये शृणु तत्त्वं प्रभञ्जन
श्रीकीर्तिपुरायविजयं वृद्धिं च सुखदायकम् १
आग्नेय्यां पचनागारे चैशान्या वा विशेषतः
वृत्तं वा चतुरश्रं वा कुराडमेतत्सलक्षराम् २
पश्चिमे दक्षिरो वापि योनिरश्वत्थपत्रवत्
सद्येन शोधनं कुराडं क्षाळनं वाममन्त्रतः ३
शोषरां गृह्यमन्त्रेरा पाचनं पुरुषेरा तु
प्रोक्षरात्वीशमन्त्रेरा हृदयेन समर्चयेत् ४
शरावेग्निं समादाय क्रव्यादांशं परित्यजेत्
अर्घ्यं शिरसिमन्त्रेरा पुरुषेरार्चदेशिकः ५
कवचेनाग्निमादाय मूलेनैव प्रतिष्ठयेत्
तस्य मध्ये समावाह्य शिवं सपरिचारकम् ६
हृन्मन्त्रेरा समभ्यर्च्य पाद्यमाचमनं ददेत्
अर्घ्यगन्धं च पुष्पं च धूपं दत्त्वा स्वमूलतः ७
दर्भैश्चैव परिस्तीर्य अदितेन्वादिमन्त्रतः
घृतेन अभिघारं च होमयेत्संहितारगुभिः ८
गन्धैः पुष्पैः समभ्यर्च्य कुर्याच्च परिषेचनम्
कुराडस्य नैर्ऋते देशे विद्येशानां बलिन्ददेत् ९
परिस्तररामादाय क्षिप्याग्नौ तत्र देशिकः
तद्भस्म सङ्गृहीत्वाथ ललाटे तिलकं न्यसेत् १०
निष्ठुरेराग्निमादाय मूलबिम्बे समर्चयेत्
नित्याग्नियजनं प्रोक्तं नित्योत्सवविधिं शृणु ११
इति सूक्ष्मतन्त्रे क्रियापादे नित्याग्निविधिपटलः

अथ नैमित्तिकं वक्ष्ये साधकानां हितावहम्
यस्य श्रवणमात्रेण साधकोभीप्सितार्थवः १
कर्मत्रयं क्रमेणैव कारयेत्तत्पृथक्पृथक्
लिङ्गसंस्थापनत्वेन गर्भसंस्थापनं सह २
एककाले प्रयोक्तव्यं एकाचार्येण वा नयेत्
स्थूपिकीलप्रतिष्ठा च विमानस्थापनं च यः ३
शिवसंप्रोक्षणं चैव समतन्त्रेण कारयेत्
पृथक्तन्त्रेण वा कार्यमष्टांशं देशिकोत्तमः ४
प्रथमस्थापनं चेत्तु स्थूपिकीलं च वास्तुकम्
शिवसंप्रोक्षणं कर्म समकाले समाचरेत् ५
प्रासादे देहमित्युक्तं देहीलिङ्गमिति स्मृतम्
देहहीनकृतं कर्म तत्कर्मं निष्फलं भवेत् ६
तस्मात्सर्वप्रयत्नेन विमानस्थापनान्वितम्
शिवसंप्रोक्षणं कुर्याद् विधिनानेन देशिकः ७
अंकुरं वास्तुयागं च पर्यग्निकरणं ततः
मण्डपस्यार्चनं चैव समित्परिधिविष्टरम् ८
प्रणीताप्रोक्षणीपात्रमाधारपरिषेचनम्
परिस्तरणमन्त्रजप्तमेकमेव समाचरेत् ९
एकाचार्येण कर्तव्यं मूर्तिहोमादिकं विना
प्रासादपूर्वदिग्भागे मण्डपं चतुरश्रकम् १०
सप्ताष्टकरमारभ्य द्विद्विहस्तविवर्धनात्
पञ्चविंशतिषड्विंशद्धस्तान्तं संप्रकल्पयेत् ११
अयुग्मं वाथ युग्मं वा पङ्क्तयः परिकीर्तिताः
अनल्पमण्डपेद्विद्वान् मध्ये कूटं समाचरेत् १२
शालाकारप्रपां वाथ परितः कल्पयेत्क्रमात्
चतुर्दिग्द्वारसंयुक्तं चतुस्तोरण भूषितम् १३
तलमानं तलोत्सेधं अ+++ च षडंगुलम्
तन्मध्ये वेदिकां कुर्यात् तिथिभागैकभागतः १४
शिववेदीसाप्रोक्ता तद्विस्तारसमोन्नताः

तत्पूर्वादि चतुर्दिक्षु ब्रह्मवेदीं प्रकल्पयेत् १५
आग्नेय्यादिषु कोणेषु धर्माख्यापि च वेदिका
एवं नवग्रहमध्ये तत्पूर्वादि चतुर्ष्वपि १६
धर्मायो पूर्वदिग्भागे ज्ञानाख्या दक्षिणे दिशि
वैराग्या पश्चिमे वेदी चोत्तरैश्वर्य नामकम् १७
सुधयेष्टिकया कुर्यात् मृण्मयेनाथवा पुनः
तत्समा शरभागेन तदर्धं पादमानतः १८
क्रमेण चोन्नतं कुर्यात् शिवब्रह्मादिवैदिकाः
वह्नेरायतनं कार्यं मानुषे तु पदे यथा १९
स्नपनं कारयेद्विद्वान् पदे पैशाचिके क्रमात्
अल्पपक्षे विधानज्ञो धर्मैकदैविकं त्रये २०
आग्नेय्यादिषु कोणेषु कल्पयेत्पूर्ववर्त्मना
अथवा नन्दनन्दांशे मध्ये नवपदं त्यजेत् २१
लग्नांगुलोन्यसेनैव वेदिकां कारयेत्क्रमात्
तदूर्ध्वे वेदिकां कुर्यात् महादिक्षु च मध्यमे २२
पदमानोन्नतं वाथ तदर्धार्धमथापि वा
शरवेदांशहीनं वा वेदिकोदयमाचरेत् २३
उपवेदीं ततः कुर्यात् रसवेदांघ्रिकांगुलैः
परितः कल्पयेद्विद्वान् चतुर्दिग्बीशकोणके २४
षट्कोणं पूर्वदिग्भागे चतुरश्रं तु दक्षिणे
पश्चिमे वसुकोणं स्यात् सौम्ये चाब्जं प्रकल्पयेत् २५
प्रधानं त्वीशदिग्भागे चाश्रं वा वृत्तमेव वा
एवं मण्डपमापाद्य वितानाद्यैरलङ्कृतम् २६
गोमयालेपनं कृत्वा शिल्पिनं विसृजेत्ततः
परिचारकसंयुक्तं स्नानं कृत्वाथ देशिकः २७
नववस्त्रधरोष्णीषशुक्लमाल्यादिलेपनः
पादप्रक्षालनं कृत्वा भूतशुद्धिं समाचरेत् २८
पुण्याहं वाचयेत्तत्र पञ्चगव्यपुरस्सरम्
पूजयेद्गणराजानं फलभक्ष्यादिना ततः २९

प्रणम्यदेवदेवेशं पुष्पाञ्जलिसमन्वितः
देवदेवमहादेव प्रणतार्तिविनाशन ३०
त्वामुद्दिश्य स्वतन्त्राणि त्वत्प्रसादात्करोम्यहम्
इत्युक्त्वा प्रार्थयेन्मन्त्री प्रणम्यानुज्ञया सह ३१
आश्रयेदंकुरस्थानं प्रोक्षयेदस्त्रमन्त्रतः
शालिभिस्थण्डिलं कृत्वा नन्दनन्दपदं लिखेत् ३२
मध्ये नवपदं ग्राह्य लेखयेत्परितः परम्
पूर्वादिषु चतुर्दिक्षु त्रीणि त्रीणि पदं त्यजेत् ३३
द्वारार्थकर्म्महादिक्षु पदमेकं परित्यजेत्
भानुमार्गसमायुक्तं मध्ये पद्मं प्रकल्पयेत् ३४
कोणेषु घटिकाष्टौ च पालिकाष्टौ महादिश
अन्येषु च शरावाणि विन्यसेत्तु प्रदक्षिणम् ३५
तन्मध्ये कलशं स्थाप्य कूर्चपल्लवतोययुक्
सप्तबीजानि संक्षाल्य क्षीरमध्येऽधिवासयेत् ३६
क्षणिकैर्वाथ लोहैर्वा शिवास्त्रं परिकल्पयेत्
स्थलिकोर्ध्वे न्यसेदस्त्रं गन्धपुष्पादिभिर्यजेत् ३७
पञ्चगव्यसमायुक्तं बलिद्रव्यसमन्वितम्
तदस्त्रेशं समादाय सर्वालंकारसंयुतम् ३८
नदीतीरे तटाके वा शुद्धदेशेऽथवा पुनः
वने वा पर्वते वापि मृत्स्थानं परिकल्पयेत् ३९
सम्मार्ज्याभुक्ष्य तोयेन गोमयेन तु लेपयेत्
मण्डलं त्रितयं कल्प्य शालिपिष्टादिरेखया ४०
पश्चिमे स्थापयेच्छूलं मध्यमे बलिमाचरेत्
तदग्रे मण्डले भूमिदेवीं संस्थापयेत् बुधः ४१
गणेशं पूजयेत्तत्र पुण्याहं वाचयेद्गुरुः
शालिभिस्थण्डिलं कृत्वा नवकोष्ठं समालिखेत् ४२
मध्ये ब्रह्माणमभ्यर्च्य अनन्तं पूर्वकोष्ठके
विनतामग्निदिग्भागे भद्रायाम्ये समर्चयेत् ४३
जयन्तं नैर्ऋते देशे भ्रमनिं वारु भ्रमाम्

वायवे प्रस्तुतां सोमो जृंभितामीशकोणके ४४
स्वस्वनाम्ना च संपूज्य दत्त्वादद्ध्येदनं बलिम्
धूपदीपं ततो दत्त्वा देवतोद्वासनं च यत् ४५
भूमिमस्त्रेण सम्प्रोक्ष्य कुन्दालीं क्षाल्य सा स्मृतः
तेन भूमिं समाकृष्य शुद्धवस्त्रे न्यसेत्ततः ४६
गन्धपुष्पादिनाभ्यर्च्य वस्त्रेणाच्छादयेत्ततः
शिरसावाहयित्वाथ शूलस्त्रे ++ समन्वितः ४७
सर्वालंकारसंयुक्तं ब्रह्मघोषसमन्वितम्
प्रविशेदंकुरस्थानं कुमुदेशं समर्चयेत् ४८
मृदं वामेन संग्राह्य घटिकादिषु विन्यसेत्
पुण्याहं वाचयेत्तत्र प्रोक्षयेद्धृदयेन तु ४९
तज्जलं विसृजेद्बीजपात्रे चन्द्रमनुस्मरन्
याजा इति समं जप्त्वा धेनुमुद्रां प्रदर्शयेत् ५०
वायवेच्छिवमन्त्रेण घटिकादि यथा क्रमम्
घटिका पालिका चैव शरावं च यथा क्रमम् ५१
संपूज्यगन्धपुष्पाद्यैर्नैवेद्यं दापयेद्गुरुः
प्रोक्षयेद्धटिकादीनि सोमकुम्भजलेन तु ५२
वस्त्रेणाच्छादनं कृत्वा बलिं चैव समाचरेत्
ततः प्रभातसमये स्नानं कृत्वाऽथ देशिकः ५३
चन्द्रं संपूजयेद्विद्वान् सामान्यार्घ्यजलेन तु
पालिकादीनि बीजानि सेचयेन्मूलमन्त्रतः ५४
विधाय शुद्धवस्त्रेण बलिमश्रेनयेत्ततः
शिल्पिकर्मावसाने तु सदनं सम्प्रविश्य च ५५
अन्तर्बहिश्च सम्मार्ज्या कुशाग्रेणैव बुद्धिमान्
प्रोक्षयेत्पञ्चगव्येन क्षाळयेच्छुद्धवारिणा ५६
तिलतैलेन वालिप्य प्रोक्षयेत्तु शिवाम्भसा
उशीरं मेघसिद्धार्थं चन्द्र +++ मृगमददुयम् ५७
कृष्णगन्धसमायुक्तं दत्त्वादीपं प्रदापयेत्
ततः सम्प्रोक्ष्य गव्येन प्रकारेण यथाक्रमम् ५८

मार्जनं प्रोक्षणं कृत्वा मध्ये नवपदं ग्रहेत्
विदिक्षु नवकं स्थाप्य शेषांश्च परिवर्जयेत् ५९
अनले नैर्ऋते कोणे वायुदेशे त्वदीशके
मध्यमे नवकं स्थाप्य गन्धपुष्पादिनार्चयेत् ६०
मध्यमे शिवकुम्भं च शक्रकुम्भं तथानले
श्रीकण्ठं नैर्ऋते कुम्भे माधवं वायुकोणके ६१
ईशकोणे विधातारं लोकेशान् परितो यजेत्
आचार्यो मूर्तिपैस्सार्धं पुण्याहं वाचयेद्बुधः ६२
ततो विमानमारुह्य मूर्तिपैस्सह देशिकः
बिम्बानस्त्रेण सम्पूज्य पटेनाच्छादयेद्बुदा ६३
नेत्रवस्त्रं समादाय भूरेखां प्रथमं लिखेत्
द्वितीयं पक्ष्म रेखां च तृतीय श्वेतमण्डलम् ६४
चतुर्थं मण्डलं कृष्णं पञ्चमं ज्योतिमण्डलम्
देशिकस्य नियोगेन लिखेयुर्मूर्तिपान् क्रमात् ६५
ततश्शिल्पिनमाहूय नेत्रं सव्यक्तमाचरेत्
शिखरे बिन्दुवृत्तं च लेखयेदतिसुन्दरम् ६६
प्रासादर्म्मबकमेवेति विद्याते तत्प्रभञ्जन
ततः शिल्पिनमुद्वास्य मन्वाज्याभ्यं तु दापयेत् ६७
प्रच्छन्नपटमावर्ज्यधनराशीन् प्रदर्शयेत्
प्रोक्षयेत्कलशाम्भोभिः दर्पणे चाभिषेचयेत् ६८
प्रासादस्य चतुर्दिक्षु गोमयेनानुलेपयेत्
धाराभिषेचनं कुर्यात् दर्पणोपरिदेशिकः ६९
यामं वाचार्धयामं वा घटिकाद्वयमेव वा
स्नानमथा वापि जलाधिवासनं नयेत् ७०
पुण्याहं वाचयेद्विद्वान् लिङ्गशुद्धिं समाचरेत्
पञ्चमृत् पञ्चगव्यैश्च बिल्वपत्रैश्च घर्षयेत् ७१
इष्टिकस्तृपिकीलं च क्षाळयेदस्त्रवारिणा
प्रोक्षयेच्छिवमन्त्रेण भवनं देशिकोत्तमः ७२
ब्राह्मणान् भोजयेत्तत्र गोमयेनानुलेपयेत्

पुरायाहं प्रोक्षणं कृत्वा प्रासादे मुखमराडपे ७३
स्थरिडलं शालिभिः कृत्वा सप्तविंशाङ्गुलान्तरम्
अङ्गुलत्रयविस्तारं नन्दनन्दपदं लिखेत् ७४
ब्रह्मादिदेवताः पूज्य वास्तुकुम्भपुरस्सरम्
दध्योदनबलिं दत्त्वा ताम्बूलं दापयेत्पृथक् ७५
धूपदीपैस्समभ्यर्च्य शिवाग्निं परिकल्पयेत्
ब्रह्माद्यानपिदेवास्ताः अग्निमध्ये समर्चयेत् ७६
समिदाज्येन चरुणा हुत्वाप्रत्येकमाहुतिम्
तिलतराडुलमिश्रेण हुत्वा तत्तत्स्वनामतः ७७
हयवाहेन मन्त्रेण होमयेत्तदनन्तरम्
जयादिरभ्यादानं च क्रमाद्राष्ट्रभृतं हुनेत् ७८
पूर्णाहुतिं ततो दत्त्वा पर्यग्निकरणं नयेत्
अन्तर्बहिश्च सर्वत्र प्रारम्भमराडपादिकम् ७९
पञ्चगव्येन सम्प्रोक्ष्य वास्तुकुम्भजलेन च
कृणुष्वपाजमन्त्रेण संप्रोक्ष्य हृदयेन च ८०
उल्कान्त्यक्त्वा तद्बाह्ये देशिकस्नानमाचरेत्
ततो मराडपमासाद्य भूतशुद्धिं समाचरेत् ८१
मराडपस्योत्तरे देशे स्थूपिकीलेष्टकं न्यसेत्
भस्मगैरिकया वापि शालिपिष्टेन वा पुनः ८२
विलिखेक्षरन्यासं वाद्यघोषपुरस्सरम्
लक्ष्मीशं द्वादशादित्यं शक्तिरूपं शिवात्मकम् ८३
प्राग्यम्य पश्चिमे सौम्ये विलिखेदिष्टिकोपरि
स्थरिडलोर्ध्वे न्यसेद्धीमान् रक्षाबन्धनमाचरेत् ८४
शिवाग्रे स्थरिडलं कृत्वा शुद्धदेशोत्थ सेचतैः
स्थूपिकीलेष्ट याश्च देवतानां च देशिकः ८५
समस्थाप च बन्धस्य रक्षासूत्रं च बन्धयेत्
उक्तपुष्पैस्समभ्यर्च्य लिङ्गस्य पूरणं यथा ८५
विधाय नववस्त्रेण शिवलिंगं च सत्कृतम्
पादप्रक्षालनं कृत्वा मराडपं विधिनार्चयेत् ८६

शिवाग्रे स्थरिडलं कृत्वा शुद्धदेशोत्थ सैकतैः
अग्न्याधानादिका सर्वं पूर्वोक्तविधिनानयेत् ८७
समिधाज्येन चरुणा प्रत्येकं षोडशं हुनेत्
शिवाङ्गैश्चैव विद्याङ्गैर्मध्यमाभ्यां गतैरपि ८८
प्रासादबीजमुख्यैश्च स्पर्शाहुतिमथाचरेत्
शिवाग्रे स्थरिडलं न्यस्त्वा पूर्णकुम्भं च वर्धनीम् ८९
घटमध्ये समावाह्य लिङ्गदेवं स्वमूलतः
आवाह्यवर्धनीं मध्ये पीठाद्देवि मनोरमाम् ९०
पूर्वाद्यैशानपर्यन्तमष्टविद्येश्वरान् क्रमात्
संपूज्यगन्धपुष्पाद्यैः नैवेद्यं दापयेद्बुधः ९१
पूर्णाहुतिं ततो हुत्वा शिवकुम्भादिकां ग्रहेत्
बाललिङ्गं परित्यज्य शिवास्त्रेणैव देशिकः ९२
परिवारघटोपेतं शिवकुम्भं च वर्धनीम्
विन्यसेच्छिववेद्यूर्ध्वे वृषभासनसंयुते ९३
अधर्मवेदिके विद्वान् इष्टिका न्यसेत्क्रमात्
राक्षसे स्थूपिकीलं च शयनोपरि विन्यसेत् ९४
प्रासादकलशं त्वीशे पूर्वे चैन्द्रघटान्यसेत्
दक्षिणं दक्षिणे कुम्भं विष्णुकुंभं च पश्चिमे ९५
उत्तरे ब्रह्मकुम्भं च विन्यसेत्तु यथाक्रमम्
परिवारघटान् स्थाप्य तत्तत्कुम्भप्रदक्षिणम् ९६
संपूज्य पूर्वमार्गेण प्रासादकलशोदकान्
आचार्यस्त्वीशके कुरडे शिवाग्निं संप्रकल्पयेत् ९७
शुद्धपात्रे समानीय पावकं लोकिकं यथा
प्रोक्षयेच्छिवमन्त्रेण हृदिना पञ्चधा भवेत् ९८
एकांशमिन्द्रभौमार्थं एकांशं दक्षिणार्हकम्
एकांशं विष्णुहोमार्थं एकं ब्रह्महुतार्हकम् ९९
एकांशं तु प्रधानं स्यात्तत्तत्कुरडे प्रदापयेत्
कृत्वा तु कुरडसंस्कारं मध्ये वागीश्वरौ न्यसेत् १००
आग्नेमन्त्रेण सम्प्रोक्ष्य भावयेदनलत्रयम्

गन्धपुष्पादिभिः पूज्य अमृतीकरणं कुरु १०१
कुण्डमध्ये न्यसेन्मन्त्री पावकं तस्य बीजतः
आवाहनादि विवाहान्तं अग्निकार्योक्तमाचरेत् १०२
देशिकस्य नियोगेन मूर्तिपास्सादनान्तरम्
तत्तद्वेद्यग्रके कुण्डे होमकर्म समाचरे १०३
समिदाज्य चरूनल्लाजमाषशालि तिलक्रमात्
सद्यादीशानपर्यन्तं हुत्वातद्बीजसंयुतम् १०४
शतमर्धं तदर्धं वा षोडशं वाहुतिं नयेत्
स्थूपिकीलष्टिकाधारलिङ्गपीठाधिदेवताम् १०५
हुत्वा स्पृष्ट्वा तु जपान् द्रव्यं प्रतिविशेषतः
अथवा सफले कुम्भे स्पर्शाहुतिमथाचरेत् १०६
द्रव्यान्ते व्याहृतिं हुत्वा हव्यवाहं समाचरेत्
ततो जागरणं रात्रौ प्रभाते स्नानमाचरेत् १०७
भूतशुद्धिं ततः कृत्वा प्रविशेद्गर्भगेहकम्
संत्यज्य कौतुकं वस्त्रं मुक्तापुष्पाधिकं कुरु १०८
स्नापयेद्देवदेवेशं पूर्वोक्तविधिना बुधः
गन्धपुष्पादिभिः पूज्य पूर्णाहुतिमथाचरेत् १०९
स्थूपिकीलेष्टका कुम्भे प्रासादशिवकुम्भकम्
शिरसावाहयित्वा तु प्रदक्षिणमथाचरेत् ११०
सर्वालंकारसंयुक्तं यजमानसमन्वितम्
द्वारपूजा समाने तु लिङ्गाग्रे स्थापयेद्घटम् १११
ततो विमानमारुह्य पुण्याहं वाचयेद्गुरुः
शिरोरक्तं च संक्षाल्य स्थापयेच्चतुरिष्टकाम् ११२
सुधयालिप्य तस्योर्ध्वे नवरत्नानि विन्यसेत्
तदूर्ध्वे स्थूपिदण्डं च स्थापयेदीशमन्त्रतः ११३
प्रोक्षयेत्तेन मन्त्रेण स्थूपिकुम्भजलेन तु
गन्धपुष्पैस्समभ्यर्च्य नैवेद्यं दापयेद्गुरुः ११४
ततः शिल्पिनमाहूय विमानाङ्गानि पूजयेत्
गव्येन क्षाळयेत्पश्चात् शिवास्त्रेणैव देशिकः ११५

ततः पुण्याहमारभ्य मन्त्रन्यासमथाचरेत्
भुवनाध्वात्वधिष्ठाने तत्त्वाध्वापादवर्गके ११६
पदाध्वाप्रस्तरे न्यस्त्वा वर्णाध्वादळवर्गके
मन्त्राध्वा शिखरे न्यस्त्वा स्थूपिवर्गे कलान्यसेत् ११७
कुम्भान्मन्त्रं समादाय स्थूप्यन्ते विन्यसेद्बुधः
सर्वेषां सात्मदेवानां हृत्प्रदेशेषु विन्यसेत् ११८
तत्तन्मूलेन सम्प्रोक्ष्य दर्पणे चाभिषेचयेत्
ततो गर्भगृहं गत्वा पुण्याहं वाचयेद्गुरुः ११९
सुमुहूर्ते च संप्राप्ते मन्त्रन्यासं समाचरेत्
कुम्भमध्ये गतं मन्त्रं लिङ्गमध्ये तु विन्यसेत् १२०
शक्तिबीजं समादाय पीठिकोपरि विन्यसेत्
अभिषिक्तस्य देवस्य पायसान्नं निवेदयेत् १२१
स्थापयेत्सर्वकलशैर्यागकुम्भपुरस्सरम्
गन्धैः पुष्पैस्समभ्यर्च्य महाहविर्निवेदयेत् १२२
तदाप्रभृतिदेवेशमर्चयेदर्चनोक्तवत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः १२३
मूर्तिपान् पूजयित्वाथ देवज्ञं संप्रपूजयेत्
अद्ध्येत्रं परिचारांश्च दक्षिणादापयेत्ततः १२४
तद्दिनक्रपणादीनां अन्नपानादिकं ददेत्
एवं यः कुरुते मर्त्यः सपुण्यांगतिमाप्नुयात् १२५
नैमित्तिकविधिस्त्वैतत् बालस्थापनं शृणु १२६
इति सप्तमतन्त्रे क्रियापादे नैमित्तिकविधिपटलः

## अर्धयामपूजाविधिपटलः

अर्धयामार्चनं वक्ष्ये सायं सन्ध्यावसानके
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः १
पञ्चगव्यं तु सङ्कल्प्य पञ्चामृतं तथैव च
द्वारदेवान् समभ्यर्च्य यवनीकां परित्यजेत् २
पीठाग्रे रुद्रमभ्यर्च्य धूपदीपं समाचरेत्

पञ्चगव्यं तु संस्नाप्य गन्धतैलं समाचरेत् ३
श्रीषं पिष्टं च चूर्णञ्चामलकं रजनिचूर्णकम्
पञ्चामृतेन संस्नाप्य जलस्नानान्तरान्तरे ४
मन्त्रपुष्पं समभ्यर्च्य मन्त्रान्नं च निवेदयेत्
वस्त्रखराडेन सम्मार्जश्वेतवस्त्रेण वेष्टयेत् ५
शुक्लयज्ञोपवीतं च गन्धपुष्पैरलङ्कृतम्
नैवेद्यं चोपदंशं च अपूपानि निवेदयेत् ६
धूपदीपं समादाय भस्मताम्बूलमेव च
भूतबल्योत्सवं चैव कामार्थं तु विशेषतः ७
उपचाराणि सर्वाणि दापयेत्तु विशेषतः
बेरं वा पादुकं वापि शिबिकोर्ध्वे समाचरेत् ८
पादुकारोपणं चैव रक्तवस्त्रोवियानकम्
चत्रचामरसंयुक्तं सर्वालङ्करसंयुतम् ९
दीपज्वलासमायुक्तं गजाश्वनरसेवितम्
अष्टादशायुतं वापि दशायुधसमाचरेत् १०
स्तोत्रध्वनिसमायुक्तं ततनृत्तादिवाद्यकैः
खड्गखेटकसंयुक्तं जलिपात्र समन्वितम् ११
ताम्बूलसंग्रहं वस्त्रमुच्छिष्टस्वर्णपात्रकम्
शयनालयं विना चैव देव्यालयं समाचरेत् १२
पादप्रक्षालनं कृत्वा मराडपान्ते प्रविश्य च
शयनस्थानदेशे तु पर्यङ्कोर्ध्वे समाचरेत् १३
देवीमावाह्य तत्काले वस्त्रोर्ध्वे शयनान्वितम्
नैवेद्यं चोपदंशं च अपूपं च विशेषतः १४
श्वेतताम्बूलसंयुक्तं धूपदीपसमन्वितम्
वेदस्तोत्रसमायुक्तं गीतनृत्तसमन्वितम् १५
गन्धमाल्यं च ताम्बूलं जलपात्रेस्थितिग्रहेत्
लयाङ्गपूजावसाने तु क्षेत्रपालार्चनं शृणु १६
स्नाननैवेद्यताम्बूलं धूपदीपं समाचरेत् १७

इति सूक्ष्मागमे अर्धयामपूजाविधिपटलः

## प्रदोषपूजाविधिः

प्रदोषयजनं वक्ष्ये शृणुष्वं तत्प्रभंजन
आयुरारोग्यजयदं सर्वयज्ञफलप्रदम्  १
सर्वपापहरं पुण्यं सर्वशत्रुविनाशनम्
त्रयोदश्यामहोरात्रं यजनं चोत्तमं भवेत्  २
मद्ध्यमापरविद्धा च पूर्वविद्धा च कन्यसा
सायं काले त्रयोदश्यां तत्परं च चतुर्दशी  ३
आदित्यास्तमयात्पूर्वे त्रिपादेन त्रिनाडिका
रवेरस्तमयात्पूर्वे यामपादावसानके  ४
यावदस्तमनान्तं च तावत्पूजां समर्चयेत्
देशिकश्शिष्यसंयुक्तं पूर्ववत्स्नानमाचरेत्  ५
नवाम्बरधरोष्णीष शुक्लयज्ञोपवीतकम्
ततस्सन्ध्यामुपासीत मण्डपान्ते प्रविश्य च  ६
रुचिरासनसंयुक्तं भस्मन्यासं समाचरेत्
देवाग्रे स्थण्डिलं कृत्वा विघ्नेशं पूजयेत्ततः  ७
पुण्याहं वाचयेत्तत्र पञ्चगव्यामृतैस्तथा
तण्डुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत्  ८
नवकुम्भान् समादाय तन्तुना वेष्टयेत्ततः
वस्त्रकूर्चसमायुक्तं रत्नहेमाश्च संयुतम्  ९
नाळिकेरसमायुक्तं लम्बकूर्चापिधानकम्
स्थण्डिलोपरिविन्यस्य गन्धपुष्पैस्समर्चयेत्  १०
द्वारपालान् समभ्यर्च्य गर्भगेहं प्रवेशयेत्
पञ्चगव्येन संस्नाप्य पञ्चामृतं तथैव च  ११
लिङ्गशुद्धिं ततः कृत्वा पीठशुद्धिं स्थलं क्रमात्
प्रस्थं प्रस्थद्वयं चैव आढकं च त्रिधामतम्  १२
घृतस्नानं ततः कृत्वा शुद्धतैलाभिषेचयेत्
कदलीनालिकेरं च पिष्टमुद्गं च शीर्षकम्  १३
शुद्धतोयाभिषेकं च उष्णोदकमथापि वा
धामप्रदक्षिणं कृत्वा उष्णोदैरभिषेचयेत्  १४

स्कन्दसूक्तं च रुद्रं च अन्यमन्त्राणि वर्जयेत्
मन्त्रपुष्पं ततः कृत्वा मन्त्रान्नं च निवेदयेत् १५
वस्त्रैराभरणैर्माल्यैरलङ्कृत्य विशेषतः
कृसरान्नं निवेद्यं च शुद्धान्नं च निवेदयेत् १६
उपदंशसमायुक्तं दध्याज्यकदळीगुलम्
पानीयं मुखवासं तु ताम्बूलं तु निवेदयेत् १७
वृषाग्रे स्थण्डिलं कृत्वा पञ्चगव्यं तु साधयेत्
नवकुम्भसमायुक्तं कूर्चस्नानादिसंयुतम् १८
कुम्भे वृषासनं पूज्य वृषाणीं पश्चिमे न्यसेत्
उक्षं च शृङ्गिणं नन्दीं वेदपादं च गोपतीम् १९
उग्रशृङ्गं वृषं नाथं वृषेशस्याष्टपालकम्
स्वस्वमन्त्रैस्समभ्यर्च्य वामभागेऽभिषेचयेत् २०
वस्त्रगन्धं च माल्यं च पुष्पमाभरणं तथा
देवताह्वानवाद्यैश्च घोषयेत्तत्परस्सरम् २१
रङ्गे वा शिबिकायां वा गजके वा शिरस्तथा
अर्घ्यं पुष्पं हविः पात्रं बलिबेरसमन्वितम् २२
द्वारादिबलिपीठान्तं वर्जयेत् स्तोत्रनृत्तकम्
शनैः प्रदक्षिणं कृत्वा देवमाभरणं प्रति २३
पादप्रक्षालनं कृत्वा तूष्णीं नीराजनं क्रमात्
इन्दुशेखरमावाह्य मूललिङ्गे समर्चयेत् २४
पश्चात्कृत्वाग्निकार्यं च प्रदोषयजनं तथा
पचनालये तथाग्नेय्यां कुण्डे वा स्थण्डिलेऽपि वा २५
समिदाज्य चरून् लाजान् प्रत्येकं षोडशं हुनेत्
कुण्डस्य दक्षिणे भागे विद्येशानां बलिं ददेत् २६
हुतशेषे समादाय मूललिङ्गे समर्चयेत्
धूपदीपं समादाय पश्चादारात्रिकं ददेत् २७
कार्पासबीजलवणं तिलं वै निम्बपत्रकम्
भामयेल्लिङ्गमूर्ध्नासु भसितं पुरुषेण तु २८
ऋग्वेदं च यजुर्वेदं सामवेदमथर्वणम्

स्तोत्रनृत्तं च गानं च चुलुकोदकमतः परम्  २९
महेशप्रतिमादीनां स्नानान्ते स्नानमाचरेत्
नैवेद्यान्ते निवेद्यं स्यात् दीपान्ते दीपमाचरेत्  ३०
मुद्गान्नं दापयेत्पश्चाद्वृषगायत्रिमन्त्रतः
तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि
तन्नोवृषः प्रचोदयात्  ३१
पानीयाचमनं दत्त्वा ताम्बूलं मुखवासकम्
धूपदीपसमायुक्तं भस्मदूर्वाक्षतैस्तथा  ३२
वृषणस्पर्शनं कृत्वा शृङ्गमध्यावलोकनम्
ततो जनेभ्यस्ताम्बूलं भस्मरक्षां समापयेत्  ३३
द्वारादि वाहनान्तं च पूजयेत्तु प्रदोषके
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः  ३४
भक्तानां परिचाराणां यथा शक्त्याश्च दक्षिणा
प्रदोषे शंकरं पूज्य शिवलोके महीयते  ३५
परिवारघटानष्टौ वाहनायुधविग्रहान्
भक्तादिप्रतिमां चैव स्थापनं चैकलग्नके  ३६
इति सूक्ष्मशास्त्रे प्रदोषपूजाविधिपटलः

## अयुतस्नपनविधिः

अयुतस्नपनं वक्ष्ये श्रूयतां निधनेश्वरः
सर्वशत्रुक्षयकरं शिवसायुज्यकारणम्  १
तस्मात्सर्वप्रयत्नेन अयुतस्नानमाचरेत्
सर्वमासेषु कर्तव्यं प्रतिष्ठादिषु योग्यकम्  २
कर्तृजन्मदिने वापि पुण्यकालेऽथ मङ्गले
युद्धारम्भेऽवसाने वा अयुतस्नानमाचरेत्  ३
एवं कालविधानज्ञो तदर्थं मण्डपं शृणु
पञ्चविंशत्समारभ्य पक्षहस्तविवर्धनात्  ४
चत्वारिंशत्करं मानसूत्रं तदुच्यते
चतुःषष्टिगात्रयुक्तं वार्धयुक्तमशीतिकम्  ५

मण्डपं वा प्रपां वापि कूटाकारमथापि वा
चतुर्द्वारसमायुक्तं भद्रयुक्तं तु मण्डपम् ६
भद्रं सोपानयुक्तं तु हस्तहस्तविभूषितम्
सर्वलक्षणसंयुक्तं तोरणाद्यैरलङ्कृतम् ७
कलशान् क्षालयेद्धीमान् सूत्रेणैव तु वेष्टितान्
मनोरम्येऽन्यदेशे वा दर्भैः शर्योपरि न्यसेत् ८
अधोमुखं शयित्वा तु एककूर्चोपरि न्यसेत्
अस्त्रमन्त्रेण संप्रोक्ष्य कलशान् गृह्य देशिकः ९
प्रधानद्रोणपूर्णं च शिवपूर्णं च वर्धनीम्
द्वादशप्रस्थपूर्णं तु अन्यत्सर्वघटं प्रति १०
आढकप्रस्थमेकं वा त्रिप्रस्थं वा द्वितीयकम्
द्विप्रस्थं वा तृतीयं तु कलशानां विधीयते ११
तन्तुना त्रिगुणीकृत्य कलशानां सुयोजयेत्
त्रिगुणद्विगुणीकृत्य अन्यत्कुम्भानि योजयेत् १२
त्रिगुणं त्रिगुणीकृत्य शिवकुम्भस्य वेष्टयेत्
एकतन्तुविहीनं तु वर्धनीं योजयेत्सुधीः १३
शिवकुम्भस्य वस्त्रं च उत्तमं युग्ममेव च
उत्तमं कूर्चमेवं तु नवरत्नानि विन्यसेत् १४
साध्यनिष्कसुपुष्पं च सप्तकाञ्चनमेव च
गालितं गन्धतोयेन शिवकुम्भं च पूरयेत् १५
आम्रपल्लवसंयुक्तं नालिकेरसमन्वितम्
लम्बकूर्चसमायुक्तं शिवकुम्भस्य लक्षणम् १६
वस्त्रमध्यमयुग्मं तु कूर्चमध्यममेव च
अर्धनिष्कसुपुष्पं च पञ्चरत्नानि योजयेत् १७
रजनीतोयपूर्णं च नालिकेरं च पल्लवम्
लम्बकूर्चसमायुक्तं वर्धनीलक्षणान्वितम् १८
अन्यत्कुम्भानि सर्वाणि वस्त्रकूर्चं च मध्यमम्
स्वर्णपादेन पुष्पं च नालिकेरं च पल्लवम् १९
कन्यसाम्बरकूर्चादि कलशानां विधीयते

आम्रपत्रैकसंयुक्तं कलशानां पृथक्पृथक् २०
पदं प्रति विशेषेण कलशद्वयसंयुतम्
एतत्पूर्वे द्रव्यदेवाश्च क्रमेणैव चोच्यते २१
सहस्रद्वयमेवं च गुरुणोक्तविधानतः
प्रथमं शोधयेद्भूमिं अस्त्रमन्त्रेण देशिकः २२
गोमयालेपनं कृत्वा घोरमन्त्रेण बुद्धिमान्
सूत्रन्यासमघोरेण सूत्रसंख्याक्रमं शृणु २३
प्रागग्रमुदगग्रं च चतुः सूत्रं प्रसारयेत्
एवं नवपदं ग्राह्य मध्यभागे विशेषतः २४
पूर्वाग्रमुत्तराग्रं च द्विद्विकुम्भं प्रसारयेत्
शंक्रन्तमध्यमे स्थाप्य भ्रामयेत् तु शनैः शनैः २५
सूत्रं त्रयोदशान्तं तु रवेष्वैकैकतालकम्
मध्ये द्वितालविस्तारं चतुर्द्वारं च संमतम् २६
नवमावरणं ग्राह्य कलशसंख्यां ततः शृणु
युगाश्रे साष्टकलशान् तन्मध्ये शिवकुम्भकम् २७
मध्यं ईशानयोर्मध्ये वर्धनीं न्यस्य देशिकः
अष्टचत्वारि षष्टिं च द्विसप्तति यथाक्रमम् २८
अशीतिसंख्यया प्रोक्तं विंशरूर्ध्वशतं भवेत्
चत्वार्यधिशतं प्रोक्तमष्टचत्वारि संयुतम् २९
द्विपञ्चाशत्समायुक्तमशीतिशतसंयुतम्
द्विद्विसंख्याक्रमेणैव द्विसहस्रं क्रमान्यसेत् ३०
सहस्रद्वयमराख्यातं महाशासु हुनेत्ततः
लवङ्गं चैव कर्पूरं नालिकेरफलत्रयम् ३१
कदलीफलं च पनसं विष्णुक्रान्तिसमं भवेत्
पञ्चगव्यादिसंयुक्तद्रव्यमेवं विधीयते
गौरी चण्डेशनन्दीशो महाकालश्च माधवः ३२
गणान् गणेशस्कन्दं च महालक्ष्मी नवान्तकम्
शिवं प्रधानकुम्भे तु वर्धन्यां तु मनोन्मनीम् ३३
परितश्चाष्टकुम्भेषु विद्येशानां प्रपूजयेत्

देवद्रव्याणि चान्यत्र पूर्वमेव सुभाषितम् ३४
अन्यानि पदमेकैकत्रिंशत्सूत्राणि पातयेत्
पूर्वाग्रमुदगग्रं च चीधधीनां त्वष्टसंख्यया ३५
पञ्चविंशति व्यूहानि नवव्यूहं च मध्यमे
गृहीत्वा तु चतुष्कोणं तत्तद्व्यूहं प्रकल्पयेत् ३६
महाशासु चतुर्व्यूहं होमं चापि जपं भवेत्
मध्यभागे विशेषेण महेशं संप्रकल्पयेत् ३७
एकैकं कोणदेशे तु महाशासु चतुष्टयम्
आवृतं भानुसंख्या च कलशान् विंशतिर्भवेत् ३८
विंशद्व्यूहं समाख्यातं व्यूहं प्रति विचक्षणः
व्यूहेशं कुम्भमेकं तु आवृतद्वयमेव च ३९
चतुर्विं शत्पदं कुर्यादेकैकं कलशद्वयम्
एकविंशतिव्यूहे तु सहस्रकलशे मतम् ४०
एवं कलशमाख्यातं द्रव्याणां विधिरुच्यते
पाद्यमाचमनं चैव मध्यव्यूहे प्रकल्पयेत् ४१
तिलं च सर्षपं चैव नीवारं यवमेव च
नारङ्गद्वयकं चैव उशीरं चन्दनं तथा ४२
तक्कोलं कोष्ठमेवं तु पत्रं जातिघनं भवेत्
हिमं कुङ्कुमकस्तूरि तुटितांब्रूवरालकम् ४३
दूर्वा च द्रोणमेवं च पाटली राजपुष्पकम्
मन्दारं करवीरं च रक्तमन्दारमालती ४४
अगरुद्वयं च लाजं च लाजचूर्णं च भस्मकम्
निर्गुण्डी तुलसी चैव मुण्डी वारि तृणं भवेत् ४५
सक्तुचूर्णं च भद्रा च श्वेतवोध्रं प्रकल्पयेत्
व्यूहेशान् स्वर्णपुष्पं च प्रधाने तु विचक्षणः ४६
स्वर्णपुष्पं च रत्नं च पूर्ववत् परिकल्पयेत्
एव द्रव्यं समापाद्य तत्तदावरणे न्यसेत् ४७
द्रव्याणामेव विन्यासं देवानां विधिरुच्यते
विद्येशान् भास्करं चैव मध्यव्यूहे प्रकल्पयेत् ४८

इन्द्रादीनां च वज्राद्यव्यूहेशानां प्रकल्पयेत्
अनन्तो नाथसूक्ष्मश्च किमर्देऽपि द्रुमस्तथा ४९
किरीटो किंशुपाणीं च सर्वपाणिप्रदेश्वरः
वसुप्रदेशो वक्षस्थो खड्गपाणि निकुब्जकम् ५०
कल्मषः कार्तिकेयश्च करण्डः कालदेहकः
कापाली पिशुनश्चैव शङ्कुकर्णो गदाधरः ५१
पेचकः पक्षनाहश्च वल्कलाधरवासिनः
कृशानुः पण्डुदेहश्च वायुर्षाणिस्तथैव च ५२
रक्ताङ्गी कृष्णरागी च पीताङ्गी श्वेतरागिणी
विवर्णी वीरभद्री च कंसः कारण्डनायकः ५३
वसुप्रिया वसुमतीं त्येवमावरणान्यसेत्
हेमशाली महाशाली सौगन्धिकमथोत्तमा ५४
मध्यव्यूहे विशेषेण चाष्टद्रोणैश्च शालिना
व्यूहानामाढकप्रस्थं तदर्धं स्थण्डिलं भवेत् ५५
तदर्धं तिलमित्युक्तं तदर्धं लाजमेव च
शालीनां प्रस्थमेवं तु कलशानां पृथक्पृथक् ५६
स्थण्डिलं कल्पयेद्धीमान् बहुरूपमनुस्मरन्
गुरूपदिष्टमार्गेण पूजयित्वा यथाक्रमम् ५७
नवाग्निर्वाथ पञ्चाग्निस्त्वेकाग्निर्वा समाचरेत्
पूर्ववद्धोमकार्यं तु वह्नात्कुम्भे तु योजयेत् ५८
पूर्ववत्सर्वमेवं तु देवताद्रव्य उच्यते
पाद्यमाचमनं चैव मध्यव्यूहे प्रकल्पयेत् ५९
अर्घ्यं च पञ्चगव्यं च इक्षुसारं फलं तथा
पनसाम्रफलं चैव नवनीतं रसं तथा ६०
गुग्गुलं सिकतं माषं पलाशं पद्मतुण्डकम्
नारङ्गो दाडिमी कुन्दः कपित्थस्य शरल्यकाः ६१
बिल्वपत्रं तपस्वी च तुलसी गन्धपत्रकम्
धात्री च माधवी चैव हरेणुः कर्णिकारकम् ६२
एलालवङ्गकर्पूरचन्दनं श्वेतजीरकम्

पद्मं दान्तं च श्वेताब्जं क्रज जातिमेव च ६३
नीलोत्पलं च कुमुदं चम्बकं च स्थलारकम्
मुद्गमाषतिलं चैव श्वेतलोध्रं च गैरिकम् ६४
विद्येश्वरघटान्यष्टौ द्रव्यं वाथ पृथक्पृथक्
विद्येश्वरं च वृषभं कारणेशं हलारिणम् ६५
प्रेतेशं पुरुषं चैव कुद्धं पापविनाशनम्
करेशं वालिनं दण्डं पिङ्गाक्षमप्रमं हरम् ६६
वारणं वर्णिनं ह्वासं करण्डं कुण्डलाक्षरम्
पाशधारिं सिंहनादं खड्गधारिं महेश्वरम् ६७
चक्रधारिं सिंहनादं परशुधारिं सृणीधरम्
दुर्गां ज्येष्ठां च मातृं च नवमातृं च दीपिकाम् ६८
जलेशी हर्षीं चैव पर्वतेशीं वनेश्वरीम्
पक्षिणीं पर्णदेहं च पञ्चमीं केशधारिणीम् ६९
चिन्तामणीं कामरूपीमेते देवाः प्रकीर्तिताः
+++ पूर्वमेवं तु देवताद्रव्यमुच्यते ७०
परास्त्रम्मञ्जरी चैव मध्यव्यूहे प्रकल्पयेत्
अष्टमृद्वल्कलोदं च लोहं धातुजलं भवेत् ७१
स्वर्णोदकं च रत्नं च जलं कान्तोदकं भवेत्
फलोदकं च पत्रं च पुष्पोदकमतः परम् ७२
रजतोदकं च कर्तव्यं मार्जनोदकमेव च
परिमार्जनं चन्द्रजलं कन्दोदं गव्यमेव च ७३
बीजोदकं कृष्णजलं गन्धोदकमनन्तरम्
अष्टमृद्वल्कलं चैव गव्यं धातु पृथक्पृथक् ७४
एवं द्रव्यं समाख्यातं व्यूहं प्रति विशेषतः
विद्येशानां च वामादीन् वृषभं पावकं तथा ७५
मातृन्विघ्नेश्वरं चैव स्कन्दज्येष्ठान् तथैव च
दुर्गां सूर्यं च वह्निं च पितरं च यमं तथा ७६
रोहिण्याश्वनिकृत्तिं च बलं च निर्ऋृतिं तथा
अप्सरं वरुणं चैव वायुऋषयमेव च ७७

रुद्रं चैव क्रमेणैव खकारान्तं क्रमेण तु
एतानि देवताप्रोक्तनिर्ऋृतौ च प्रवक्ष्यते ७८
सर्वं पूर्ववदुद्दिष्टद्रव्यदेवानिहोच्यते
हिमतोयं मध्यमे चैव कलशं प्रति विनिक्षिपेत् ७९
दशपुष्पं क्रमेणैव क्षीरादिद्रव्यपञ्चकम्
बृहतीद्वयं च लिकुचं श्वेतार्कद्रोणपुष्पकम् ८०
दशपत्रं च तन्द्रलं क्रमेण विनिवेशयेत्
अनन्तादिः शिखण्ड्यन्तान् भृगुरन्यं तथैव च ८१
सोमश्च क्षेत्रपालश्च ईशद्वादश भास्करः
विक्रमो नक्रपादश्च द्विकेशोरूर्ध्वकेशनः ८२
सनन्तश्च क्रमेणैव तत्तत्प्रथममेव च
गकारादिफकारान्तमधिदेवानतः परम् ८३
स्वस्वमन्त्रैः समभ्यर्च्य गुरुणोक्तविधानतः
सर्वं पूर्ववदेवं तु द्रव्यदेवानिहोच्यते ८४
मध्यव्यूहे विशेषेण मुक्तं पुष्पमिति स्मृतम्
दशपत्रं रुद्रपर्णी चूतपुष्पद्वयं मतम् ८५
सञ्जरं सार्जरं माञ्जी मञ्जरीव च सम्मतम्
पटोलगुग्गुलं माषत्रपुषं कोष्ठमेव च ८६
पुन्नागं शङ्खपुष्पं च श्रियावर्तद्विकर्णिका
बहुकर्णिका च मन्दारं कुरवं जातिमालती ८७
लक्ष्मीवकुलश्वेतार्कं मालती श्वेतलोद्ध्रकम्
अतसी विषकासीम भद्रा च क्रमतो गतः ८८
एवं द्रव्यं समाख्यातमनन्तादिरिहोच्यते
द्वितीयं सर्पकाजं च मध्यमे तु विशेषतः ८९
मेषाद्यधिपतिश्चैव क्षेत्राधिपतीनपि
श्रीधरश्च क्रमेणैव पूजयेत्तु यथाविधि ९०
पूर्ववत् सर्वमेवं तु द्रव्यदेवान् विधिं शृणु
महाभद्रा पलाशं च श्रद्धारं मौसली तथा ९१
वेदिका चम्पकं कर्णी पट्टिका हेमधूर्धुरम्

कोरराडं गैरिकं बिल्वं तपस्वि सहभद्रिका ९२
धातकी तुलसी चैव ग्रपामार्गजम्बुरेव च
नागनन्दी विष्णुकान्ती भ्रपाटलिजपामतम् ९३
माधवी बकपुष्पं च निर्गुराडीवरं तथा
वरणं चरणं चैव व्याघ्री कर्पूरयुग्मकम् ९४
सर्षपद्वयमे चैव कर्तव्यं विनिवेशयेत्
विलङ्गं नालिकेरं च रास्नासर्षपमेव च ९५
मृगमतं निरिहासं च रक्तचन्दनतैलकम्
घृतं क्रमेण कर्तव्यं तत्तत्कुम्भे सुयोजयेत् ९६
ग्रनन्तादिभवश्चैव मध्यव्यूहे प्रकल्पयेत्
ऐशान्यान्तं क्रमेरौवमोदिसूक्ष्मं तथैव च ९७
गैरीशर्वस्तथा ब्रह्मा शिवविष्णुभृगुस्तथा
ईशानः कौशिकश्चैव एकाक्षो विघ्ननायकः ९८
सरस्वती महालक्ष्मी एकरुद्रस्तु दराडकः
पशुपतिः पञ्चपाणि कामरूपी हलायुधः ९९
कङ्कणी फणिकर्णी च पर्णाशविकारिणः
ऊर्ध्वरूपस्तथोन्मत्तयुगनाथसुपैशलः १००
पेशलभ्रातृधारी च पक्षधारी कराडकः
क्रूरजन्मा नक्रपाणि हुतभुक् कृत्तिकापतिः १०१
कौशिकादिषु पैञ्चैते देवतां परिकीर्तिताः
सर्वं पूर्ववत्प्रज्ञो देवताद्रव्य उच्यते १०२
साश्रं वाथ सुवृत्तं वा रजनश्चकसंग्रहेत्
कुञ्जद्वयं तु माषं स्यार्चकं प्रति पृथक्पृथक् १०३
यवद्वयसुविस्तारं तन्मध्ये वर्णमालिखेत्
ककारादिसकारादिमकारादिदशाक्षरम् १०४
लिखित्वा तु विशेषेण एकैकं कलशं प्रति
तत्तद्वर्णाधिदेवेश तत्तत्कुम्भे सुयोजयेत् १०५
पूर्ववत्सर्वमेवं तु स्वर्णं च कं लिखेद्बुधः
तत्तदक्षरसंयुक्तं बीजाक्षरमिति स्मृतम् १०६

अक्षराधिपतीन्देवान् तत्तच्छक्त्या सहार्चयेत्
एवं क्रमेण कर्तव्यं द्रुपदेशस्य मार्गतः १०७
अयुक्तमन्यतो ग्राह्यमयुतस्नानमाचरेत्
महाहविर्निवेद्याथ तोषयेत् परमेश्वरम् १०८
देवदक्षिणभागे तु पूर्वास्थो देशिकः स्थितः
कर्तारं विन्यसेदग्रे ध्रुवन्यासं च शृङ्खलाम् १०९
हंसन्यासं च कर्तव्यं कर्तुहे न्यसेत्क्रमात्
कर्तुर्दक्षिणकर्णे तु रहस्यं मन्त्रमुच्चरन् ११०
आचार्यं पूजयेत्पश्चात्कर्ता श्रद्धानुसारतः
इति सूक्ष्मागमे अयुतस्नपनविधिपटलः

## दारुसंग्रहणम्

दारुसंग्रहणं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
आयुरारोग्यजयदं सर्वसिद्धिप्रदं शुभम् १
दारुसंग्रहणे वापि तरुणलिङ्गे विशेषतः
स्थूपीकीलं तु संयुक्तं शूलेन ध्वजदण्डकम् २
नूतनस्थरथानां वाप्यग्रकर्मसुयोग्यकम्
दारुसंग्रहणं एवं द्विविधं परिकल्पयेत् ३
बाललिङ्गे विशेषेन्तु तरुणे दारुविद्रुमम्
वक्त्रं भिन्नं च सुषिरं शोषवृक्षं तु वर्जयेत् ४
खदिरं खादिरं वापि चम्बकं पनसं तथा
मन्दारं वकुलं चैव अशोकं सरलं तथा ५
निम्बं वा तिन्त्रिणी चैव एतत् ग्राह्य देशिकः
एवं तु वृक्षं संग्राह्य सर्वसंपत्सुखावहम् ६
आचार्यः स्थपतिश्चैव आरण्यं वा प्रवेशकम्
सुदिने च सुलग्ने च सुमुहूर्ते च भूसुरान् ७
आचार्यस्थपतिश्चैव भूसुराणां तु सार्धकम्
शकुनेर्मित्तियोग्यं तु आरण्यस्तु प्रवेशयेत् ८
पञ्चतालप्रमाणेन कुड्याश्रं चतुरश्रकम्

मार्जनेनात्र मन्त्रेण लोपनं पुरुषेण तु ९
आचार्यस्थपदीनां तु सार्धं वा स्नानमाचरेत्
भस्मन्यासं ततः कृत्वा नववस्त्रेण वेष्टयेत् १०
शुक्लयज्ञोपवीतं च शुक्लमाल्यानुलेपनम्
सामान्यार्घ्यं च संकल्प्य विघ्नेशं नालिकेरकम् ११
पुण्याहं पञ्चगव्येन मन्त्रेणैव तु साधयेत्
तद्वृक्षे शुद्धतोयं तु शुद्धैरुत्थेति मन्त्रतः १२
पञ्चगव्येन संस्नाप्य गन्धपुष्पस्त्रगादिभिः
नववस्त्रेण संछाद्य कूर्चं तनुनिबन्धयेत् १३
धूपदीपं ददेत् पूज्य ध्यानं तत् साधनं ह्वयम्
वृक्षाग्रे स्थण्डिलं कृत्वा कुठारेण समाह्वयम् १४
नववस्त्रैः सकूर्चं तु वेष्टयेत् पुरुषेण तु
वनदेवान्बलिं कुर्यात् अष्टदिग्बलिमाचरेत् १५
भूतग्रहपिशाचाश्च वेताला ब्रह्मराक्षसाः
शङ्किनिन्नाभिनिश्चैव गुलिनिं भाषिणीं तथा १६
वनदिग्देवतानां च पूर्वादीशानमन्त्रकम्
पक्वान्नं दधिसंयुक्तं अपूपं कदलीपि च १७
गुलमिश्रतिलं चैव सक्तुमिष्टं च संयुतम्
वनदेवान् प्रियार्थं तु तत्तत्स्वैर्नाममन्त्रकम् १८
ताम्बूलं दापयेत्पश्चाद्धूपदीपादिकं ददेत्
वृक्षे ऐशान्यपृष्ठे तु अग्निकार्यं समाचरेत् १९
आधानादिविवाहान्तं यथा तन्त्रोक्तवद्यजेत्
तन्मूलेन चरुं हुत्वा समिदाज्यचरुं हुनेत् २०
द्रव्यं प्रति विशेषेण आहुतिं चैव हूयते
अस्त्रेणैव शतं हुत्वा अग्निकार्योक्तमाचरेत् २१
पूर्वाग्रे स्थाम्पस्थित्वा स्थपतिरुत्तराग्रके
शास्त्रे नादाय तन्त्रैव +++ मन्त्रेण वारकम् २२
त्रिच्छेद्य दारुमूलं च तत् शेषं स्थपतिकर्मकम्
पूर्व वा उत्तरे वापि पतने तु शुभावहम् २३

पतनेऽप्यन्यदेशे तु अशुभं दोषयेत् सुधीः
गजैः सिंहैः शुभैः शब्दं ह्यन्यशब्दमदोषकम् २४
छेदयेत् दारुमादाय शकटोपरि मध्यमे
दर्भमाल्यैरलङ्कृत्य नववस्त्रेण वेष्टयेत् २५
छत्रचामरसंयुक्तं नानादीपसमन्वितम्
नृत्तगीतं च वाद्यं च स्वस्तिसूक्तमनुं जपेत् २६
ग्रामप्रदक्षिणं कुर्यात् शिवस्याग्रस्य मण्डपे
वालीकैश्च जलैश्चैव स्वयं शुष्केन रक्षयेत् २७
एवं संरक्षणेनैव कर्मयुक्त्या वदाम्यहम्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् २८
इति सूक्ष्मशास्त्रे दारुसंग्रहणविधिपटलः

## स्थूपिमहिमा

प्रासादं देहमित्युक्तं देही लिङ्गमिति स्मृतम्
देहहीने कृतं कर्म सवकर्मं तु निष्फलम् १
तस्मात्सर्वप्रयत्नेन विमानस्थापनान्वितम्
शिवसंप्रोक्षणं कुर्यात् विधिना देशिकोत्तमः २
प्रासादपूर्वदिग्भागे मण्डपं चतुरश्रकम्
सप्ताकरसमारभ्य द्विद्विहस्तविवर्धनात् ३
पञ्चविंशतिषड्विंशाद्ध्वस्तान्तं संप्रकल्पयेत्
अयुग्मं वाथ युग्मं वा पङ्क्तिमानं प्रकल्पयेत् ४
अनल्पमण्डपे विद्वान् मध्ये कूटं समाचरेत्
शालाकारां प्रपावाथ मण्टपौ परिकल्पयेत् ५
चतुद्वारसमायुक्तं चतुस्तोरणभूषितम्
तालमानं तलोत्सेधं अथवा चाष्टमङ्गुलम् ६
तन्मध्ये वेदिकां कुर्यात् तिथिभागैकभागया
शिववेदीति संप्रोक्ता तद्विस्तारसमोन्नतम् ७
तत्तत्पूर्वा चतुर्दिक्षु ब्रह्मवेदीं प्रकल्पयेत्
विमानस्थापने मध्ये वेदिका नव मध्यमे ८

मध्यमे नवकं स्थाप्य गन्धपुष्पादिनार्चयेत्
मध्यमे शिवकुम्भं तु चक्रकुम्भं तथानले ९
श्रीकण्ठं नैर्ऋतिं कुम्भे माधवं वायुगोचरेत्
ईशानके विधातारं लोकपालान् ततो यजेत् १०
प्रासादकलशान्वीशे पूर्वे चैन्द्रे घटं न्यसेत्
दक्षिणे दक्षिणामूर्तिं विष्णुकुम्भं च पश्चिमे ११
उत्तरे ब्रह्मकुम्भं च विन्यसेत्तु यथाक्रमम्
परिवारघटान् स्थाप्य तत्तत्कुम्भप्रदक्षिणम्
संपूज्य पूर्वमार्गेण प्रासादकलशोदकान् १२
आचार्यं प्रधानकुण्डे तु शिवाग्निं च प्रकल्पयेत्
प्रोक्षयेच्छिवमन्त्रेण हृदिना पञ्चधा भवेत् १३
एकान् शमिन्दुहोमार्थमेकांशं दक्षिणार्हकम्
एकांशं विष्णुहोमार्थं एकांशं ब्रह्मकं हुनेत् १४
एकादशे प्रधानं स्यात् तत्तत्कुण्डे प्रदापयेत्
ततः शिल्पिनमाहूय विमानाङ्गानि पूजयेत् १५
पञ्चगव्येन संप्रोक्ष्य शिवमन्त्रेण देशिकः
ततः पुण्याहमारभ्य मन्त्रन्यासं समाचरेत् १६
भुवनाध्वा अधिष्ठाने तत्त्वाध्वा पादवर्गके
मन्त्राध्वा शिखरे न्यस्त्वा कर्णवर्गा कला न्यसेत् १७
कुम्भमन्त्रान्समादाय स्थूप्यान्तं विन्यसेद्बुधः
सर्वेषा पद्मदेवानां हृदप्रदेशेषु विन्यसेत् १८
तत्तत्मूलेन संप्रोक्ष्य दर्पणे चाभिषेचयेत्
गन्धपुष्पैरलङ्कृत्य नैवेद्यं च निवेदयेत् १९
रौरवे -
विस्तारस्याष्टभागैकं वेदिकायां समुच्छ्रयम्
अग्नेरूपसमायानमाज्यभागान्तमाचरेत् २०
विस्तारस्याष्टभागैकं वेदिकायां समुच्छ्रयम्
ऊर्ध्ववक्त्रं शिरः प्राच्यां शाययेत्पीठिकासहम् २१
प्रतिद्रव्यं कुशैः स्पृष्ट्वा स्वैस्वैङ्गेषु च मन्त्रवित्

द्रव्यशेषसमायुक्तं पूर्वाभिमुखसंस्थितः २२
स्त्रुचपूर्णाहुतिं हुत्वा सर्वाङ्गं कुशयात् स्पृशेत्
बिम्बे वा स्थरिडले वापि पीठोपरि बलैपि वा २३
कुम्भे तु च्छोदकेनैव मूर्तिहोमादिमन्त्रकैः
स्वस्वनामादिपञ्चाङ्गं षडङ्गं विन्यसेत्ततः २४
कुम्भस्थेनोदकेनैव स्वमन्त्रैश्चैवाभिषेचयेत्
चतुर्मूर्तौ इन्द्रार्तिदक्षिणामूर्तिदक्षिणे २५
पश्चिमे विष्णुमूर्तिं च ब्रह्ममूर्तिं च चोत्तरे
चतुरश्रे चतुग्रीवे त्वष्टाश्रे चैव वर्तुले २६
कल्पयेत् चतुर्मूर्तिं प्रासादकतवस्तुभिः
अष्टाग्रकेसरं वापि कल्पये देवता मुनीन् २७
कुमारं पूर्वदिग्भागे त्वाग्नेय्यां काश्यपं तथा
याम्ये तु दक्षिणामूर्तिमगस्त्यं चैव नैर्ऋते २८
पश्चिमे नारसिंहं च वायव्यां नारदं तथा
उत्तरे ब्रह्ममूर्तिस्तु वसिष्ठं चैश्वरे दिशि २९
नागरादिविमानं पादभागे विशेषतः
विमानं कल्पयेत्तत्र पञ्चमूर्तिं प्रकल्पयेत् ३०
अर्धमराडपदक्षिरायां स्थापनं विघ्नेश्वरस्य तु
स्थानं तु दक्षिणामूर्तिं प्रासादस्य तु दक्षिणे ३१
पश्चिमे विष्णुमूर्तिं च ब्रह्ममूर्तिस्तु चोत्तरे
अर्धमराडपसौम्यायां दुर्गास्थानं प्रकल्पयेत् ३२
सुधाभिर्वा शिलाभिर्वा दारुभिः शिलकर्मभिः
मूर्तिरग्रेऽर्चनापीठं तत्त्रिमेखलाया युतम् ३३
इष्टकैर्वा शिलाभिर्वा बलवत् कल्पयेत् सुधौ
प्रोक्षये मूर्निभिर्मन्त्रैर्गन्धाद्यैरर्चयेत् क्रमात् ३४
प्रतिष्ठायां स्वस्वनामाभिर्मन्त्रैरावाह्य क्रमशोऽर्चयेत्
स्वस्वैर्नामादिपञ्चाङ्गं षडङ्गमूर्तिविन्यसेत् ३५
कुशैर्दर्भैश्च वस्त्रैश्च वेष्टयेत् प्रतिमां पुनः
स्वमन्त्रैः प्रोक्षये मूर्तिं तत्तन्नामानि विन्यसेत् ३६

अर्चयेद्गन्धपुष्पाद्यैः स्वस्वमन्त्रैः पृथक्पृथक् ३७

स्थूपिप्रतिष्ठाविधिः

प्रासादस्य प्रतिष्ठायां भक्तिभिः सहितं मूर्तिं प्रासादस्यन्तरे न्यसेत्
मध्यादीशानपर्यन्तं गन्धपुष्पादिभिः सह
विद्येश्वरावृतः मूर्तिं प्रासादशिखरे न्यसेत् १
गणेशैरप्रतिग्रीवेगस्तारे लोकपालकैः
धर्माद्यैरावृतं मूर्तिं पादभागेषु विन्यसेत् २
प्रासादस्यर्गले मूर्तिं कुशैर्वास्त्रैश्च वेष्टयेत्
अष्टमूर्तिरतिष्ठायां प्रासादपूर्वदिग्भागे ३
वह्नौ याम्ये च नैर्ऋते
वारुणे वायुदिग्भागे सौम्ये शूलधरे दिशि
मण्टपं कल्पयेत्तत्र मध्यकुम्भे तु वेदिकाम् ४
वेदिकापुरतो बाह्ये होमकुण्डं प्रकल्पयेत्
पूर्वदिग्वेदिकापूर्वे चतुरश्रं प्रकल्पयेत् ५
वह्निदिग्वेदिका वह्नौ कुण्डमश्वत्थपत्रवत्
याम्यदिग्वेदिकायाम्ये कल्पयेत् अर्धचन्द्रकम् ६
नैर्ऋते च त्रिकोणकं वारुण्यां वृत्तमेव च
वायव्ये च षडश्रे च पद्मं सौम्यं तु गोचरेत् ७
ईशानस्य च दिग्भागे त्वष्टकोणे प्रकल्पयेत्
प्रासादस्यार्गले मूर्तिं कुशैर्वस्त्रैश्च वेष्टयेत् ८
अष्टकुम्भं न्यसेदष्टवेदिका त्वष्टमूर्तिकान्
अर्चयेद्गन्धपुष्पाद्यैः अष्टमूर्तिं समावहेत् ९
प्रणवं प्रोचमापूर्वं मूर्तिनाममतः परम्
द्वितीयावाहयामीति क्रमेणैव समावहेत् १०
अर्चयेद्गन्धपुष्पाद्यैर्मूर्तिमन्त्रेण मन्त्रवित्
प्रणवाद्यर्चनानां तु चतुर्थान्तं नमोऽन्तकम् ११
मूर्तीना मूर्तिमन्त्रेण एतेनैव समर्चयेत्
स्वनामानि पञ्चाङ्गं षडङ्गमूर्ति विन्यसेत् १२

विदिक्षु वृषभान् पूज्य वृषकुम्भात् वृषाणुभिः
प्रतिमां बध्व वस्त्राणि कुशान् चोपरि वर्जयेत्  १३
प्रोक्षयेत् पञ्चगव्येन मूर्तिमन्त्रैश्च मन्त्रवित्
कुम्भेषु संस्थितां मूर्तिं  प्रतिमा स्वस्व विन्यसेत्  १४
कुम्भशेषोदकेनैव प्रोक्षयेत् प्रतिमासु च
कल्पयेदर्चनापीठं मूर्तीनामाग्रतः स्थले  १५
इष्टिकाभिः शिलाभिर्वा त्रिमेखलसमायुतम्
कुम्भशेषोदकेनैव प्रोक्षयेत् प्रतिमासु च  १६
कल्पयेदर्चनापीठं मूर्तीनामग्रतः स्थले
इष्टिकाभिः शिलाभिर्वा त्रिमेखलसमायुतम्  १७
कुम्भशेषोदकैश्चापि पीठात् संप्रोक्षयेत्ततः
गन्धपुष्पादिनाभ्यर्च्य पुण्याहं वाचयेत्क्रमात्  १८
आचार्यं  पूजयेत्तत्र स्विष्टान्तं होममाचरेत्
होमपूजादिकाले तु भक्ताश्च परिचारकान्  १९
ब्राह्मणान् भोजयेत्तत्र यथाविभवविस्तरे  २०
इति सूक्ष्मागमे विमानप्रतिष्ठाविधिपटलः

## पटचित्रविधिः

पटचित्रविधिं वक्ष्ये शृणु त्वं तत् प्रभञ्जन
अचलं च चलं चैव द्विविधं पटचित्रकम्  १
महादेवो हरिर्ब्रह्मा चामुण्डी च विनायकम्
गृहं कात्यायनी ज्येष्ठा शास्ता चाचलमीरितम्  २
वृषभं गरुडं चैव हंसं पैषाचमूषिकम्
मयूरं सिंहकाकं च द्विपेन्द्रं च गजं तथा  ३
पताकेषु चलं लिख्ये अचलं शुद्धवस्त्रकम्
तन्तु संगृह्य पूर्वे तु मूलमन्त्रेण बुद्धिमान्  ४
केशादीन् शोधयेदस्त्रमन्त्रेणैव तु शालिकम्
क्षालनं कवचेनैव शोषणं शिखया बुधः  ५
द्विगुणी त्रिगुणी कृत्य चके भ्रमणमस्त्रतः

वेदभूतकरारभ्य वसुनन्दकशान्तिकम् ६
अचलानां तु यत्प्रोक्तमायामं तत्त्रितारकम्
तैले संयोग्य मूलेन इडापिङ्गलवत् सुधीः ७
हेतिमन्त्रेण भागं स्यात् सेध्यचान्नरसादिकम्
अन्यानि युक्तद्रव्याणि संशोध्य कवचेन तु ८
शोषयेद्वायुबीजेन तन्तु संगृह्य शालिकम्
वस्त्रशालान्तसंप्राप्य विकीर्णं कारयेद्बुधः ९
ज्वरादियुक्तयोग्यानि बन्धयेत्तु तुलान्तरे
पद्मस्य नालवद्वंशस्यान्ते तन्तुं सुयोजयेत् १०
सव्येन तन्तु संगृह्य दण्डिका गृह्य वामतः
शालिकं प्राङ्मुखस्थित्वा उदङ्मुखमथापि वा ११
सव्ये तन्त्वन्तरे वंसं योज्यं वामतरान्तकम्
शक्तिबीजं जपित्वा तु दण्डकेन तु पट्टयेत् १२
शिवमन्त्रं जपेद्धीमान् सूच्येनारब्रुहीनकम्
एवं कृत्वा यथान्यायमूलान्तं शालिनं सुधीः १३
अचलं पटमेवोक्तं चलं किञ्चिद्विशेषतः
पूर्वोक्तविधिनानेन शिरः श्रोत्रसपुच्छकम् १४
वेत्रद्वयसमायुक्तं सशिखारन्ध्रसंयुतम्
चलमेवं समाख्यातं वैकल्याख्येन संग्रहेत् १५
कल्कसंस्कारमार्गेण कल्कसंलेप्य तत्पटे
पश्चात् श्वेतं समालिप्य यवमानोन्नतं बुधः १६
पूर्वोक्तदेवमालिख्य तत्तल्लक्षणसंयुतम्
तत्तद्वर्णसमायुक्तं तत्तद्वस्त्रसमन्वितम् १७
तत्तदाभरणैर्युक्तं तत्तत्पुष्पोपशोभितम्
परिवारामरादीनि तत्तद्देवस्य योग्यकम् १८
संलिख्य तत्पटेद्येकं पार्श्वे नैव विचक्षणः
अचलाभासमेवोक्तं चलं किञ्चिद्विशेषतः १९
पूर्ववद्द्रव्यमालिप्य ध्वजस्योभयपार्श्वतः
वृषादिवाहनाः सर्वे उभयोः पार्श्वयोर्लिखेत् २०

तत्तद्वर्णानि चाङ्गानि तत्तच्छास्त्रोक्तमाचरेत्
देवेन्द्रादिपुराणां च भूसुरादीनि वर्णकम्  २१
तृप्त्यर्थमुभयोर्लिख्यं कर्तृ संपत्तिकारणम्
अज्ञानावेकपार्श्वे तु लेख्यं सर्वविनाशनम्  २२
तस्मात् सर्वप्रयत्नेन उभयोः पार्श्वयोर्लिखेत्
पताकानामभावे तु वस्त्रलेख्या वृषादयः  २३
वस्त्रं चेद्वेणदण्डस्य पार्श्वे द्वे वलयं कुरु
तदूर्ध्वे पटमाच्छाद्य शिरः पुच्छं सुयोजयेत्  २४
सूत्रेणाबन्धपार्श्वे लेपनलेखनपूर्ववत्
एवं च पटं प्रोक्तं ज्ञातव्यानि समाचरेत्  २५
इति सूक्ष्मशास्त्रे पटचित्रविधिपटलः

बलिदानविधिः

अथातः संप्रवक्ष्यामि बलिदानविधिक्रमम्
नित्ये नैमित्तिकेनैव द्विविधं बलिदानकम्  १
नित्यार्चने निवेद्यं च बलिं दद्याद्विशेषतः
प्रसादबलिदाने तु ज्येष्ठमन्त्रा समं त्रिधा  २
स्वयम्भूर्दैविकं चैव दिव्यमार्षकमानुषम्
राक्षसं बाणलिङ्गं च सप्तधा लिङ्गमुच्यते  ३
दैविकं तु भवादीनामिन्द्रादीनां च मानुषम्
भूतादीनां स्वयंभूतदुर्गादीनां च तं तथा  ४
वस्तूनां बाणलिङ्गं च सप्तमातृं च दैविकम्
यक्षादीन्द्राक्षसालिङ्गं बलिदेवाः प्रकीर्तिताः  ५
भवः शर्वस्ततो रुद्रः पशुपतिर्नीललोहितः
उग्रभीमो महादेवो इत्यष्टौ मूर्तयः स्मृताः  ६
पीतं च कुङ्कुमं कृष्णं रुणं भिन्नाञ्जनं तथा
नीलं श्वेतं तथा रक्तमष्टमूर्तिं च वर्णकम्
अभयं वरदाः सर्वे पाशाङ्कुशचतुर्भुजाम्  ७
त्रिणेत्रं चैकवक्त्रं च द्विपादं चैव नूपुरम्

सर्वाभरणसंयुक्तं धामस्याभिमुखस्थितम्  ८
जटामकुटसंयुक्तमष्टमूर्तिस्वरूपकम्
दैविकाख्यस्य लिङ्गस्य बलिदेवां प्रकीर्तिताः  ९
पुरन्दरोऽथ वह्निश्च यमो वै राक्षसेश्वरः
वरुणो नीलसोमश्च ईशानो नन्दपद्मजौ  १०
पीतं कृष्णं तथारक्तनीलाञ्जनं च नीलकम्
शङ्खं धूम्रं च शुक्लं च भटिकाभस्वकर्णकम्  ११
अतसीपुष्पसंकाशं दीपालानां निभानि वै
मानुषस्यैव लिङ्गस्य लोकपालबलिं ददेत्  १२
संवर्तं पूर्वतो न्यस्य पूषादिश्छादि गोचरेत्
कुण्डोदरं च दक्षिणयो नैर्ऋते दीर्घकायकम्  १३
वारुणयां ह्रस्वपादं तु वायव्यां सिंहरूपकम्
सोमेर्भाग्वजम्मुखं प्रोक्तमैशान्यां सुप्रियं मुखम्  १४
श्वेतं पीतं तथा नीलं रक्तं श्यामं च धूम्रकम्
अतिरक्तं तथा नीलं भूतवर्णमुदाहृतम्  १५
उग्ररूपसमायुक्तद्विभुजं तु द्विपादकम्
दण्डहस्तं तथास्सर्वे भूतरूपमिति स्मृतम्  १६
स्वायम्भुवस्य लिङ्गस्य भूतादीनां बलिं ददेत्
धरो स्त्रवश्च सोमश्च स्वापश्चैवानिलोऽनलः  १७
प्रत्युसं च प्रभासं च व सष्टौ प्रकीर्तिताः
वसुनां बाणलिङ्गस्य बलिं दद्यात्स्वदेशिकः  १८
अनन्तेशस्तथा सूक्ष्मः शिवोत्तमश्चैव नेत्रकः
एकरुद्रस्त्रिमूर्तिस्तु श्रीकण्ठश्च शिखिण्डिनः  १९
विद्येशानां बलिं दद्यात् दैविकस्य विशेषतः
यक्षराक्षसपैशाचभूतगन्धर्वकिन्नराः  २०
सर्वदेवान्नृषीणां तु बलिं दद्याद्विशेषतः
गाणवस्य बलिं प्रोक्तं बलिं सामान्यकं शृणु  २१
द्वारस्य दक्षिणे पार्श्वे गङ्गा नन्दी ददेद्बलिम्
द्वारस्य वामपार्श्वे तु महाकालौ मुनांस्तथा  २२

वृषभं पूर्वतः स्थाप्य श्राग्नेय्यां पावकं तथा
मातृणां च गणेशं च वीरविघ्नसमन्वितम् २३
विघ्नेशनैर्ॠते भास्करसुब्रह्मरायश्च पश्चिमे
ज्येष्ठायै वायवेश्चैव दुर्गायां च तथोत्तरे २४
चराडेशमीशदिग्भागे बलिं दद्याद्विशेषतः
वृषादिभ्यस्तथा पूर्वमिन्द्रादिभ्य द्वितीयकम् २५
वज्रादिभ्य तृतीयं तु बलिं दद्याद्विचक्षणः
परिवारबलिं सर्वं बाह्ये बाह्यन्तरेऽपि वा २६
भूतपीठस्य पुरतः इन्द्रं संपूजयेत्ततः
श्राग्नेय्यामीशपर्यन्तं स्वस्थानेन तु पूजयेत् २७
द्वारस्य चोत्तरे पार्श्वे ब्रह्माणं संप्रपूजयेत्
पिता महेशयोर्मध्ये श्रादित्यद्वादशान् न्यसेत् २८
भास्करक्षेत्रपालश्च शाङ्करे वा विशेषतः
चक्रकरयोर्मध्ये श्रश्विन्यो द्वौ तु विन्यसेत् २९
श्राग्नेय्ययमयोर्मध्ये संस्थाप्य सप्तरोहिणी
याम्यनैर्ॠतयोर्मध्ये पितृणां च विशेषतः ३०
निर्ॠतिवरुणयोर्मध्ये चाप्सरो हणमेव च
वरुणानिलयोर्मध्ये मुनीनां स्थापयेत्ततः ३१
वायव्यसोमयोर्मध्ये वस्वौ ष्टौ चैव विन्यसेत्
सोमशाङ्करयोर्मध्ये रुद्रेकादशमेव च ३२
नैमित्तिके विशेषेण बलिं दद्याद्विशेषतः
प्रतिमे वापि पीठे वा इष्टकैर्वा विशेषतः ३३
बाह्याभ्यन्तरयो पीठे पूर्ववद्देवता न्यसेत्
श्रन्तरे सर्वदेवास्तु पेशाचान् बाह्यपीठके ३४
गर्भगेहं च पञ्चांशं चतुष्कं चोत्तमं भवेत्
त्रिभागमध्यमं प्रोक्तं द्विभागमधमं भवेत् ३५
द्वारोत्सेधं समं श्रेष्ठं तत्त्रिभागं तु मध्यमम्
द्वारस्यार्धसमं हीनं विस्तारोत्सेधतत्समम् ३६
विस्तारांशं विभज्याथ भागमेकोनविंशतिः

भागेनोपानमेकेन चतुश्च जगतिस्तथा ३७
कम्पं कृत्वा त्रिभागेन तदूर्ध्वे कैलपट्टिका
महापट्टिद्वयंशेन तन्मात्रं तु दलोन्नतम् ३८
कर्णिकामेकभागेन प्रोक्तमुत्सेधमुत्तमम्
बलिपीठमिति ख्यातं सर्वेषां बलितृप्तये ३९
पूर्वे च दक्षिणे चैव पश्चिमे चोत्तरे तथा
चतुर्दिक्षुस्तथा पीठमुत्तमं संप्रकल्पयेत् ४०
पूर्वे च पश्चिमे चैव बलिपीठं प्रकल्पयेत्
अथवा मिहमग्रे तु अग्रपीठं प्रकल्पयेत् ४१
आमोदश्च प्रमोदश्च सुमुखो वुदङ्मुखस्तथा
अविघ्नो विघ्नकर्ता च षडेते भूतनायकः ४२
अविघ्नं कर्णिकामध्ये आमोदं पूर्वदिग्दले
याम्ये चैव प्रमोदं तु सुमुखं पश्चिमे दले ४३
दुर्मुखं तु दले सौम्ये विघ्नकर्तारमीशके
आमोदं श्यामवर्णं तु प्रमोदं कृष्णवर्णकम् ४४
सुमुखं स्फटिकाभासं दुर्मुखं कुङ्कमप्रभम्
अविघ्नमिन्द्रनिभा चैव विघ्नकर्ताञ्जनप्रभम् ४५
द्विभुजा च द्विनेत्रा च टङ्कवाचधरस्तथा
उग्रदृष्टिं च युक्ता भीमरूपा महाबला ४६
सर्वाभरणसंयुक्ता नागयज्ञोपवीतकाम्
प्रासादाभिमुखाः सर्वे दीर्घदंष्ट्रोत्कटा नरः ४७
पूर्वे च दक्षिणे चैव पश्चिमे चोत्तरेऽपि च
सर्वे चैव विशेषेण बलिं दद्याद्विचक्षणः ४८
श्रेष्ठा यत्रातनन्तस्य बलिं चैवोत्तमं भवेत्
मध्यमे मध्यमं रोक्तं कन्यसं कन्यसा भवेत् ४९
आचार्यो मूर्तिपैः सार्धं पूजान्ते च विशेषतः
नानान्तोद्यसमायुक्तनानालङ्कारशोभितम् ५०
कौतुकं चान्नलिङ्गं च अस्त्रराजं च संयुतम्
प्रणवार्घ्यकरो मौनी मूलगेहं प्रवेशयेत् ५१

देवदेवस्य विज्ञाप्य स्वस्तिसूक्त जपेत्ततः
द्वारादिबलिपीठान्तं बलिं दद्याद्यथाविधि ५२
प्रविश्य भवनं पश्चात् पादप्रक्षालनं कुरु
अन्नलिङ्गं विसृज्याथ मूलबेरं समर्चयेत् ५३
पश्चिमद्वारधामानि किञ्चिद्भेदं शिवार्चनम्
उपचाराणि सर्वाणि सद्यवक्त्रे प्रदापयेत् ५४
आसनावरणादीनां पूर्ववत्परिकल्पयेत्
यद्वक्त्रद्वारमाश्रित्य तद्वक्त्रे तु हविर्ददेत् ५५
अथैव बलिदानं च पश्चिमादिप्रदक्षिणम्
विरिञ्चिस्थाने वृषं पूज्य वृषस्थाने विरिञ्चकम् ५६
पूजयेत् पश्चिमद्वारे स्वस्थानेष्वन्यदेवताम्
वृषादिविघ्नपर्यन्तं पश्चिमद्वारधामनि ५७
वृषादिभास्करपर्यन्तं पुर्वद्वारबलिं क्रमात्
वृषादि अग्निपर्यन्तं दक्षिणद्वारधामनि ५८
वृषादिवायुपर्यन्तमुत्तरद्वारसद्मनि
विपरीते तु कर्तव्यं राजा राष्ट्रस्य दोषकृत् ५९
प्रासादबलिरेवं स्यात्ततो ग्रामबलिं शृणु
इति सूक्ष्मागमे बलिदानविधिपटलः

## मृत्संग्रहविधिः

मृत्संग्रहणं वक्ष्ये सर्वलोकहितावहम्
ग्रामशान्तिकरं पुण्यं राजाराष्ट्रसमृद्धिदम् १
प्रतिष्ठाप्रोक्षणे काले दीक्षाकाले तथैव च
उत्सवादिपवित्रान्ते तत्कर्मं तु समाचरेत् २
देवदेवं तु संपूज्य विज्ञापनमथाचरेत्
संप्रोक्षणं समादाय कारयेत्तु विशेषतः ३
नैवेद्यं दापयेत्पश्चात्ताम्बूलं दापयेत्ततः
सर्ववस्त्रैरलङ्कृत्य गन्धपुष्पैरलङ्कृतम् ४
कुन्दालीमभिषिच्याथ अस्त्रमन्त्रेण पूजयेत्

त्रिशूलं तु समभ्यर्च्य त्रयस्त्रिंशाधिदैवतम् ५
नववस्त्रधरोष्णीष आदिशैवो दृढव्रत
हारनूपुरकेयूरकटकादिविभूषितम् ६
शिबिकाश्च गजैश्चैव परशुं धारयेत्क्रमात्
ग्रामप्रदक्षिणं कृत्वा शङ्खतालपुरस्सरम् ७
सर्ववाद्यैरलङ्कृत्य छत्रचामरसंयुतम्
पाहयित्वाथ नारीभिस्तालवृन्देन शोभितम् ८
चण्डेश्वरादिसंयुक्तं मृत्स्थानं तु समाश्रयेत्
नदीतटाककेदारे दर्भमूले तु वल्मिके ९
सर्वताग्रे समासेन रम्ये चोद्यानदेशके
ऐशान्यां स्थानसंयुक्तं निरीक्षणादिविशोधितम् १०
सम्मार्जनसमालेपप्रोक्षणं तु यथाविधि
स्थण्डिलं कारयेद्धीमान् नवकोष्ठं प्रकल्पयेत् ११
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः
मध्ये ब्रह्माणमावाह्य अर्चयेन्नाममन्त्रकम् १२
अनन्ता विनन्ता भद्रा जयन्ता भ्रमरी भ्रमाः
प्रस्थिता परिजृम्भी च परिवाराष्टकं यजेत् १३
दिष्वि क्षु बलिं कुर्यात् पायसाद्यैर्विशेषतः
बाह्ये बलिं समुद्वास्य प्रोक्षयेदस्त्रमन्त्रतः १४
गन्धपुष्पादिभिश्चैव भूमिं तत्रैव पूजयेत्
उत्तराभिमुखः स्थित्वा तद्देशे मृतमाहरेत् १५
स्तोत्रगीतं च वाद्यं च नृत्तघोषसमाकुलम्
सुमुहूर्ते सुनक्षत्रे मृद्ग्राह्यं कारयेद्बुधः १६
कुन्दाल्यामभिमन्त्रेण त्रिःकृत्वा निखने मृदः
स्वर्णादिपात्रे संग्राह्य आदिशैवेन वाहयेत् १७
सर्ववाद्यैः समायुक्तं शङ्खतालपुरस्सरम्
दीपान्ते तु प्रकर्तव्यं धूपदीपेन सेवितम् १८
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रदि
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः १९

इति सूक्ष्मागमे मृत्सङ्ग्रहणविधिपटलः

षडध्वलक्षणं वक्ष्ये श्रूयतां मुनिपुङ्गव
स्थापने प्रोक्षणे चैव गर्भन्यासे तथैव च १
विमानस्थापने चैव प्रतिमास्थापनेऽपि च
दीक्षे च मङ्गले कार्ये षडध्वन्यासमाचरेत् २
प्रासादात् प्रतिमाश्चैव चलं चैवाचलं तथा
अध्वन्यास विहानं स्यादङ्गोपाङ्ग विहीनकम् ३
बीजं स्वमूलमन्त्रं च हीनं प्राणविहीनकम्
तस्मात्सर्वप्रयत्नेन अध्वन्यासं समाचरेत् ४
तत्त्वं पदं समन्त्रं च वर्णं च भुवनं कला
तत्त्वाध्वा शुक्लमज्ञास्थिसिरामांसं षडध्वना ५
मन्त्राध्वारुधिरं चैव वर्णाध्वा त्वक् समुद्भवा
भुवना रोमसम्भूताः कलास्सर्वाङ्गिकल्पनाः
अथ तत्त्वानि षट्त्रिंशत् पृथिव्यप्तेजो मरुद्वियः ६
गन्धो रूपरसं स्पर्शशब्दोपस्थौ च पायु च
पादौ पाणि च वन्दानासौ जिह्वाश्चक्षुरत्त्वचश्रुतिः ७
मनोहङ्कार बुद्धिश्च प्रकृतिपुरुषस्तथा
रागो नियति विद्या च कलाकालश्च मोहिनी ८
विद्याचेश्वरसादाख्यो शक्तिश्शिव इति स्मृतः
तत्त्वमेतत्समुदिष्टं पदाध्वा वक्ष्यते क्रमात् ९
पञ्चप्रणवसंयुक्तं व्योमव्यापि समन्वितम्
व्योमव्यापीपदं पूर्वं व्योमरूपपदं ततः १०
सर्वव्यापि पदं पश्चाच्छिवाय पदमित्यपि
अनन्ताय अनाथाय अनाश्रिताय पदं ततः
सर्वप्रभुं पदं पश्चाच्छिवाय पदमेव च ११
ईशनाय पदं पश्चात्तत्पुरुषाय पदं ततः
अघोराय पदं पश्चात् वामदेवपदं ततः १२
सद्योजातपदं पश्चात् ओन्नमो नम इत्यपि

गुह्याद्गुह्यपदं गोप्ते अनिधनाय पदं ततः १३
सर्वयोगकृतायेति सर्वविद्याधिपादयः
ज्योतीरूपपदं पश्चात् परमेश्वररूपकम् १४
अचेतनाचेतनपदं व्योमिन् व्योमिन्न इत्यपि
व्योमिन्व्यापिन् पदं पश्चादरूपिश्च पदद्वयम् १५
प्रथमस्थे पदं ज्योति पदञ्ज्योतिस्तथैव च
अरूप्यनग्न्यधूमश्च अभस्मानाद एव च १६
नानानानापदं पश्चाद्धूधूधूधू च इत्यपि
महादेव पदं पश्चात् सद्भावेश्वरमेव च १७
महातेजपदं पक्षाद्योगाधिपतये नमः
मुञ्चमुञ्चपदं पश्चात् प्रथमप्रथमस्तथा १८
शर्वद्वयं भवभवस्सर्वभूतसुखप्रदः
सर्वसान्निध्यकराय ब्रह्मविष्णुपदस्तथा १९
अनर्चितानर्चितपदमस्तु तास्तु पदं ततः
पूर्वस्थितपदद्वौ च साक्षिसाक्षि पदं ततः २०
तुरुद्वयपदं पश्चात् पदङ्गे च पदद्वयम्
पिङ्गद्वयपदं ज्ञानद्वयं शब्दस्तथैव च
सूक्ष्मद्वयपदं पश्चात् शिवश्शर्वस्तथैव च २१
सर्वतश्च पदं पश्चात्पदं नमश्शिवाय च
नमोनमपश्चाच्छिवाय नम इत्यपि २२
एकाशीतिपदं न्येतैर्मन्त्रैस्संपूज्यतो हरः
पदाध्वा च समाख्यात तन्मन्त्रास्संहिताणुभिः २३
सद्योवाममघोरश्च पुरुषैशानकस्तथा
हृच्छिरश्च शिखावर्मनेत्रास्त्रेण समन्वितम् २४
मूलमन्त्रसमायुक्तं मन्त्राध्वाचेति कीर्तिताः
अकारादिक्षकारान्तं वर्णाध्वा चेतिकीर्तिताः २५
कालाग्निरथकूश्माण्डहाटकं ब्राह्मवैष्णवम्
रौद्रं च भुवनान्यन्तं ब्रह्माण्डस्वस्तितानिषट् २६
कपालीशस्यतो वज्र देहप्रमर्दनः

विभूति अव्ययश्शास्त पिनाकी त्रिदशाधिपः २७
अनिरुद्रो हुताशश्च पिङ्गलाखातको हरः
ज्वलनोदहनो बभ्रु भस्मान्तक क्षयान्तकः २८
याम्यमृत्युहरे दाता विधाता च तथापरा
कर्तायोक्ता वियोक्ता च धर्मधर्म पदेस्तथा २९
विमलेशो महाशञ्च महेन्द्रो भीमकेश्वरः
अस्त्रापथो रुद्रकोटिरविमुक्तो महाबलः ३०
गोकर्णो भद्रकर्णश्च स्वर्णाक्षस्थाणुरित्यपि
शकरण्डो द्विरण्डश्च महाकोमण्डलेश्वरः ३१
कालण्डायश्शङ्कुकर्णस्थूलेश्वरमहेश्वरः
पैशालं राक्षसं गन्धं रक्षं स्त्रैरुद्रमेव च ३२
सौमञ्चैव तथाग्नेय प्राकेशं ब्रह्ममष्टमम्
अकृतं च कृतं चैव भैरवं ब्राह्मवैष्णवम् ३३
कौमारं च तथाभौमं श्रीकण्ठद्वादशन्ततः
प्रचण्डोमापतीशानो नन्दो काश्शिव एव च ३४
क्रोधश्चण्डो ज्योतिश्चैव स्संवर्तश्श्वर एव च
पञ्चान्तकैक वीरे च शिखादश्च प्रमाद्युतिः ३५
वामादीनां पुराविद्या विद्यायां सप्तविंशतिः
वामीज्येष्ठी च रुद्री च कली कलविकरणी तथा ३६
बलविकरणी चैव बलप्रमथनीत्यपि
सर्वभूतदमन्यैव मनोन्मन्येति नन्दकम् ३७
सूक्ष्मश्शिवोत्तमश्चैव एकरुद्रस्त्रिमूर्तयः
श्रीकण्ठश्च शिखण्डी च तथैवान्यसदाशिवम् ३८
शान्तोवाममुखान्यष्टा दशैव भुवनानिषु
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च ३९
शान्त्यतीत कलाश्चैव दीपिकारोचिका तथा
मालिका +++ व्यापिनी व्योमरूपिणी ४०
अनन्ताश्च अनाथाश्च अनाश्रिता च तथापरा
निवृत्त्यादीन्यतीतायां पराणि दशपञ्च च ४१

निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च
शान्त्यतीतकलाः पञ्च षडध्वा समुदीरिता ४२
कला च भुवनं वर्णं मन्त्रं च पदमेव च
तमेतत्समुद्दिष्टं स्थितिक्रममिहोच्यते ४३
नाभौ हृद्गल पालौ च मूर्ध्यैः पञ्चकवान्यसेत्
मूर्ध्ना पञ्चचतुर्वक्त्रे ललाटे नेत्रयोर्द्वयोः ४४
कर्णद्वयोर्घ्राणपार्श्वे गण्डवोष्ठद्वयोरपि
दन्तर्द्वयो च चिबुके जिह्वे च तालुमूलके ४५
कण्ठे च हृदये चैव स्तनद्वै नाभिदेशके
स्फिक् द्वये गुह्यदेशे च पायोबीजद्वयेन च ४६
अधरे दक्षहंसं वा सन्ध्यग्रे चाङ्गुलेन च
पर्वे च तलमध्ये च तलपृष्ठे च विन्यसेत् ४७
वामबाह्वौ च सन्ध्यग्रे चाङ्गुले पर्वदेशके
तलमध्ये च पृष्ठे च विन्यसेत्तु विचक्षणः ४८
पादसन्ध्ये च चांगुल्ये पादाङ्गुष्ठे तलद्वये
पर्वे च विन्यसेद्वामपादसन्ध्यग्रकेषु च ४९
चाङ्गुल्ये तलपृष्ठे च पर्वमध्ये च विन्यसेत्
कटिद्वयोः पार्श्वयोश्चैव हंसपालिर्द्वयेऽपि च ५०
पीठरे जठरे मेढ्रे बाहू च कोर्परद्वयोः
जङ्घद्वये च गुल्फौ च मूलमध्ये तदग्रके ५१
जानुद्वये च जङ्घे च नळके च द्वयेऽपि च
नाभ्यादि हृदयान्तं च सप्तधात्रं च विन्यसेत् ५२
हंसमध्ये द्वये चैव पाणिद्वयकेषु च
ललाटपार्श्वे नासाग्रे कोचिमध्ये श्रयम्मये ५३
वर्मद्वन्द्वे भ्रुवोर्मध्ये कक्षद्वये विशेषतः
मूर्धादिपादपर्यन्तं व्यापकं हस्तपादुके ५४
हृदयास्थितिसंख्या च भुवनानि च विन्यसेत्
द्विशतं च चतुर्विं शत् भुवनान्यसेत्क्रमात् ५५
मूर्ध्ने ललाट चक्षुश्च कर्णयोश्च द्विरण्डयोः

आस्यमोष्ठद्वयोश्चैव दन्तपङ्क्तिद्वयेरपि ५६
जिह्वायां तालुरन्ध्रैश्च स्वरान् षोडशकान्यसेत्
कवर्गं दक्षिणे हस्ते च पवर्गं वामहस्तके ५७
टवर्गं दक्षिणे पादे तवर्गं वामपादके
पफौ पार्श्वद्वये चैव पृष्ठे नाभौ च जानुना ५८
भृद्योमूले परजले कक्षौ च हृदयेऽपि च
हस्तौ पादौ च सर्वत्र व्यापकन्न्यक्षरान्यसेत् ५९
मूर्ध्नौ च वक्त्रे हृदये गुह्य पादौ च विन्यसेत्
हृच्छिरश्शूलिका वर्म नेत्रास्त्रे विन्यसेन्मनु ६०
ब्रह्माङ्गं विन्यसेन्मन्त्रन्यासमित्युच्यते बुधैः
मूर्ध्नौ नवपदन्यस्त्वा मध्यादष्टदिशासु च ६१
ललाटे चिबुके नेत्रे द्वयश्रोत्रद्वयेऽपि च
नासिद्वये कपालौ द्वौ मूर्ध्निरास्येव विन्यसेत् ६२
जिह्वोपादद्वये चैव कखत्सन्धिशाखयोः
श्रोत्रद्वये च पार्श्वे च हस्तपादद्वयेऽपि च ६३
ऊरुद्वये च जंघे च कोणे च शिरसिस्तथा
बाहुद्वये च विन्यस्य व्योमव्यापि पदानि तु ६४
नाभौ च हृदये कण्ठे ललाटे मूर्ध्निदेशके
घ्राणे च व्यापिके जिह्वे पाणिश्रोत्रौरुपस्थके ६५
पायो पादौ च पाणौ च वा नासौ जिह्व चक्षुषे
व्यापकं श्रोत्रकं चैव हृदयस्य चतुर्दशी ६६
मध्ये मूर्ध्ने च हस्ते च पादौ च हृदयेऽपि च
मूर्ध्नौ पञ्चसु देशे तु तत्त्वविन्यस्य बुद्धिमान् ६७
नाभौ हृत्कण्ठफालौ च ब्रह्मरन्ध्रं यथा क्रमम्
निवृत्यातीन्यतीतायां कलाध्वा विन्यसेत्क्रमात् ६८
निवृत्तौ पार्थिवं तत्त्व चिन्त्यमेकं क्षराक्षरम्
कालाग्निप्रभृतीनां च पुरमष्टोत्तरं शतम् ६९
अन्यत्पादमहादेवमपलब्धि विलोमतः
व्योमव्यापि पदान्यष्टाविंशति परसंख्यया ७०

सद्योजातं च हृदय द्वौ मन्त्रौ परिकीर्तितम्
गुणागन्धादिशब्दान्ता पञ्चब्रह्मा च कारणम् ७१
प्रतिष्ठायां वामादीनि त्रयोविंशति संख्यया
हाति तान्ताश्चयोवर्णा विलोमसमुदीरिताः ७२
प्रकृत्यन्तानि तत्त्वानि ज्ञातव्यानि प्रकल्पितः
ज्ञातव्यान् मरेशादि षट्पञ्चाशर्पुराणि च ७३
पदानामेकविंशतिः ++++++++
शिरोवामश्च मन्त्रौ द्वौ चत्वारन्तु गुणान्नृतः ७४
रसादि शब्दपर्यन्ता विष्णुरुद्र च कारणम्
विद्यायां सर्वतत्त्वानि पुरुषादित्यनुक्रमात् ७५
वामादि भुवनान्तन्तु विज्ञेयासप्तविंशतिः
ध्यानाहाराय पर्यन्ता व्यापीत्यानपदानि च ७६
पदां विंशतिमन्त्रैश्च श्शिखाघोरैव्यवस्थितः
अकारादिवकारान्ता वर्णस्सप्तविलोमतः ७७
रूपस्पर्शौ च शब्दाश्च गुणा रुद्रस्तु कारणम्
शान्तौ तु त्रीणि तत्त्वानि विद्येश्वरसदाशिवम् ७८
गकारं च त्रयो वर्णा मन्त्रावक्त्रतनुश्छदौ
वामादीनापुरान्यष्टौ दशैव परिसंख्यया ७९
नित्ययोगिन इत्यादि ईशाद्दशपदानि च
व्योमव्यापिन इत्यन्टा निहत्यानि विलोमतः ८०
गुणां स्पर्शश्च शब्दश्च द्वारत्तु कारणमीश्वरम्
शान्त्यतीकलायां तु तत्त्वद्वयमवस्थितः ८१
निवृत्त्यादिपुराण्यत्र भवन्ति दशपञ्च च
ओन्नित्येकं पदं मन्त्रमस्त्रेशानभिवास्त्रकम् ८२
विसर्गद्यारकारान्ता वर्णास्फोटककीर्तिताः
भवत्येको गुणश्शर्वो मकारं तु सदाशिवम् ८३
इत्याध्यानं विचिन्त्याथ षडध्वाव्यपिनी वरा
ध्यात्वा शक्तिं तदूर्ध्वे तु पाययेत् परमं पदम् ८४
आद्यन्तं मन्त्रमुच्चार्य समुच्चार्यमुदीरितम्

पृथगध्वानि विन्यासं मन्त्रेकीकरणं मतम्  ८५
अध्वापञ्चकलाविद्धि परस्परवियोजयेत्
अष्टोत्तरशतं चैव षट्पञ्चासप्तविंशतिः  ८६
अष्टादशदशैः पञ्च निवृत्त्यादीनि भावनम्
पक्षत्रयेतिविंशश्च सप्तत्रियं च षोडशम्  ८७
वर्णाध्वादिक्रमात् संख्या निवृत्त्यादींश्च योजयेत्
अष्टाविंशति विंशैकं विंशद्वयद्वयेऽपि च  ८८
शान्त्यतीतान्तकं कृत्वा पदानां विन्यसेत्क्रमात्
सद्योजातं च हृदयं शिरसो वामदेवकम्  ८९
अघोरं च शिखाश्चैव पुरुषं चैव वर्मणा
नेत्रमीशानमस्त्रं च मूलमन्त्रेति योजयेत्  ९०
मन्त्रादिक्रमशो न्यस्त्वा निवृत्त्यातीं तु कारयेत्
त्रयोविंशति सप्तैश्च त्रिद्वियेकक्रमेण तु  ९१
तत्त्वमेतक्रमेणैत निवृत्त्यातीं तु कारयेत्
एवमध्वविन्यासदेहे बिम्बे घटे त्रिधा  ९२
अध्वलक्षणकं प्रोक्तं कलान्यास विधिं शृणु
शुक्लवस्तुश्चतुष्कला पत्रः कमलस्तेजसानिधिः  ९३
सुषुम्नां मूलगुढाङ्गी कुण्डली नादरूपिणी
तस्मान्नाभ्यान्तमद्धीनो विश्वरूपस्तटिन्निभः  ९४
नाभेरूर्ध्वं वितस्यन्ते हृदयं चतुरङ्गुलम्
तदन्तसंस्थितो मेधा स्वरो वह्निशिखा प्रभाः  ९५
त्रिमात्रकारणं ब्रह्मा चतुर्विं शतितत्त्वयुक्
कर्णोष्टाङ्गुलवींशो च द्विमात्रोर्कशद्वितिः  ९६
तत्त्वषट्कयुतो विष्णुस्तलौ तु चतुरङ्गुले
मायातत्त्वं विषं रुद्रदशको मात्रस्तटिन्नभः  ९७
भ्रूमध्ये द्व्यङ्गुलो दीपं निभोर्वक्त्रोर्ध्वमातृकः
तत्त्वद्वययुतो नक्तो ललाटे पात्रकश्च वै  ९८
वृत्ताध्वोर्ध्वशशिज्योतिमात्राष्टांश निरोधिनी
उक्तप्रभा ततो दण्डः षोडशांशो मणिप्रभुः  ९९

द्वात्रिंशांस्तु दण्डान्तो रन्ध्रे सौदामिनी निभः
भ्रुवेरूर्ध्व ++ हाल ++ गुलेदशाधिकाः १००
वृत्तार्धादि चतुर्णा स्यात् सदेशस्तत्त्वयुग्मकः
सूर्यकोटिद्वितिश्चोर्ध्वं महाताख्यश्शिवोधिपः १०१
चतुष्षष्ट्यं शकाशक्तिमूर्ध्नेन्येकांगुलेस्थितः
त्र्यङ्गुले व्यापिनी चाष्टाविंशत्यधशतांगुलम् १०२
चतुरङ्गुलषड्विन्त पञ्चाशद्विशतां शिका
स्मरोर्ध्वमनोमात्रा चतुरंगुलकोमना १०३
ततः परममात्रस्तु तत्त्वातीत परश्शिवः
व्यापिनी समयान्तस्थे व्योमाङ्गानन्तसंज्ञके १०४
अनाथानाश्रिता चैव युक्तोद्यष्टकलोमनु
आदिपञ्चममृत्यु भूषण चन्द्रखण्डगुणाश्रद्धृत् १०५
भानुगध्वनि सीरभास्करसेन्द्रवृत्त हलाकृतिः
साशुमत्रिशिखद्विबिम्बगतद्विगुब्जम्मनुः १०६
पातुवस्सकलोपरसकलाकलस्तु पराश्शिवः
निष्कलं शिवरुद्रपुद्गल भूषणार्थकम् १०७
हिमांशुमन्द्रोधिदण्डतदन्तशक्ति चतुष्टये
क्षरयोगिनं शङ्करं वसुसांगरांगुल १०८
चारिणान्द्रसशून्यं सर्वमन्त्रपतिं प्रसादमहन्नतोस्मिषडध्वगाम्
मेधादिकार्कासुकला सुमध्ये त्रिकत्रिकाणां विहात्रिशून्यम् १०९
एकैकहानैरुपरित्रिशून्यं शून्यं परं योजन धामशैवम्
अकारश्च उकारश्च मकारो बिन्दुरेव च ११०
अर्धचन्द्रनिरोधी च नादो नादान्तमेव च
शक्तिश्च व्यापिनी चैव समना चोन्मनास्तथा १११
समनान्ते पाशजालमन्मन्यन्ते परश्शिवः
तदर्थं कन्यसं ज्ञेयमष्टोत्तरमथापि वा ११२
वीथ्यग्रे वीथिमध्ये च फलभक्ष्यादिदर्शने
आचार्यस्पर्शने नैव कर्पूरं दीपयेच्छिवम् ११३
भ्रमणान्ते विशेषेण सुखासननिवेद्यकम्

धूपदीपं हृदा दत्त्वा ताम्बूलं च निवेदयेत्  ११४
नटेश्वरं तु तत्स्पृष्टिः पाद्यमाचमनं ददेत्
कर्पूरावर्तितं दीपं दापयेत्तु नटेश्वरम्
धूपदीपं न कर्तव्य नर्तनं गीतवाद्यकम्  ११५
अहमार्गेण नृत्तं यत् गणिकानां विशेषतः
स्नानं जपं नमस्कारं नववस्त्रोत्तरीयकम्  ११६
शुक्लमाल्यैरलङ्कृत्य शुक्लयज्ञोपवीतकम्
शुद्धभोजनमेवं स्याद्द्विवर्णानां तु मैथनम्  ११७
अन्यवर्णं च जातीनां स्पर्शयेत्तु न कारयेत्
नटेशस्नपनं कुर्यान्नैवेद्यं धूपदीपकम्  ११८
पुनर्यानक्रमेणैव मध्यहारं विशेषतः
स्तोत्रपाठसुनृत्तं च वाद्यगीतसमाकुलम्  ११९
प्रदक्षिणक्रमेणैव भ्रमणे तु नटेश्वरम्
देशिकानां नटेशस्य गन्धकारान्ततोपरि  १२०
वास्तुयानक्रमेणैव यानान्ते धूपदीपकम्
स्नपनं कारयेद्धीमान् स्थापने तु सुयोजयेत्  १२१
इति सूक्ष्मे नटेश उत्सवपटलः

पञ्चगोचरमूर्तिस्थापनम्

पञ्चगोचरमूर्तेस्तु चार्चनं वक्ष्यतेऽधुना
आयुः प्रदं च पुष्टिं च श्रीकरं च यशस्करम्  १
सदेशे मोक्षकाम्यार्थं धनार्थं विष्णुपूजनम्
दुर्गां शत्रुजयार्थं च विघ्नेशं पुत्रकामदम्  २
कान्तिदं स्कन्दपूजा च पञ्चमूर्तिं सदार्चयेत्
एतेषां पञ्चबेराणां प्रधानं च महेश्वरम्  ३
स्वतन्त्रं परतन्त्रं च विविधं चेति कीर्तिताम्
ग्रामे वा नगरे वापि पत्तने राजधानिके  ४
+++ चैव पर्वते च मनोरमे
कूपने वाथ नन्द्यां वा वनमध्ये चतुष्पथे  ५

स्थापयेत्पञ्चमूर्त्यां च सर्वप्राणि हितावहम्
वारुण्यायतनं चैव सर्वदेवप्रतिष्ठितम् ६
एवं प्रतिष्ठितं कुर्यात् सर्वकामफलप्रदम्
स्वतन्त्रमिति विख्यातं परतन्त्रं गृहार्चनम् ७
परतन्त्रैर्विशेषेण विष्णुमूर्तिं तथार्चयेत्
तस्यार्धस्तु महेशं च तस्यार्धे स्नानबेरकम् ८
पश्चिमे सोमहा विष्णुः सव्येमान्धेपसंस्थिताः
विद्यानमक्षूशक्तिरञ्जलिकारसंयुतः ९
तस्याग्रे स्नानबेरं तु यावत् शास्तार्चनं बुधः
परिवाराष्टकं चैव द्वारदेवान् स पूजयेत् १०
शुभयार्चनयास्थाने आदिश्शैवस्सुपूजयेत्
अथवा चोत्तराग्रं स्यात् दुर्गान्देव्यर्चना तथा ११
सनत्कुमारसहितौ देविसव्यापसव्यके
तद्बेरं चित्रबेरं चेत् तस्याग्रे स्नानबेरकम् १२
महिषासुरमूर्ध्नस्था सिह्मासनं तथा भवेत्
तत्तम्प्रोक्तमार्गेण तत्तदर्चनमाचरेत् १३
दुर्गास्थानस्य सव्ये तु स्थापनं स्कन्दमूर्तिनम्
स्कन्दं कल्याणमूर्तिं च स्थापयेद्विधिना सह १४
अञ्जलिकरदेवी च कुक्कुटान्तं समाचरेत्
तद्देव्या वामपार्श्वे तु ब्रह्मस्थानं सुसंस्थितम् १५
स्कन्दस्य दक्षिणे पार्श्वे नारदां सहिताय वै
सर्वदेवावृतं चैव सिद्धविद्यार्थकिन्नरैः १६
यावत्पूजोपचारेण तावत्पूजां समाचरेत्
दुर्गालयस्य वामे तु गणाधीशं प्रतिष्ठितम् १७
सर्वदेवावृतं चैव सिद्धविद्यार्थकिन्नरैः
पूजां चैव पुरा कृत्वा विघ्नेशं पूजयेद्बुधः १८
प्रधानं कारयेद्धीमान् सदेशन्तु विशेषतः
देवाग्रे मण्डपं कल्प्य द्वारबेरादि देवताः १९
तद्बिम्बद्विविधं प्रोक्तं केवलं सहजं स्मृतम्

केवले च त्रिबेरं स्यात्सहजं पञ्चबेरकम्  २०
पञ्चावरणसंयुक्तं अर्चयेत्तु सदाशिवम्
विष्णुं सम्पूजयेद्विद्वान् गर्भावरणसंयुतम्  २१
अच्युतोनन्तमूर्तिस्तु चक्रपाणिर्जनार्दनः
पुरुषः पुरीष्टुतं चैव गोविन्दो वित्रनायकः  २२
यावत्तन्त्रेषु पूजायामादिशैवैस्सुपूजयेत्
दुर्गां देवीं समभ्यर्च्य आवृतैकसमन्वितम्  २३
षण्मुखं शक्तिपाणिश्च कार्तिकेयो गुहस्तथा
स्कन्दोमयूरवाहश्च सेनानिस्तु विशाखकः  २४
महामर्यादितस्थाने पार्श्वे लक्ष्मीश्च मात्मकाः
मण्डपे वामपार्श्वे तु भूतेशीं सम्यगर्चयेत्  २५
तद्देवीं परितः कुर्यात्सर्वदेवानुमूलतः
पौरण्वयतनञ्चैव सर्वबेरप्रतिष्ठितम्  २६
तत्पार्श्वे पश्चिमे देशे कामकोष्ठं स्वतन्त्रकम्
प्रथमावरणे बाह्ये द्वारभूतापि पार्श्वके  २७
अण्डावरणनाम्नाय द्वारभूतबलिन्ददेत्
चतुप्रस्थं तण्डुलं पिष्टां मोदकं भोज्यकं बलिः  २८
भूतायां सव्यपार्श्वे तु ज्वरदेवेश्वरस्तथा
तत्पार्श्वे मालिका वामे ज्येष्ठायामर्चयेद्बुधः  २९
एवमभ्यर्चयेद्विद्वान् प्रधानं तु सदाशिवम्
शिवार्चनविधानेन पूजाबलिदानकम्  ३०
नित्योत्सवादिकं सर्वं उत्सवं स्यान्यकर्म च
शिवप्रधानकं कुर्यादुत्सवे च विशेषतः  ३१
महेशं विष्णुमूर्तिं च स्कन्दमूर्तिं विनायकम्
दुर्गादेवीं च सर्वेषां यानं कुर्या दिनं प्रति  ३२
अन्याश्च देवतायानं शिवोत्सवविधानवत्
अत्रकिञ्चिद्विशेषोऽस्ति धामवृत्तिप्रतिष्ठितम्  ३३
स्कन्दं च पूर्वदिग्भागे विघ्नेशं दक्षिणे तथा
माधवं पश्चिमे देशे दुर्गादेवीं तथोत्तरे  ३४

मयूरमूषिकास्ताक्ष्र्य मृगमन्वादि कोणके
देवाग्रे वृषभं स्थाप्य ध्वजदण्डं विधीयते ३५
प्रधानमेकदण्डे तु दण्डाग्रे पञ्चमध्वजम्
मध्ये इक्षुध्वजं चैव दिक्षु चान्यध्वजं तथा ३६
स्थानसंघटधामेषु किञ्चिद्भेदं शिवार्चनम्
यत्र देशे विशालं स्यात् तद्देशे मुखमण्डपम् ३७
मालिकायास्तु परितः कल्पयेत्तस्य मध्यमे
पूर्वादिबलिपीठं च कल्पयेत्परितः क्रमात् ३८
उक्षं च भानुमात्रं च हस्तिवक्त्रं तथैव च
स्कन्दज्येष्ठां च मर्याणां क्षेत्रपालबलिं ददेत् ३९
सव्यं चाप्यपसव्यं च सर्वत्रापि बलिं ददेत्
प्रथमावरणं कृत्वा द्वितीयावरणे ददेत् ४०
इन्द्रादिलोकपालांश्च प्रासादावरणादन्यसेत्
मध्ये उक्षध्वजं चैव कोणेष्वन्यध्वजं तथा ४१
दण्डाग्रे तु महापीठं कल्पयेद्देशिकोत्तमः
निर्गमद्वारदेशे तु नन्दिकालौ बलिं ददेत् ४२
वृषभादिबलिं दद्यात् पीठयन्ते च प्रदक्षिणम्
बलिपीठस्य बाह्ये तु द्वितीयभ्रमणं कुरु ४३
गीतनृत्तादिकं सर्वं तृतीयभ्रमणे ततः
अन्यत्सर्वोपचाराणि शिवपूजानिधानवत् ४४
एवं यः कुरुते मर्त्यः सपुण्यांगतिमाप्नुयात्
इति सूक्ष्मागमे क्रियापादे पञ्चगोचरमूर्तिस्थापनविधिपटलः

रत्नन्यासः

नवरत्नं

मण्डपं तत्र संकल्प्य वितानध्वजसंयुतम्
देवं भद्रासनं स्थाप्य प्राङ्मुखस्य क्रमाद्गुरुः १
तदग्रे स्थण्डिलं कल्प्य हस्तमात्रप्रविस्तरम्
लिखेत् नवपदं कृत्वा तत्पदे पात्रसंस्थितम् २

तन्मध्ये पद्मरागं स्यात् ऐन्द्रे वैडुर्यसंस्थितम्
वज्रमाग्नेय्यविन्यस्य पुष्परागं तु दक्षिणे ३
नैर्ऋते स्फटिकं चैव वारुणे मौक्तिकं तथा
इन्द्रनीलं तु वायव्यां माणिक्कमुत्तरे तथा ४
ऐशान्यां प्रवालं स्यात् स्थापयेन्नवरत्नकम्
पुष्पं पवित्रगन्धं च तोयं रत्नेन संयुतम् ५
निरीक्षणादिशुद्धिं स्यात् षडुत्थासनमर्चयेत्
भवादिना न्यसेद्धीमान् तत्त्वतत्त्वाधिपान्यसेत् ६
तस्योपरि न्यसेद्यन्त्रं देवं तस्योपरि न्यसेत्
इन्द्रादिलोकपालानां मध्ये ब्रह्माणमर्चयेत् ७
ध्यानं शर्वं तु संपूज्य धूपदीपं निवेदकम्
बिम्बाङ्गं विन्यसेद्रत्नं सुगन्धेन तु संयुतम् ८
मूर्ध्ने ललाटकण्ठे च हृदये नाभिपादयोः
बाहुद्वयं च संस्थाप्य संहितामन्त्रमर्चयेत् ९
नैवेद्यं पायसान्नं च धूपदीपं तथैव च
अष्टपुष्पेण संपूज्य अभिषेकं वदाचरेत् १०
इति सूक्ष्मशास्त्रे रत्नन्यासविधिः

## सिंहस्थापनम्

अथ वक्ष्ये विशेषेण सिंहस्थापनमुत्तमम्
सर्वसिद्धिकरं पुण्यं सदा विजयवर्धनम् १
केसरीस्थापनं कुर्यात्स्थापनं च प्रयत्नतः
द्वारगोपुरयोर्मध्ये रक्षार्थं सिंहपूजनम् २
शैलजं लोहजं वापि बिम्बं कुर्याध्वरे कृतः
मानाङ्गुलेन वा कुर्यात् नालमानेन वा बुधः ३
यजमानोऽङ्गुलिं मानं द्वारमानेन वा पुनः
कुर्यात् शास्त्रप्रमाणेन देव्या यानमनुत्तमम् ४
रत्नन्यासं प्रकर्तव्यं शैलजं त्यचलं विना
लोहं चेत्कृते पीठे न वा पीठसमन्वितम् ५

मण्डले स्थण्डिले पद्मपीठमन्त्रं निधाय वै
पालिकाद्यैः सुमन्त्रैश्च पञ्चब्रह्मणि विन्यसेत् ६
देवदुन्दुभयोर्नेदुः दिव्यवाद्यैः सशोभितम्
सुमुहूर्ते सुलग्ने वा नवरत्नानि विन्यसेत् ७
नवरत्नवियुक्ते वा सुदृढं कारये धृशीम्
हरेद्बीजमनुस्मृत्य तत्काले देशिकोत्तमः ८
नयनोन्मीलनं कृत्वा पुण्याहं वाचयेत्ततः
सदृढं शिल्पिना सम्यक् यथा युक्त्या तु कारयेत् ९
देशिकः स्थपतिं पूज्य वस्त्रहेमाङ्गुलीयकैः
शालिभिः स्थण्डिलं कृत्वा तण्डुलैस्तिलसंयुतैः १०
गन्धाद्यैः स्थण्डिलं पूज्य हृदयेन तु मन्त्रतः
तदृष्ट्वधान्यराशीञ्च वर्णाद्यै दर्शयेद्वसुम् ११
व्यपोह्य पट्टमन्त्रैश्च जनात् सर्वान् प्रदर्शयेत्
देशिकः शिल्पिनं कुर्याद्वस्त्रहेमाङ्गुलीयकैः १२
वस्त्रमाभरणं चैव भूषणैर्भूषणार्हकैः
शिबिकायानमारोप्य सर्वातोद्य समायुतम् १३
पिञ्छचामरसंकीर्णं पदकाद्यैश्च संयुतम्
वास्तुप्रदक्षिणं कृत्वा जलतीरे समाश्रयम् १४
वस्त्रेणाच्छाद्य त सिंहं कूर्चसूत्रेण संयुतम्
आच्छाद्य नववस्त्रेण सिंहं कुर्याद्यथाविधि १५
आलयाग्रे च तत्पार्श्वे दक्षिणे चोत्तरेऽपि वा
नवहस्ताद्यसप्तांशमष्टांशमथवापि वा १६
स्तम्भं षोडशसंयुक्तं द्वादशस्तम्भसंयुतम्
पद्ममानं समुत्सेधं चतुर्द्वारसमायुतम् १७
चतुस्तोरणसंयुक्तं ब्रह्मांशे वेदिका भवेत्
रत्नमात्रसमुत्सेधं दर्पणोदरसन्निभम् १८
कुण्डानि कारयेत्तत्र ईशान्यां सिंहशालकम्
प्राकुण्डवेदिकामध्ये प्रधानं तत्र कल्पयेत् १९
गोमयालेपनं कृत्वा प्रोक्षयेत्तु शिवाम्भसा

स्थण्डिलं तत्र कर्तव्यं वेदिकोपरि विन्यसेत् २०
स्थण्डिलैश्च तिलैः कृत्वा दर्भैः पुष्पैः परिस्तरेत्
अण्डजाद्यैर्विशेषेण कल्पयेच्छयनं यजेत् २१
दीपांश्च लाङ्गलैर्युक्तं प्रच्छन्नपटसंयुतम्
द्वारपूजादिकं सर्वं स्थापनं कर्मवत्सुधीः २२
एवं मण्टपसंस्कारतोरणैश्च सुरैर्युतम्
जलदुत्तीर्य बिम्बं तु प्रविशेदालयं तथा २३
शुद्धिं कृत्वा तु गव्यांश्च सेचयेद्गन्धवारिणा
वस्त्रे च्छाद्य तं सिंहं कूर्चसूत्रेण संयुतम् २४
कृत्वा तु हेमसूत्रं वा बन्धयेत् कण्ठदेशतः
शयने शाययेत् सिंहं स्थण्डिलोपरि विन्यसेत् २५
द्रोणार्धं तोयसंपूर्णसूत्रेणैव तु वेष्टयेत्
गन्धतोयेन संपूर्णं हेमपद्मैश्च संयुतम् २६
बेरकूर्चसमायुक्तं स्थण्डिलोपरि विन्यसेत्
वस्त्रेणाच्छाद्य तान् कुम्भान् चूतपल्लवशोभितान् २७
नालिकेरादिभिस्तेषु प्राधानं च घटे न्यसेत्
सिंहो हरिं मृगेन्द्रश्च पञ्चास्यः केसरस्तथा २८
हर्यक्षनागरीश्चैव क्रमात् स्थाप्य सुपूजयेत्
तत्तद्बीजमनुस्मृत्य घटानावाहयेद्बुधः २९
घटानां विन्यसेद्वारीं देहिकश्च समाहितः
गन्धादिभिरथाभ्यर्च्य हृदयाद्यैरनुक्रमात् ३०
समिदाज्यचरुर्लाजान् मुद् माषतिलांस्तथा
प्रत्येकं तु शतं हुत्वा तदर्धं वा तदर्धकम् ३१
तद्रव्यं प्रतिवह्नीनां योजयेत्तु गुरूत्तमः
वह्निना योजयेत्सिंहं प्रधाने देशिकोत्तमः ३२
तत्राग्निं सर्वकुण्डेषु निक्षिपेत् प्रणवेन तु
अग्न्याधानादिकं कृत्वा द्रव्यहोमं समाचरेत् ३३
मूलेन हृदयाद्यस्तु समिदादि च होमयेत्
हरिगायत्रीं तीक्ष्णदंष्ट्रायश्चैवात्रविद्महेति परं पदम् ३४

नखाङ्कुशाग्रहस्ताय धीमहीति परं पदम्
तत्परं परमे तत्त्वं तन्नो सिंह प्रचोदयात् ३५
हरिगायत्र्या चैव पूर्णाहुतिमथाचरेत्
तन्मूलेन चाचार्ये होमाऽन्ते च्छादितः क्रमात् ३६
व्यपोह्य कूर्चवस्त्रं तु पल्लवोदासनं पुनः
अष्टमूर्तिसमोपेतमशेषाग्निविनिर्मितम् ३७
सम्यक् सम्भाव्य सिंहेन्द्रं प्रतिष्ठां कुरु सर्वदा
अस्मिन्येश्मनि देवेश यावच्चन्द्रतितारकम् ३८
इत्येव देशिको ब्रूयात् तत्तन्मन्त्रं समाहितः
देशिकं पूजयेत्तत्र वस्त्रैराभरणैस्तथा ३९
दक्षिणा च तथा देया स्वर्णवर्णप्रजोदितम्
मूर्तिपान् पूजयेत्तत्र देवज्ञं पूजयेत्ततः ४०
भ्रमणे भ्राम्यमन्त्रैश्च स्नपनं कारयेत्ततः
वस्त्रैराभरणैर्भूष्य नैवेद्यं च प्रदापयेत् ४१
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इति सूक्ष्मागमे क्रियापादे सिंहस्थापनविधिपटलः

## अरुणोदयपूजाविधिः

अरुणोदयवेलायामर्वात् घटक चतुष्टयम्
कुर्यात्पञ्चमहाशब्दं सर्वप्राणितमोपहम् १
कुर्याद्विप्रादिकाश्शंभोरतः पूजां समाचरेत्
तत्काले स्थलिकायां ते पूर्ववत् पादुकां यजेत् २
विन्यस्यातोद्य संयुक्तं पारियान्तः प्रविश्य च
संपूर्णैद्वासयेद्देवं लिङ्गपूजार्थमव्ययम् ३
देवदेवं नमस्कृत्वा द्वारदेवान् सुपूजयेत्
यवनिकां परित्यज्य हृन्मन्त्रं च समुच्चरन् ४
गर्भगेहं ततः प्राप्य लिङ्गशुद्धिं समाचरेत्
पूजयेत्प्रायदावाह्य समन्त्रं च परिच्छदम् ५
शिवाम्भसा तु संस्नाप्य स्नापयेच्छुद्धवारिणा

हृदयेन तु मन्त्रेण पुष्पमूर्ध्नि निधापयेत् ६
पवित्रोपवीतकादीनि दापयेद्धृदयेन तु
नैवेद्यं दापयेद्विद्वान् उपदंशसमन्वितम् ७
निवेदयेद्धृदामन्त्री पानीयं दापयेत्ततः
हृदयेनाचमनं दत्त्वा चण्डेशाय निवेदयेत् ८
ताम्बूलं दापयेत्तस्मै सद्येनैव विशेषतः
प्रणम्य शिरसादेवं क्षमस्वेति विसर्जयेत् ९
एवं यः पूजयेद्देवं नियतात्मा सदाशिवम्
स यातिपरमस्थानं संप्राप्य सुकृतार्थिभिः १०
इति सूक्ष्मशास्त्रे अरुणोदयपूजाविधिः

मध्याह्नपूजाविधिः

मध्याह्नपूजा कर्तव्य तिथिनाद्याधिकं भवेत्
पूर्वस्थानेषु कर्तव्यं पुण्याहादि समाचरेत् १
विभवश्चेद्विशेषेण पञ्चगव्यं च पूर्ववत्
पञ्चामृतं पुरा कृत्वा स्नपनं पूर्ववद्भवेत् २
द्वारादीनां तु संपूज्य सर्वदेव सुभाषितम्
अभिषेकं ततः कृत्वा पूर्वोक्तविधिना सह ३
नैवेद्यं च प्रदातव्यं सकलादि निवेदयेत्
नित्यहोमं च कर्तव्यं बलिदानं च पूर्ववत् ४
धूपदीपं ददेत् पश्चादुपचाराणि कारयेत्
ग्रहेशमूर्तिकादीनि धूपदीपं ददेद्गुरुः ५
परिवाराणि सर्वाणि नैवेद्यं तु प्रदापयेत्
तदन्ते चण्डपूजां च तद्भेदं शृणु सुव्रत ६
भौमं भूमिं त्यजेद्भक्ता द्विपञ्च च चतुष्पदम्
मणयोरक्तकादीनि देवस्वं परिकीर्तितम् ७
लेह्य शोष्यान्नपानादि ताम्बूलस्रग्विलेपनम्
निर्माल्यं भोजनं तुभ्यं प्रादयन्तु शिवाज्ञया ८
चण्डेशाय प्रदातव्यं शुद्धतोयाभिषेचनम्

इति सूक्ष्मशस्त्रे मध्याह्नपूजाविधि पटलः

## वृक्षपूजाविधिः

वृक्षपूजाविधिं वक्ष्ये शृणु त्वं तत्प्रभंजन
आयुः श्री कीर्तिवृद्धिं च पुत्रधान्यविवर्धनम् १
सामान्यं च विशेषेण वृक्षपूजा द्विधोच्यते
अश्वत्थादीनि वृक्षं च यजेत्सामान्यमीरितम् २
यद्वृक्षे देवधामेषु स्थितं सान्निध्य शंभुना
तद्विशेषमिति ख्यातं तस्यार्चनमुदाहृतम् ३
प्रातस्सन्ध्यावसाने तु दिव्यवृक्षाग्रदेशितः
बहुरूपेण संशोध्य लेपनं पुरुषेण तु ४
पुण्याहं वाचयेत्तत्र द्रव्यान् संप्रोक्ष्य चास्मृतः
पाद्यादीनां तु संसाध्य विघ्नेशं पूजयेद्गुरुः ५
द्वारपूजां ततः कृत्वा उमादीं क्षाळ्य हेतिना
आसनं मूर्तिमूलं च पूर्ववत्कल्पयेद्बुधः ६
वृक्षं शिवमयं ध्यात्वा स्नानं पूर्ववदाचरेत्
वस्त्रमाल्यं च गन्धं च शिवमन्त्रेण दापयेत् ७
नैवेद्यं दापयित्वा तु धूपदीपं च भस्मकम्
ताम्बूलं दापयेद्धीमान् वेद्याद्यैश्चैव तोषयेत् ८
एककालं द्विकालं वा त्रिकालं वा समाचरेत्
एवं दिने दिने कुर्यात् शिवलोके महीयते ९
इति सूक्ष्मशास्त्रे क्रियापादे वृक्षपूजाविधिः

## स्थण्डिलदेवता

स्थण्डिलं ब्रह्मदैवत्यं कुण्डं तु विष्णुदैवतम्
वर्धनीं रुद्रदैवत्यं प्रोक्षणीं भृगुदेवता १
प्रणीता वरुणदैवत्यं परिधीर्भव दैवतम्
परिस्तराश्मि दैवत्यं समिधौर्धेनुदैवतम् २
अनुयाजं गुरी दैवत्यं गन्धमश्वनि दैवतम्

पुष्पं गन्धर्वदैवत्यं इध्मश्रीदेविरुच्यते ३
दीपं प्रजापतिर्दैवं लाजं नक्षत्रदैवतम्
यागद्रव्येषु सर्वेषु इत्येते अधिदेवताः ४
शालीनावृषभो देवा तण्डुलानां च षण्मुखा
तिलेषु काममूर्तिस्तु पार्वती च परिस्तरे ५
रेखायामष्टदिक्पाले लेपिते भूमिदेवता
वेदिकाद्यस्तु देवानां उपवेदी सरस्वती ६
आयुधे नृत्तमूर्तिस्तु सुन्दरीमङ्गलाष्टके
अङ्कुरेषु च सोमं स्यात् दीपं चैवाग्निदैवतम् ७
वर्धन्यां वदने गौरीं न्यसेद्धीमान् विचिन्तयेत्
दीक्षायां च प्रतिष्ठा च उत्सवस्य च कर्मणा ८
वपनं कारयित्वाथ तत्तत्कर्म समाचरेत्

इति सूक्ष्मशास्त्रे स्थण्डिल अधिदेवताविधिः

Reference (Pages 346-399) :
*Sūkṣmāgama*, Manuscript No. T0955 of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry. This transcript is copied from a Transcript belonging to Sāmbaśivaśivācārya of Palani.

शान्त्यद्भुतविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
भूमिकम्पे त्मनापृष्टौ प्रतिसूर्य प्रदर्शने १
रात्राविन्द्रधनुर्दृष्टे दिवानक्षत्र दर्शने
एवमादि यमुत्पन्ने राज्ञो राक्षस्य दोषकृत् २
शान्तिं कुर्याद्विसप्ताहमेवमादीनि दर्शने
प्रासादे मधुरुत्पन्ने रक्तकन्या समुद्भवे ३
प्रविष्टे पिंगलीलूके वल्मीके वा समुत्थिते
एवमादि समुत्पन्ने व्यपोह्य सकलं ततः ४
पञ्चगव्येन संप्रोक्ष्य शान्तिस्सप्ताहमुच्यते
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्यायनं ततः ५

दिशा होमं ततः कुर्यात् मूर्तिहोममथापि वा
स्नपनञ्च तथा नित्यं यथा वित्तानुसारतः ६
याज्ञिकं वृक्षमादय पार्श्वयोः पृष्ठतस्ततः
कृत्वा त्रिपादिकं तत्र यथा लिंगन्तु मध्यमे ७
द्रोणत्रयप्रपूर्णन्तु कुंभं वै सापिधानकम्
स्वर्णनलनं संयुक्तत्रिसूत्रेण विचित्रितम् ८
पञ्चरत्नं समायुक्तं नव वस्त्रसमायुतम्
गलालवंककर्पूरन्तींबुजाति फलैर्युतम् ९
क्षीरेण वेदकेनाथ चूर्णितं तत्र विन्यसेत्
यथा धारां प्रपद्येत पतिते लिंगमूर्धनि १०
संपूज्य विधिवद्देव त्रिकालं विधिविन्यसेत्
शीतकुंभमिति ख्यातं सर्वदोषनिकृन्तनम् ११
अनेन शीतकुंभेन ज्वरमारि विनाशने
पूज्य प्रस्थसहस्रैस्तु शीतकुंभेन पूरयेत् १२
शतरुद्राधिदैवत्यं पूजयित्वा विशेषतः
स्थाप्य देवं ततो विद्वान् रुद्रसूक्तं समुच्चरन् १३
ईशान्यां दिशिबाह्ये तु राष्ट्रे रग्निं प्रदापयेत्
तत्राग्नौ नृत्तमावर्ति दीपयेदिन्धनैस्ततः १४
एवं कृते भवच्छान्ति सर्वारिष्टनिवारणम्
प्रतिसंवत्सरं ह्येवं यः कुर्यादभिषेचनम् १५
सर्वदोषनिवृत्यर्थं सर्वव्याधिहराय च
अद्भुतानि च शाम्यान्ति धनधान्यञ्च वर्धते १६
गुरून् यर्वान् समुद्धृत्य रुद्रलोके महीयते १७

इति सूक्ष्मशास्त्रे अद्भुतशान्तिविधिपटलः

Reference (Pages 399-400) :
Sūkṣmāgama, Manuscript No. T0988c of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry. This transcript is copied from a manuscript belonging to the French Institute of Pondicherry, No. RE 39836.

सुब्रह्मण्याय नमः
शिवाय नमः
परमगुरुवे नमः

माघमासे तु कर्तव्यं घृतकम्बलमेव च
घृतकम्बलमित्युक्तं विष्णुप्रीतिकरं भवेत्  १
संवत्सरादिपूजायां सर्वपूजाफलप्रदम्
दिनं प्रति विशेषेण पूजाहिनं तथैव च  २
शिवरात्रिपूज्यात्तस्मिन्त्सर्वपूजाफलप्रदम्
फाल्गुने दधिसंपूज्य धनपुत्रविवर्धनम्  ३
दधि संपूजयेद्वह्नि पुरुहृत् प्रीतिरुच्यते
विषुवं प्रोक्तमेवं हि मध्याह्ने पूजयेत्तथा  ४
चैत्रे दमनकं प्रोक्तमृषिणां प्रीतिरुच्यते
वैशाखे त्रिफलं पूज्य विघ्नेशं प्रीतिरुच्यते  ५
ज्येष्ठमासे तु कर्तव्यं क्षीराभिषेचनं तथा
क्षीराभिषेकमित्युक्तं वत्सगोवर्धनं भवेत्  ६
सायाह्नपूजनं तस्मादयनेषु विधीयते
आषाढे भस्म संपूज्य रुद्रप्रीतिकरं भवेत्  ७
शर्करा श्रवणे पूज्य चन्द्रमाप्रीतिरुच्यते
प्रोष्ठे अपूपैः संपूज्य स्कन्दप्रीतिकरं भवेत्  ८
विषु संप्रोक्तमेवं हि अर्धयामे तु पूजयेत्
आश्विनि चान्नसंपूज्य ब्रह्मणः प्रीतिरुच्यते  ९
शिवशक्तिसमुत्पन्नं लोकस्योत्पत्तिकारणम्
ओषधीनां विपद्यर्थं बीजदानमिहोच्यते  १०
आत्मसृष्टिकरं प्रोक्तं सौख्यं लवणदापनम्
कन्यानां वस्त्रदार्वं स्यात्स्वर्णदानं तु कन्यकाम्  ११
सुवर्णं लोकरक्षार्थं वस्त्रपुत्रविवर्धनम्
गौरियानं भवेत्तस्मात् सर्वप्राणिहितावहम्  १२
कृत्तिकामासमेवोक्तं दापपूजनमेव च
भूसुरे तु प्रसादं हि महाज्वालाधरं हरम्  १३

लाजोपचारमेवोक्तं कृत्तिकादीपमेव च
घृतस्नानं भवेत्तस्मान्मार्गमासे तु कथ्यते १४
घृतस्नानमिदं प्रोक्तं सर्वपापनिकृन्तनम्
डोलारोहणमेवोक्तं गौरीलीलविधिक्रमम् १५
शिवशक्तिसमोपेतं डोलारोहणमेव च
पुष्यमासादिपूजाया मार्गमासान्तमेव च १६
इति सूक्ष्मतन्त्रे नैमित्तिकाण्डे घृतकम्बकपूजाविधिपटलः

अथातः संप्रवक्ष्यामि निशिपूजविधिं शृणु
संध्यादौ कृतनृत्तं स्यात्संध्यानृत्तमथारभेत् १
दारुजं पृथिवीजातं शंखचारुछजमुच्यते
आग्नेयं लोहजं प्रोक्तं वायव्यं वंशजं भवेत् २
गेयं गगनजातं स्यात्तस्माद्भूतात्मिकं मतम्
एतानि पञ्चशब्दानि घोषयेत्प्रथमं ततः ३
लिङ्गोद्भवादिमूर्तिनां सायरक्षाविधिं शृणु
सायरक्षविहीने च बालानां नाशनं भवेत् ४
राजा दुर्जयमाप्नोति शान्तिहोमं ततः कुरु
सायंकाले प्रयोक्तव्यं नटेशं पूजयेत्ततः ५
मूलबेरविधिस्नात्वा प्र++ह+षं ददेत्
श्वेतपुष्पैरलङ्कृत्य श्वेतचन्दनलेपितम् ६
श्वेतवस्त्रैरलङ्कृत्य सर्वाभरणभूषितम्
एतत्कालं समभ्यर्च्य पूर्वोक्तविधिना सह ७
नित्योत्सवविधिं कुर्याद् अर्धयामे तु पूजनम्
दिव्यगन्धानुलिप्ताङ्गं दिव्यमालाविभूषणम् ८
चित्रवस्त्रैरलङ्कृत्य सर्वाभरणभूषितम्
पूजयेत् चिरशक्तिं स्यात् अर्चनोक्तपदं चरेत् ९
पादुकां प्रतिमां वापि पूजयेत्तु विशेषतः
पूजयेत् शक्तिमन्त्रेण शिपिकां रोचयेत्ततः १०
शिपिकान्ते ततः कुर्यात्प्राकारे तु प्रदक्षिणम्

नृत्तं च रत्नसङ्ख्या तु नवतालं समाचरेत्  ११
इन्द्रादीशानपर्यन्तं शुद्धनृत्तं तु मध्यमे
इन्द्रादीशानरागं स्याद्रत्नाक नृत्तमेव च  १२
लिङ्गस्योत्तरभागे तु पद्मपीठे तु विन्यसेत्
धूपदीपं हृदा दत्वा श्राचमनं ददेद्बुधः  १३
श्रपूपमुद्गपिराडं च पायसं गुलखराडकम्
नालिकेरादि क्षीरं च कदलीपनसं क्रमात्  १४
मुद्गान्नं च गुलान्नं च शुद्धान्नं पायसान्नकम्
कृसरान्ननिवेद्यं स्यादेतैः पञ्चान्नमेव च  १५
गन्धमिश्रेण पानीयं हस्तोद्वर्त्तनमेव च
कर्पूरमुखवासं च ताम्बूलं च निवेदयेत्  १६
धूपदीपादिकं सर्वमारात्रिभस्ममेव च
द्वारशुद्धिं ततः कृत्वा महालिङ्गं प्रपूजयेत्  १७
द्वारमध्ये तु संपूज्य प्रासादेनं तु मन्त्रतः
दूर्वाक्षतपवित्रेण दर्पणच्छत्रचामरैः  १८
यथाशक्ति जपं कुर्याद्धस्तं प्रक्षालयेत्सदा
भस्मानं दापयेत् शंभो नृपभक्तजनाय च  १९
चराडेशं क्षेत्रपालं च पूजयेत्तु विशेषतः
पश्चिमे सोमदिग्भागे शय्यास्थानं प्रकल्पयेत्  २०
शयनयन्त्रं समारोप्य शिवं शक्तिं प्रपूजयेत्
पादुका प्रतिमा वापि शयनोपरि विन्यसेत्  २१
सोमेशमूर्त्तिं संपूज्य सन्निधौ पादुकद्वयम्
त्रिरोत्रं एकवक्त्रं च मृगिपरशुधारराम्  २२
वामदक्षिराहस्तौ च श्रभयं वरदं न्यसेत्
व्याघ्रचर्माम्बरधरं सर्वाभरराभूषितम्  २३
स्फटिकं शुद्धतञ्चैव श्वेतपद्मासनस्थितम्
गौरीं संपूज्य विधिवत्ताम्बूलं तु निवेदयेत्  २४
राजवद्युपचारं हि पुत्रवत्स्नेहमेव च
गुरुवत् भक्तिमेवोक्तं सर्पवत् भीतिरुच्यते  २५

एवं नित्यक्रमेणैव रुद्रनाट्यसपादके
एवं नित्यक्रमेणैव स्वगुरुं पूजयेत्ततः २६
स्वात्मानं पादमूले तु तर्पयेञ्चुलुकोदकैः
विजयं ललितं सूक्ष्मं शिवपूजाविधि शृणु २७
इति सूक्ष्मतन्त्रे निशिपूजाविधिपटलः

अतः परं प्रवक्ष्यामि शिवोत्सवविधिक्रमम्
सूचनं सर्वलोकानां शिववक्त्राद्विनिर्गतम् १
संवत्सरोत्सवं पूर्वं द्वितीयं मासि चोत्सवम्
मार्गशीर्षमासादि षाण्मासं सप्तरात्रिकम् २
शेषमासे तु मेधावि उत्सवञ्चेत्त्रिरात्रकम्
सर्वभूतहितं शान्तं सर्वदोषनिवारणम् ३
स्थापने प्रोक्षणे यागे दीक्षान्ते च विशेषतः
अयनाद्यस्तु सङ्क्रान्त्यो व्यतिपातेषु जन्मनि ४
अतिवृष्टिरानवृष्टौ राष्ट्रक्षोभं तथैव च
राजाभिषेके ऋक्षान्ते उत्सवं कारयेद्बुधः ५
सवोः दुखस्समाख्यातं उत्सवस्य निवारणम्
उद्गतस्तु सवो यस्मात् तस्मादुत्सवमुच्यते ६
मार्गशीर्षमासे तु शिवान्तस्यात् शिवोत्सवः
पुष्यमासे तु पुष्यान्तं माघमासे मघान्तकम् ७
पितृन्नुद्दिश्य कुर्वन्ति सर्वे गच्छन्ति चोद्धृताः
फल्गुने चोत्तरान्तं तु भवाद्भोगार्थमुच्यते ८
चैत्रे शत्रुक्षयं कुर्याद् वैशाखेऽपि तथैव च
अन्येषु सर्वमासेषु तत्तन्नक्षत्रके बुधः ९
शैवं गौणं प्रभूतं च भावनं दैविकं तथा
पैतृकं चैव कौमारं सावित्र्यमिति चाष्टकम् १०
एकाहं शैवनामं स्याद्गौणं त्रियाहमुच्यते
पञ्चाहं भावनं प्रोक्तं सप्ताहं च प्रभृतिकम् ११
नवाहं दैविकं प्रोक्तं सावित्र्यं पक्षकं विदुः

मासोत्सवं भवेन्नाम पैतृकं तत्प्रकीर्तितम्  १२
षाण्मासेन तु कर्तव्यं कौमारमिति कथ्यते
उत्सवानां प्रभेदं च नामानि कथितानि वै  १३
किञ्चिद्विशेषं वक्ष्यामि तीर्थकालं विशेषतः
उत्सवं चैव वाद्यं स्यात्प्रमादात्सङ्गतिर्यदि  १४
दिनमेकं प्रवृद्धं च हीनं चैव न कारयेत्
रात्राधिवासनं तीर्थं  सामान्यमिति विद्यते  १५
चूर्णोत्सवादि तीर्थान्तं प्रधानं सम्यगीरितम्
तस्मिन्काले तु तीर्थर्क्षे युक्तं चैव विशेषतः  १६
तेन तीर्थं  शुभं विद्यात्सर्वेषां च शिवं भवेत्
रात्राधिवासनातीर्थे तीर्थदौ चन संभवेत्  १७
तेन तीर्थेषु दोषाय महातीर्थं  न दोषकम्
तस्मात्सर्वप्रयत्नेन महातीर्थं  विशेषतः  १८
तीर्थसङ्ग्रहणे काले नक्षत्रेऽपि च संभवेत्
तस्मिन्काले तु तीर्थं  स्यात्सर्वसंपत्समृद्धये  १९
महातीर्थे तु काले तु तीर्थर्क्षन्न भवेद्यदि
तस्मिन्पर्वणि संबन्धे तीर्थं  कुर्याद्विशेषतः  २०
पर्वसामर्थ्यरूपेण सर्वदोषविनाशनम्
पर्वण्यसंभवे तीर्थं  पूर्वेद्युः कारयेद्बुधः  २१
उत्सवं कृत्तिकादीपं मार्गमासेन कारयेत्
तीर्थान्तान्यस्तमे चात्र वनरत्रां समाचरेत्  २२
बलिहोमौ विना तस्मिन् अन्यत्सवं तु पूर्वकम्
ध्वजादि तीर्थपर्यन्तम् एकमासे तु मध्यमे  २३
केतोरारोहणं पूर्वं  तस्या नैवोत्सवं यदा
अधमन्तं च विख्याति तस्मिन् तीर्थमेव च  २४
उत्सवस्य च मासे तु तस्मिन्मासे तु तीर्थकम्
एवं विधाने कर्तव्यं कारयेद्देशिकोत्तमः  २५
तदनं त्रिगुणान्ये च द्विगुणान्ये तदाद्यके
ध्वजमारोपयेत्पूर्वं  उत्तमं मध्यमाधमम्  २६

ध्वजोत्थापनपूर्वे तु सप्तमे नवमे निशि
अङ्कुरानर्पयेद्विद्वान् शास्त्रदृष्टेन कर्मणा २७
अष्टाविंशद्दिने चैव अष्टादशस्य चोत्तरे
तद्दिनं च समारम्भे दशमे दिवसे भवेत् २८
दैविके चोत्सवे काले विंशदेकोन्नके दिने
अङ्कुरार्पणकं कुर्यात्तीर्थस्य तु विशेषतः २९
एतद्दिशदिने काले अङ्कुरानर्पयेद्बुधः
भौतिके चोत्सवे काले दशपञ्चाहके दिने ३०
अङ्कुरानर्पयेद्विद्वान् द्विगुणे चाष्टमे दिने
तद्दिने च समारम्भे अङ्कुरस्यापि चाङ्कुरम् ३१
अन्येषु चोत्सवारम्भे कारयेद्देशिकोत्तमः
तस्मिन् मासे तु यदृक्षं उत्सवं कारयेद्यदि ३२
तस्मिन् मासे तु तदृक्षे उत्सवं कारयेत्सदा
अन्यथा कारयेद्यस्तु राजाराष्ट्रं विनश्यति ३३
तस्मात् सर्वप्रयत्नेन पूर्वारम्भे तु कारयेत्
ध्वजाङ्कुरं बलिं चैव भोजनञ्चाधिवासनम् ३४
तीर्थस्नपनचण्डेशयागं चाष्टाङ्गमुत्सवम्
भरवञ्चैपताका वा अङ्कुरं बलिरेव च ३५
अधिवासनचूर्णादितीर्थस्नपनमुत्तमम्
प्रथमं रोपयेत्केतुं द्वितीयं चाङ्कुरार्पणम् ३६
यागमण्डपसंस्कारं चतुर्थं वेदिकाणिया
पञ्चमं कुण्डसंस्कारं षष्ठं चास्त्रपरिग्रहम् ३७
सप्तमं चास्त्रयागं तु अष्टमं चाधिवासनम्
चूर्णोत्सवं तु नवमं दशमं चाभिषेचनम् ३८
एकादशं स्यात्स्नपनं द्वादशं मूर्तिपूजनम्
त्रयोदशं गणायागं चण्डयागं चतुर्दशम् ३९
आरोहणं पञ्चदशत्तोयागं परिकीर्तितम्
भक्तोत्सवमथ पश्चात् पुष्पयागमतः परम् ४०

इति सूक्ष्मतन्त्रे उत्सवसूचनपटलः

अतः परं प्रवक्ष्यामि तीर्थकालस्य लक्षणम्
सर्वलोकहितार्थाय सर्वभूतहिताय च १
अनावृष्टिविनाशाय सस्यानमपि वृद्धये
मसूरीकाविनाशाय राजाराष्ट्रसुखाय च २
तस्मिन्सर्वप्रयत्नेन उत्सवं कारयेद्बुधः
नृपस्यजन्मनक्षत्रे राष्ट्रजन्मर्क्षकेऽपि च ३
ग्रामे तु ग्रामजन्मर्क्षे नगरादौ च जन्मभे
यमजानस्य जन्मर्क्षे तेषामन्तेऽपि वा पुनः ४
ग्रहणे चैव सङ्क्रान्त्या वथचेनार्चयेत्ततः
अथवा मासनक्षत्रे उत्सवं कारयेद्बुधः ५
कार्त्तिक्यां कृत्तिकायां तु सर्वसिद्धिप्रदायकम्
मार्गशीर्षमासे तु रुद्रान्तं हि धनप्रदम् ६
पुष्यमासे तु पुष्यान्तं पुत्रपौत्रविवर्धनम्
माघमासे तु माघान्तं पितॄन्स्वर्गं नयेत्सदा ७
फाल्गुने चोत्तरायां तु विजयाद्धिदि विशेषतः
चैत्रामासे तु चित्तान्तं रिपोर्नाशनकारणम् ८
वैशाखे तु विशाखान्तं कुलत्रयविवर्धनम्
ज्येष्ठमासे तु मूलानां राज्ञां कामं दिने दिने ९
आषाढमासे वैश्वान्तं भोगाद्धि विजयं भवेत्
श्रावणेषु श्रविष्ठान्तं ब्रह्मणः पदमाप्नुयात् १०
प्रोष्ठान्तं भाद्रमासि स्याद् भोगजातिविवर्धनम्
अश्विन्यान्तं हि याश्वैजा सर्वरोगविनाशकृत् ११
सर्वमासेषु कर्तव्यं आर्द्रान्तं वा शिवोत्सवम्
यस्मिन् संवत्सरे मासि तस्मिन् रक्षे तु कारयेत् १२
किञ्चिद्विशेषं वक्ष्यामि तीर्थकालविशेषतः
चित्तास्वाति च मेषे तु विशाखामैत्रभं वृषे १३
ऐन्द्रमूलर्क्षकन्दे च आषाढे व्याप्यवैष्णवौ
श्रावणे विष्णुवस्पृक्षे भाद्रमासे त्वजैकपात् १४
तुलायां भास्करे याते चाश्विन्यां याम्यमेव च

कृत्तिका रोहणी चैव कृत्तिक्यां तु विशेषतः १५
सौम्यं चैव तथा दृचामार्गशीर्षमासके
आदित्यपूषौ पुष्ये च सर्पपित्रे च माघके १६
फल्गुने चोत्तराहस्ते तीर्थं कुर्यात्तु तेषु वै
पौर्णमासि कुहूश्चैव त्रयोदशिचतुर्दशी १७
उत्तश्च त्रिधयंश्चैव तीर्थमेव युता यदि
यस्मिन् काले तु सबन्धे कुर्याद्वै देशिकोत्तमः १८
पूर्ववत्सरतीर्थक्षं तस्मिन्नहनि तीर्थकम्
विनाशेदवभृतं कुर्याच्चेदन्यत्राक्षक १९
रात्रौ पर्वर्क्षकं कुर्याद् दिवा ऋक्षं न दोषभाक्
योगयुक्ते तथैव स्याद् उपरागं तथैव च २०
यस्मिन् दिनावा रात्रौ तु अमृत्यधा भवन्ति चेत्
दिवा योगयुते यद्यात्तीर्थं कुर्यात्तु तीर्थभे २१
न दिवा योगयुक्तोऽपि रात्रौ योगयुतेऽपि वा
यस्मिन्नहनि तीर्थं तु कुर्यादस्तमयात्पुनः २२
अपरे भिन्नयोगा स्यात्तीर्थर्क्षेण युतं यदि
तस्मिन्दिने ह्यवभृतं कारयेन्न तु बुद्धिमान् २३
योगसामर्थ्यरूपेण पूर्वसामर्थ्यकेन वा
पूर्वेद्युरेव कर्तव्यं कर्तव्यं चैव योगतः २४
एवमेव प्रकारेण योगकाले तु कारयेत्
पूर्वोक्ततिथिनक्षत्रे स्वस्वयागा भवन्ति हि २५
तेषु कालेषु तीर्थं हि कुर्युर्वै देशिकोत्तमः
तेषु चैकोपि हीनं चेत् तीर्थं चैव न कारयेत् २६
उत्सवं च तथा योगं प्रकारेण समानतः
योगयुक्ते दिने काले तीर्थं कुर्याच्छिवोत्सवम् २७
अमृते वा सिद्धयोगेष्वेकर्क्षोऽपि गतं यदि
अन्येषूत्पातकालेषु कारयेद्देशिकोत्तमः २८
कारणं किं विशेषोऽस्ति योगसामर्थ्यरूपतः
मधुवा घृतसंयुक्तं यथा विषममाप्नुयात् २९

तदेवाह्यमृतेनैव योगयुक्तेन निर्मलम्
भवन्तीति न सन्देहमिति शास्त्रस्य निश्चयः ३०
एवमेव विधानेन पूर्वमेव तु लक्षयेत्
यस्मात्तज्जन्मनक्षत्रं योगेन सहितं यदि ३१
तेन तीर्थं महाभद्रमनन्तं फलमश्नुते
नाशयोगादिभिर्युक्ते पूर्वारम्भदिने यदि ३२
तस्मिन् दिने न कर्तव्यं कर्तव्यं चेत्तु निष्फलम्
पूर्वेणारम्भतीर्थर्क्षे कारयेत्तीर्थमुत्तमम् ३३
एवं परीक्ष्य बहुधा कारयेद्देशिकोत्तमः
सुमुहूर्ते सुलग्ने तु स्थिराख्ये शुभविक्ष्यते ३४
प्रथमारम्भकाले तु एवमेव तु लक्षयेत्
उत्तमं देवताभिश्च हहैवाप्यवगाहनम् ३५
मध्यं तद्धृदाद्भिश्च संमार्जनमथापरम्
तस्मिन् काले जले ग्राह्य गजाश्वादिषु सेचयेत् ३६
ध्वजाङ्कुरकृतात्कालादातीर्थान्तं हि बुद्धिमान्
तयोरन्तररिक्षेषु नृकल्याणं च कारयेत् ३७
तेषु यात्रा न कर्तव्या कर्तॄणां क्लेशकृद्भवेत्
अवश्यं भवति चेद्यात्रा तीर्थस्याभ्यन्तरे विशेत् ३८
विशेषेण प्रवक्ष्यामि ब्राह्मणादेस्तु तीर्थकम्
माघफल्गुनचैत्रेषु वैशाखे ब्राह्मणस्य तु ३९
आषाढे श्रावणे चैव तथा वै ज्येष्ठमासिके
पुष्यमासे नृपस्यैव ब्राह्मणस्य च तेऽपि च ४०
आश्वयुक्कृत्तिकामासेवैश्यजातेर्विधीयते
मार्गशीर्षहैमन्ते शूद्रस्यैव विधीयते ४१
एवमुक्तप्रकारेण कारयेद्देशिकोत्तमः
माघे चोत्तरनक्षत्रे प्रोष्ठे चैन्द्राग्निकेऽपि च ४२
ब्राह्मणस्य प्रकर्तव्यं त्रिष्यश्रवणकेऽपि च
मूलपुष्यनृपस्योक्तकार्तिकामश्विनि परे ४३
आर्द्रायां पूर्वभाद्रर्क्षे शूद्रस्य च विधीयते

सर्वेषामेव जातीनामार्द्रान्तं स्याच्छिवोत्सवम् ४४
वैष्णवे च पुनर्वस्वो हस्तेऽपि च तथैव च
सप्तम्यां च त्रयोदश्यां द्वादश्यां ब्राह्मणस्य च ४५
बुधवारे गुरुवारे ब्राह्मणस्य विधीयते
अङ्गारके नृपस्योक्तं भास्करे सितवारके ४६
वैश्यश्चैव प्रकर्तव्यं शूद्रस्यैव तथापरे
पौर्णमास्याममावास्यामष्टम्यां पर्वजातिषु ४७
एवमेव विधानेन कारयेत्प्रथमेऽपि च
एतेषूक्तेषु कालेषु युगयुक्ते विशेषतः ४८
एवमेव विधानेन कारयेद्व्वभृतं पुनः
अवभृतस्य तु काले तु राष्ट्रक्षोभादि संभवेत् ४९
अतिवृष्ट्यादिभिर्वृष्टे तीर्थयात्रा न विद्यते
तस्मिन् स्थाने जलं ग्राह्यं महाकुम्भेषु पूरयेत् ५०
स्नपनोक्तविधानेन तीर्थं कुर्याद्विधानतः
होमं बलिं विना कुर्याद्ध्वजारोहणकालके ५१
तीर्थर्क्षौ द्वौ तु संप्राप्ते एकमासे परं वरम्
तीर्थर्क्षे द्वे च वारे स्याद्दैविके चैवार्षके तथा ५२
ब्राह्मिकं तु तथैव स्यादुक्तमेवं विधिं मतम्
अष्टाविंशद्दिनेनैव अष्टादशस्य चोत्तरे ५३
तस्मिन्नेव समारम्भे दशमे दिवसे भवेत्
चोक्ते तु चोत्सवे काले विंशदेकोनके दिने ५४
अङ्कुरार्पणकं कुर्यात्तीर्थस्य तु विशेषतः
एतोर्दशदिने काले अङ्कुरानर्पयेद्बुधः ५५
आर्षे चोत्सवे काले दशपञ्चाहके दिने
अङ्कुरानर्पयेद्धीमान् द्विगुणे चाष्टमे दिने ५६
तद्दिने च समारम्भे अङ्कुरस्यापि चाङ्कुरम्
पूर्वोक्तेन तु कालेन अङ्कुरान् सद्यरोपयेत् ५७
ब्रह्मिके तु तथैवं स्यादन्यत्सर्वं तथैव च
तद्दिनं त्रिगुणं चैव उत्तमं तु प्रकीर्तितम् ५८

द्विगुणं मध्यमं चैव तद्दिनं चाधमं भवेत्
शान्तिकं त्रिगुणे काले पौष्टिके द्विगुणे दिने ५९
तद्दिक्ते कामदं चैव त्रिविधं भेदमुच्यते
तद्दिने त्रिगुणे काले अष्टादशदिने तथा ६०
चतुर्दशदिनै चैव दशमे दिवसे तथा
मध्यमस्य तु काले तु दशमे चाष्टमे र++ ६१
तद्दिने च समारम्भे ध्वजाङ्कुरं तु वर्द्धितम्
एवमेव प्रकारेण कारयेद्देशिकोत्तमः ६२
शैवे शैवं प्रकर्तव्यमन्यत्सर्वं न कारयेत् ६३
इति सूक्ष्मतन्त्रे तीर्थकालनिर्णयपटलः

दीपावलिं प्रवक्ष्यामि यथाविधिपुरः सरम्
कृत्तिकामासिकर्तव्यं तथा पर्वदिनं शुभम् १
सर्वशान्तिकरं पुण्यं मासपूजविधिं तथा
पर्वयुक्तमयुक्तं वा दिनयुक्तमथापि वा २
दिनं च पर्वयुक्तं तु उत्तमं तु प्रशस्यते
पर्वं प्रधानमेवोक्तमुत्तमोत्तममुच्यते ३
कृत्तिकाभरणीमिश्रं तद्दिनं तु चतुर्दशी
अल्पवृष्टिं च रोगं च राष्ट्रक्षोभं भविष्यति ४
तद्दिनस्य पुरा रात्रौ अधिवासनमारभेत्
मण्डपस्यैशदिग्भागे पावके वा विशेषतः ५
तन्मध्ये स्थण्डिलं कृत्वा हस्तमात्रेण देशिकः
स्थलिकां तण्डुलैः पूर्य तन्मध्ये नलिनं लिखेत् ६
तन्मध्ये त्रिपदीं कृत्वा दीपाधरं ततः कुरु
सकलीकरणं कृत्वा पुण्याहं तत्र वाचयेत् ७
कुण्डं वा स्थण्डिलं वापि वह्निकार्यं तदुच्यते
अग्न्याधानादिकं सर्वं यथाविधि पुरः सरम् ८
महेशं तु विशेषेण रक्षाबन्धं तु कर्मसु
सर्वालङ्कारसंयुक्तं सर्वमङ्गलशोभितम् ९

शङ्खदुन्दुभिनिर्घोषैस्ततो मङ्गलवाचकैः
अग्नेरूपसमाधाय पूर्णाहुत्यन्तमाचरेत् १०
रुद्रसङ्ख्या नव संख्या पञ्चविंशति सङ्ख्यया
षट्त्रिंशत्त्व सङ्ख्या वा अष्टोत्तरशतसंख्यया ११
पञ्चावरणकं वापि यथाविभवविस्तरैः
पोट्टलां बन्धयेत् तत्र पात्रं प्रति नियोजयेत् १२
शिवाग्निं च प्रकर्तव्यं दीपमारोपयेत्ततः
धूपदीपं हृदा दत्वा अविच्छिन्नं तु रक्षयेत् १३
रात्रौ सायमिति प्रोक्तं दिवा प्रात इति स्मृतम्
मध्याह्नान्तं समारभ्य यावत्तु दशनाडिका १४
विशेषस्नपनं कृत्वा मूलबिम्बाग्रकैस्ततः
पञ्चगव्यं ततः कृत्वा पश्चाद्यजनमारभेत् १५
वस्त्रोपवीते माला च मकुटं कुण्डलं तथा
सर्वगन्धानुलिप्ताङ्गैः सर्वमाल्योपशोभितैः १६
पञ्चावरणमार्गेण पूजयित्वा विशेषतः
धूपदीपं हृदा दत्वा पश्चाद्धोमं समाचरेत् १७
पूर्णाहतिं तथा कृत्वा पश्चाद्दीपं प्रपूजयेत्
अस्तमान्तं समारभ्य दीपमादापयेत्ततः १८
परिचारान्समाहूय सुस्नातान् शुक्लवस्त्रकान्
सोष्णीषमुत्तरीयं च पवित्रं पणयः शुचिः १९
तन्मूर्ध्नि विन्यसेद्दीपं प्रासादं तु प्रदक्षिणम्
स्तोत्रध्वनिसमायुक्तं शङ्खघोषसमन्वितम् २०
प्रविशेदालयं पश्चान्मूलबिम्बाग्रके ततः
देवदेवं नमस्कृत्वा अष्टपुष्पं सुयोजयेत् २१
धूपदीपं हृदा दत्वा देवदेवं नियोजयेत्
गर्भावर्णक्रमं ह्येवं मन्त्रदीपं निवेदयेत् २२
शेषदीपं समादाय दण्डमूलं प्रवेशयेत्
दण्डशुद्धिं ततः कृत्वा पुण्याहं तत्र वाचयेत् २३
निरीक्षणं महेशान दीपमारोपयेत्ततः

उपानात्स्तूपिपर्यन्तं दीपमारोपयेत्पुनः २४
शक्तिदीपानि सर्वाणि पचनालयाद्दापयेत्
प्राकारे गोपुरे चैव मण्डपं तु नयेत्पुनः २५
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
धूपदीपं हृदा दत्वा भस्मनि तु प्रदापयेत् २६
इक्षुखण्डसमायुक्तं मरिचूर्णं तु मिश्रकम्
लाजापूपफलां चैव देवदेवस्य दापयेत् २७
प्रभूतहविषं दत्वा ताम्बूलं तु निवेदयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः २८
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् २९
इति सूक्ष्मतन्त्रे दीपावलिपटलः

देवदेवजगन्नथामुमायपरमेश्वरम्
द्वारं तु पश्चिमं श्रेष्ठमिन्द्रं वचनमब्रवीत् १
ईश्वर उवाच
अथ संक्षेपतो वक्ष्ये अर्चनविधिमुत्तमम्
विजयं सूक्ष्मतन्त्रं च किरणं परमेश्वरम् २
रौरवं कामिकं चैव पश्चिमाभिमुखोद्भवम्
तस्मात्संहितातत्रज्ञः सर्वकर्माणि कारयेत् ३
अन्येषां संहिता मिश्रं देवान्प्रति न गच्छति
पश्चिमद्वारसर्वेषां सृष्टिपूजा इहोच्यते ४
द्वाराधिदेवतं ब्रह्मा पूजयेत्परमेश्वरम्
दक्षिणतः शास्त्रकुशलः शुचिगात्रस्तु पूजयेत् ५
देवेशं पूजयेन्नित्यं पञ्चाचार्यसमन्वितम्
पूजयेत्सकलानां तु पञ्चकालकृतस्तथा ६
तदाचरमिदं प्रोक्तं पञ्चाचार्याः प्रकीर्तिताः
पूजकं पूजयेन्नित्यं साधकं द्रव्यसाधकम् ७
स्थलशुद्धिरलङ्कारं सर्वालङ्कारसंयुतम्
पात्रशुद्धिस्तु सर्वेषां पञ्चशोधनमाचरेत् ८

आचार्यः कृत्यनैमित्यपरार्थकर्म कारयेत्
अर्चनादिषु मेधा च पश्चिमद्वारसाधकः ९
देहशुद्धिं पुरा कृत्वा द्वितीयं स्थलशुद्धिकम्
तृतीयं पात्रशुद्धिस्तु चतुर्थलिङ्गशुद्धिकम् १०
पञ्चमं मन्त्रशुद्धिं स्यात्पञ्चशुद्धिः प्रकीर्तिता
पूजकः पूर्वरात्रौ तु ब्रह्मचर्यसमन्वितः ११
ब्राह्मे मुहूर्ते संप्राप्ते मन्त्रध्यानपरायणः
शिवपञ्चाक्षरं मन्त्रं सर्वपापप्रणाशनम् १२
ग्रामान्ते तु बहिर्गत्वा शौचं कृत्वा यथाविधि
आचम्य विधिवत्स्नात्वा देहन्यासं तु कारयेत् १३
प्रदक्षिणत्रयं कृत्वा शिवालयप्रवेशनम्
प्रणम्य दण्डवद्भूमौ प्रार्थयेन्मनसा शिवम् १४
ध्यात्वा दृष्टिस्तु नासाग्रे निर्मले द्वादशाङ्गुले
आणावादीन् शरीरेण दहेद्यावच्छिरोन्तकम् १५
हृत्कमलं शिवं प्राप्य दक्षिणे पुनरर्चितम्
वामनास्ये तदुद्वास्य तथा भूतं दहेत्पुनः १६
कलेबरं दहेद्विद्वान् भस्मकूटव्यवस्थितः
चन्द्रबिम्बं स्मरेत्तत्र श्वेतपद्मोपरि स्थितम् १७
अमृताप्लावनं देहे कुर्याद्वामपुटे स्थितम्
दक्षिणे रेचकं कार्यात् शरीरोत्पत्तिकारणम् १८
सदाशिवतनुं सत्त्य प्राणस्थापनमेव च
आत्मानं योजयेद्विद्वान् कुम्भकं तत्र पिण्डतः १९
मलपिण्डं परित्यज्य मन्त्रपिण्डं यथाक्रमम्
ततोपरिस्थितं न्यासं मन्त्रपिण्डं यथाक्रमम् २०
स्थितिन्यासं पुरा कृत्वा सृष्टिन्यासमतः परम्
संहारं तु परित्यज्य स पूजां कर्तुमर्हसि २१
करन्यासं पुरा कृत्वा अङ्गन्यासमतः परम्
शिवाङ्गदक्षिणे हस्ते विद्याङ्गं वामहस्तके २२
मणिबन्धे द्वयं वापि शिवे तु ब्रह्मदेवता

श्रीयो सरस्वति चैव तलमध्ये प्रकीर्तिताः २३
उमादुर्गां तले बाहौ दक्षिणाङ्गुष्ठमिन्दवत्
वामाङ्गुष्ठं तु विन्यस्य संपिता च महोच्यते २४
इन्द्रादि ब्रह्मपर्यन्तं करन्यासं प्रकीर्तितम्
नाभ्यादिपादपर्यन्तं विद्याङ्गं विन्यसेत्क्रमात् २५
प्रणवादि प्रणातं च अकारादिक्षकान्तकम्
अक्षरन्यासमित्याहु सृष्टिन्यासमिहोच्यते २६
कलाभेदेन संयुक्तं ईशानादीनि विन्यसेत्
षडङ्गं विन्यसेत्पश्चाद्देहशुद्धिं तु कारयेत् २७
देहं तु शोधयेत्पश्चात् स्थलशुद्धिं प्रकल्पयेत्
एतेषां परितः क्षाल्य गोमयेनानुलेपयेत् २८
प्रोक्षयेन्मन्त्रतोयेन स्थलशुद्धिं प्रकल्पयेत्
षडङ्गानि शरावाणि घटानि विविधानि च २९
अन्यानि जलभाण्डानि सौवर्णानि विशेषतः
अस्त्रेण क्षालयेद्धीमान् हुङ्कारेण तु मन्त्रतः ३०
पात्रशुद्धिरिदं प्रोक्तं द्रव्यशुद्धिं ततः शृणु
पाद्यमाचमनं चार्घ्यं गन्धपुष्पं तथैव च ३१
नैवेद्यं धूपदीपादि जलद्रव्याणि शोधयेत्
पूजको देहशुद्धिं तु लिङ्गशुद्धिं च कारयेत् ३२
प्रविशे गर्भदेशे तु द्वारपालान् समर्चयेत्
दण्डिनं मुण्डिनं चैव स्वनामाद्यञ्च पूजयेत् ३३
प्रविश्याभ्यन्तरं पश्चाल्लिङ्गशुद्धिर्भवेदिह
विसर्ज्येत् सर्वपुष्पाणि चण्डेशाय प्रकल्पयेत् ३४
प्रक्षाल्य शिवलिङ्गं तु मन्त्रपूतेन वारिणा
अष्टमृत्पूरयेल्लिङ्गं सादित्वा दर्भरज्जुना ३५
क्षालयेत्पञ्चगव्येन लिङ्गशुद्धिर्भवेदिह
आसनं कल्पयेद्विद्वात् उत्तराभिमुखस्थितः ३६
योगं च विमलं चैव पद्ममनन्तमेव च
सिंहासनमिदं प्रोक्तं चतुरश्रं च भावयेत् ३७

बाह्ये द्वादशसूत्रं तु पार्श्वे पार्श्वे तु तद्द्वयम्
कोणमेकैकसूत्रं तु पञ्चचन्द्रेपवेष्टयेत् ३८
तद्बाह्ये पद्ममालोक्यं योगं चन्द्रस्य शोभितम्
कुर्यादवन्दितो रम्यं कारयेद्देशिकोत्तमः ३९
परार्थं पूजयेन्नित्यमुत्तराभिमुखस्थितः
तद्बाह्येन तु पद्मं स्याद्द्वादशायुधं विन्यसेत् ४०
वज्रं शक्तिं च दण्डं च खड्गं पाशं तथैव च
अङ्कुशं च गादाश्रं च पद्मचक्रं तथैव च ४१
सुवज्रं हंसमूली च अण्डतुण्डस्तथैव च
पश्चिमादिषु रत्नान्तं सर्वदावरणान्यसेत् ४२
पृथिव्या सप्तधा तेजो वायुराकाशमेव च
लवणक्षीरघृतं चैव दधिं च मधुरेव च ४३
इक्षुस्वादूदकं चैव पश्चिमादिप्रदक्षिणम्
भूतमावरणं कृत्वा स्वनामाद्येन पूजयेत् ४४
सोमाङ्गारबुधं चैव राहुकेतुस्तथैव च
आदित्यशनिशुक्रश्च मेरुसन्यो बृहस्पतिः ४५
एवमावरणं चैव पश्चिमादिषु पूजयेत्
मेषादिमीनपर्यन्तं कलावरणयमिहोच्यते ४६
द्वित्रिवेदभिद्विद्वौ तु पञ्चपञ्चकवेदकान्
षष्ठं भगणमेधावि पूर्वादारभ्य पूजयेत् ४७
दक्षिणाश्रयवामे तु व्योकारं तत्र विन्यसेत्
मकारं च कनिस्थाने व्योकारं पश्चिमेन तु ४८
विकारं पश्चिमाश्रित्य नेकारं वायुगोचरे
शिकारं सोमविन्यस्य वाकारं तस्य पार्श्ववत् ४९
लकारे च मीशाने न कारं पूर्वविन्यसेत्
माकारं इन्द्रमाश्रित्य प्रणवाग्निदिशिस्तथा ५०
दक्षिणे पद्मपुष्पं च आश्रयादिप्रदक्षिणम्
व्योमावरणमित्येषां सिंहावारणकं शृणु ५१
धर्मज्ञानं च वैराग्यमैश्वर्यं च तथैलिका

सिंहावरणमित्येषां ++ मानथ पूजयेत् ५२
अनन्तं पूर्वतस्थाप्य त्रिमूर्तिमग्निमेव च
दक्षिणे सूक्ष्मं विन्यस्य श्रीकण्ठं निर्ऋतौ तथा ५३
शिवोत्तमं पश्चिमे न्यस्य शिखण्डीं वायुगोचरे
एकनेत्रं तथा सोमे ईशाने एकरुद्रकम् ५४
अनन्तवरणं त्येषां पूर्वादीनि प्रदक्षिणम्
वामां पश्चिमतो न्यस्य ज्येष्ठे चैव तु चोत्तरे ५५
रौद्रीं च दक्षिणे भागे कलिं चेन्द्रदिशि न्यसेत्
कलविकरणं विन्यस्य आग्नेय्यां दिक्षु गोचरे ५६
बलविकरणं नैर्ऋत्यां बलप्रमथं वायवे
सर्वभूतमनि चैव ऐशान्यां दिशि विन्यसेत् ५७
मध्ये मनोन्मनी देवी पद्मासनमिहोच्यते
प्रणवं पूर्वतः स्थाप्य आकारं वह्निगोचरे ५८
ईशाने दक्षिणे भागे ऊकारे राक्षसे दिशि
व्योकारं पश्चिमाश्रित्य षकारं वायुगोचरे ५९
व्योकारं सोमदिग्भागे विकारं शाङ्करे दिशि
तन्मध्ये चैव नेकारं योगासनमिहोच्यते ६०
++++ हरस्यानमधश्शृणु
पश्चिमद्वारहर्म्ये तु किञ्चिद्वारं शिवार्चनम् ६१
पश्चिमद्वारलिङ्गं तु दक्षिणादिश्च भारत
सर्वपापहरं पुण्यं सर्वारिष्टविनाशनम् ६२
सर्वसौभाग्यसंपत्तिः सर्वलोकप्रियार्थकम्
वामहस्तेन गौर्यास्तु पुत्रपौत्रविवर्धनम् ६३
कुलालचक्रमृद्भिस्तु नानारूपेण दृश्यते
यत्र रूपेण सङ्कल्प्य आचार्यमनसा तथा ६४
शिवं दक्षिणहस्ते तु गौरिदक्षिणहस्तकम्
देवेशं वामहस्ते तु शिवद्विजस्य स्थानकम् ६५
आचार्यहस्तदेशं तु दक्षिणाङ्गुलि पृष्ठतः
सर्वप्रियाय हस्तं च दक्षिणे हस्तपृष्ठतः ६६

शिवप्रसन्नमित्युक्तमाचार्यमनस तथा
गौरिस्थानमिदं प्रोक्तं नैवेद्यं च शृणुष्वह ६७
कपित्थस्य फलं चैव यथा कुञ्जरभक्षणम्
अन्तः सारं तु सङ्ग्राह्य ग्राहते परमेश्वरः ६८
अविदद्याविशेषेणान्तदन्ते भूतसंबलिः
इन्द्रादिबाह्यपीठान्तदिग्बलिं तत्र कारयेत् ६९
असुराराक्षसाश्चैव पिशाचा ब्रह्मराक्षसाः
उच्चिष्ठान्नं तथा चैव बलिं दद्याद्धविस्तथा ७०
पूर्वादीशानपर्यन्तं महापीठे बलिं क्षिपेत्
गन्धपुष्पं च धूपं च नैवेद्यं च बलिं क्षिपेत् ७१
गन्धं च घोरमन्त्रेण पुष्पमीशेन दापयेत्
धूपं च अस्त्रमन्त्रेण दीपं नेत्रेण दापयेत् ७२
पुरुषेण हविर्दद्यात्पाद्यं सद्येन मन्त्रतः
अर्घ्यं पुरुषमन्त्रेण वामेनाचमनं भवेत् ७३
सर्वामन्त्राभिधानेन हृदयेनैव मन्त्रतः
पश्चिमार्चनमेतेषामुत्तरद्वारमा शृणु ७४

इति सूक्ष्मशास्त्रे पश्चिमद्वारार्चनं नाम नवमपटलः
करकृतमपराधः क्षतुमर्हन्ति सन्तः

अतः परं प्रवक्ष्यामि अङ्कुरार्पणमुत्तमम्
उत्सवे स्नपने चैव स्थापने प्रोक्षणे तथा १
सर्वमङ्गलकार्यादौ अङ्कुरानर्पयेत्क्रमात्
प्रथममङ्कुरं चैव द्वितीयं चोत्सवाङ्कुरम् २
तीर्थाङ्कुरं तृतीयं तु तुरीयं चोत्सवाङ्कुरे
मानुषादिपिशाचान्तं मन्यानं तु प्रकीर्तितम् ३
निवाहे प्रथमं कुर्यात्सप्ताहे च द्वितीयकम्
तद्दिने च तृतीयं स्याद्वापयेदङ्कुरं बुधः ४
प्रथमं च द्वितीयं च मङ्गलाङ्कुरमुच्यते
तृतीयमुत्सवाङ्गं स्यादुत्सवेषु च योग्यकम् ५

उत्सवादिषु कार्येषु प्रथमाङ्कुरमारभेत्
तस्मात्सर्वप्रयत्नेन तीर्थाङ्कुरमथारभेत् ६
सप्ताहे चैव पञ्चाहे त्रियाहे सद्य एव च
मङ्गलाङ्कुरकं कुर्यात्सर्वकार्येषु योग्यकम् ७
अस्त्रं च सोमकुम्भं च प्रदक्षिणविशेषतः
मङ्गलाङ्कुरकं कुर्यात्तीर्थाङ्कुरं तु वापयेत् ८
पालिका घटिका चैव शरावं च त्रिभेदकम्
पालिका रत्नमात्रोच्चां मात्राङ्गुलेन कारयेत् ९
पालिका मुखविस्तारं मायार्थं न प्रकल्पयेत्
तत्तत्रिगुणतन्नाहं पालिकापादमानकम् १०
घटिका घटविस्तारं षडङ्गुलमुदाहृतम्
शरावमुखविस्तारं द्वादशाङ्गुलमुच्यते ११
कालं भिन्नं च सुषिरं भेदं च लुनभिञ्चकम्
वर्जयेत्तु प्रयत्नेन साधयेल्लक्षणान्वितम् १२
सौवर्णे रजते ताम्रे कांस्ये वा मृन्मये तु वा
यथालाभप्रमाणेन कारयेद्देशिकोत्तमः १३
दर्भाग्रैर्वा कुशाग्रे वा निच्छिद्रं सुषिरं नयेत्
वालुकैर्गोमयेर्मृद्भिः पालिकादि प्रपूजयेत् १४
प्रासादस्याग्रतः कुर्यात्स्थण्डिलं चतुरश्रकम्
गन्धपुष्पादिभिः पूज्य तिलैर्दर्भपरिस्तरैः १५
पालिकां विन्यसेत्तत्र हृन्मन्त्रेणैव देशिकः
अश्वत्थपत्रदर्भास्तु पालिका पादके न्यसेत् १६
तिलमुद्गं च माषं च कुलत्थाप्यंगुमेव च
पयसा क्षालयित्वा त्वा तु वापयेद्दशबीजकैः १७
पायसान्नं ददेत्पश्चात्सोमबीजेन बुद्धिमान्
ताम्बूलं दापयेत्तत्र स्वनुगुप्ते निधापयेत् १८
अहन्यहनि संपूज्य प्रासादेनैव मन्त्रतः
पश्चाच्छुभाशुभं वीक्ष्य शुभं सङ्गृह्य बुद्धिमान् १९
अशुभानि भवेत्तत्र प्रायश्चित्तादि कारयेत् २०

इति सूक्ष्मशास्त्रे क्रियापादे महोत्सवे अङ्कुरार्पणं नाम दशम पटलः

अतः परं प्रवक्ष्यामि ध्वजारोहणमुत्तमम्
आचार्यो यजमानश्च चिन्तयेद्दिनसङ्ख्यया १
पश्चाद्ध्वजं समुत्थाप्य त्रिगुणं द्विगुणं तु वा
तद्दिने वापि कर्तव्यमुत्तमं मध्यामाधमम् २
पूर्वाह्ने रोपयेत् केतुं ब्राह्मणानां हिताय वै
क्षत्रियस्य तु मध्याह्ने वैश्यानामपराह्नके ३
अर्द्धरात्रे तु शूद्राणां सायं शूद्रस्तु वा भवेत्
ध्वजारोहणपूर्वं तु ब्राह्मणानां हिताय वै ४
भेरीताडनपूर्वं तु क्षत्रियाणां प्रवृद्धये
अङ्कुरार्पणपूर्वं तु नगरे पुण्यदेशके ५
वैश्यशूद्रप्रवृद्धये
भेरीताडनपूर्वं तु कुर्याद्ग्रामं विशेषतः ६
ध्वजारोहणपूर्वं तु नगरे पुण्यदेशके
अङ्कुरार्पणपूर्वं तु भक्तानां दिक्षु कारयेत् ७
यः क्रियामारभेत्पूर्वं तां च कुर्यात्सदा बुधः
अन्यथा कारयेद्यस्तु क्रियासङ्करमुच्यते ८
तस्मात्सर्वप्रयत्नेन प्रथमारम्भणं शुभम्
सरलं चन्दनं चैव धातकी चम्पकं तथा ९
क्रमुकं नालिकेरं च बिल्वं वैणवमुच्यते
उत्तमं शतहस्तं स्यान्मध्यमं तु तदर्धकम् १०
पञ्चविंशतिहस्तेन अधमं कारयेद्बुधः
अथवाष्टदशं हस्तं द्वादशाङ्गुलविस्तरम् ११
अथ प्रासादमानेन कारयेद्ध्वजताण्डकम्
अवक्रं निर्वृणं चैव कृमिकोटरवर्जितम् १२
यथामनोरमं कुर्याद्ध्वजदण्डं हि देशिकाः
षोडशाङ्गुलनाहं स्याद्दण्डाग्रे चतुरङ्गुलम् १३
पञ्चषट्सप्तपर्वाणि दशपर्वाणि वा पुनः

आधारफलकास्तिस्रो हस्तमात्रप्रमाणतः १४
वेतालसदृशाकारा अथवा योनिमार्गतः
एवमेव विधानेन कारयेद्देशिकोत्तमः १५
बाह्यपीठस्य चाग्रे वा गोपुरस्याग्रतोऽपि वा
व्रषालयाग्रे पृष्ठे वा शूलस्याग्रे च वा पुनः १६
प्रासादपुरतो वापि ऐशान्यां वाथ कारयेत्
ब्रह्मणस्य ध्वजं श्वेतं क्षत्रियस्य तु रक्तकम् १७
वैश्यस्य पीतवर्णं तु शूद्राणां श्याममेव च
दुकूलं पट्टवस्त्रं वा पटं कार्पासमेव च १८
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्
पञ्चभागैकविस्तारं षड्भागैकमथापि वा १९
त्रिंशदङ्गुलमानं वा कारयेद्ध्वजतारकम्
विस्तारस्य समं पुच्छं तस्यार्धं शिखरं भवेत् २०
अथवा पुच्छतुल्यं वा पार्श्वयोरङ्गुलीकृतम्
अच्छिन्नमुत्तमं प्रोक्तं सच्छिन्नं लक्षणान्वितम् २१
महाध्वजं शतं हस्तं तदर्धार्धं तु षोडशम्
द्वादशं वा प्रकुर्वीत अष्टहस्तायतं शुभम् २२
यथालाभं गृहीत्वा तु देशकालानुरूपतः
उत्सवार्थं तु सङ्गृह्य तन्मध्ये वृषभं लिखेत् २३
उत्सवस्य त्रिरात्रौ तु बलिभूतं व्रजेन्नरः
पश्चाद्यागेशशलायां पूजयेत्तु शिवद्विजः २४
ध्वजं पटस्त्रिभागं स्यात् तन्मध्ये वृषभं लिखेत्
दर्पणं पूर्णकुम्भं च चामरं वा द्वयोर्न्यसेत् २५
दीपं च मङ्गलं चैव कारयेल्लक्षणान्वितम्
एवमेव विधानेन कारयेद्देशिकोत्तमः २६
ध्वजं पटस्य शुध्यर्थं ++ मानेन प्रोक्षयेत्
पश्चाद्ध्वजं पञ्चगव्ये प्रोक्षयेच्छिवमन्त्रतः २७
वृषगायत्रिमन्त्रेण कुशाद्भिः प्रोक्षयेद्बुधः
दण्डं च पूर्वरात्रौ तु स्थापयेत्तु शिवद्विजः २८

बाहुमात्रं खनित्वा तु श्वभ्रं प्रोक्ष्य कुशाम्भसा
वृषभं कूर्मकं वापि हैमं श्वभ्रं विनिक्षिपेत् २९
दराडमुत्थापयेत्पश्चाच्छिवमन्त्रेण देशिकः
सकूर्चदर्भमालं च वेष्टयेद्ध्वजदराडके ३०
सप्तषट्पञ्चतालैर्वा चतुस्तालैश्च वेदिकाः
ब्राह्मणादिक्रमेणैव कारयेत्तु विशेषतः ३१
विस्तारद्विगुणोत्सेधं पादोनं वा तदर्धकम्
इष्टिकाभिश्च मृद्भिर्वा सुधया वाथ कारयेत् ३२
चतुरश्रमथाष्टाश्रं वृत्तं वा कारयेद्बुधः
तदूर्ध्वे पद्ममालिख्य दलाष्टकसमन्वितम् ३३
त्रिमेखलानि वा कुर्यात्पादवर्गे सुशोभितम्
यथा मनोरमं कुर्यादथवा देशिकोत्तमः ३४
गन्धपुष्पादिना पूज्य वृषमन्त्रेण देशिकः
अस्त्रं चैव पटं चैव बिम्बाग्रे वा शिवाग्रके ३५
अर्चयेन्नवमन्त्रेण हविस्तत्र निवेदयेत्
त्रिशूलं च पटं चैव बिम्बं चैव विशेषतः ३६
ग्रामप्रदक्षिणं कुर्यात्सर्वालङ्कारसंयुतम्
होमं कृत्वा तदाग्रामे नगरादिषु कारयेत् ३७
पश्चात्प्रासादमावेश्य जलेन प्रोक्षयेत्पटम्
गन्धपुष्पादिभिः पूज्या पुष्पं गायत्रिमन्त्रतः ३८
विमानप्रदक्षिणं कृत्वा यन्त्ररूपेण रोपयेत्
अथवा बन्धमार्गेण सर्वालङ्कारसंयुतम् ३९
ध्वजमारोपयेद्विद्वान् उत्सवार्थं विशेषतः
स्नपनं कारयेत्तत्र पुरायाहं वाचयेद्बुधः ४०
पञ्चवर्णं हविर्दद्यात्ताम्बूलं दापयेद्बुधः
ब्राह्मणान्भोजयेत्पश्चादाचार्यं पूजयेत्सदा ४१

इति सूक्ष्मतन्त्रे ध्वजारोहणं नाम एकादशपटलः

अ्रतः परं प्रवक्ष्यामि भेरीताडनमुत्तमम्
ध्वजारोहरणपूर्वेद्यु रात्रौ भेर्यास्तु ताडनम् १
नैवेद्यद्रव्यसर्वाणि देशिकाय प्रदापयेत्
तराडुलस्याष्टभागं च व्यजनं षोडशांशकम् २
अ्रपूपाष्टांशमित्युक्तं ताम्बूलं च तथैव च
फलादिभक्षराद्रव्यैर्दशांशं दापयेत्क्रमात् ३
इत्थं नैमित्तिके नित्ये काम्ये चैव प्रदापयेत्
इति सूक्ष्मतन्त्रे शिवागमे एकादश पटलः

भेरीताडनपूर्वं तु दिवारात्रौ च ताडयेत्
अ्रङ्कुरार्पणपूर्वे तु रात्रावेव प्रताडयेत् १
भेरीलक्षणमार्गेण भेरिकां कारयेद्बुधः
प्रोक्षयेत् पञ्चगव्येन नन्दिगायत्रिमन्त्रतः २
स्नपनं कारयेत्तत्र पञ्चविंशतिसङ्ख्यया
मराडपस्य तु मध्ये तु परिवेषस्य मध्यमे ३
गोमयालेपनं कृत्वा पञ्चचूर्णैरलङ्कृतम्
अ्रापोहिष्ठेति मन्त्रेण प्रोक्षयेत्तु कुशाम्भसा ४
स्थरिडलं तत्र कुर्वीत द्विहस्तेन विशेषतः
त्रिहस्तं चैव विस्तारं शालिभिश्चतुरङ्गुलम् ५
मध्ये चाष्टदलोपेतं तिलतराडुलसम्मितम्
धर्मेण संस्मरेद्धीमान् गन्धपुष्पादिनार्चयेत् ६
वामादिशक्तिविन्यस्य पूर्वरात्रेण विन्यसेत्
कर्णिकायां न्यसेत् शूलं भेरिं चान्ये तु कारयेत् ७
स्थरिडलं पूर्ववत्कृत्वा मध्ये भेरिं तु विन्यसेत्
वस्त्रयुग्मपरिच्छिन्नं कुशदर्भेन वेष्टितम् ८
गन्धपुष्पादिना धीमान् शूलादीनि प्रपूजयेत्
क्रमेणाराध्य यत्नेन हविस्तत्र प्रदापयेत् ९
अ्राचार्य ताडयेद्भेरिं वाद्यकस्तदनन्तरम्
तस्मिन्देशे बलिं दद्यान्नन्दिगायत्रिमन्त्रतः १०

ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम्
त्रिशूलेन समायुक्तं सन्ध्यां सन्ध्याहि ताडयेत् ११
तदन्ते देवता ह्वानं कारयेत्तु विशेषतः
रात्र्यमेवं प्रकर्तव्यं नवरात्रं विशेषतः १२
दिवा रात्रं विशेषतः

इति सूक्ष्मतन्त्रे भेरीताडनं नाम द्वादशः पटलः

अतः परं प्रवक्ष्यामि यागमण्डपलक्षणम्
गेहस्य पुरतः कुर्यादीशान्ये पावकेऽथवा १
दक्षिणे पश्चिमे वापि उत्तरे वापि कारयेत्
भूमिशुद्धिं पुराकृत्वा प्रोक्षयेत्पञ्चगव्यकैः २
उत्तमं षोडशैर्हस्तैर्मध्यमं द्वादशैस्तथा
अधमं दशहस्तैश्च नव हस्तं च सप्तकैः ३
ब्राह्मणादि क्रमेणैव सर्वेषां सप्तहस्तकैः
चतुरङ्गुलमुत्सेधं निम्नोनतविवर्जितम् ४
युग्मस्तम्भसमायुक्तं याज्ञिकैस्तरुभि शुभैः
कूटं वा मण्डपं वापि कारयेल्लक्षणान्वितम् ५
चतुर्द्वारविमानेन चतुर्द्वारं प्रकल्पयेत्
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम् ६
सप्तषट्पञ्चतालैर्वा चतुस्तालैः क्रमेण तु
ब्राह्मणाद्यैश्च कर्तव्यमुत्सेधं षोडशाङ्गुलम् ७
एवं हि कल्पयेद्धीमान् पञ्चचूर्णैरलङ्कृतम्
वेदिबाह्ये तु परितो नवकुण्डानि कारयेत् ८
कुण्डवृत्तनमार्गेण तत्तद्भागेषु कारयेत्
अथवा हस्तमात्रेण कुण्डं विस्तारखातकम् ९
त्रिमेखलैरलङ्कृत्य चतुस्त्रिद्व्यङ्गुलायतैः
दिक्षु वै चतुराश्राणि वृत्तानि च विदिक्षु वै १०
इन्द्रेशानकयोर्मध्ये अष्टाश्रं कल्पयेद्बुधः
नवहोमक्रमं प्रोक्तं पञ्चहोमक्रमं शृणु ११

इन्द्रादि किं चतुर्दिक्षु वृत्तं कुण्डं प्रकल्पयेत्
इन्द्रेशानकयोर्मध्ये अष्टाश्रं कल्पयेद्बुधः १२
पूर्वे वा पश्चिमे चैव ऐशान्यादि प्रकल्पयेत्
वृत्तं वा चतुरश्रं वा कल्पयेद्देशिकोत्तमः १३
ऐशान्यां दिशि सङ्कल्प्य एकहोमं विशेषतः
वृत्तं वा चतुरश्रं वा लक्षणोक्तेन कारयेत् १४
किञ्चिद्विशेषं वक्ष्यामि होमं चैव शिवोत्सवे
नवाहे नवहोमं स्यात्सप्ताहे सप्तहोमकम् १५
पञ्चहोमं तो पञ्चाहे त्रियाहे त्रियहोमकम्
एकाहे चैकहोमं स्याद्धोमं कृत्वा विचक्षणः १६
परितो ऋत्विजानां च प्रधाने देशिकं हुनेत्
अथवा चैकहोमेन कारयेद्देशिको बुधः १७
गोमयालेपनं कृत्वा मण्डपं च विशेषतः
चतुस्तोरणसंयुक्तमष्टमङ्गलभूषणम् १८
द्वारकुम्भादि संकल्प्य वितानध्वजशोभितम्
लाजैश्च विविधैः पुष्पैर्मण्डपं पूजयेद्बुधः १९
पुण्याहं वाचयेत्पश्चाच्छिल्पकर्मावसानके २०

इति सूक्ष्मशास्त्रे शिवागमे प्रतिष्ठातन्त्रे क्रियापादे यागमण्डपलक्षणं नाम त्रयोदशपटलः

अतः परं प्रवक्ष्यामि अधिवासनमुत्तमम्
उत्सवारम्भपूर्वे तु रथादीन् कारयेत्क्रमात् १
देवालयमलङ्कृत्य प्राकारं परिवारकम्
नानाध्वजादि पिंच्छानि नानाचामरकानि च २
तानि सर्वाणि सङ्कल्प्य प्रोक्षयेच्छिववारिणा
उत्सवस्यादिरात्रौ तु अङ्कुरार्पणमारभेत् ३
प्रासादस्याग्रतो वापि प्रतिमा च ततोऽपि वा
अस्तमादपरे काले पञ्चनाड्यां सुलग्नके ४
अथवा सप्तनाड्यां वा कारयेदङ्कुरार्पणम्

लिङ्गं च कौतुकं चैव त्रिशूलं च विशेषतः ५
कौतुकं बन्धयेद्रात्रौ शास्त्रदृष्टेन कर्मणा
मण्डपं मार्जयित्वा तु गोमयेनानुलेपयेत् ६
आचार्यश्च शुचिर्भूत्वा शिष्यश्चैव तथैव च
स्नानं कृत्वा यथान्यासं विधिदृष्टेन कर्मणा ७
ततो यागगृहं गत्वा पाडौ हस्तौ च क्षालयेत्
न्यासमार्गक्रमं कुर्यात्स्थितिन्यासं विशेषतः ८
नववस्त्रेण उष्णीषो हेमाङ्गुलिविभूषणः
सर्वाभरणसंपूर्णः सर्वलक्षणसंयुतः ९
अस्त्रराजेति मन्त्रेण जपेदष्टशतं क्रमात्
स्थण्डिलं कारयेद्वेद्यामष्टोद्रोणेन शालिना १०
स्थण्डिलं तत्र कुर्वीत कर्णिकाकेसरैर्युतम्
तिलतण्डुलमिश्रं तु केसराग्रेण विन्यसेत् ११
दर्भैपरिस्तरं कुर्याद्गन्धपुष्पादिनार्चयेत्
कुट्टिमस्येशदिग्भागे शालिभिश्चतुरश्रकम् १२
त्रितालविस्तृतं कुर्याद्दिष्टपत्रं सकर्णिकम्
धर्मज्ञानादि विन्यस्य आसनार्चनकर्मणि १३
राजतं हेमताम्रं वा मृण्मयं वापि कारयेत्
कुम्भं च वर्धनीं चैव कलशं च विचक्षणः १४
अधिवास्य च रात्रै तु यागं कुर्याद्विशेषतः
वस्त्रपूतेन तोयेन पूर्णं कुर्याद्यथेप्सितम् १५
गन्धचन्दनतोयेन गन्धद्रव्यं विनिक्षिपेत्
कूर्चादि निक्षिपेत्तत्र पञ्चरत्नादि निक्षिपेत् १६
वस्त्रयुग्मेन संवेष्ट्य पट्टिकोपरि शोभितम्
तथा देव्या सहासीनं योगेशं चार्चयेत्क्रमात् १७
त्रिणेत्रं च चतुर्बाहुं सर्वाभरणभूषितम्
एवं ध्यात्वा तु मनसा कल्पयेदीशगोचरे १८
स्थण्डिलोपरि विन्यस्य पुष्पमाल्योपशोभितम्
वर्द्धनीं हेमसंयुक्तां कलशेषूत्तरे क्रमात्प्रभोः १९

शिवाङ्गानि न्यसेत्तत्र उमायां विन्यसेत्ततः
गन्धैः पुष्पैश्च धूपैश्च दीपैरारात्रिकैस्ततः २०
वेदिकोपरि मध्ये तु अथवा पूर्वपश्चिमे
सर्वालङ्कारसंयुक्तं स्तोत्रमङ्गलवाचकैः २१
घण्टानादसमायुक्तं शूलं कृत्वा प्रदक्षिणम्
यागमण्डपमध्ये वा स्थापयेत्पूर्वदेशके २२
अर्चयेद्गन्धपुष्पाद्यैर्नववस्त्रेण वेष्टयेत्
अस्त्रं तत्रैव संस्थाप्य कौतुकं बन्धयेद्बुदा २३
अष्टौ कुम्भानि संस्थाप्य पूर्वादीनि प्रदक्षिणम्
पृथग्वस्त्रेण संवेष्ट्य प्रधं हेमं निक्षिपेत् २४
अनन्तादींश्च देवांश्च तेषु कुम्भेषु पूजयेत्
दशायुधानि परितः कल्पयेद्देशिकोत्तमः २५
मङ्गलानि च संपूज्य स्वैस्वैर्मन्त्रैश्च पूजयेत्
द्वारादि देवताभ्यर्च्य सर्वान् देवान् प्रपूजयेत् २६
पुण्याहं वाचयेत्तत्र पवमानेन प्रोक्षयेत्
होमस्य दक्षिणे भागे यागेशं पूजयेद्बुधः २७
कुम्भं च स्थापयेत्तत्र वस्त्रकूर्चसमन्वितम्
समिधाज्य चरून्लाजान् तिलसर्षपमुद्गकैः २८
अपूपेनाक्षतगुलैः क्षीरनिष्पावसक्तुकैः
पञ्चब्रह्मषडङ्गैश्च व्योमव्यापि दशाक्षरैः २९
क्षुरिकाबीजमुख्यैश्च प्रासादेन विशेषतः
यथाक्रमेण होतव्यमष्टाविंशतिरेव च ३०
जयादिकाभ्यातानैश्च स्विष्टान्तं होममाचरेत्
शिवाग्नेरग्निसंग्राह्य सर्वकुण्डेषु निक्षिपेत् ३१
होमादौ तु बलिं दद्याद्ग्रामादिषु विशेषतः
होमान्ते वाथ कर्तव्यमथवा मध्यमेऽपि वा ३२
ब्रह्मादीशानपर्यन्तं इन्द्रादीशानमेव च
शुद्धान्नं दधिसंयुक्तं बलिं दद्याच्छिवद्विजः ३३
प्रथमं गणरात्रं तु द्वितीयं भूतरात्रकम्

ब्रह्मरात्रं तृतीयं स्याद्गान्धर्वं तु चतुर्थकम् ३४
पञ्चममिन्द्ररात्रं स्यात् षष्ठं तु ऋषिरात्रकम्
सप्तमं वैष्णवं प्रोक्तमष्टमं राक्षसं तथा ३५
नवमं शैवमित्युक्तं रात्रिदेवाः प्रकीर्तिताः
सप्ताहे ब्रह्मरात्रादि इन्द्ररात्रादि पञ्चमे ३६
त्रियाहे वैष्णवादि स्यादेकाहे शैवरात्रकम्
पक्षोत्सवे तु तिथयः रात्रिदेवाः प्रकीर्तिताः ३७
द्वात्रिंशद्देवतामासे षण्मासे पूर्ववत्पृथक्
आप्तोत्सवे तु तत्तत्स्याद्देवं वै रात्रिदेवताः ३८
शुद्धान्नं दधिसंयुक्तं प्रथमोऽहनि दापयेत्
पद्मपुष्पं सरजनी लाजसक्तुसमन्वितम् ३९
द्वितीये च प्रदातव्यं तृतीये पायसं ददेत्
हरिद्रान्नं ससर्पि च नालिकेरफलैर्युतम् ४०
चतुर्थेऽहनि दातव्यं पञ्चमे घृतमिश्रकम्
गुलोदनं घृतं मिश्रं कदलीफलसंयुतम् ४१
षष्ठेऽहनि प्रदातव्यं सप्तमे तु रसान्नकम्
माषान्नं घृतसंयुक्तमष्टमेऽहनि दापयेत् ४२
शुद्धान्नदधिसंयुक्तं नवमेऽहनि दापयेत्
स्वस्वैर्नामादिभिर्मन्त्रैर्ध्वजादिषु बलिं ददेत् ४३
शूलासनादि बिम्बेषु स्वस्वैः सङ्ग्राह्य बुद्धिमान्
संहारेषु न कर्तव्यं कर्तव्यं चेन्महद्भयम् ४४
यज्ञार्थं दीक्षितं बिम्बमासमुद्रान्तकारयेत्
अन्यबिम्बे न कर्तव्यं कर्तव्यं चेन्महद्भयम् ४५
शैवोत्सवेषु कालेषु अन्यदेवोत्सवं न च
कारयेद्यदि मोहेन राजराष्ट्रं विनश्यति ४६
तस्मात्सर्वप्रयत्नेन शैवे शैवं तु कारयेत्
वैष्णवे वैष्णवं कुर्याद् बौद्धादिषु तथैव च ४७
एकस्मिन्नगरेऽनेकस्थानानि च भवन्ति चेत्
तेषां हि चोत्सवे स+त्गेकर्क्षे संभवेद्यदि ४८

तेषां हि चोत्सवं कुर्यात्प्रथग्वीथीषु बुद्धिमान्
चतुष्पथे त्रिपाथे च ब्रह्मस्थानं प्रकल्पयेत् ४९
तस्योपपरितो वीथ्यां बलिं कुर्यात्तु देशिकः
तस्मिन् वीथ्यां प्रकर्तव्यमुत्सवं विधिपूर्वकम् ५०
कारयेद्यदि मोहेन नान्यवीथीषु चोत्सवम्
तस्य देशाधिपत्यस्य भूनाशं तु न संशयः ५१
तस्मात्सर्वप्रयत्नेन बलिर्वीथ्यां तु कारयेत्
उत्सवस्य तु काले तु अतिवृष्टिस्तु संभवेत् ५२
पूर्वे तु कारयेद्धोमं प्रभाते च बलिं ददेत्
तस्मिन्नैवोत्सवं कुर्यात्सर्वालङ्कारसंयुतम् ५३
त्रिशूलं बलिलिङ्गेन उत्तमं कारयेद्बलिम्
शूलाभावे तु बिम्बं स्यात् तदभावे तु गोलका ५४
तेषां च संभवं काले ह्यन्नलिङ्गेषु कारयेत्
बलिं कुर्याद्द्विकाले तु उत्सवान्तं हि दैविकम् ५५
अथवा चैककाले तु बलिहोमौ तथोत्सवम्
तस्मात्सर्वप्रयत्नेन कारयेद्बलिमुत्तमम् ५६
अन्नलिङ्गं प्रकर्तव्यं पूर्ववत्कारयेद्बुधः
बल्यर्थं स्थलिकायां तु विन्यसेद्धृदयेन तु ५७
चतुर्भुजं त्रिणेत्रं च दक्षिणे शूलदृग्भवेत्
पाशं वामकरे चैवमभयं दक्षिणे तथा ५८
वरदं वामहस्तेन रौद्रदृष्टिसमन्वितम्
एवं पाशुपतं ध्यात्वा बलिलिङ्गे तु पूजयेत् ५९
बलिपात्रे न्यसेदन्नं सर्वद्रव्यसमन्वितम्
प्रथमे तु पताकाश्च द्वितीये वाद्यकस्तथा ६०
तदन्ये देशिको गच्छेच्चतुर्थे शूलमुच्यते
पञ्चमे चान्नलिङ्गं तु षष्ठके कौतुकं व्रजेत् ६१
सर्वालङ्कारसंयुक्तमायुधं चाष्टमङ्गलम्
सभास्थाने राजगृहे देशिकस्यालये तथा ६२
अन्येषु शुभदेशेषु बलिं दद्याद्विशेषतः

प्रणवादि नमोन्तं तु स्वनामपदमध्यगम् ६३
बलिं दद्याद्विशेषेण सर्वलोकशुभावहम्
एवं बलिभ्रमं कुर्याद्बलिपीठे बलिं क्षिपेत् ६४
बलिपीठे बलिं सम्यग्विसर्जेद्धृदयेन तु ६५
इति सूक्ष्मशास्त्रे अधिवासनविधिर्नाम चतुर्दशपटलः

अतः परं प्रवक्ष्यामि कौतुकस्योत्सवं क्रमात्
कौतुकं बलिदानान्ते कुर्याद्ग्रामप्रदक्षिणम् १
रथे वा शिबिकायां वा सुखासीनादि विन्यसेत्
यन्त्ररङ्गैः समायुक्तं नानाभिन्नैरनेकशः २
नानाजनपदैर्युक्तं नानाध्वजसमायुतम्
नानाविधसमायुक्तं नानापिञ्छैः समायुतम् ३
नानाखड्गसमायुक्तं नानाश्वेतपताकया
एकं वापि त्रयं वापि चतुर्थं पञ्चधा पुरा ४
अग्रतो यजमानश्च आचार्यस्तदनु व्रजेत्
नानागेयसमायुक्तं नानानृत्तसमायुतम् ५
नानास्तोत्रसमायुक्तं नानामङ्गलवाचकैः
एवमेव प्रकारेण कारयेदुत्सवं शुभम् ६
ग्रामान्तरं न कर्तव्यं बिम्बं चैव तु बुद्धिमान्
ग्रामैके चैव कर्तव्यं उत्सवार्थं हि वर्त्मनि ७
आस्थानमण्डपे चैव देवतां स्थापयेत्क्रमात्
यथावाचकबिम्बेन कारयेदुत्सवं बुधः ८
देवस्य पादशुध्यर्थं पादौ पाद्यं प्रदापयेत्
रक्षादीपं शिवं दद्याद्बलिपीठे विसर्जयेत् ९
दूरवास्ते विमाने तु दिवा वास्तुप्रदक्षिणम्
यज्ञादिदीक्षितं बिम्बं अङ्कुरस्यादिरात्रकैः १०
ग्रामे मनोरमे देशे तीर्थान्तं स्थापयेद्बुधः
नवयात्रा परे चाह्नि आलये संप्रवेशयेत् ११
एवमेव विधानेन कारयेद्देशिकोत्तमः

अवभृतस्य पूर्वेद्युः नृत्तबिम्बं समाचरेत् १२
कौतुकं पूर्वरात्रौ तु बन्धयेद्देशिकोत्तमः
ग्रामप्रदक्षिणं कुर्यात् कौतुकं मन्दिरेऽपि वा १३
देवं देवीं स्वमन्त्रेण दक्षिणे चापरे करे
पुण्याहं वाचयेत्तत्र ब्राह्मणान्भोजयेत्ततः १४
रक्षाबन्धविधानेन कारयेद्देशिकोत्तमः
देवस्य दक्षिणे हस्ते कुर्यात्सूत्रादिभिर्बुधः १५
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
प्रातः काले समभ्यर्च्य आनीया मण्डपे शुभे १६
यथाशक्ति विधानेन स्नपनं कारयेद्बुधः
त्रियम्बकेन मन्त्रेण अर्चयेन्नृत्तबिम्बकम् १७
सौवर्णं च घृतं चैव दृष्ट्यां चैव महेश्वरम्
पश्चाद्देव्यास्तथा दृष्ट्या आचार्याय प्रदापयेत् १८
पश्चाद्दानादि सर्वाणि कारयेच्छक्तितः क्रमात्
पुण्याहं वाचयेत्तत्र ब्राह्मणान्भोजयेत्ततः १९
पञ्चवर्णहविर्दद्यात् प्रासादेनैव मन्त्रतः
गन्धयुक्तिविधानेन कारयेद्गन्धमुत्तमम् २०
अथवा शुद्धदेशे तु गन्धं सङ्ग्राह्य बुद्धिमान्
हृदयेनैव मन्त्रेण प्रोक्षयेद्गन्धवारिणा २१
पश्चाद्देवं तथा देवीं तत्तन्मूलेन लेपयेत्
अस्त्रस्य दीक्षितस्यैव मूलल्ङिगस्य दापयेत् २२
पश्चाच्चण्डेश्वरस्यैव भक्तानां चैव दापयेत्
सर्वालङ्कारसंयुक्तं सर्वातोद्यसमन्वितम् २३
नानागेयसमायुक्तं नानानृत्तसमन्वितम्
शनैः प्रदक्षिणं कुर्यान्नदूरं न समीपतः २४
ग्रामस्याभिमुखं चैव तेनैव च निवर्तनम्
संहितो संहितं कुर्याद्भिन्ने भिन्नं समाचरेत् २५
मध्याह्नात् पुरतो नास्ति अथवा विंशते क्रमात्
पश्चाद्धोमं बलिं कुर्यादुत्सवं तदनु व्रजेत् २६

यज्ञार्थदीक्षितं बिम्बं दिवाकाले तथा भवेत्
रात्रावेवं प्रकर्तव्यमुदयादपरेन हि २७
पश्चाद्भक्तजनैः सार्धमभिषेकोदकं नयेत्
देवस्य विसृजेदृक्षां गन्धं चैव तु वर्जयेत् २८
स्नपयेद्देवदेवेशं महाव्योमेति मन्त्रतः
देव्यां च कारयेत्तद्वच्छक्तिमन्त्रेण बुद्धिमान् २९
पावमानेन संप्रोक्ष्य गन्धपुष्पादिभिर्यजेत्
पश्चान्निरञ्जनं कुर्यात् च्छास्त्रदृष्टेन कर्मणा ३०
अपूपादि तदा दद्याद्यथाविभवविस्तरैः
प्रभूतं च हविर्दद्यात् सह सर्वोपदंशकैः ३१
नृत्तं हि कारयेत्पश्चात्सर्वालङ्कारसंयुतम्
परिवेषक्रमं कुर्यात्साये चैव विशेषतः ३२
यागेशं पूर्वतो गत्वा पश्चान्नृत्तेशकं व्रजेत्
पश्चाच्छण्डेशकं कुर्यात् सर्वालङ्कारसंयुतम् ३३
ग्रामप्रदक्षिणं कुर्यात्सन्ध्यां सन्ध्यां हि नृत्तकः
आलयं प्रविशेद्धीमान् ब्राह्मे चैव मुहूर्तकः ३४
परिवेष्मण्डपे स्थाप्य पादौ पाद्यं हि कारयेत्
पश्चाद्विसृज्य निर्माल्यमभिषेकं हि कारयेत् ३५
गन्धपुष्पादिभिः पूज्य देवं देवं विशेषतः
पञ्चानिरञ्जनं कुर्यात्प्रभूतं हविषन्ददेत् ३६
पश्चाद्भक्तजनानां तु भोजयेद्देशिकोत्तमः
एवमेव विधानेन कारयेद्देशिकोत्तमः ३७
सर्वालङ्कारसंयुक्तं प्रासादे स्थापयेद्बुधः
मूलबिम्बं विशेषेण पूजयेत्पूर्वमार्गतः ३८
आचार्यपूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ३९

इति सूक्ष्मशास्त्रे कौतुकोत्सवं नाम पञ्चदशपटलः

अतः परं प्रवक्ष्यामि तीर्थारम्भाधिवासनम्
तीर्थादिपूर्वरात्रौ तु कौतुकं बन्धयेद्बुदा १

विसृज्य कौतुकं पूर्वं कौतुकं च विशेषतः
हैमैर्वा रजतैर्वापि क्षौमकार्पासकेन वा २
आलयस्याग्रतः कुर्याद्गोमयेनानुलेपयेत्
स्थण्डिलं कारयेत्तत्र शालिभिश्चतुरङ्गुलम् ३
तण्डुलैः पूरयेत्पात्रं तन्मध्ये कौतुकं न्यसेत्
विमानप्रदक्षिणं कृत्वा पुण्याहं वाचयेद्बुधः ४
शिवगायत्रिमन्त्रेण अस्त्रबिम्बं च बन्धयेत्
आधिवासनं ततः कुर्याद्ब्राह्मी चैव विशेषतः ५
मण्डपं मार्जयित्वा तु गोमयालेपनं कुरु
वितानोपरि संपाद्य मुक्तादामैरलङ्कृतम् ६
अङ्कुरैः धूपदीपैश्च अष्टमङ्गलकैर्युतम्
तण्डुलैस्तिलदर्भैश्च सम्यगष्टदलं लिखेत् ७
तन्मध्ये विन्यसेत्कुम्भं शूलं तत्रैव विन्यसेत्
अष्टौ घटानि परितः स्थापयेदष्टमूर्तिकान् ८
गन्धपुष्पादिभिः पूज्य वस्त्रगन्धसमायुतम्
पश्चाद्बिम्बं तु संस्थाप्य मूलबिम्बं विशेषतः ९
त्रिशूलेन समायुक्तं नन्द्या वापि तटाकके
गच्छेत् समतले सम्यक्स्थण्डिलं कारयेद्बुधः १०
अस्त्रं चैव तु संपूज्य तस्याग्रे कलशं न्यसेत्
अस्त्रगन्धसमायुक्तान् सकूर्चान् सपिधानकान् ११
सप्तगङ्गादिकान् पूज्य अस्त्रप्रतिममानयेत्
गन्धपुष्पादिभिः पूज्य शूलगायत्रिमन्त्रतः १२
सर्वालङ्कारसंयुक्तं शूलं यागे तु वेशयेत् १३
इति सूक्ष्मतन्त्रे तीर्थसङ्ग्रहं नाम षोडशपटलः

अतः परं प्रवक्ष्यामि चूर्णोत्सवविधिक्रमम्
पूर्वोक्तेन विधानेन होमं बिम्बं च कारयेत् १
पश्चाच्छिवोत्सवं कुर्यात्सर्वालङ्कारसंयुतम्
रजनीचूर्णस्यारम्भमुत्सवान्ते विशेषतः २

प्रासादस्याग्रतो वापि कौतुकस्याग्रतोऽपि वा
स्थण्डिलं चतुरश्रं तु अष्टद्रोणेन शालिना ३
तिलदर्भैस्समाकीर्य स्थण्डिलं त्रीणि विन्यसेत्
एकस्मिन्नस्त्रसंस्थाप्य मध्ये तालं च विन्यसेत् ४
अपरे रजनीं स्थाप्य तस्मी चन्मुसलूखले
अर्चयेत्तु क्रमेणैव तत्तन्मन्त्रेण देशिकः ५
अस्त्रेण वेष्टयित्वा तु लूखलं मुसलं तथा
अर्चयेद्गन्धपुष्पाद्यैर्बिम्बं चास्त्रं विशेषतः ६
घृतं शिरोर्पणं कुर्यात्कौतुकानां विशेषतः
हृदा निक्षिप्य रजनिं चूर्णयेद्धृदयेन तु ७
त्रिद्वित्रियं मुसलादाय गणिकाभिश्च चूर्णयेत्
पश्चाद्भक्तजनैश्चैव कारयेत्सुमुहुर्मुहुः ८
पुनश्चूर्णं समादाय त्रिषु पात्रेषु निक्षिपेत्
गन्धपुष्पादिभिः पूज्य प्रासादेन तु मन्त्रतः ९
पश्चाल्लिङ्गे प्रदातव्यं तदेकं प्रतिमादिषु
यागमूर्तेस्तथा चैव चूर्णं तैलं च दापयेत् १०
परिवारेषु कुर्यात्तु तत्तन्नामादिभिर्बुधः
पश्चाद्भक्तजनानां तु चूर्णं तैलं च दापयेत् ११
ग्रामप्रदक्षिणं शीघ्रं त्रिशूलेन समायुतम्
बलिमादिक्रमेणैव चूर्णं तैलं च दापयेत् १२
पश्चात्प्रासादमावेश्य गन्धपुष्पादिभिर्यजेत् १३
इति सूक्ष्मतन्त्रे चूर्णोत्सवं नाम सप्तदशपटलः

अतः परं प्रवक्ष्यामि समुद्रस्नानमुत्तमम्
सर्वपापहरं चैव सर्वतीर्थफलप्रदम् १
नवकुम्भान्समादाय सूत्रेण परिवेष्टयेत्
पूरयेद्गन्धतोयेन कूर्चं तत्र विनिक्षिपेत् २
सर्वेषु कलशेष्वेवं चूतपल्लवशोभितम्
वज्रादीनायुधान्ग्राह्य कलशानभिगद्यते ३

ततः शङ्खादिनादैश्च गीतनृत्तसमाकुरु
भेरिमर्दलपटहं तालघोषसमायुतम् ४
ग्रामप्रदक्षिणं कुर्याच्छूलबिम्बं विशेषतः
समुद्रेऽपि च नद्यां वा तटाके वा नयेद्बुधः ५
जलतीरे समागम्य प्रपां कुर्याद्विशेषतः
पूर्वाभिमुखमास्थाप्य कौतुकं च विशेषतः ६
त्रिशूलं तस्य पुतः स्तथाग्रे कलशान्न्यसेत्
स्थण्डिलं कारयेत्तत्र तिलदर्भैस्समन्वितम् ७
कलशान्स्थापयेत्तस्मिन् आयुधानि च विन्यसेत्
अर्चये गन्धपुष्पाद्यै कलशादीन् पृथक्पृथक् ८
पुण्याहं वाचयेत्तत्र पावमानेन प्रोक्षयेत्
आहूय देवतां सर्वां सभृया च समाप्यध ९
मनसा पूजयेत्सर्वान् हृदयेन तु देशिकः
घटाभिषेकं कुर्वीत बिम्बं शूलं विशेषतः १०
पश्चाज्जलान्ते शूलं तु आचार्येण सहैव तु
स्नानं लोकहितार्थाय तीर्थे संस्थाप्य शूलिनम् ११
रात्राधिवासितान् कुम्भान् त्रिशूले स्थापयेद्बुधः
चक्रवत्युपचारेण कौतुकं स्नापयेद्बुधः १२
आयुधानि जले क्षिप्त्वा अष्टमङ्गलमेव च
पश्चात्संपूज्य देवेशं मन्त्रं चैव विशेषतः १३
दूकूलपट्टदेवाङ्गैः वेष्टयेद्वस्त्रमुत्तमम्
त्रिशूलस्य तथैव स्यादाचार्यस्य तथैव च १४
आचार्य पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
ब्अह्मघोषसमायुक्तं सर्वालङ्कारसंयुतम् १५
ग्रामप्रदक्षिणेनैव यागस्थाननिवेशयेत्
परिवेष्मण्डपे चैव यागार्थं कौतुकं न्यसेत् १६
स्विष्टान्तं होमयेद्यागे स्वस्वमन्त्रैश्च देशिकः
प्रभूतं च हविर्दद्या यागादीनां विशेषतः १७
पश्चाच्छूलं च कुम्भानि सर्वालङ्कारसंयुतम्

विमानप्रदक्षिणं कृत्वा लिङ्गाग्रे स्थापयेद्बुधः १८
शिवमाराध्य यत्नेन कारयेद्देशिकोत्तमः
अपरे दिवसे चैव +वयात्रां समारभेत् १९
तीर्थार्थं कौतुकं मत्क्य वनयात्रार्थकौतुकम्
कारये तु विशेषेण कौतुकं बन्धयेद्बुदा २०
पूर्वं दि च चतुर्दिक्षु गन्तव्यं वनयत्रकम्
स्थानान्स्थानान् न्तरं वापि अन्यथा च मनोरमम् २१
पूर्वेद्युर्वा प्रकर्तव्यं वनयात्रां च देशिकः
यागार्थदिक्षितं बिम्बं पूर्वस्मिन् दिवसेन च २२
अदिक्षितानां बिम्बानां कारये तीर्थपूर्वके
यज्ञार्थदीक्षितं बिम्बं ग्रामबाह्ये निवेशयेत् २३
वेशयेद्यदि मोहेन राक्षसाद्या विशन्ति हि
तस्मात्सर्वप्रयत्नेन यागबिम्बं च पूर्वकम् २४
युद्धारम्भप्रभावेन सर्वायुधवराङ्गनान्
देवदेवं विशेषेण दिव्यगन्धेन लेपयेत् २५
नानावद्यसमायुक्तं नानागेयसमन्वितम्
नानामृदङ्गसंयुक्तं नानावाहनसंयुतम् २६
एवं प्रदक्षिणं देवं कुर्याद्ग्रामादिकं ततः
जलाक्रिय वने कुर्यान्मृगकुम्भमलिलया २७
एवमेव विधानेन कारये तु वने बुधः
यात्रमण्डपमध्ये तु यात्राहोमं प्रतापयेत् २८
समिदाज्यचरून्लाजान् होमयेद्राक्षसप्रयम्
राक्षसायेतिमन्त्रेण अष्टाविंशति सङ्ख्यया २९
सकलानि च मांसानि वने चैव बलिं क्षिपेत्
पश्चाद्देवेशसंपूज्य प्रभूतं च हविर्ददेत् ३०
ब्राह्मणान्भोजयेत्तत्र यथाविभवविस्तरैः
ततो भक्तजनान्सर्वान् भोजयेद्भक्तिमान्नरः ३१
पश्चाद्देवं च देवीं च भूषयन्तु विशेषतः
अश्वत्पृष्ठसमास्थाय यन्त्ररूपेण निर्मितम् ३२

ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम्
प्रासादस्य समीपे तु शंभुशक्त्या निवारितः ३३
पश्चात्तु देव्या रूपेण प्रासादं संप्रवेशयेत्
विना ग्रामबलिं तस्मिन् होमं चैव न कारयेत् ३४
विधिं विसर्जयेत्तत्र मूलस्थाने निवेशयेत् ३५
इति सूक्ष्मशास्त्रे समुद्रस्नानं नाम अष्टादशपटलः

अवभृतानन्त्रियेषु पञ्चमे सप्तमेऽपि वा
ध्वजावारोहणं कुर्याच्चण्डयागसमन्वितम् १
वनयात्रा परं चैव स्नपनं तत्र कारयेत्
चण्डयागस्य पूर्वेद्युः कारयेन्मण्डपं शुभम् २
नवाष्टसप्तहस्ते च कारयेत्तु विशेषतः
तन्मध्ये कुट्टिभं कुर्यात् पञ्चतालप्रमाणतः ३
षोडशाङ्गुलमुत्सेधं दर्पणोदरसन्निभम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ४
अलङ्कारादिभिर्भूष्य शालिपिष्टैर्विचित्रयेत्
स्थण्डिलं कारयेत्तत्र तिलदर्भैपरिस्तरैः ५
स्थापयेत्कलशान् मन्त्रि चण्डमन्त्रमनुस्मरन्
कूर्चा निक्षिपेत्तत्र वस्त्रैराच्छादयेद्बुधः ६
गन्धपुष्पादिभिः पूज्य अष्टविद्येश्वरैर्युतम्
चण्डेशं स्थापयेत्तत्र चण्डमन्त्रमनुस्मरन् ७
आविर्निवेदयेत्पश्चात् ताम्बूलं तत्र दापयेत्
ब्रह्मचारि शुचिर्भूत्वा चण्डवत्साधको चरेत् ८
ग्रामप्रदक्षिणं कृत्वा बलिं दत्वा विशेषतः
देवतोद्वासनं कुर्याद्ध्वजं तत्र विसर्जयेत् ९
रज्जुध्वजपटं चैव देशिकायां प्रदापयेत्
टङ्केन छेदयेद्दण्डं चतुर्दिक्षु विशेषतः १०
अन्त +++ दण्डं च गृहीयाद्देशिकोत्तमः
पञ्चगव्येन संप्रोक्ष्य पश्चात्तेनैव रोपयेत् ११

एकाहे वापि कुर्याश्चे ग्रामे बलिंस्तु कारयेत्
पश्चाद्ध्वजं विसृज्याथ चरडेशं पूजयेत्ततः १२
आचार्यं पूजयेत्पूर्वं पश्चाद्यागं विसर्जयेत्
यागोपकरणं सर्वमाचार्याय प्रदापयेत् १३
इति सूक्ष्मतन्त्रे ध्वजारोहणं नाम एकोनविंशतिपटलः

## पुष्पचूर्णविधि

अतः परं प्रवक्ष्यामि पुष्पचूर्णविधिक्रमम्
भक्तोत्सवान्तकर्तव्यमादा वापि च कारयेत् १
प्रासादस्याग्रतः कुर्यान्मरडपं चतुरश्रकम्
यागमरडपमार्गेण कारयेत्पूर्वमार्गतः २
मध्यमे वेदिकां कुर्यात् पञ्चतालप्रमाणतः
द्वादशाङ्गुलमुत्सेधं दर्पणोदरसन्निभम् ३
तत्पूर्वे चतुरश्रं तु कुरडं तत्रैव कारयेत्
अस्त्रं च कौतुकं चैव पश्चिमे स्थापयेद्बुधः ४
श्वेतपुष्पाणि सर्वाणि स्थापयेद्देशिकोत्तमः
पञ्चगव्येन संप्रोक्ष्य पावमानेन प्रोक्षयेत् ५
पश्चात्पुष्पाणि संग्राह्य नवपात्रे विशेषतः
स्थरिडलं कारयेद्वेद्यां नवकुम्भानि स्थापयेत् ६
सकूर्चान् सवस्त्रसंयुक्तान् सहैमान् वारिपूरितान्
गन्धपुष्पादिना पूज्य दशायुधानि विन्यसेत् ७
तोरणानि च संकल्प्य द्वारकुम्भैरलङ्कृतम्
एवमेव विधानेन कारयेद्देशिकोत्तमः ८
पश्चाद्धोमं प्रकर्तव्यं उत्सवस्यैकहोमतः
रात्रौ ह्येवं प्रकर्तव्यं प्रातः कले शिवं यजेत् ९
पश्चात् पुष्पाणि संपूज्य शिवस्योपरि विन्यसेत्
अस्त्रं च कौतुकं चैव यथालाभं प्रमाणतः १०
पुष्पाणि दापयेद्विद्वान् प्रासादेन तु मन्त्रतः
प्रभूतहविषं दद्याद्भक्तानां दापयेत्क्रमात् ११

अपरे दिवसे प्राप्ते पुष्पाणि च विसर्जयेत्
सध्यालोपं च कर्तव्यं पुष्पाद्योपरि पूजयेत् १२
पश्चात्कुम्भानि संस्थाप्य मूलं कौतुकमेव वा
पूर्णाहुतिं ततो दद्यात् प्रासादेन तु मन्त्रतः १३
भूपतं च हविर्दद्यात् प्रसादेन तु मन्त्रतः
नवाहे चैव सप्ताहे पञ्चाहे त्रियहेऽथ वा १४
एकाहे कारयेद्धीमान् पुष्पचूर्णं सलक्षणम् १५
इति सूक्ष्मतन्त्रे पुष्पचूर्णविधिं नाम एकविंशतिपटलः

## देशिकप्रायश्चित्तम्

प्रायश्चित्तं प्रवक्ष्यामि देशिकस्य विशेषतः
प्रायप्रविणमित्युक्तं चित्तमुद्भवमुच्यते १
प्रविणस्य तु सन्धानं प्रायश्चित्तमिति स्मृतम्
पापशुद्धिर्यदा सम्यक् ज्ञानमुत्पद्यते यदा २
पापशुद्धिं न चेत् पुंसः क्रियास्सर्वा च निष्फला
तस्मात्सर्वप्रयत्नेन कर्तव्यं पापशोधनम् ३
आत्मार्थयजने हीने द्विगुणं चान्यहीनके
प्रासादेनैव मन्त्रेण द्विगुणं तु यजेद्बुधः ४
रोगे पुष्पाञ्जलीं कुर्यात्प्रासादेन तु मन्त्रतः
अवगाहनहीने तु घटस्नानं हि कारयेत् ५
घटस्नानमशक्तश्चेद्भस्मस्नानं तु कारयेत्
आद्रवस्त्रेण हृदिना मार्जनं तदभावतः ६
तेषामभावतो मन्त्रि भस्मस्नानं तु कारयेत्
तेष्वशक्तश्च रोगोऽपि तूष्णी पुष्पाञ्जलिं ददेत् ७
यस्याभावे तु तं दृष्ट्वा अथवा गुन्मदर्शनम्
रोगमुक्तस्य काले तु स्नपनं कारये महत् ८
अयुतं तु भवेन्मूलं होमं तु तद्वदेव हि
एवमेव विधानेन कारयेद्देशिकोत्तमः ९
शिवदीक्षनियुक्ता ये ते सर्वे तेन मार्गतः

कारयेत्तु चतुर्वर्णप्रतिलोमस्तथाचरेत् १०
स्वजात्यदूषितं स्पृष्ट्वा भस्मस्नानं तु कारयेत्
पश्चाद्वै मूलमन्त्रेण पञ्चाशत्तु जपेच्छुचि ११
स्वजात्यदीक्षितानां तु भूत्वा कामेन वै बुधः
दशाक्षरेण मन्त्रेण पञ्चाशत्तु जपेच्छुचि १२
शूद्रान्नं भुञ्जते कामान् कृच्छ्रचान्द्रायणं चरेत्
तेषां कामे विशुध्यन्तु पूर्वोक्तस्य विधानतः १३
प्रतिलोमानुकं भक्त्वा कामाद्वाकमतोऽपि वा
उपवासं चरेद्विद्वान् महान् व्योमन् जपेच्छतम् १४
पञ्चाङ्गैश्च षडङ्गैश्च सहस्रं कामतो जपेत्
निर्माल्य लशुनं मासं मत्स्यं चैव विसर्जयेत् १५
अकामान् भक्षयित्वा तु ईशानेन शतं जपेत्
स्नेहेन यदि भुञ्जीत कृच्छ्रं सन्तापनं चरेत् १६
निर्माल्यं लङ्घने दाने स्नानद्वयं तु कारयेत्
चण्डालस्पर्शने काले शिवमन्त्रशतं जपेत् १७
प्रमादास्पर्शने काले सचेलस्नानमाचरेत्
महाव्योमेन मन्त्रेण पञ्चगव्यं पिबेच्छुचि १८
शिवाग्निगुरुनिन्द्यानां यदि निन्द्या शृणोति यः
हृदिना कर्णमाबध्य सचेलस्नानमाचरेत् १९
उपवासं चरेत्तत्र प्रासादेन शतं जपेत्
कृच्छ्रं सन्तापनं कुर्याद्द्विगुणं पूजयेत्तदा २०
स्वजात्यदीक्षितशवं स्पृष्ट्वा कामदकामदः
सचेलस्नानकं कुर्याद्घृतं प्राश्य हृदा ततः २१
अघोरेण शिखा चैव सहस्रं तु जपेच्छुचि
स्नानद्वयं प्रकुर्यात्तु शिवमन्त्रशतं जपेत् २२
अकामादेव ++ त् त्रिंशत्साहस्रकं हृदा
अदीक्षितस्य विप्रस्य शवं स्पृष्ट्वा प्रमादतः २३
स्नानं तन्त्र प्रकुर्यात्तु प्रासादेन शतं जपेत्
स्नानं तु पूर्ववत्कृत्वा कामात्सहस्रकं जपेत् २४

दर्शनाद्भस्मना शुद्धिं कामात्सद्यशतं जपेत्
अदीक्षिताश्शवाद्धेतो अनुगमनं यदा भवेत् २५
स्नानं पूर्वोक्तवत्कृत्वा व्योमव्यापिशतं जपेत्
अकामाच्छिवमन्त्रेण सहस्रं तु जपेच्छुचि २६
तयोरर्धविधानेन दीक्षितस्य शवं प्रति
दीक्षितस्य शवं स्पृष्ट्वा भस्मस्नानेन शुध्यति २७
दीक्षितस्य नृपस्यैव शवं स्पृष्ट्वा प्रमादतः
समुद्रस्नानकं कृत्वा एकरात्रोपवासयेत् २८
प्रातर्गव्यं पिबेमन्त्रि प्रासादेन समहस्रकम्
अघोरास्त्रेण मन्त्रेण त्रिस्सहस्रं जपेच्छुचि २९
क्रमात्स्नानद्वयं कुर्याद् अघोरेण सहस्रकम्
गोत्रासं तु ददेन्मन्त्रि सामान्यादि गुणं चरेत् ३०
अनुगमनं तयोर्यद्यत् सचेलस्नानमाचरेत्
गोमयालेपनं कृत्वा जपं पूर्वोक्तमार्गतः ३१
कामान्स्नानं चरित्वा तु त्रिरात्रमुपवासयेत्
प्रासादेनैव मन्त्रेण शतं चैव जपेच्छुचि ३२
तयोर्दर्शनमस्ति स्यात् स्नानं पूर्ववदाचरेत्
हृदयेन तु मन्त्रेण द्विगुणं त्रिगुणं चरेत् ३३
अदीक्षितनृपस्याध शवं स्पृष्ट्वा प्रमादतः
स्नानं च पूर्ववत्कृत्वा त्रिरात्रं चोपवासयेत् ३४
पञ्चगव्य पिबेन्मन्त्रि प्रासादेन शतं जपेत्
अकामद्विगुणं कृत्वा गोग्रासं च ददेच्छुचि ३५
अकामात्कामतो वापि अनुगमनं तु संभवेत्
स्नानद्वयं प्रकुर्वीत घृतं प्राश्यं हृदां बुधः ३६
अघोरास्त्रेण मन्त्रेण अयुतं तु जपेच्छुचि
स्नानं तु पूर्ववत्कृत्वा गोमयेन तु लिप्य च ३७
पुनस्नानं प्रकुर्यात्तु सहस्रं तु जपेच्छुचि
अदीक्षितस्य वैश्यस्य शवं स्पृष्ट्वा तु कामदः ३८
समुद्रस्नानकं कुर्याद्गोमयालेपनं हृदा

अघोरास्त्रेण मन्त्रेण सहस्त्रं तु जपेच्छुचि ३९
अदीक्षितस्य वैश्यस्य क्रमादेवं विधीयते
दीक्षितस्य च वैश्यस्य शवानुगमनं यदि ४०
स्नानं तु पूर्ववत्कृत्वा त्रिगुणं तु जपेच्छुचि
प्रमादादर्शनं कृत्वा स्नानद्वयं च कारयेत् ४१
अदीक्षितस्य वैश्यस्य शवं स्पृष्ट्वा तु कामतः
स्नानं कुर्याद्विशेषेण घृतं वै प्रशयेच्छुचि ४२
एकरात्रोपवासस्य गव्यं वै प्राशयेद्धृदा
तप्तकृच्छ्रं चरित्वा तु सावित्रं तु जपेत्सदा ४३
अघोरास्त्रेण मन्त्रेण त्रिसहस्त्रं जपेच्छुचि
ब्राह्मणान्भोजयेत्तत्र स्नपनं कारयेच्छिवम् ४४
पश्चाद्वै देहशुद्धिं स्यान्नियमं कारयेत्तदा
अन्तराणां च शैवानां शवं स्पृष्ट्वा तु कामतः ४५
समुद्रस्नानकं कुर्याद्धृतं प्राश्य हृदा पुनः
गोमयेन तु सर्वाङ्गं मूलमन्त्रेण लेपयेत् ४६
पश्चात्स्नानं प्रकुर्यात्तु ईशानेन जपेच्छतम्
अघोरास्त्रेण मन्त्रेण शतं सम्यग् जपेच्छुचि ४७
अदीक्षितस्य शूद्रस्य शवं स्पृष्ट्वा प्रमादतः
स्नानद्वयं प्रकुर्यात्तु घृतं प्राश्य हृदा पुनः ४८
एकाहमुपवासस्यात् गव्यं वै प्राशयेद्धृदा
सद्योजातेन मन्त्रेण सहसं तु जपेच्छुचि ४९
अदीक्षितस्य शवं स्पृष्ट्वा प्रमादास्नानकद्वयम्
गोग्रासं तु ददेत् पश्चाद् ग्रामान्तर चसेतच्छुचि ५०
अनूगमनं तयो स्याच्चेत् क्रमाद्वै देशिकोत्तमः
स्नानं तु पूर्ववत्कृत्वा कृच्छ्रं सन्तापनं चरेत् ५१
ब्राह्मणान् भोजयेत्तत्र यथाविभवविस्तरैः
अघोरेण शिवास्त्रेण प्रत्येकं तु जपेच्छतम् ५२
कामादेवसमाख्यातमकामात्कृच्छ्रकापिना
अदीक्षितप्रकारोऽयं तयोरर्धप्रकारतः ५३

अकामात्कमतो दृष्ट्वा दीक्षितस्य शवं यदि
स्नानं तत्र प्रकुर्यात्तु मूलमन्त्रं जपेच्छुचि ५४
कामा स्नानद्वयं कुर्यात्प्रासादे शतमन्त्रतः
दीक्षितस्य शवं स्पृष्ट्वा तयो द्विगुणमाचरेत् ५५
शिवदीक्षाभियुक्तं तु शूद्रः शूद्रशवं स्पृशेत्
सचेलस्नानकं कुर्यात्प्रासादेन शतं जपेत् ५६
अनुगमनं तथा कुर्याद् द्विगुणं तु जपेच्छुचि
प्रतिलोमं शवं स्पृष्ट्वा कामाद्वाकामतोऽपि वा ५७
स्नानद्वयं प्रकुर्यात्तु प्रासादेन तु मन्त्रतः
घृतं प्राश्य हृदा कुर्यात्कृच्छ्रचान्द्रायणं चरेत् ५८
ब्राह्मणान् भोजयेद्विद्वान् यथाविभवविस्तरैः
अरोणे च मन्त्रेण अयुतं तु जपेच्छुचि ५९
अनुगमनं द्यथा तेषामधिकस्नपनं शिवे
कामदेवं समाख्यातं अकाम स्नानकद्वयम् ६०
कुर्याद्वै हृदयेनैव तप्तकृच्छ्रं चरेच्छुचि
अनुगमनं तथा तेषामधिकं स्नपनं शिवे ६१
कामदेवं समाख्यातं कामा+न् सन्तापनं चरेत्
वामदेवेन मन्त्रेण त्रिसहस्त्रं जपेच्छुचि ६२
तेषां तु दीक्षितानां तु शवं स्पृष्ट्वा तु कामतः
स्नपनं पूर्ववत्कृत्वा गव्यं वै प्राशयेद्ध्रुवम् ६३
एकरात्रमुपोषित्वा प्रभाते स्नानमाचरेत्
अघोरास्त्रेण मन्त्रेण त्रिसहस्त्रं जपेच्छुचि ६४
अनुगमनं तदेवं स्यात् अधिकं जपमाचरेत्
प्रमादगमनं यद्यात् स्नानं पूर्वोक्तवच्चरेत् ६५
प्रासादेन तु मन्त्रेण विंशत्सहस्त्रकं जपेत्
प्रतिलोमे नराणां च शवं स्पृष्ट्वा प्रमादतः ६६
पूर्वोक्तेन विधानेन द्विगुणं कारयेच्छुचि
कामानुपूर्ववत्ख्यातमनुगच्छन्ति योर्यदा ६७
स्नानं तु पूर्ववत्कृत्वा द्विगुणत्रिगुणं चरेत्

सपुत्रस्य शवं स्पृष्ट्वा शिवमन्त्रशतं जपेत् ६८
पश्चात्स्नानं प्रकुर्यात्तु घृतं प्राश्या विशुध्यति
दीक्षापुत्रं शवं स्पृष्ट्वा सचेलस्नानमाचरेत् ६९
प्राणायमं शतं जप्त्वा प्रासादेन तु तं जपेत्
शिवसंधीनं पश्चाद्ये पुत्रा संभवन्ति हि ७०
तेषां शवादिकं सर्वं चीतावत् संस्थिता भवेत्
शिवसंस्कार तत्पूर्वं यो जातावंशवच्चरेत् ७१
नैष्टिकाचारयुक्तस्तु सद्यः शौचं समाचरेत्
स्नानं तु पूर्ववत्कृत्वा प्रासादेन शतं जपेत् ७२
आदिशैवो महाशैवस्त्रियाहं शौचमाचरेत्
अनुशैवस्तथा षट् च अपरश्चैव रन्ध्रकः ७३
भानवो चान्तरं शैवं इतरे चञ्चत् शन्द्रिका
एवमेव क्रमेणैव कारयेद्देशिकोत्तमः ७४
सूतकेषु तथा कुर्याद् गृहस्था एव कारयेत्
तेषु काले शिवं दृष्ट्वा गुणां पूजयेच्छिवम् ७५
अन्यथा यदि भुञ्जीत महादोषमवाप्नुयात्
तस्मात्सर्वप्रयत्नेन शिवदृष्ट्वा तु भोजयेत् ७६
देशिकाचारयुक्तस्तु नित्यपूजासमन्वितम्
सोऽपि पूर्वोक्तनक्षत्रे सूतकं प्रेतकं चरेत् ७७
अनाचर्यकुले जाता शिवशास्त्र न बोधकः
नित्यपूजाविहीनञ्च दशाहं सम्यगाचरेत् ७८
शैवसम्बन्धहीना ये ते सर्वे चोत्तराग्निके
दशाहे पश्चात् शाहे विंशत् त्रिंशदिनेऽपि च ७९
एतेषु दिवसेष्वेव ब्राह्मणाद्या क्रमाचरेत्
प्रेतयुक्तगृहे वास प्रातस्नानं समाचरेत् ८०
पञ्चगव्य पिबेन्मन्त्रि प्रासादेन तु मन्त्रतः
नृपवैश्य च शूद्रे च प्रेतयुक्तो गृहो वसेत् ८१
स्नानं तु पूर्ववत्कृत्वा व्योमव्यापि शतं जपेत्
द्वयोर्वै तेन मन्त्रेण द्विगुणं त्रिगुणं चरेत् ८२

सूतकं च यदा स्पृष्ट्वा विप्रस्य स्नानमाचरेत्
नृपस्य सूतकं स्पृष्ट्वा स्नानाद्वै च समाचरेत् ८३
महाव्योमेन मन्त्रेण वैश्यस्य सूतकं स्पृशेत्
शूद्रस्य सूतकं स्पृष्ट्वा द्विगुणं तेन मन्त्रतः ८४
शूद्रेतराणामाशौचं स्पृष्ट्वा स्नानं तु पूर्ववत्
कुर्याद्वै तेन मन्त्रेण द्विगुणं तु जपेच्छुचि ८५
रजस्वलां च या नारीं देशिको संस्पृशेद्यदि
सद्यस्नानं प्रकुर्यात्तु अघोरेण शतं जपेत् ८६
रजस्वला द्वितीयां च तृतीयां च चतुर्थका
स्पृशेद्वै देशिको धीमान् स्नानं गव्यं च कारयेत् ८७
क्रमा च द्विगुणं जप्वा तु अघोरास्त्रेण मन्त्रतः
देशिको भोजने काले आर्तवान् सम्यग्दर्शयेत् ८८
भुक्तशेषं त्यजित्वा तु स्नानं पूर्वोक्तवच्चरेत्
उपवासं चरेदेकं प्रतगव्यं पिबेद्बुदा ८९
अघोरास्त्रेण मन्त्रेण सहस्त्रं तु जपेच्छुचि
तस्य भोजनकाले तु तासां वसं शृणोति चेत् ९०
अन्नशेषं त्यजेन्मन्त्रि भस्मस्नानं समाचरेत्
प्रासादेनैव मन्त्रेण शतं चैव जपेच्छुचि ९१
द्विगुणस्य तु जातेस्तु प्रासादेन जपेद्बुधः
लोषाद्यां संभवे ह्यन्ते भुक्तशेषं त्यजेद्बुधः ९२
आचमनं ततः कुर्याद् घृतं प्रश्य हृदां बुधः
पश्चात्तु भोजनं कुर्यात् दिच्छ चे देशिकोत्तमः ९३
भाजनस्य तु काले तु सूतका दर्शयेद्यदि
अन्नशेषं त्यजित्वा तु स्नानं कुर्यात्तु देशिकः ९४
प्रासादेन तु मन्त्रेण शतं चैव जपेच्छुचि
प्रातःकाले तया कुर्यात् तयोर्वाक्यं शृणोति यः ९५
स्नानं तु पूर्ववत्कृत्वा गव्यं वै प्राशयेच्छुचि
चण्डाले भेरिका शाब्दं य शृणोति च भोजयेत् ९६
अन्नशेषं त्यजित्वा तु भस्मस्नानं तु कारयेत्

अथवा कर्णमाबध्वा शब्दान्ते भोजयेद्बुधः ९७
प्रमादभोजनस्याचेदघोरास्त्रं शतं जपेत्
आशौचद्रव्यसंबन्धौ यो देवान् अर्चयेत्तदा ९८
भक्त्या तु पूजयेत्सोऽपि दहनाप्लावनादिभिः
पूजान्ते शुद्धिमाप्नोति निसंपर्के यदा शुचि ९९
द्रव्याणा रेण भोक्तव्यं तस्मिन् काले विशेषतः
अन्यथा कारयेद्दोषं न दैवस्तत्र तिष्ठति १००
जज्ञानां दोषदस्तस्मान्महादेवार्चनाय च
तस्मात्सर्वप्रयत्नेन नि++हा न्न कारयेत् १०१
नित्यार्चनाभियुक्तानामेवमेवं हि कारयेत्
खद्योदस्तु यथा भान्वोस्तथा पाल्पस्य दोषभाक् १०२
शवयुक्तस्य पुरुषः द्रव्याणि न च सेचयेत्
प्रमादात्सेचन्न यद्यत् स्नानद्वयं समाचरेत् १०३
प्रणायामसहस्त्रं तु अघोरास्त्रं तदेव तु
येवमेव विधानेन कारयेद्देशिकोत्तमः १०४
आत्मार्थयजने काले भृत्यर्थं देशिकस्य तु
शावन्ध्या संभवे काले उत्तर्क्षं वर्जयेत्क्रमात् १०५
देशिकान्तरमार्गेण नित्यपूजां करोति हि
प्रायश्चित्तं विधिं प्रोक्तं स्नपनस्य विधि शृणु १०६
इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे देशिकप्रायश्चित्तं नाम त्रयोविंशति पटलः

## सकलस्नानम्

स्नानं सकललिङ्गस्य प्रवक्ष्यामि समासतः
सर्वपापहरं चैव सर्वदोषहराणि च १
सर्वदानफलं चैव मलशुध्यर्थमेव च
उत्सवे च प्रतिष्ठायां ग्रहणे सङ्क्रमेऽपि च २
नृपजन्मर्क्षभे युक्ते अभिषेकदिनेऽपि च
अन्यत्पुण्यदिने कुर्याद्दोषयुक्ते विशेषतः ३
शैलजानां तु सर्वेषां तैलेनाभ्यञ्जने कुरु

तिलतैलं तु कर्तव्यमन्यतैलं तु वर्जयेत् ४
अभ्यञ्जनात्ये मलकमगोपाङ्गानि लेपयेत्
मर्द्दयेदृक्तचूर्णैस्तु स्नापयेत् शुद्धवारिणा ५
तदन्तकृष्णाचूर्णैस्तु लेपयेत्तु विशेषतः
पुनर्गन्धोदकेनैव स्नापयेत्तु महेश्वरम् ६
वस्त्रेण मार्जनं कुर्यात् शनैः शनैर्विशेषतः
ततो वस्त्रादिभिर्भूष्या सर्वालङ्कारसंयुतम् ७
सौवर्णादिसमाख्यातं मृरामयस्य विधि शृणु
अभिषेकं न कर्तव्यं प्रोक्षणं चैव तद्धदा ८
अभिचित्रे पटे चैव प्रोक्षणं तु समाचरेत्
स्थापयेद्युक्तमार्गेण सर्वसंपत्कराय च ९
अन्यथा स्थापयेत्तत्र अभिचाराय चैव हि
स्नानान्ते चार्चनं कुर्याद्गन्धपुष्पादिभिः क्रमात् १०
हविर्निवेदयेत्पश्चात् द्यथ विभव विस्तरैः ११
इति सूक्ष्मशास्त्रे सकलस्नानं नाम चतुर्विं शति पटलः

अथातः संप्रवक्ष्यामि नित्यबलिविधिक्रमम्
यस्मिन् ग्रामे बलिः शब्दस्तस्मिन् स्त्राराक्षसादयः १
श्रुत्वा गमन्ति सहसा ग्रामं वृद्धिकरं भवेत्
तस्मात्सर्वप्रयत्नेन कुर्यात् न्नित्यबलिं क्रमम् २
शिवस्य भोजनान्ते तु अन्तै नित्याग्निकर्मणि
नित्यं बलिं क्रमं कुर्यात् द्राजाविजयमिच्छति ३
उत्तमं मणिलिङ्गं स्यान्मध्यमं प्रतिमा भवेत्
अधमं गोलकं ज्ञेयमथवा पुष्पान्नतण्डुलैः ४
प्रतिमा भावयेल्लिङ्गं तस्याभावे तु गोलकम्
तेषामभावे मन्नादीन् कुर्यासम्यक् सदाबुधः ५
पूर्वान्ने पुष्पलिङ्गेन प्रतिमा ब्राह्मणप्रियम्
मध्यान्ने चान्नलिङ्गेन मणिलिङ्गशिवप्रियम् ६
साये तण्डुललिङ्गेन गोलका केशवप्रियम्

सौवर्णं रजतं ताम्रं कांस्यपात्रचतुर्विधम् ७
अष्टाङ्गुलं तु विस्तारं चतुरङ्गुलमुच्छ्रयम्
पात्रस्य मध्यमे पद्मं कल्पयेत्तु दलाष्टकम् ८
मण्डपं दक्षिणे भागे मण्डलं चतुरश्रकम्
गोमयेनोपलिप्याथ पात्रं संस्थाप्य तत्र तु ९
शिवमन्त्रं समुच्चार्य शिवस्तं शिवमावहेत्
ईशानमन्त्रमुच्चार्य बलिलिङ्गे शिवं न्यसेत् १०
सर्वगन्धैस्तथा पुष्पै धूपैर्दीपैस्तथार्घ्यकैः
हृदयाद्यस्त्रपर्यन्तैः मन्त्रैरभ्यर्चयेत् क्रमात् ११
ब्रह्मचारिगृहस्थो वा भस्मोद्धूलितविग्रहः
सहोष्णीषोत्तरीयेण लिङ्गं शिरसि धारयेत् १२
सद्योजातं समुच्चार्य प्रतिमाद्यैः सह व्रजेत्
पाशुपदास्त्रमूर्त्तिर्वा चन्द्रशेखरमेव च १३
सर्वेषां पुरतो गच्छेन्मणिभिस्तदनुव्रजेत्
पुष्पान्नं तण्डुलं लिङ्गं तस्य लिङ्गं तनु व्रजेत् १४
वितानध्वजसंयुक्तं च्छत्रचामरसंयुतम्
वाद्यध्वनिसमायुक्तं गणिकाद्यैरलङ्कृतम् १५
प्रथमप्रदक्षिणं कुर्यात्प्रासादपीठिका सह
गोपुरात्पुरतो गच्छेच्छङ्खध्वनिसमन्वितम् १६
चितीर्या द्वारपाश्वाभ्यां पादुकास्थानमिष्यते
तस्य पश्चिमभागे तु प्रतिमास्थानमुच्यते १७
पश्चिमे प्रतिमायास्तु मग्रेणस्थानमुच्यते
मणिलिङ्गस्य पश्चाभ्यां गोलकास्थानमिष्यते १८
त्रयाणां पृष्ठभागे तु अन्तादे स्थानमिष्यते
प्रदक्षिणक्रमेणैव प्रतिमादीनि स्थापयेत् १९
प्रतिष्ठा प्रतिमादीनां बलिलिङ्गं तु स्थापयेत्
प्रतिमाद्य इति प्रोक्ता प्रति च मणिगोलका २०
पुष्पान्नत्तण्डुलं लिङ्गं बलिलिङ्गमिति स्मृतम्
पूर्वाभिमुखमास्थाप्य प्रतिमाग्रस्य पादुकम् २१

स्थलिकोपरि संस्थाप्य पादुकद्वयमर्चयेत्
पात्रगन्धैस्तथा पुष्पैः धूपदीपैरधोर्घ्यकैः २२
षडङ्गैः क्रमशोऽभ्यर्च्य अर्घ्यं दत्वा यथा क्रमम्
चतुर्णप्रथमादीनामर्घ्यं शिरसि विन्यसेत् २३
पादप्रक्षालनं कृत्वा प्रासादं संप्रवेशयेत्
स्वस्थाने स्थाप्य वाराद्यै पूजयेद्ब्रह्मपञ्चभिः २४
पूर्वस्मिन् मण्डले स्थाप्य बलिलिङ्गं तु देशिकः
द्वारादिभिस्समभ्यर्च्य पञ्चभिः ब्रह्मभिः क्रमात् २५
शिवमन्त्रसमुच्चार्य बलिलिङ्गस्थमीश्वरम्
मूललिङ्गे तु संस्थाप्य शिवमन्त्रे समुच्चरेत् २६
बलिलिङ्गादिकान् सर्वान् गर्भगेहे तु स्थापयेत्
बलिलिङ्गविसृज्याथ पादुकानर्चयेद्बुधः २७
पादप्रक्षालनं कृत्वा प्रासादाभ्यन्तरं विशेत्
पूर्वोक्तविधिना सर्वं कारयेद्देशिकोत्तमः २८
संस्थानं च पाशुपदं मूर्तिर्वा चन्द्रशेखरम्
योरभावे मणिशिवं गोलकां हि विशेषतः २९
तेषां वा चान्नलिङ्गं तु पुष्पमर्घ्यं हि वा पुनः
तस्मात्सर्वप्रयत्नेन नित्यं कुर्यात् फलेच्छुता ३०
षडङ्गमूर्तिमभ्यर्च्य षड्भिर्वादिभिं क्रमात्
एवमभ्यर्च्य विधिना स्वस्थाने च प्रवेशयेत् ३१
हृदयेन चरुं दद्यात्ताम्बूलं दापयेत्ततः
पश्चान्नीराजनं कुर्यात्प्रासादेन तु मन्त्रतः ३२
प्रभूतहविषदद्यात् भक्तान् सर्वान् प्रपूजयेत्
द्रोणहीनं न कर्तव्यं कर्तव्यं मन्दिरे क्रमात् ३३
नित्यहोमवसाने तु बल्यर्थं होमयेद्धृदा
पञ्चाशत्पञ्चविंशद्भिः घृताक्ते नवकं हुनेत् ३४
एवं स्याद्बुधवारे तु मन्दवारे तथैव च
तैलाभ्यङ्गं हृदा कुर्याच्छेषं पूर्ववदाचरेत् ३५
पूर्वरात्राधिवासञ्च गन्धतैलविशेषतः

प्रातः काले च मभ्यङ्गं मूलं च बलि बिम्बके ३६
स्नात्वा राजोपचारेण सुगन्धामलकादिभिः
पश्चात् चरुं प्रदद्यात्तु प्रत्येकं हृदिना बुधः ३७
पश्चाद्वारोत्सवं कुर्यात्सर्वालङ्कारशोभितम्
अन्यथा कारयेद्यस्तु तत्कलन्निष्फलं भवेत् ३८
वारोत्सवमिदं प्रोक्तं तस्मिन् मन्त्रे विशेषतः ३९
इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे वारोत्सवं नाम षड्विंशति पटलः

## प्रतिमालक्षणम्

अतः परं प्रवक्ष्यामि प्रतिमालक्षणं ++
सर्वलोकहितार्थाय सर्वशान्तिकराय च १
देवतानां पृथग्रूपं तस्मात् प्रतिममुच्यते
सकलं निष्कलं चैव द्विविधं प्रतिमुच्यते २
निष्कलं तु निराकारं सकलं तु स्वरूपकम्
द्वात्रिंशदङ्गसंपूर्णं सकलं तु प्रभेदतः ३
प्रतिमा कारये पश्चाद्यथाविभवविस्तरैः
सौवर्णं राज्यकामीनां राजितं वैश्यवृद्धिदम् ४
ताम्रं विप्रसमृद्ध्यर्थं शूद्राणां विभवं भवेत्
यथा न ++ द्रव्येण प्रतिमा कारयेद्बुधः ५
उत्तमं मध्यमं चैव अधमं त्रिविधं भवेत्
एकैकं त्रित्रिभेदुनि नवदा भेदमुच्यते ६
उत्सवं प्रतिमां चैव उमास्कन्दमहेश्वरः
एकविंशत्प्रभेदं तु षोडशैव प्रभेदतः ७
द्वादशैव प्रभेदं तु त्रिविधं भेदमुच्यते
ईशमानं प्रकर्तव्यं उत्तमोत्तममुच्यते ८
गर्भगृहं तदेव स्यात्स्तम्भमानं तमेव च
रशितिरङ्गुलं मानं उत्तमं तु विधीयते ९
तन्मानं नवधा कृत्वा एकैकं तु प्रभेदतः
एवं मानप्रभेदं तु शिल्पिशास्त्रोक्तमाचरेत् १०

प्रथमं सुखासनं प्रोक्तं वैवाह्यं तु द्वितीयकम्
तृतीयमुमययुक्तं वृषारूढं चतुर्थकम्  ११
पञ्चमं त्रिपुरान्तं तु नृत्तरूपं तु षष्ठकम्
चन्द्रशेखरमेवोक्तं सप्तमं तु विशेषतः  १२
अष्टमं चार्धनारिशं नवमं हरिरर्धकम्
चण्डेश्वरप्रसादं तु दशमं परिकीर्तितम्  १३
कामार्येकादशं प्रोक्तं द्वादशं कालनाशनम्
त्रयोदशं दक्षाणमूर्त्तिं भिक्षाटनमतः परम्  १४
सदाशिवं पञ्चदशं लिङ्गोत्पत्तिस्तु षोडशा
एवं षोडशमूर्तीनां भेदं वै वक्ष्यतेऽधुना  १५
सुखासनं महाशान्तं कल्याणं सोमधारिणम्
गङ्गाधरं च पञ्चैते सृष्टिमूर्तिरिहोच्यते  १६
अर्धनारि त्रिरात्रं च वीरेशं वृषवाहनम्
भिक्षाटनं च पञ्चैते स्थितिमूर्तिरुदाहृदम्  १७
कालहाकामदाहश्च महात्रिपुरनाशनम्
गजोद्भवं मन्वहारि जलन्धरवधस्तथा  १८
चण्डेशं चैव चाष्टौ तु संहारमूर्तिरुच्यते
त्रिणेत्राश्च चतुर्बाहुं बालेन्दुकृतशेखरः  १९
व्यघ्रचर्माम्बरश्चैव हारकेयूरभूषिताः
यज्ञोपवीतसंयुक्ता कुण्डलाभ्यामलङ्कृतम्  २०
जटामकुटसंयुक्ता सर्वपुष्पैरलङ्कृताः
वरदाभयहस्ताभ्यां कृष्णापरशुधारिणः  २१
एवं षोडशमूर्तीनां सामान्यमिदमीरितम्
विशेषं तु प्रवक्ष्यामि उमास्कन्दमहेश्वरे  २२
सौम्यं सैद्रं तथा मिश्रं त्रिविधं भेदमुच्यते
पूर्वोक्तेन प्रमाणेन पञ्चासन समायुतम्  २३
आयव्ययर्क्षवारांश योनिनां तु विशेषतः
शुभाशुभं निरीक्षन्तु सम्यक्कृत्वं तु बुद्धिमान्  २४
ईशस्य बाहमानेन मुमायमानमुच्यते

मुमाय बाहुमानेन स्कन्दमानं प्रचक्षते २५
उमाशङ्करयोर्मध्ये स्कन्द वै बालरूपिणम्
देवस्याद्यप्रमाणेन ग्रासनं तु विशेषतः २६
पञ्चभागं त्रिभागं तु मध्यक्षं चैव कारयेत्
त्रिभागेरधमं विद्यात् त्रिविधमासनस्मृतम् २७
एकासनसमायुक्तं पूर्वोक्तेन प्रमाणतः
मुखभागं विनिश्चित्य चतुर्विं शच्छताङ्गुलैः २८
मध्यमं दशतालेन देवीरूपं तु कारयेत्
नुवाद्धकालमानेन स्कन्दरूपं तु कारयेत् २९
देवीनां तु तथैवं स्यात् दसने सह योजयेत्
एकवक्त्रं महाबाहु निलशिव महद्युतिः ३०
जटामकुटसंयुक्तं पार्श्वेन्दकृतसंयुतम्
त्रियक्षं चतुर्भुजं सौम्यं व्याघ्रचर्म ++ बरप्रभुम् ३१
वरदाभयहस्तं च कृष्णं परशुधारिणम्
दक्षिणे लम्बितं पदं वामपादं समासनम् ३२
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम्
सपुष्पवरदं हस्तं गौरिसम्यग्विशेषतः ३३
स्कन्ददेवनमेवोक्तमेवमेवं विशेषतः
इदं सौम्यप्रकारेण सर्वसिद्धिकरं शुभम् ३४
कृष्णापरशुसंयुक्तमभयं कटकं भवेत्
नानालङ्कारसंयुक्तं नानाभरणभूषितम् ३५
रौद्रं कटकहस्तं स्यात् स्कन्दं वा पुष्पहस्तकम्
रौद्रमेवासमाख्यातं पाशुपतादिमूर्तिना ३६
मिश्रं तु कटकं हीनं वामपाद प्रलम्बितम्
दक्षिणं पादमासीनमुमादेवीं तथैव च ३७
षण्मुखं पर्वमेवोक्तं वरदाभयहस्तकम्
एवमिश्रं समाख्यातं लाकुले नैव कारयेत् ३८
सौम्यं तु शूलशैवं स्यादष्टाविंशत् त्रिभेदतः
ततः शास्त्रोक्तमार्गेण पशुपदादि कारयेत् ३९

एकैकसङ्करं कुर्यात्कर्ताभर्ता विनश्यति
तस्मात्सर्वप्रयत्नेन कारयेल्लक्षणान्वितम्  ४०
एवं त्रिविधभेदं तु तत्र मार्गेण कारयेत्
प्रतिमालक्षणं प्रोक्तं मनोन्मनि विधि शृणु  ४१
इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे प्रतिमालक्षणं नाम एकोनत्रिंशत्पटलः

अतः परं प्रवक्ष्यामि सालानां लक्षणं परम्
प्रथमं भूतसाला च द्वितीयं मूर्तिसालकम्  १
तृतीयं गणसाला च चतुर्थं  लोकपालकम्
पञ्चमं शास्त्रसाला च षष्ठं पन्नकसालका  २
सप्तगङ्गा सप्तस्तालनो मधिदेवताः
तासां हि पूजनार्थाय प्राकारं कल्पयेद्बुधः  ३
प्रासादरक्षणार्थाय मङ्गलार्थाय बुद्धिमान्
प्रासादस्य तु विस्तारं चतुरंशैर्विभावयेत्  ४
एकांशेनैव परितः प्रथमं सालकान्वितम्
तद्व्यंशेन समस्तेन कारये द्वे पृथक्पृथक्  ५
एवं तु त्रप्रकारेण का कारयेत्प्रथमं बुधः
सार्धद्वित्रिक्रमेणैव कारयेत्त्रिविधं परम्  ६
सार्धद्वित्रिगुणेनैव चतुर्गुणेन वा पुनः
दिग्भाघा च गुणेनैव चतुर्गुणं त्रिगुणितेन वा  ७
पञ्चभिर्गुणितेनैव कारयेद्गणिकाक्रमात्
++++++++++++++++ तात्परम्  ८
++++++++++++++++ तानि त बोधना
अर्चारोमण्डपं शुद्धं दिव्यपञ्चवसन्तकम्  ९
महेन्द्रं स्वस्तिवृत्तं च मायां बाहु विकारकम्
उत्पलं पङ्कलग्नं च श्रीस्वस्ति च निवेशनम्  १०
वापिब्रह्मसभा चैव तथैवोत्पलपत्रकम्
महापद्मं महाच्छन्दं देववृत्तं तथैव च  ११
चन्द्रेणैतद्विमानानि निमित्तानि सुखार्तिना

सोमच्छन्दं सोमवृत्तं बहुपत्रं सुवेष्टिकम्  १२
श्रीवत्साकृतिकं घोणच्छन्दवृत्तं च वेदिकम्
सिद्धयोगं चतुर्वृत्तं कूटाकारं विलोकनम्  १३
कूटाकारं च गान्धारं स्वस्तिकं तिलकं तथा
शशिवृत्तिं विशालं च तथा कुलेन्दुकं पुनः  १४
एतान्यपि विमानानि शशिना निर्मितानि वै
वेदिकं वेदिवृत्तं च सोमवेणुं चतुर्मुखम्  १५
आहिकं काञ्चिकं यान अग्निच्छन्दोरकयथा
हस्तिपृष्ठं च नेवृत्तं प्रमदालत्रिबेकं त्रिवित्  १६
वृषभं माधूवृत्तं च त्रिकूटं शिल्पवृत्तकम्
गोयागमण्डुकं चापि परिप्रादकमुत्तमम्  १७
पाशिकं पङ्कलग्नं च तथैवा गगनेश्वरम्
शाभिकारसवृत्तं च निवुषं परिब्रह्मकम्  १८
मस्यकं गगनं चैव परिच्छन्दनान्तकम्
चण्डेशस्य विमानं तु भूताकारसमन्वितम्  १९
एतानि कनकाद्यैश्च मुनिभिर्निर्मितानि वै
षण्णवतिविमानानि कथितानि पुरातनैः  २०
वल्लीपत्रन्तथा चूर्णं चूलिकाञ्चेति तानि च
नवभेदानि सर्वाणि विमानानि पृथक्पृथक्  २१
आयव्ययसमायुक्तं प्राकारं कारयेद्बुधः
लिङ्गादिरूपप्रसारे आयादींश्च न कारयेत्  २२
स्वायम्भुवादि लिङ्गानां कर्णमानं तु वक्ष्यते
यस्य लिङ्गस्य पूजाशं अष्टाशं भजयेत् समम्  २३
तेषु भागेषु लिङ्गस्य शिरसादीनि बुद्धिमान्
चतुर्विं शच्छताङ्गुल्यैरथवा कारयेद्बुधः  २४
तस्माद्भागे मुखादीनि कारयेद्देशिकोत्तमः  २५
इति सूक्ष्मशास्त्रे षण्णवतिप्रासादं नाम त्रिंशत्पटलः

अथातः संप्रवक्ष्यामि घृतकम्बललक्षणम्
सर्वलोकहितार्थाय सर्वभूतहिताय च १
गोब्राह्मणनृपादीनां शिताकुर्वन्ति घर्मके
माघमासे मघर्क्षे तु पौर्णमास्यां विशेषतः २
घृतकम्बलकं कुर्यादर्के वा चान्द्रमासके
दिवा पर्वणि संबन्धे रात्रौ नक्षत्रसंयुते ३
तस्मिन्दिवैव कर्तव्यं पर्वसंबन्धकारणात्
सर्वपापक्षयं पुंसां सर्वकामार्थसाधनम् ४
स्नेहद्रव्यादिपोषार्थं माघामासे यजेत्क्रमात्
शिवप्रीतीकरं साक्षादपमृत्युविनाशनम् ५
पादादिमूर्ध्निपर्यन्तं लेपयेद्गोघृतेन तु
श्वेतादीनां गवांश्चैव घृतं सङ्गृह्य बुद्धिमान् ६
लिङ्गे द्वे कम्बलं न्यस्य गन्धपुष्पादिभिर्यजेत्
आत्मार्थेषु परार्थेषु गोलकन्यस्य विन्यसेत् ७
निरोपाग्नियुतं शुद्धं कृमिकोटरवर्जितम्
ब्रह्मचारि च तु वरायां गोक्षीरा हि च सङ्ग्रहेत् ८
सौवर्णादिषु पात्रेषु वस्त्रपूतेन बुद्धिमान्
हृदयेनैव मन्त्रेण अग्निकर्मादि कारयेत् ९
आर्द्रेणैव समायुक्तं यावद्वै घनतां व्रजेत्
तावत्पात्रेषु संपूज्य प्रासादेनैवमन्त्रतः १०
पचनालयदेशे तु अन्यस्मिन् वा मनोरमे
आत्मार्थे चैशदिग्भागे पूजास्थानं तु पूर्वके ११
मण्डलं कारयेत्तत्र वृत्तं वा चतुरश्रकम्
तस्य मध्ये न्यसेत्पात्रं हृदयेनैव मन्त्रतः १२
तस्मादन्येषु पात्रेषु दधि सङ्ग्राह्य देशिकः
हृदयेन तो मन्त्रेण शिवाम्भसा तु पूरयेत् १३
वस्त्रेणैव तु हस्ताभ्यां मर्दयेत्पुरुषेण तु
यावद्वै भिन्नतां याति तावद्वै मथनक्रिया १४
अन्यपात्रेषु मतिमान् आनीय्य नवनीतकम्

पचनालयदेशे तु अग्निमन्त्रेण कारयेत् १५
शुद्धपात्रे तु मतिमान् सङ्ग्रहेद्धृदयेन तु
सहस्रप्रस्थकं मुख्यं शतप्रस्थान्तकं क्रमात् १६
प्रत्येकं नवधा मानं कारयेद्विभवानुगम्
अथवा हीनमानं तु दशप्रस्थान्तकं क्रमात् १७
तदाभावे दशप्रस्थं प्रस्थान्त च क्रमेण तु
एवं बहुप्रकारेण आत्मार्थे वा परार्थके १८
आत्मार्थेषु दृमार्गं स्यात्प्रभूतं स्थापने बुधः
गन्धपुष्पादिभिः पूज्य प्रासादेन पृथक्पृथक् १९
सर्वालङ्कारसंयुक्तं शङ्खध्वनिसमन्वितम्
नानावाद्यसमायुक्तं नानागेयसमन्वितम् २०
ग्रामप्रदक्षिणं वापि प्रासादं वा प्रदक्षिणम्
सुगुप्ते मण्डपे स्थाप्य प्रासादेन तु मन्त्रतः २१
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम्
द्वादशदशहस्तं वा नवहस्ताषहस्तकम् २२
ब्राह्मणादिक्रमेणैव प्रपां वा कारयेद्बुधः
चतुद्वारसमायुक्तं चतुस्तोरणभूषितम् २३
दर्भमालाभिरावेष्ट्य वितानध्वजशोभितम्
मण्डपस्य त्रिभागैकं मध्ये वेदिं प्रकल्पयेत् २४
उत्सेधं रत्निमात्रं स्यात्तालमात्रमथापि वा
वेदिकापूर्वदिग्भागे होमकुण्डं हि कारयेत् २५
वृत्तं वा चतुरश्रं वा त्रिमेखलारलङ्कृतम्
स्थावरे तु चतुर्दिक्षु होमं कुर्यात्तु देशिकः २६
आत्मार्थे चैकहोमं स्याद्ब्रह्मणादिक्रमेण तु
पुण्याहं वाचयेत्तत्र पावमानेन प्रोक्षयेत् २७
घृतकम्बलकात्पूर्वे नवके सप्तपञ्चमे
अङ्कुरानर्पयेद्विद्वान् शास्त्रदृष्टेन कर्मणा २८
अङ्कुरस्यार्पणं पूर्वे घृतं सङ्ग्राह्य देशिकः
अधिवासनरात्रौ तु पात्राणि पूरयेज्जलैः २९

सर्वगन्धसमायुक्तं पञ्चब्रह्मषडङ्गकैः
अथवा च जलद्रोणघटे वा पूरयेत्क्रमात्  ३०
दशपात्रं पञ्चपात्रं त्रीणि पात्रमथापि वा
एकपात्रं हि चाल्पे तु आत्मार्थे त्रीणि चैकतः  ३१
दशपात्रे दशं मूर्तिं पञ्चमूर्तिश्च पञ्चमे
त्रिमूर्तिश्च त्रिपात्रेषु एकपात्रे शिवस्तथा  ३२
तन्तुकूर्चसमायुक्तान् सवस्त्रान्नेमसंयुतान्
एवमेव क्रमेणैव स्थापयेद्वेदिकाबहि  ३३
नववस्त्रेण संवेष्ट्य पात्राणमस्य देशिके
तं जले शिववत्कृत्वा तज्जले तु घृतं क्षिपेत्  ३४
कुङ्कुमागरुकर्पूरैः अरिद्रै चूर्णसंयुतम्
कर्षयेदीशमन्त्रेण देशिको तत्र बुद्धिमान्  ३५
पश्चात्पिर्णत्वमायादि प्रासादेनोद्धृतः क्रमात्
सौवर्णेषु च पात्रेषु प्रत्येकं सङ्ग्रहेद्बुधः  ३६
स्थण्डिलक्रममार्गेण वेदिकां कारयेद्बुधः
दशायुधानिपरितः अष्टमङ्गलसंयुतम्  ३७
पूर्ववत्संस्कृतान् कुम्भान्वेदिकोपरिविन्यसेत्
अष्टलोकाधिपान्कुम्भान्कुम्भेषु चार्चयेत्क्रमात्  ३८
तेषां मध्यमदेश तु घृतपिण्डानि विन्यसेत्
नववस्त्रेण संवेष्ट्या प्रासादेनर्चयेद्बुधः  ३९
पुण्याहं वाचयेत्तत्र ब्रह्मघोषसमन्वितम्
होमं कृत्वा तदन्ते तु पञ्चब्रह्मषडङ्गकैः  ४०
समिधाज्यचरूलाजान् गुलक्षीरदधिर्यवम्
सर्षपं मुद्गमाषौ च होमद्रव्यं क्रमेण तु  ४१
प्रभूतैः कबलेयद्यत्स्थावरेषु चतुर्ष्वपि
देशिकस्यानुसारेण प्रत्येकं होममाचरेत्  ४२
एभि होमेरशक्तश्चेद्देक एव विधीयते
आत्मार्थे तद्वदेवोक्तं शूद्राणामेकहोमकम्  ४३
एवं विधिप्रकारेण अच्चितेनैव कारयेत्

बलिं तत्र तु कुर्यात्तु वेदिबाह्ये बलिं क्षिपेत् ४४
पाश्चाद्देवं च देवीं च अर्चनोक्तं क्रमाद्यजेत्
घृतं शिरोर्पणं कुर्यात्प्रासादेन तु मन्त्रतः ४५
हविर्न्निवेदयेत्तत्र उपदंशैस्समन्वितम्
ताम्बूलं दापयेत्तत्र ब्राह्मणान्भोजयेत्ततः ४६
रात्रावधिवसेत्तत्र पञ्चगव्यामृतेस्सह
प्रभाते देशिकं स्नात्वा पश्चाद्यजनमारभेत् ४७
अलङ्कृत्यार्चयित्वा तु व्योमव्यापिदशाक्षरैः
एवं विधिप्रकारेण कारयेद्देशिकोत्तमः ४८
हृदयेन तु मन्त्रेण घृतकम्बलकं यजेत्
लोकपालान्समभ्यर्च्य स्वस्वैर्न्नामैविशेषतः ४९
होमकर्मविधिं कुर्यात्पूर्वोक्तविधिना सह
अन्ते पूर्णाहुतिं दद्यात्प्रासादेन तु मन्त्रतः ५०
आचार्यपूजयेत्तत्र मूर्त्तिधाराश्च पूजयेत्
ग्रामप्रदक्षिणं कृत्वा घृतकम्बलकं बुधः ५१
सर्वालङ्कारसंयुक्तं नृत्तगेयसमन्वितम्
लिङ्गमूर्तिं न्यसेत्पश्चाद्धृतकम्बलकं हृदा ५२
मूर्ध्नादिपादपर्यन्तं कम्बलं विन्यसेत्क्रमात्
सकलानि च सर्वाणि स्थापने विन्यसेत्क्रमात् ५३
परिवाराणि सर्वाणि स्थावरे चैव विन्यसेत्
महाव्योमेन मन्त्रेण कम्बलं सर्वथा न्यसेत् ५४
गन्धपुष्पादिभिः पूज्य प्रासादेव तु मन्त्रतः
प्रभूतहविषं दद्याद् हृदयेन तु मन्त्रतः ५५
नित्यान्ते तु प्रकर्तव्यं संध्यायां तु विशेषतः
दिवसं दिवसार्थं च यामं यामार्थमेव च ५६
पातकश्चात् बकङ्कृत्वा पूर्ववस्नपनं तथा
महाव्योमेन मन्त्रेण दशाक्षरं तथैव च ५७
अर्चयेत् शास्त्रमार्गेण गन्धपुष्पादिभिः बुधः
परिवाराणि सर्वाणि स्नपनं कारयेत्क्रमात् ५८

तेषां हविष्यं दद्यात्तु तन्त्रमन्त्रेण दापयेत्
कम्बलं देवदेवस्य चण्डेशाय प्रदापयेत् ५९
चण्डमन्त्रमनुस्मृत्य कम्बलपरित्यजेत्
घृतकम्बलकं सर्वं गोषु चाप्सु विनिक्षिपेत् ६०
अग्निना दाहयेत्तत्र चण्डमन्त्रमनुस्मरन्
यस्मिन्कर्मणि यन्मत्रं तस्मिन् हृदयमन्त्रतः ६१
कारयेत्तु विशेषेण मन्त्रेणैव विशेषतः
घृतकम्बलमात्रे तु एकरात्राद्धृतं यदि ६२
प्रत्येकं संस्कृतं गव्यं घमषा त्रीणि सप्त च
अतः परं न कर्तव्यं आत्मार्थे तु परार्थके ६३
आत्मार्थे स्पटिकाद्येषु स्थण्डिले मण्डलादिके
घृतकम्बलकं न्यस्य भित्तिचित्रे तु दर्पणे ६४
पटेऽपि तत्तद्वत्कर्तव्यं अग्नौ होमं च कम्बलम्
सूर्यमण्डलकाद्योमकम्बलं शोधयेद्बुधः ६५
जलदेशे जले न्यस्य स्वैस्वैर्मूलैश्च बुद्धिमान्
यावत्कम्बलकं यस्य तावद्बीजं न चालयेत् ६६
एवमात्मार्थकं कुर्यात्परार्थं नैव तत्क्रिया
एवमेव विधानेन कारयेदुक्तमार्गतः ६७
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
घृतकम्बलकं प्रोक्तं दमनारोपणं शृणु ६८
इति सूक्ष्मशास्त्रे घृतकम्बलं नाम एकत्रिंशत्पटलः

शैवाचारं प्रवक्ष्यामि समान्यर्चां विशेषतः
उत्तरायणगे सूर्ये क्षुरकर्म समारभेत् १
गर्भाष्टमे द्विजबं हि वेदाभ्यासं समारभेत्
पञ्चादशवर्षादूर्ध्वं विवाहविषयं कुरु २
शुद्ध्यर्थं स्नपनं कुर्याद्विधिदृष्टेन कर्मणा
विरञ्च प्रणम्य च ३
पश्चात्पूजासमारभ्य भस्मरुद्राक्षधारकः

तस्य सन्निधिकाले तु शिवागमविचारयेत् ४
पश्चान्निर्वाणसंबन्धं कुर्याद्वाग्रविचारतः
पञ्चगोचरशुद्धात्म शिवेन परिभाषतः ५
पश्चादापाद्य कर्माणि कुर्याद्वै दीक्षिको बुधः
अन्यस्मिन्यदि वा कुर्या स्थानजस्यानुसारतः ६
सोऽपि मैत्रविधानाच्च अन्यथां च न कारयेत्
अनादिविषयार्द्धेतो पूर्वसन्तानको गुरुः ७
ग्रामादीनादिकं कुर्याद् आदिशैवो दिको गुरुः
पित्रा तु यत्कृतं पूर्वं तस्य पुत्रेण तत्कृतम् ८
तस्य सन्निधिकाले तु तस्य सकलं नयेत्
अन्यथाकरणीयञ्चेत् स्थाननाशं न संशयः ९
तयोरभावयेस्सम्यक् सन्तानश्च सगोत्रजैः
तेष्वसिद्धे तु कुर्यात्तु तस्य मित्रादिभिर्बुधः १०
तस्य वक्त्रस्य तन्त्रेभ्यः कुर्यादिह विशेषतः
अन्येनाप्यनवक्त्रेण कुर्याश्चेद्दोषदम्महत् ११
कारणं किं विशेषोऽस्ति मन्त्रसंबन्धकारणात्
तयोरमावयोस्सम्यक्सन्तानश्च सगोत्रभिः १२
क्रिया गर्भस्य भेन्तद्वत् गर्भात्मतं द्विचतुर्थकम्
आत्मार्थयजनं कुर्यात्परार्थं तु कदाचनात् १३
तस्मात्सर्वप्रयत्नेन तत्सर्वं मुक्तकालके
अन्यस्मिन्मासि कुर्याच्चेत्तत्फलं निष्फलं भवेत् १४
लिङ्गे च प्रतिमायां वा भित्तिचित्रे पठेऽपि वा
स्थण्डिले मण्डले चाग्नौ जले वा सूर्यमण्डले १५
नवेष्वेतेषु स्थानेषु आत्मार्थं कारयेत्सुधीः
लिङ्गबेरे तथा भित्तौ पटे वापि विशेषतः १६
चातुर्थेषु च स्थानेषु परार्थं कारयेद्बुधः
आरोहणादिनात्पूर्वे नवमे सप्तमे दिशि १७
सुमुहूर्ते सुलग्ने तु अङ्कुरानर्पयेद्बुधः
प्रासादस्याग्रतः कुर्यान्मण्डपं शांकरे दिशि १८

षोडशं दशहस्तं वा नवहस्ताष्टहस्तकम्
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम्  १९
नवभागैकभागे तु मध्यवेदीं प्रकल्पयेत्
अथवा पञ्चषट्सप्तताले विस्तरकं कुरु  २०
द्वितालेनोच्छ्रयं कुर्याद्दर्पणोदरसन्निभम्
पञ्चचूर्णैरलङ्कृत्य वितानध्वजशोभितम्  २१
दर्भमालासमायुक्तं तोरणैश्च विभूषितम्
अष्टमङ्गलसंयुक्तं दशायुधानि विन्यसेत्  २२
पुण्याहं वाचयेत्तत्र प्रोक्षयेन्मन्त्रवारिणा
षड्द्रोणै पञ्चभिर्द्रोणैर्वेदिमध्ये समर्चयेत्  २३
तदर्थं तण्डुलैर्युक्तं तण्डुलार्द्धतिलैरपि
तन्मध्ये पद्ममालिख्य अष्टपत्रं सकर्णिकम्  २४
पूर्वादीनि चतुर्दिक्षु कारयेदग्निकुण्डकम्
अथवा त्रीणि कुण्डं वा एकाग्निमधवापि वा  २५
मण्डपस्यानुरूपेण अथवा अस्त्रमात्रकम्
त्रिमेखलैरलङ्कृत्य एकमेखलमेव वा  २६
एवमेव क्रमेणैव कारयेन्मण्डपक्रियाम्
अधिवासं तु पूर्वेद्युर्दमनस्य हृदा बुधः  २७
नवपात्रेषु संगृह्य स्वनुगुप्ते निधापयेत्
देशिको मूर्त्तिपश्चैव स्नानं कुर्यास्सशिकान्  २८
पञ्चाङ्गभूषणै भूष्य दिव्यगन्धानुलेपनम्
स्थापयेद्वेदिकामध्ये शिवकुम्भं च वर्धनि  २९
अभितः कलशानष्टौ वारिपूर्णान् सहैमकान्
चतुर्दश्यादि षष्ठ्यन्तं पञ्चदश्यादिके परम्  ३०
प्रतिपद्यादिचाष्टम्यामेवमेवाधिवासयेत्
प्रत्येकं वस्त्रमावेष्ट्य अर्चयेद्गन्धपुष्पकैः  ३१
दमनं च पृथक्शोध्य प्रोक्षयेत्तु कुशाम्भसा
पञ्चधा विभजेत्पुष्पं प्रत्येकं पात्रकं न्यसेत्  ३२
पञ्चब्रह्मषडङ्गैश्च गन्धपुष्पादिभिर्यजेत्

शिवकुम्भस्य परितः स्थापयेद्धृदयेन तु ३३
समिधाज्यचरूलाजान्सर्षपाश्च यवातिलान्
पञ्चब्रह्मशिवाङ्गैश्च दशाक्षरेण मन्त्रतः ३४
कूर्मेण जुहुयाद्विद्वान् प्रत्येकं पञ्चविंशति
कुण्डं प्रति विशेषेण कुर्याद्वै देशिकज्ञया ३५
द्रव्यान्ते व्याहृतीं हुत्वा प्रासादेन स्पृशे बुधः
++++++++++++++ वरुळिकेन तु ३६
कुण्डं प्रति विधानेना कुर्याद्वा शंकरेऽपि वा
एवमेव विधानेन कारयेद्देशिकोत्तमः ३७
स्पर्शयेद्दमनान्पात्रान् चतुर्दश्यादिकनपि
इन्द्रईशानयोर्मध्ये कारकुम्भं तु विन्यसेत् ३८
रतिकुम्भं तु तत्पार्श्वे प्रत्येकं वस्त्रवेष्टितम्
गन्धपुष्पादिभिः पूज्या स्वनाम हृदयेन तु ३९
सर्वालङ्कारसंयुक्तं सर्वतोद्यसमन्वितम्
गन्धदामनकं दद्यात् देवदेवस्य मूर्द्धनि ४०
सर्वेषां सकलादीनां स्वनामैश्चैव पूजयेत्
भक्तानां परिचाराणां यथा लाफेन दापयेत् ४१
हविर्निवेदयेत्पश्चात्प्रासादेन तु मन्त्रतः
एवं रात्रौ प्रकुर्यात्तु प्रभाते स्नानमाचरेत् ४२
सकलीकरणं कृत्वा देशिकस्य विशेषतः
पावमानेन संप्रोक्ष्य महाव्योमेन मन्त्रतः ४३
शङ्खदुंदुभिनिर्घोषैर्गीतवाद्यैरवैर्युतम्
कामकुम्भं ततोद्धृत्य रतिकुम्भं विशेषतः ४४
ग्रामप्रदक्षिणं कृत्वा द्वारपार्श्वे तु विन्यसेत्
नन्दिं चैव महाकालमभिषेकं क्रमेण तु ४५
गन्धपुष्पादिभिः पूज्य स्वनामसहितेन तु
पश्चाद्गर्भान्तिकं गत्वा निर्माल्यं तु विसर्जयेत् ४६
शिवकुम्भादिकान्कुम्भान् लिङ्गाग्रे स्थापयेद्बुधः
गन्धपुष्पादिभिः पूज्य पावमाने प्रोक्षयेत् ४७

महाव्योमेन मन्त्रेण अभिषेकं क्रमेण तु
शुद्धस्नानं प्रकुर्यात्तु प्रासादेन तु मन्त्रतः  ४८
दामनकान् ततोद्धृत्य प्रासा + प्रदक्षिणम्
कृत्वा चैव विशेषेण द्विपात्रं तु पृथन् न्यसेत्  ४९
महाव्योमेन मन्त्रेण देवदेव ++ र्धनि
निक्षिपे पिण्डिकायां च परं चैव विशेषतः  ५०
गौरिगायत्रिमन्त्रेण गन्धपुष्पादिभिर्यजेत्
शेषाशं सकलादीनां स्वनामैश्चैव पूजयेत्  ५१
भक्तानां परिवाराणां यदा लाभेन दापयेत्
हविर्न्निवेदयेत्पश्चाच्छिवभक्ताश्च भोजयेत्  ५२
देशिकं पूजयेत्पश्चात्मूर्तिपान्पूजयेत्ततः
आत्मार्थं पूजये काले भागं तु पूर्ववत्कुरु  ५३
एकांश भास्करस्योक्तं विघ्नेशस्य ततः परम्
तृतीयांशं शिवस्योक्तं पिण्डिकायाश्चतुर्थकम्  ५४
शेषांशं पञ्चभागं तु सम्यक्कुर्याद्विचणम्
एकांशं च गुरोर्दद्यात् दपपरं चार्चकस्य तु  ५५
अग्ने तृतीयकं दद्यात् भक्तानं तु चतुर्थकम्
पञ्चाशं पैतृकादीनामेवमेव क्रमाद्ददेत्  ५६
आत्मार्थे चैव होमं तु परार्थे शक्तितो भवेत्
विप्रक्षत्रियवैश्यनामात्मार्थे स्थापनोक्तवत्  ५७
अथवा एकहोमं चा यथावित्तानुसारतः
त्रिरात्रं च द्विरात्रं च अथवा एकरात्रकम्  ५८
दिवसं द्विसार्थं च मध्यान्नात्प्राक्समारभेत्
प्रथमारम्भदिवसे अधिवासनमुच्यते  ५९
अवरोहणं कालस्तु तिथिकालं तु लक्षयेत्
तिथिप्रधानमारोहे ह्यवरोहे न दोषभाक्  ६०
नवपात्रेषु निक्षिप्य पञ्चगव्येन प्रोक्षयेत्
महाव्योमेन मन्त्रेण शिवाम्भासा तु प्रोक्षयेत्  ६१
नित्यं सन्ध्यावसाते तु महाव्योमेन मन्त्रतः

दमानारोहणं कुर्याद्यथा शेषतः ६२
निर्माल्यं न भवेत्तत्र इति शास्त्रस्य निश्चयः
मन्त्रे विसर्जनीयं चेत् निर्माल्यं तत्र निश्चयः ६३
एवं हि चिरकाले तु कौर्याद्वै स्थापरे बुधः
आत्मार्थमेकरात्रं तु कुर्याद्वै सर्जयेद्बुधः ६४
अघोरास्त्रेण मन्त्रेण संख्याते वर्जयेद्बुधः
चण्डेश्वरस्य दातव्यं चण्डमन्त्रमनुस्मरन् ६५
स्नपनं कारयेद्धीमान् प्रासादेन तु मन्त्रतः
पञ्चगव्याभिषेकं तु शुद्धस्नाने कारयेत् ६६
अर्चयेद्गन्धपुष्पाद्यैः महाव्योमेन मन्त्रतः
यवादीनाविसर्ज्याथात वदग्निं ++ रेत् ६७
महाव्योमेन मन्त्रेण अष्टोत्तरशताहुतिः
घृतेन चरुणा चैव होमं कुर्याद्दिनं प्रति ६८
अवरोहणकाले तु पूर्णाहुति शिवेन तु
प्रभूतं च हविर्दद्याद्देवदेवस्य बुद्धिमान् ६९
सकलानि तथान्येषां प्रभातं तु हविर्ददेत्
भक्तानां परिवाराणां यथाविभवमार्गतः ७०
आचार्यपूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
भित्तिचित्रैः पटे वापि दर्पणे परिलिङ्गकम् ७१
हस्तमात्रप्रमाणेन मूलधामानुरूपतः
कारयेत्तु विशेषेण कुर्यादमनकं बुधः ७२
क्रियापरिसमाप्तौ तु दर्पणं दर्शयेच्छिवे
एवं विधिप्रकारेण कुर्याद्वै चित्रके बुधः ७३
स्थण्डिले मण्डले कुर्यात् द्यन्त्र मार्गेण देशिकम्
अग्नौ दमनकं कृत्वा जले तत्र विनिक्षिपेत् ७४
सूर्यमण्डलव्योमेन ददेद् दमनकं सुधीः
आत्मार्थे च परार्थे च एवमेवं हि कारयेत् ७५
अनुक्तं यदि कुर्याच्चेत् कर्तृनाशं न संशयः
तस्मात्सर्वप्रयत्नेन उक्तमार्गेण कारयेत् ७६

आत्मार्थविषये काले भक्तिमार्गेण वा कुरु
मासं पक्षं तिथिं कुम्भं भागञ्चैवासमासतः ७७
न होमकाले भेदस्यादात्मार्थे हीनजातिषु
अन्यसर्वसमानं स्य ब्रह्मक्षत्र्यविशां क्रमात् ७८
अन्ते महोत्सवं कुर्यात्परार्थे तु विशेषतः
अनुक्तं यद्भवेत्किंचित्पवित्रवत्समाचरेत् ७९
दमं च पवित्रं च पुक्रणं च तथोत्सवम्
शिवकुम्भं तथा शान्तिघृतस्नानं तु कम्बलम् ८०
चिरकालकृतं च मत्समानं तेषु सर्वतः
अर्चको देशिकश्चैव ब्रह्मचारित्वमाचरेत् ८१
अक्षरालवणा शिस्याद्यावत्कालं व्रतं चरेत्
ग्रामान्तरं न गन्तव्यं गन्तव्यं दिशि न स्वपेत् ८२
अन्यस्मिन् सर्वकाले तु गतागतं तु दोषभाक्
अङ्कुरानर्पयेत्पूर्वं व्रतस्थं देशिकोत्तमः ८३
आत्मार्थविषये काले अर्चकस्य गुरुस्तथा
एवमेव क्रमेणैव कुर्यादारम्भके बुतिधः ८४
प्रमदादृतहीनस्सो होमं चान्नार्च कुर्यादिति
महाव्योति मन्त्रेण दशसाहश्रकं जपेत् ८५
दशाक्षरेण वा कुर्यात्प्रासादेनथवा पुनः
एवमेव प्रकारेण कुर्यादारम्भके विभेः ८६
अन्यथा यदि कुर्याच्चेत् राजाराष्ट्रविनाशनम्
आत्मार्थेभ्यर्च्य कर्मश्च विनाशं भवनिश्चयः ८७
दमनारोपणं प्रोक्तं शैवाचारं शृणुष्वथ ८८
इति सूक्ष्मशास्त्रे दमनारोपणं नाम चतुस्त्रिंशत्पटलः

अतः परं प्रवक्ष्यामि पार्वतीलक्षणं परम्
सर्वलोकहितार्थाय सर्वोपद्रविनाशनम् १
अङ्गनानां हितार्थाय सर्वमङ्गलहेतवे
मूललिङ्गस्य शोभार्थं लीलार्थं वा विशेषतः २

शयनाङ्गाना यथा मस्तु मूलधामस्य शाङ्करे
पावके नैर्ऋते चैव वेसरं कल्पयेद्बुधः ३
अन्तर्मण्डलबाह्ये तु अन्तर्हारा सुपार्श्वके
मध्यमस्य तु हाराया मन्तो बाह्यं न कारयेत् ४
प्रासादमण्डपं वापि गोपुराकारमेव हि
मालिकाकारमेवं स्याद्ब्राह्मणादि क्रमेण तु ५
सर्वेषामेव जातीनां द्राविडं धाममुच्यते
प्रकारभित्तिबाह्ये वाभ्यन्तरे वा विशेषतः ६
मूलप्रासादबाह्ये तु प्रासादाभ्यन्तरेऽथवा
सूत्रबन्धौ तु कर्तव्यं ++ शत्रुनाशनम् ७
प्राकारचलनं नेष्टं इष्टं चेत्सर्वदोषदम्
यजमानाय तद्दोषं सर्वधा तु न कारयेत् ८
इषुहस्तप्रमाणेन प्रासादादीन् प्रकल्पयेत्
नवहस्तात्समारभ्य विंशद्धस्तं तमेव च ९
ब्राह्मणादिक्रमेणैव वर्द्धयेत्तु त्रयं त्रयम्
पञ्चहस्तात्समारभ्य पञ्चदशकरान्तकम् १०
अन्तराणां तु जातीनां उक्तमेन्द्रकनियसम्
त्रिहस्तं तु समारभ्य रुद्रहस्तान्तमेव च ११
सर्वेषां जातियुक्तश्चेन्मानं चैव प्रकीर्तितम्
विस्ताराद्विगुणोत्सेधं पादो न तु तदर्थकम् १२
अग्रतो मण्डपं कुर्यात्प्रासादार्थप्रमाणतः
प्रासादपरितः कुर्यात्समिपे तथैव च १३
सालकर्म न कर्तव्यं न समीपे बुधो नरः
अग्रमण्डपबाह्ये तु नृत्तमण्डपमुच्यते १४
तस्याग्रे बलिपीठं तु पञ्चाङ्गसहितं ततः
शिल्पशास्त्रोक्तमार्गेण पीठं कुर्यात्सलक्षणम् १५
वीरे सम्यक्समाख्यातं योगे क्रमेण कल्पयेत्
स्वयमुद्भूतलिङ्गस्य दैविकार्षयकोरपि १६
असुरस्य तु बाणस्य प्रासादाः शेनधामकम्

पौरुषस्य तु लिङ्गस्य धामं गर्तेन कारयेत् १७
प्रासादस्य समं तारं पादोनं वार्धमेव वा
पादं वापि प्रकर्तव्यमुत्सेधं पूर्ववद्भवेत् १८
एवमेव विधानेन कुर्याद्देवालयं बुधः
पौरुषस्य तु लिङ्गस्य धामङ्गतेन कारयेत् १९
प्रासादस्य समं तारं आलयं दक्षिणे दिशि
स्वयमुद्भूतलिङ्गस्य आलयञ्चाष्टदिक्ष्वपि २०
कारयेत्तु विशेषेण कुर्यादि सहितं बुधः
सौवर्णाद्यैर्विशेषेण कारयेच्छयनाङ्गनाम् २१
तेषामभावे शुद्धेन नाश्मना दारुणाथवा
तेषामभावे भित्तौ तु निद्राशक्तिं च कारयेत् २२
पटे वा फलकायां वा पार्वति कारयेद्बुधः
तस्मात्सर्वप्रयत्नेन शयनार्थं मनोन्मनि २३
कारयेत्सूत्रलिङ्गस्य मानं मानाङ्गुलेन तु
पञ्चाशद्द्व्यङ्गुलेनैव कारयेदुत्तमं बुधः २४
तस्मात्पञ्चाङ्गुलं हीना नवप्रत्येकदानकम्
एकत्रिंशाङ्गुलारभ्य अश्वन्यङ्गुल हीनकम् २५
प्रत्येकं नवमानं स्याद्दशपञ्चान्तकं क्रमात्
मात्राङ्गुलेन वा कुर्याद्यजमानाङ्गुलेन वा २६
एवमङ्गुलमानेन नवमानां दशाधिकम्
मूललिङ्गसमं दैर्घ्यमुत्तमं मानमिष्यते २७
तदर्थं कन्यसं प्रोक्तं तयोर्मध्येष्टभाजिते
प्रत्येकं नवमानं स्यादुत्तमादि त्रयत्रयम् २८
यस्यालिङ्गस्य चायामं नवांशं भजेयेत्समम्
प्रत्येकं नवमानं स्यात्पूजांशं सदृशं कुरु २९
उत्तमाननमेवं स्यात्पूजाशार्थं हि कन्यसम्
तयोर्मध्येऽष्टभागे तु प्रत्येकं नवमानकम् ३०
पीठोत्सेधं समं दीर्घं द्विगुणत्रिगुणं तु वा
उत्तमं मध्यमं चैव अधमञ्चेति कथ्यते ३१

पीठविस्तारमानं तु पञ्चांशं भाजयेत्ततः
एकाशाधिकमानेन उत्तमं दीर्घमुच्यते ३२
पञ्चांशकन्यसं विद्यात्तयोर्मध्येऽष्टभाजिते
प्रत्येकं नर्ममानस्यात्कर्णमानं तथैव च ३३
एवं पौरुषलिङ्गस्य आयामं देवि तुंगकम्
लिङ्गमानादिभिर्मानैर्मानैः कुर्यात्तु तां प्रति ३४
प्रासादस्य तु विस्तारं नवाशं भाजयेत्ततः
उत्तमं मध्यमं चैव अधमं तु त्रिधा पुनः ३५
प्रासादस्य तु विस्तारं सप्तभागैर्विभाजयेत्
पञ्चांशमुत्तमं विद्यात्त्रियंशं कन्यसं भवेत् ३६
श्रेष्ठं कन्यसयोर्मध्ये उत्तमं भाजयेत्समम्
प्रत्येकं नवमानं स्याद्द्वारस्तम्भो विशेषतः ३७
यस्य गर्भगृहं तारं नावाशं भाजयेत्समम्
अकैक तुङ्गमानं स्यान्नवधा भेदमुच्यते ३८
गर्भार्द्धं कन्यसं विद्यात्पञ्चांशं तुर्यधांशकम्
उत्तमं मानमाख्यातं तयोर्मध्येऽष्ट भाजिते ३९
तानि प्रत्येकमानस्यात्कर्णमानं तथैव च
स्वायम्भुवादिलिङ्गानां पूजांशं द्विगुणोच्छ्रयम् ४०
पूजांशं त्रिशमाधिक्यं उत्तमं मानमुच्यते
मध्यमं द्विगुणं दैर्घ्यं तत्समं दैर्घ्यमुच्यते ४१
मध्यमं चोत्तमं चैव अधमं चेति कथ्यते
पूजांशं नवधा भज्य एकैकं मानमुच्यते ४२
यस्य लिङ्गस्य पूजांशं दशांशं भजयेत्समम्
तस्मात्त्रियंशमाधित्यमुत्तमोत्तममुच्यते ४३
मध्यमं द्वादशांशं तु तस्मादेकांशहीनकम्
अधमं मानमेवोक्तं क्षुद्रलिङ्गस्य चोच्यते ४४
यस्य लिङ्गस्य चायामे षोडशांशं विभाजिते
तेषु मुख्या नवांशस्याच्छेषांशं कन्यसत्रयम् ४५
लिङ्गस्य परिणाहं स्यात्समं स्याद्देवि तुङ्गकम्

द्विगुणं मध्यमं चैव त्रिगुणं चोत्तमं स्मृतम्  ४६
अंशं तु विभजेत्तेषु पूर्ववत्कारयेत्क्रमाद्बुधः
विष्कम्भं त्रिगुणं तुङ्गं द्विगुणं तत्समं तु वा  ४७
उत्तमं मध्यमं चैव अधमं च त्रिधा भवेत्
लिङ्गस्य कर्णमानेन पूर्ववत्प्रारभेत्सुधीः  ४८
पौरुषस्य तु लिङ्गस्य सूत्रमानेन कारयेत्
आयव्यय क्षवाराष्टौ योन्यंशकशुभं नयेत्  ४९
यजमानानुकूलेन नक्षत्रेण समन्वितम्
सशक्त्यैस्सर्वसंपत्यै राजाराष्ट्राभिवर्धये  ५०
तस्मात्सर्वप्रयत्नेन आयादिसहितं कुरु
निश्चित्य पार्वतितुङ्गं मानां शूलेन भाजयेत्  ५१
वसनंदगुनैर्विद्धि कुर्यात्मानाङ्गुलाद्बुधः
भानुनाडि हृदे सम्यक्शेषमायादिकं भवेत्  ५२
पीठं पीठप्रविस्तारं पूर्ववत्कारयेत्सुधीः
अष्टाभिवृद्धिते तच्च सप्तविंशतिभूषिते  ५३
शेषं नक्षत्रमेवं स्याल्लोकसन्तानकारणे
नवभिर्वृद्धितं चैव सप्तभिर्भाजयेद्बुधः  ५४
शेषं वारमिति प्रोक्तं नक्षत्रं च चतुर्गुणम्
नवभिस्तु हृदे तत्र शेषमंशकमादिशेत्  ५५
सूर्यभौमार्किकाकृष्टशेषा वै शोभना स्मृता
आयाधिक्यं शुभं विद्याद् व्ययाधिक्यमशोभनम्  ५६
धूमश्वान खरौ काकनग्राह्यच्छभमिच्छताम्
एवं प्रकारमार्गेण पीठोत्सेधं तु दक्षिणे  ५७
पीठक्ष शक्तिरक्षं तु परस्परशुभं भवेत्
प्रतीकूलं न कर्तव्यमनुकूलाच्छुशुभं भवेत्  ५८
एमवेम प्रकारेण प्रतिमारम्भकालके
लक्षयेत्षट्शुभं सम्यग्यथा तत्र न कारयेत्  ५९
रक्षगणं च महेन्द्रं योनिस्त्रिराक्षमेव तु
वेधं रज्जुं च राशीं च वश्यं राश्याधिपं तथा  ६०

तेषां शुभाशुभं विद्याद्बिम्बक्षेण परिक्षयेत्
यजमानस्य रक्षेण शुभाशुभं परिक्षयेत् ६१
शुभाधिक्या व्ययाहीनं सा शक्तिः सर्वसंपदा
शुभहीनं व्ययाधिक्यं सा गौरि सर्वदोषदा ६२
एवमेव प्रकारेण कारयेद्देशिकोत्तमः
अन्यथा कारयेद्बिम्बं राजा राष्ट्रं विनश्यति ६३
देवतार्चनसान्निध्यं तस्मात्तान्लक्षयेत्सदा
इदमन्यप्रकारेण विशेषं चोच्यते मया ६४
पार्वत्युत्सवमानं तु एकत्रिंशति भाजयेत्
तानि भागानि संगण्य द्वादशेन तु दण्डयेत् ६५
अष्टभिर्जायते शेषमायं तत्र विधीयते
षोडशैर्गुणितं कृत्वा तानि भागानि पूर्ववत् ६६
आधिक्ये तुङ्गमानं स्याच्छुभं तत्र विधीयते
प्राप्तोत्सेधस्य मानं तु एकोनत्रिंशदङ्गुलम् ६७
कृत्वासम्यग्विशेषेण गणये दशवायुना
तानि सर्वाणि संहृत्य सप्तभिः शेषकं व्ययम् ६८
नवभिर्गुणितं तानि षड्भिस्सम्यक् हृदे पुनः
शेषो व्यय इति ख्यातो व्यय हीनं शुभं भवेत् ६९
प्रकृतस्सप्तविंशद्भिर्गुणितं वा विशेषतः
तानि भागानि गणयेद्वारेण मतिमान्नरः ७०
सप्तविंशतिभिर्भूत्वा शेषं नक्षत्रमादिशेत्
गणयेद्दशभिस्तानि सप्तविंशतिभिर्हृदे ७१
शेषनक्षत्रकं विद्यात्पूर्वलक्षणलक्षयेत्
उत्सेधं भूमिभिर्गण्यं तानि चाष्टानि वर्धयेत् ७२
मुनिभिर्भाजयेच्छेषं वारं तत्र विधीयते
मानि तानि च सङ्गण्य द्वादशेन विशेषतः ७३
सप्तभिर्भाजयेच्छेषं सूर्यादेर्वारमुच्यते
आवर्त्तोसेत्थमानं तु तुर्भिगुणयेत्क्रमात् ७४
अष्टाभिर्हासकं कुर्यात् शेषं योनिरिति स्मृतम्

आस्तोत्सेधस्य भागानि गुणेन गुणितं यथा ७५
अष्टभिर्भाजयेच्छेषं योनिरत्र विधीयते
पूर्वोक्तविधिमार्गेण शुभाशुभं हि लक्षयेत् ७६
एवमेव प्रकारेण कारयेद्देशिकोत्तमः
आयाधिक्ये व्ययाहीने मानं तत्समपात्पदम् ७७
आयं हीनं व्ययं मुख्यं मानं तत्सर्वदोषदम्
तस्मात्सर्वप्रयत्नेन आयाधिख्येन योजयेत् ७८
तेषां नक्षत्रकं मुख्यं सर्वहितावहम्
नक्षत्राधिपति चन्द्रः तस्मात्प्राधान्यकं शुभम् ७९
अंशवारौ तथैव स्याद्देवतामयतत्फलम्
एवं बहुप्रकारेण कारयेद्देशिकोत्तमः ८०
येन मानेन निर्माणं तेन मानेन कारयेत्
प्रधामारम्भकाले तु शुभाशुभं विचारयेत् ८१
यस्य संस्थापितं गर्भं तस्यमेवं तु कारयेत्
गृहितोत्सेथमानं तु पञ्चांशं भाजयेत्ततः ८२
एकांशं पीठककोत्सेधं चतुर्भागैकभागिकम्
त्रियंशे कांशमुत्सेधं षडिधं पीठिकोच्छ्रयम् ८३
उत्सेधं त्रिगुणोन्तारं द्विगुणं तरमेव वा
चतुर्गुण नवा कुर्यात्पञ्चाङ्गं सहितं पुनः ८४
मङ्गलाप्रतिमारम्भे शुभाशुभानि लक्षयेत्
तेन रूपेण मार्गेण न्यस्त्वा सङ्ग्राह्ययेद्बुधः ८५
तरूपं लोपयेत्तत्र मनोशुद्धि मा विच्छरेत्
सुमुहूर्ते सुलग्ने तु प्रतिमारम्भयेत्सुधीः ८६
मन्त्रेण स्थापितं गर्भं ब्रह्मसूत्रसमन्वितम्
येन द्रव्येण निर्माणं तेन द्रव्येण कारयेत् ८७
लोहादिभिः कृतं बिम्बं लक्षणेन विना कृतम्
स्तत्बिम्बस्थापयेन्मोहात्पूजानाशमवाप्नुयात् ८८
प्रतिष्ठार्चन कर्तव्यं स्थानन्तरनिवेशयेत्
स्थानान्तरविधानेन क्षेपयेत्प्रतिमं बुधः ८९

प्रतिष्ठां तत्र कर्तव्यं भक्त्या तत्रैव पूजयेत्
देवानां तु कृता लोहं साङ्गोपाङ्गं विशेषतः ९०
किञ्चिल्लक्षणसंयुक्तं त्वमेवस्थापयेद्बुधः
द्रव्यनामं न कुर्यात्तु द्रव्यनामं न लेपयेत् ९१
तस्मात्सर्व्प्रयत्नेन लब्दादौ तु प्रकल्पयेत्
एवं वै दानवादीनां च्छत्रादीनां तथैव च ९२
लोपक्रिया च कर्तव्यं कर्तव्यं चेन्महद्भयम्
लोके तु कलहं रूपं संभ्रान्तं सकृतं यदि ९३
तेन कारणमार्गेण रूपं सर्वत्र हानि च
लोके मानुषरूपं स्यात् रत्याम्या यदि बन्धवाः ९४
किमिदं देवरूपं तु ह्रासकार्यं न सर्वधा
पुराणान्निजबिम्बं च पुनः सन्धानमाचरेत् ९५
ब्रह्मकायादि नक्त्यानि कारयेद्विधिना बुधः
शिलारूपं न कर्तव्यं कर्तव्यं दोषदं भवेत् ९६
एवं परीक्ष्य विधिना कारयेद्देशिकोत्तमः
मध्यमं दशतालेन निन्द्रारूपं हि कारयेत् ९७
उष्णीषमङ्गुलं प्रोक्तं त्र्यङ्गुलं शिर उच्यते
त्रयोदशाङ्गुलं वक्त्रं अर्द्धाङ्गुलगलस्मृतम् ९८
तस्मात्त्र्यङ्गुलार्द्धं तु हि काकमेढ्रन्तमेव च
मुखद्वयमिति प्रोक्तं ऊरुमानमुखद्वयम् ९९
द्विकोलजानुमानं तु जङ्घा द्विमुखमुच्यते
भागं पादतलं प्रोक्तं पूर्वोक्तेन तु विस्तरम् १००
उष्णीषात् भ्रूध्वये मध्ये नास्योष्णीष हनुमध्यमे
अङ्गुले नाभिवामे तु गुल्पवामे द्वयङ्गुलम् १०१
नेत्रान्तं तु तथैवं स्यात्पञ्चमायात्रितिभृवा
तन्मध्ये द्विविधं प्रोक्तमग्रमर्द्धयवं स्मृतम् १०२
यवद्वयमयं चास्यात् उत्तराधरचर्मणा
यवं किनीनिकायामं विस्तारं च तथैव च १०३
येन यामत्रिभागं स्यान्मध्यमं कृष्णमण्डलम्

कर्णयोर्मध्यमे पृष्ठे द्वादशाङ्गुलविस्मृताम् १०४
तुण्डाग्राच्छिखिपाल्यन्तं चतुर्यवं च पाकृतिः
केशान्तं चर्भपश्चान्तं द्व्यङ्गुलं द्व्यवाधिकम् १०५
दृष्टियूनं समानं स्यात्तथैव मुनिनामकम्
कृष्णानि पक्ष्मरोमाणि प्राहुन्नवति सङ्ख्यया १०६
धनुरुत्पलमत्स्याभं लोचनादूरमुच्यते
द्व्यवं तु भ्रुवोर्मध्ये पदमे मुनिपुङ्गवा १०७
गोजिमूलादिनासाग्रं भागषड्यवमुच्यते
त्रियङ्गुलं तु विस्तारं भ्रुबोच्छ्रायोर्यवद्व्यम् १०८
पदपञ्चपटोज्ञेया षड्यवं पुष्करोच्छ्रयम्
एवमेवोच्छ्रयं कुर्याद्विस्तारस्य तथैव च १०९
पुनयोरुच्छयोर्मात्रिषड्यवं स्यात्स उच्यते
तिलप्रसूनमानं स्यादर्द्धैकद्व्यहत्रिकम् ११०
यवलम्बं तु नासाग्रं क्रमेण परिकल्पयेत्
आधारान्तं पुटं सूत्रं यवोपेतद्विमात्रकम् १११
चतुर्मात्रयेवोपेतामस्यायामं प्रवक्ष्यते
विस्तारं चोत्तरोष्ठस्याः यवतृतीयमिष्यते ११२
पालिका यवामे स्यात्त्रिवक्त्रं तथैव इष्यते
यवार्धं गोजिनिम्नं स्यादुत्सेधं तु चतुर्यवम् ११३
यवद्व्यं तदर्धं वा गोजिमूलस्य विस्तरा
विस्तारमधरोष्टस्या विद्युमात्रयवाधिकम् ११४
प्रवातस्य तु विस्तारं यवसप्तकमिष्यते
अर्धाधिकं यवं प्रोक्तमधरस्य तु पालिका ११५
अङ्कुरद्वियवायामं पक्वं बिम्बफलोत्तमम्
हरेस्तस्योन्नतिविद्यात्षडव्यं दर्शना न तु ११६
द्वात्रिंशत् त्रियवं तेषां मुच्छ्रायोगेन ता परम्
अधो दन्तस्तधाष्टांशं हि न मूर्धे तु षोडश ११७
जिह्वा षड्यवविस्तारं तथा यामं गुलोच्छ्रयम्
त्रिमात्रं ह्यनुक्रमं कुर्याद्द्वियवत्रयमुन्नति ११८

यवनिम्नान्तदूर्ध्वं स्यात्त्रिमात्रं निर्गतिर्गति
भव्यसोहनुव्र + स्यादेकमात्रं द्वियंतिति ११९
एकाकारं ततज्ञेयो पूर्णेन्दु सदृशं मुखम्
ऊर्ध्वं पद्मभ्रुवोर्मध्ये यवाधिकयवत्रयम् १२०
कर्णस्य सुषिरं मात्रं विस्तारं तु चतुर्यवम्
द्वियवं कर्णपाल्यं तत्समं कर्णस्य पट्टिका १२१
कर्णपालार्धमात्रं स्यात्कर्णनालं तु मात्रकम्
लकारसदृशं कर्णं पूर्वाचार्येण भाषितम् १२२
अर्धमात्रि कतारोच्चं पिच्छिष्टि चतुरङ्गुलम्
पूर्वौ परौ तु नालौ तु स्वयमेव विलम्बनौ १२३
अङ्गुलेन विलम्बित्वं भवेत्कर्णविलम्बिना
अपाङ्गात्कर्णमूलान्तं सप्तमात्रयवत्रयम् १२४
ललाटस्य तु तारं स्यान्नवमात्रार्धमीरितम्
पूर्वकेशान्तमुष्णीषात्प्रभृत्याष्टाङ्गुलं भवेत् १२५
दन्तादिपार्श्वकेशान्तं त्रयोदश्याङ्गुलं ष्यते
त्रयोदशार्धमेवं स्यात्पृष्ठकेशायवस्मृतः १२६
भ्रुवपृष्ठे चतुर्मात्रं शूर्पाकारं तदिष्यते
कुकुटा कटिसन्धिं स्यात्सप्तविंशतिमात्रकम् १२७
मध्ये पक्षांशमित्याहुयोनिमध्ये यवान्ततः
समराडलस्य विस्तारमुपस्थं तु दशाङ्गुलम् १२८
त्रयोदशार्धमात्रं स्यात्कटिपृष्ठान्तमध्यमम्
नवमात्रार्धविस्तारं चतुरङ्गुलमुद्गमम् १२९
पृष्ठमराडलमध्यस्तं वै मारुतं तदर्धकम्
भ्रुवमूलाग्रविस्तारं रेखात्रयसमन्वितम् १३०
षोडशाङ्गुलविस्तारमुपबाह्याङ्गुलं भवेत्
हिक्का सूत्रादि कक्षान्तं दशमात्रार्धमिष्यते १३१
चतुर्मात्र द्विमात्रं च क्रमादेकार्धमात्रकम्
हिक्कसूत्रोपरि स्कन्धग्रीवमूलाद्भुजो विधि १३२
सप्तविंशतिमात्रं स्यात् हिक्का सूत्रात्प्रभृत्यधा

भुजयामा तथा मात्रं कोर्परस्य त्रिमात्रकम्  १३३
प्रकोष्ठमेकविंशद्भिश्छ तलस्यात्सप्तमात्रकम्
अर्धार्धमर्धमात्रार्धं  मध्यमाङ्गुलमिष्यते  १३४
षट्सूत्रा तर्जनिप्राहुर्यवाधिकमनामिकम्
अर्धाधिक चतुर्मात्रात्कनिष्ठाङ्गुष्ठयोर्विद  १३५
नवमात्रं भवेद्बाहुं ऊरू नागस्य विस्तरम्
विस्तारं बाहुमात्रं स्यात्तथा वै कारयेद्बुधः  १३६
कोर्परस्य तु विस्तारं अष्टमात्रं विदुर्बुधः
प्रकोष्ठस्य तु मूलं स्यादर्धमात्रं यवाधिकम्  १३७
तन्मध्ये मध्यविस्तारं षड्यवं पञ्चषडङ्गुलम्
विस्तारे मणिबन्धस्य चतुर्मात्रं तु षड्यवम्  १३८
तस्य नाहस्य विस्तारं त्रिगुणं पञ्चभागिकम्
अध्यर्धमाधिकं कृत्वा परिणाहं विदुर्बुधः  १३९
तलं तस्य तु विस्तारं अग्रमध्यर्धसन्निभम्
अनामिकाग्रसंविद्यात्कनिष्ठामूलविस्तरम्  १४०
अग्रं तस्याष्टभागेन अङ्गुष्ठादिकपर्वत
अग्रपर्वार्धमायामं विस्तारं नवमिष्यते  १४१
तलमूलाग्रमध्यानि त्रिमात्रं तु द्विमात्रकम्
तलरेखातयोगेन मध्ये वै पद्मशङ्खकम्  १४२
उक्तं वक्ष्यं तरं द्वाभ्यामर्धविंशतिमात्रकम्
स्थनं हिक्कान्तरं सार्धत्रयोदशाङ्गुलन्निभम्  १४३
स्तनं तदा द्वियवाभ्यां द्विसप्ताङ्गुलमिष्यते
स्तनमण्डलविस्तारं नवमात्रं प्रकीर्तितम्  १४४
तदर्धं  तु स्तनोत्सेधं सुवृत्तं रमणीयकम्
चूचुकं द्वियवर्धोच्चं व्यालं कोलकमण्डलम्  १४५
मध्योदरविशालं स्यादेकादश्याङ्गुलं तथा
पञ्चार्धद्वियवै सार्धं  निम्नभागै प्रकीर्तितम्  १४६
नाभिः प्रदक्षिणावृत्यो तिर्यग्रेखसमन्वितम्
श्रोणिप्रदेशविपुलं सप्तदश्याङ्गुलं भवेत्  १४७

कटिप्रदेशविस्तारं विंशमात्रमिति स्मृतम्
योनिमूलस्य विस्तारं पञ्चाङ्गुलमिति स्मृतम् १४८
अश्वत्थपत्रसदृशमनुपूर्वात्कृशं तथा
स्थानक्षप्रभृतैः पृष्ठं कक्षात्पञ्चदशाङ्गुलम् १४९
कुक्षिमध्यस्य विस्तारं महा सप्तदशाङ्गुलम्
अष्टादशाहमात्रं स्यात् श्रोणिदेशस्य विस्तरम् १५०
एकविंशतिमात्रं स्याद् ऊरुमध्यस्य विस्तरम्
दशमात्रार्धमात्र स्याज्ञानुमध्ययवाधिकम् १५१
जङ्घमूलस्य विस्तारं दशमात्रं तु विस्तरम्
नवमाकं भवेदग्रमात्रं त्रियवाधिकम् १५२
नालकं तु चतुर्मात्रं षड्यवाधिकमिष्यते
पार्ष्णीविस्तारकोत्सेधमुदयं तत्समं विदुः १५३
गुल्फाणां विस्तरौ ज्ञेयौ सप्त पञ्च यवा क्रमात्
अनुक्तं यद्भवेत्किञ्चित् शिल्पिशास्त्रोक्तमार्गतः १५४
लोहेन कल्पयेद्देविं शैललिङ्गस्य बुद्धिमान्
लोहशैलं न कर्तव्यं लोहे लोहसमं तथा १५५
दारुवादिषु लिङ्गेषु सौवर्णादिनि योजयेत्
मिणमये भित्तिचित्रे तु सौवर्णाद्यैश्च कारयेत् १५६
द्विबाहुकद्विनेत्रा च श्यामाभां कमलेक्षणाः
दणिणेनोत्पलं हस्तं वामहस्तं प्रलम्बितम् १५७
सर्वालङ्कारसंयुक्तां सर्वाभरणभूषिताम्
उत्तमं चतुरङ्गुल्यं दीर्घमष्टाङ्गुलं भवेत् १५८
सुस्तनां चारुवदनां पादौ नूपुरसंयुताम्
पद्मासनस्थितां देवीं बालचन्द्रप्रभूषिताम् १५९
किञ्चित्त्रिभङ्गिकां सम्यगुक्षारूढमथापि वा
एवमेव विधानेन कारयेच्छयनाम्बिकाम् १६०
उमा च चण्डिका मौक्तितन्मानेन मुखद्वयम्
पञ्चमानसमायुक्तं कारयेत्पार्वति शुभाम् १६१
द्व्यङ्गुलं द्वियवं चैव हीनाधिक्यं तु दोषदम्

अधिकं चैव हीनं च वर्जयेत्तु प्रयत्नतः १६२
मूलबेरप्रमाणेन उमाचै कारयेद्यदि
आयादि षट्शुभं सम्यक्कुर्याद्देविममानखे १६३
अन्येषामपि मनानामायादीन्लक्षयेत्सदा
अदूषाद्यस्तु लिङ्गादे लिङ्गानां सर्वलक्षणम् १६४
अनश्चकरणार्धेतोस्तेषामानक्रियांस्तिचेत्
तेषामारब्धकाले तु नक्षत्रादीनि लक्षयेत् १६५
पौषारम्मकाले तु षट्शुभं तु परिक्षयेत्
एवमेव विधानेन सर्वमानेष्ठकल्पयेत् १६६
ऐन्द्रे तु पार्वति स्थाप्य सर्वसम्पत्करं नृणाम्
आग्नेयाँ पुत्रदं कुर्याद्याम्यसौभाग्यसिद्धिदम् १६७
निनृतौ जयकं कुर्याद्वारुणं शत्रुनाशनम्
वायव्यां धनदं कुर्यात्सोमे सूनुविवर्धनम् १६८
ऐशान्यां धनवृद्ध्यर्थं प्रत्येकं फलमुच्यते
पश्चिमद्वारहर्म्ये तु आग्नेय्यां वा सशङ्करे १६९
अथवा वायवे चैव स्थापयेच्छयनाङ्गताम्
प्राक्द्वारस्य तु लिङ्गस्य तस्य दक्षिणभागिके १७०
शयनाङ्गना प्रकल्पैव आरुषे चाष्टदिक्षु च
मूलप्रासादवद्वारमथवा चोत्तराननम् १७१
शक्त्यालयस्य मूलस्य अन्तरे भवनेऽपि च
देवतास्थापनं चैव इषश्चेत्सूनुनालयम् १७२
मूललिङ्गप्रमाणेन पुष्यद्रं कारयेद्रमाम्
प्रासादस्य प्रमाणेन प्रजावृध्यर्थकारणम् १७३
गर्भगृहप्रमाणेन आयुष्यं तु बलार्थकम्
मूलबिम्बप्रमाणेन नारिणामभिवृद्धयेत् १७४
मूलसूत्रप्रमाणेन गोगजादिविवर्धनम्
मात्राङ्गुलविधानेन नृपराष्ट्राभिवृद्धयेत् १७५
एवं परीक्ष्य विधिना कारयेदुत्तमं बुधः
एवमुक्तप्रकारेण अन्येषामपि कारयेत् १७६

एनद्रव्येण आरम्भं नेत्रद्रव्येण कारयेत्
परिसमाप्तौ वस्ये ततस्य सम्यक्क्रतेन तु १७७
एवं प्रकारं कर्तव्यं लोहादिषु विशेषतः
शिलादिषु यथेष्टं स्यादङ्गलेपं न कारयेत् १७८
शिल्पकर्मवसाने तु देशिकस्थापतिस्सहा
शुभौ प संलक्ष्य पश्चाद्बिम्बपश्चात्प्रतिष्ठयेत् १७९
एवमेव प्रकारेण कारयेद्देशिकोत्तमः
एवं विधप्रकारेण बहुमार्गेण कारयेत् १८०
इति सूक्ष्मशास्त्रे देव्यालक्षणं नाम सप्तत्रिंशत्पटलः

अतः परं प्रवक्ष्यामि अभिषेकार्चनं परम्
धर्मार्थं काममोक्षार्थं शान्तिकं पौष्टिकं तथा १
आयुः श्रीमृत्युविजयं व्याधिनाशं रिपुक्षयम्
ग्रामवृद्धिकरं प्रोक्तं सर्वोपहति नश्यति २
अङ्कुरार्पणपूर्वं तु सप्ताहं चैव पञ्चधा
त्रियहं भौवनं प्रोक्तं आदिशैव प्रशस्यते ३
रोहिण्यानि च सुयुक्तं पुष्ये वैष्णवमुच्यते
आदित्यहस्तमित्युक्तमष्टम्यं तु चतुर्दशि ४
दर्शयी पौर्णमास्यायां मासान्तेन विशेषतः
नवाहमुत्तमं प्रोक्तं सप्ताहं मध्यमं भवेत् ५
पञ्चाहं शान्तिकं प्रोक्तं त्रियाहं तु शिवप्रियम्
एकाहं रोगनाशार्थमेवं ज्ञात्वा तु बुद्धिमान् ६
पूर्वरात्रौ तु कर्तव्यं निर्वाणं दीपमाचरेत्
क्षीराभिषेकं कृत्वा तु तस्मात्कौतुकबन्धनम् ७
पयप्रस्थं तु नैवेद्यं पायसं तु प्रशस्यते
प्रातः स्नात्वा शुचिर्भूत्वा देशिकं शिष्यमेव च ८
गोमयालेपनं कृत्वा पुण्याहं प्रोक्षणं तथा
जलभाण्डवर्धनीकुम्भान् कलशं पुष्पपात्रकम् ९
पाद्याचमनपात्रं च अभिषेकघटानपि

पाटालिसदृशाकारं सर्वलक्षणसंयुतम् १०
सर्वपात्रं ततः कृत्वा क्षालयेदस्त्रमन्त्रतः
दर्भासनोपरि स्थित्वा कवचेनावकुण्ठयेत् ११
निरिक्ष हृदयेनैव प्रोक्षयेत्पुरुषेण तु
ताडनं हुंफट् डतेन स्पट्नं सद्यमन्त्रकैः १२
उन्मिलनं नेत्रमन्त्रे मण्डपस्योत्तरस्थितम्
वस्त्रपूतेन तोयेन जलभाण्डेषु सङ्ग्रहेत् १३
उदयादेव कर्तव्यं रात्रान्तेन जलं ग्रहेत्
एलालवुङ्गकर्पूरं गन्धं पुष्पं जलं ग्रहेत् १४
पञ्चाङ्गभूषणोपेतो देशिको मूर्तिपैस्सह
अङ्गन्यासकरन्यासान्तर्यागं समाचरेत् १५
प्राणप्रकृष्टे योगेन ज्ञात्वा सर्वं समाचरेत्
कुम्भाश्च वर्धनीं चैव तन्तुना वेषयेत्ततः १६
यन्त्रयो यद्रमन्त्रेण तत्तन्मन्त्रेण देशिकः
रत्नजं हस्तिमांस च रोमनाडि च तन्तुना १७
स्नपनं पञ्चगव्येन पञ्चामृतं तु स्थापयेत्
स्नपनमण्डपे मध्ये शालिभिस्तण्डिलं कुरु १८
प्राक्सूत्रं वसुसूत्रं स्यादुदक्सूत्रं तथैव च
सूत्रात्सूत्रान्तरं तालं मध्ये नवपदं गृहेत् १९
अभितस्तस्य बाह्ये तु पादमेकं परित्यजेत्
वसुद्वारसमायुक्तं त्यजेद्गोमयवारिणा २०
द्विभारं चैकभारं वा शालिभिस्तण्डिलं कुरु
शाल्यार्थतण्डुलं प्रोक्तं तस्यार्धं तु तिलं तथा २१
युगद्रोणशालभिर्वा तिलतण्डुलशालिभिः
सूत्रतारे तु कर्तव्यं दर्भे पुष्पैः परिस्तरेत् २२
नवाष्टभूतवेदाग्नि शक्तिदर्भैः प्रशस्यते
पूर्वाग्रं चोत्तराग्रं च पदं प्रति पदं प्रति २३
मध्यमे शिवकुम्भं तु विधिमध्ये तु वर्द्धनी
पाद्यमाचमनं चार्घ्यं कस्तुरिगन्धतैलकम् २४

निवारं कुङ्कुमं चैव तिलमाजि मुरं तथा
प्रथमावरणे चैव कलशं चाष्टदिक्षु च २५
द्वितीयावरणे चैव घटान्षोडश कल्पयेत्
मधुकां क्ष्मांगुलं चैव उशिरं चन्दनं तथा २६
तक्कोलं सर्वगन्धं च जातिचम्पकमेव च
कल्हारशतपत्रं च मालतिद्रोणमेव च २७
लाजं च त्रिफलं चैव नालिकेरं तथैव च
कदलि पनसं चैव वैरवं सर्षपं तथा २८
गोरचन्दनबिल्वं च पञ्चविंशति संख्यया
ब्रह्माविष्णुहरं चैव हृषिकेशस्तथैव च २९
सूर्यसोममहासेनशर्वरद्रो ज्वरेश्वरः
प्रधमावरणे चैव देवपाणिस्थलं न्यसेत् ३०
द्वितीयवर्णदेवस्य कृत्वा देवं पितामहम्
इन्द्रादिलोकपालंश्च सोमाङ्गारबृहस्पति ३१
पीठलं मनुजश्चैव ब्रह्माविष्णुरिषिस्तथा
वसिष्ठं काश्यपश्चैव मुनिभिष्षोडशो भवेत् ३२
सप्तपाणितले न्यस्य स्नपनं कल्पयेद्बुधः
दर्भैरेकादशैश्चैव देशिके हस्तकूर्चकम् ३३
अ्र वेदाङ्गुलं चैव ग्रन्धि व्योमाङ्गुलं भवेत्
वर्धनीं च नव ग्रन्धिं विस्तारं तालमात्रकैः ३४
भूताग्रद्वादशाङ्गुल्यां सर्वैश्च कलशेर++
पुष्पगन्धै समभ्यर्च्य स्वस्वमन्त्राभिधानकम् ३५
प्रत्येकं नववस्त्रेण स्नपनं कारयेत्ततः
तस्य पश्चिमदिग्भागे पञ्चगव्यं तु विन्यसेत् ३६
स्थरिडलं शालिभिः कुर्यान्नवकोष्ठानि विन्यसेत्
त्रिपादि पञ्चकोष्ठानि मध्ये पूर्वेध दक्षिणे ३७
वामपश्चिमके चैव परिस्तरणपूर्वकम्
लाजपुष्पतिलैश्चैव रन्ध्रसूत्रेषु योजयेत् ३८
कलशं क्षालयित्वा तु त्रिपाद्यूर्ध्वे विशेषतः

क्षरं तु मध्यमस्थाप्य गोमूत्रं पूर्वदेशके ३९
गोमयं दक्षिणस्थाप्य पश्चिमे दधिरुच्यते
उत्तरे तु घृतं स्थाप्य वनौ च मधुसंस्थितम् ४०
नैर्ऋते फलसारं च वायव्ये गुलसारकम्
ऐशान्ये नालिकेरं च नवद्रव्यं विधीयते ४१
क्षिरं तत्प्रस्थमित्युक्तं गोमूत्रं कुडुपद्वयम्
गोमयं कुडुपं चैव दधिवै कुडुपत्रयम् ४२
आज्यं गुडुममित्युक्तं द्विप्रस्तं गुडुपत्रयम्
गुडुपं तु मधुश्चैव फलोदकुडुपद्वयम् ४३
गुलसारं ततः प्रस्थं चतुर्थनालिकेरकम्
नवद्रव्येण सङ्ख्याय मधिदेवं ततः शृणु ४४
अगस्त्यं च पुलस्त्यं च विश्वमित्रं च काश्यपम्
भार्गवं तु मरञ्चैव भारद्वाजेन मुद्गलः ४५
ऋषिब्रह्मपदश्चैव कलशं पाणिसंस्थितम्
पुष्पकूर्चं समभ्यर्च्य स्वस्व मन्त्रेण देशिकः ४६
धूपदीपादिभिः कृत्वा लिङ्गं सुरभिमुद्रया
तत्तन्मन्त्रेण संपूज्य दशमुद्रां प्रदर्शयेत् ४७
प्रधानकलशं मध्ये सर्वत्र स्थापयेद्बुधः
सापिधानं च सर्वत्र अस्त्रमन्त्रेण बुद्धिमान् ४८
द्वार अस्त्रा बुना प्रोक्ष्य द्वारपालान् प्रपूजयेत्
गर्भगेहं प्रविशित्वा देशिकश्चोत्तराननः ४९
प्राणप्रकृतियोगेन ज्ञात्वा कर्मसमाचरेत्
संपूज्ये मूललिङ्गं तु लिङ्गशुद्धि शिवास्त्रकैः ५०
तुलसिबिल्वपत्रैश्च लिङ्गं पीठं च घर्षयेत्
पिष्टामलकहारिद्रं प्रत्येकं लेपयेद्बुधः ५१
स्नापयेन्मूलमन्त्रेण प्राणयोगं समाचरेत्
अष्टत्रिंशत्कलान्यासं मकुटादि क्रमान्यसेत् ५२
सदाशिवं तु लिङ्गस्थं कुम्भस्थं तु महेश्वरम्
प्राकृतं भावमुत्सृज्य एकचित्तेन पूजयेत् ५३

स्नपनं पञ्चगव्येन अर्चनोक्तं समर्चयेत्
मूलब्रह्मषडङ्गैश्च गन्धतोयैः प्रपूजयेत् ५४
चन्द्रात्माशेव जलं सर्वपूजार्हकं विदुः
वेदाध्यायनं विप्राणामर्धमण्डपमध्यमे ५५
चवकं नवकं चैव पुरुषसूक्तं तथैव च
विप्रादीनां चतुर्वेदि महाशैवास्सदीक्षिता ५६
अदितो भक्तिहीनोऽपि मन्त्रहीनो न संस्पृशेत्
लिङ्गायामपि तत्तुल्यमाचार्यास्तु समाचरेत् ५७
वेदाध्ययनसंयुक्तो गन्धवारिं प्रपूजयेत्
गव्यं पञ्चामृतं चैव व्योमव्यापिं समुच्चरेत् ५८
दशाक्षरेण मन्त्रेण पूजयेत्तु महेश्वरम्
लम्बकूर्चसमायुक्तं मूलब्रह्मषडङ्गकैः ५९
कर्पूरागरुसंयुक्तं गन्धतोयेन पूरितम्
अष्टपुष्पं तिसृगन्धिं सप्तसङ्ख्या निवेदयेत् ६०
नृत्तगीतसमायुक्तं स्तोत्रमङ्गलवाचकैः
कलशै पञ्चविंशत्या अभिषेकं च कारयेत् ६१
नानावस्त्रेरलङ्कृत्या नानागन्ध समन्वितम्
नानापुष्पेरलङ्कृत्य अर्चनोक्तं समर्चयेत् ६२
मुद्गान्नं पायसान्नं च गुलान्नं कृसरान्नकम्
शुद्धान्नं चैव इत्येते पञ्चान्नं तु प्रशस्यते ६३
नैवेद्यं दापयेच्छंभो पुनराचमनीयकम्
ताम्बूलं दर्पणं छत्रं मुखवासं च दर्शयेत् ६४
मन्त्रपुन्दतै द्विप्रैर्वेदघोषेण कारयेत्
शैवाग्निं च प्रवक्ष्यामि अग्निकार्योक्तमार्गतः ६५
ब्रह्मवृक्षसमद्भिस्तु समिधाज्यचरूहुनेत्
होमद्रव्याणि सर्वाणि सद्योजातेन होमयेत् ६६
जयादिस्विष्टकृत्यन्त्रं पूर्णाहुति समाचरेत्
सर्वरोगनिवृत्यर्थं सर्वकामफलप्रदम् ६७
आचार्यपूजयित्वा तु दैवज्ञं पूजयेद्बुधः

एवं यः पूजयेद्धीमान् सर्वकामफलं भवेत् ६८
इति सूक्ष्मशास्त्रे महाभिषेकविधिं नाम अष्टत्रिंशत्पटलः

वक्ष्ये तु प्रतिमानं जलसंप्रोक्षणं विधि
शैलेमृद्दारु लोहानां प्रतिमानां विशेषतः १
पटे वा भित्तिचित्रे वा प्रोक्षयेद्देशिकोत्तमः
नित्यार्चनविहीने तु द्विगुणं चान्यसन्धिके २
एकाहमर्चनाहीने स्नपनं तु विधीयते
अ मासे ततः कुर्यात्स्नपनाद्धोमकर्मणि ३
एकमासविहीने तु शान्तिहोमं तु कारयेत्
षाण्मासे च विहीने च स्नपनं च शताष्टकम् ४
वास्तुहोमं ततः कृत्वा स्नपनान्मूर्तिहोमकम्
संवत्सरविहीने च प्रोक्षणं हि समाचरेत् ५
संवत्सराधिके हीने पुनस्थापनमारभेत्
स्थापयित्वा विधानेना पूर्वोक्तेन क्रमेण तु ६
स्नापयेद्देवदेवेशं शताषकलशैः क्रमात्
ब्राह्मणान्भोजयेत्तत्र सहस्राष्टकसंयुतम् ७
नैवेद्यस्नपनं चैव कुर्याद्ब्राह्मण भोजनम्
हीने संवत्सरोर्ध्वे तु दानवस्थानमुच्यते ८
द्व्यब्दे क्ष वासस्तु त्रियब्दे भूतवासकम्
चतुरब्दे पिशाचानां पञ्चब्दे राक्षसाश्रयम् ९
पञ्चवर्षोर्ध्वतो हीने ब्रह्मराक्षसवासकम्
त्रयत्रिंशतिवर्षान्तं तदूर्ध्वे लोहवत्क्रमात् १०
शैलजे शैलवत्कृत्वा मृदा दारु तथैव च
स्थापनादि क्रमेणैव रत्नादि शरक्रियाः ११
पञ्चवर्षोध्व हीने तु जलसंप्रोक्षणं विधिम्
एते द्वादश प्रतिमा जलसंप्रोक्षण विधिम् १२
अधुना संप्रवक्ष्यामि सर्वशान्तिकरं शुभम्
सर्वारिष्टविनाशाय पुत्रपौत्रविवर्द्धनम् १३

राजाराष्ट्रविवन्ते धनधान्यसुखावहम्
उत्तरायणके भानौ माघमासे विवर्जयेत् १४
दक्षिणायनके भानौ वर्जयेत्पूर्वमासकौ
शेषमासं समारभ्य आयुश्रीकीर्तिवर्धनम् १५
शुक्लपक्षे शुभप्रोक्तो कृष्णेवात्युन्तिकं विना
त्रीण्युत्तराणि पुष्यं च ब्राह्मणानां हिताय वै १६
मैत्रादित्यमघास्वाति क्षत्रियं वा विधीयते
रोहिण्यादित्यपौष्णं च वैश्यस्य प्रविधीयते १७
हस्तश्रवणरुद्रं तु शूद्रस्यैव प्रकीर्तिता
तृतीया पञ्चमी चैव सप्तमी दशमी तथा १८
द्वितीय्येकादशि चैव त्रयोदट्प्रतिपत्तथा
राशयश्चरवज्यास्तु उभयं मध्यमी भवेत् १९
स्थितं चोत्तमलग्ने तु अस्थिते कालवर्जयेत्
शुक्लस्सौम्ये गुरोरिन्दुवाराश्रेष्ठविधीयते २०
कुजार्किरविवारं च मध्यमं च प्रवक्ष्यते
शुभग्रहं द्रककाणं विशेषेण दधीयते २१
प्रासादस्याग्रतः कुर्यादैशोन्यं पावके तथा वा
दिग्द्वादशहस्तं वा नवहस्ताष्टहस्तकम् २२
षोडशस्तम्भसंयुक्तं चतुस्तोरणभूषितम्
दशतालाष्टतालेन स्तम्भोत्सेधं विधीयते २३
अश्वत्थोदुम्बरप्लक्षवटशक्रादि क्रमात्
पञ्चहस्तं त्रिहस्तं तु तोरणस्योच्छ्रयं भवेत् २४
उत्सेधार्थं तु विस्तारं त्रिशूलेन समायुतम्
दशाष्टाङ्गुले मानेन त्रिशूलस्यौच्छ्रयं भवेत् २५
मण्डपस्य तु तन्मध्ये नवभागैकभागतः
वेदीं कुर्याद्विशेषेण द्वित्रितालोच्छ्रयं भवेत् २६
पृथग्वेदीसमारभ्यमेकवेदीमथापि च
यथामनोरसं कुर्यादर्पणोदरसन्निभम् २७
वेदिकायास्तु परितः नवपञ्चाग्निमेव च

अथवा एकमेवं तु यथाविभवविस्तरम्  २८
उत्तमादिक्रमेणैव कुण्डं कुर्याद्विधानतः
पृथक्प्राक्कुण्डमारभ्य पृथक् होमसमारभेत्  २९
वृत्तं वा चतुरश्रं वा रत्निमात्रप्रमाणतः
त्रिमेखलैरलङ्कृत्य चतुस्त्रिद्वयङ्गुलयतम्  ३०
नाभियोनिसमायुक्तं विस्तारं तावदेव तु
अश्वत्थपत्रवद्योनीं भूतवेदगुणाङ्गुलम्  ३१
विस्तारं तेन मानेन नालं पक्षाङ्गुलं भवेत्
कुण्डमध्ये गुणाङ्गुल्यं केसरैरष्टदलैर्युतम्  ३२
नवकुण्डविधानं तु इन्द्राद्यैशानमन्तकम्
इन्द्रादीशानयोर्मध्ये वृत्तं प्रधनकं कुरु  ३३
पञ्चकुण्डविधानेन चतुर्दिक्षु प्रकल्पयेत्
चक्रईशानयोर्मध्ये वृत्तं कुण्डं विशेषतः  ३४
गुणाग्नौ तु प्रकर्तव्यं पूर्वं  पश्चिममैशके
नवकुण्डविधानं तु अश्राद्यष्टाश्रमन्तकम्  ३५
पञ्चकुण्डविधानां तु अश्रं दीक्षु विधीयते
गुणकुण्डविधानं तु चतुरश्रं विधीयते  ३६
प्रधानकुण्डे त्वाचार्य सर्वं  वृत्तमथापि वा
एककुण्डविधाने तु शक्रे वा शङ्करेऽपि वा  ३७
पूर्वपश्चिमकुण्डं तु उत्तराभिमुखो हुनेत्
अन्येषु प्राङ्मुखो भूत्वा होमम्कुर्याद्विशेषणः  ३८
एवमग्निं प्रतिष्ठाप्य कुण्डे वा स्थण्डिलेऽपि वा
गोमयालेपनं कृत्वा पञ्चचूर्णैरलङ्कृतम्  ३९
दशायुधसमायुक्तमष्टमं ग संयुतम्
रत्निमात्रसमुत्सेधमयुधानि प्रकल्पयेत्  ४०
षोडशाङ्गुलमानेन उत्सेधं चाष्टमङ्गलम्
उत्सेधस्यार्थविस्तारमथवा चतुरङ्गुलम्  ४१
दर्पणादिनि सर्वाणि तेषां मध्ये विशेषतः
गैरिकेरलिकेद्विद्वान् पत्मकं चक्रलक्षणम्  ४२

प दि त्नि पर्यन्तं कुर्यात्तत्तद्विधानतः
एवं विधिप्रकारेण कारयेद्देशिकोत्तमः ४३
प्रोक्षणाद्दिनपूर्वे तु कारयेदङ्कुरार्पणम्
नवाहे चैव सप्ताहे पञ्चाहे त्रियहेऽपि वा ४४
अङ्कुरार्पणमार्गेण तु कारयेद्देशिकोत्तमः
मण्डपे मध्यमे चैव स्थण्डिलं कारयेत्ततः ४५
वेदाग्निपक्षद्रोणं च तदर्धं तण्डुलं तिलम्
दर्भैः पुष्पैः परिस्तीर्य देवं तथैव विन्यसेत् ४६
पुण्याहं वाचयेत्तत्र स्वस्तिमङ्गलवाचकैः
सर्वालङ्कारसंयुक्तं सर्वतोद्यसमन्वितम् ४७
नानाभक्तजनैः सार्धं कुर्याद्ग्रामप्रदक्षिणम्
ततो जलाशयं प्राप्य जलमध्ये प्रपाङ्कुरु ४८
वितानध्वजसंयुक्तं दर्भमालाभिरावृतम्
वस्त्रेण वेष्टयेद्देवं लम्बकूर्चेन संयुतम् ४९
शाययेद्देवदेवेशं प्राक्च्छिर +++ ध्ववक्त्रकम्
अभित कलशानष्टौ अष्टविद्यैश्वरावृतम् ५०
पूजयेत्तु विशेषेण गन्धपुष्पादिभिः बुधः
एकरात्र द्विरात्रं वा त्रिरात्रं वा जलोषितम् ५१
अध वाद्यप्रकारेण यामं वा दशनाडिकम्
चतुर्दशं तु नाडी वा जलोषितं तु कारयेत् ५२
जलाधिवासनान्तेषु जलतीरे नयेद्बुधः
जलेन स्थापितान्कुभानभिषेकं तु कारयेत् ५३
अर्चयेद्गन्धपुष्पाद्यैः प्रासादेन तु मन्त्रतः
सर्वालङ्कारसंयुक्तं आनीयाद्यायागमण्डपे ५४
मण्डपस्योत्तरे पार्श्वे देवदेवं च स्थापयेत्
पुण्याहं वाचयेत्तत्र पावमा मुदिरयन् ५५
पृथक्कौतुकसंपूज्य पृथक्वस्त्रेण वेष्टयेत्
कौतुकं बन्धयेद्धीमान् पूर्वोक्तविधिना सह ५६
वेदिकोपरिसंशुद्धो अष्टद्रोणेन शालिना

तदर्धैस्तण्डुलश्चैव तदर्धैश्च तिलैरपि ५७
स्थण्डिलं कारयेत्तत्र कुशदर्भै परिस्तरेत्
प्रथयै शयनं कल्प्या अण्डजाद्यैरनुक्रमात् ५८
अण्डजै मुण्डजैश्चैव रोमजैर्मुण्डजैरपि
उपस्थरणसंयुक्तं शयनं पञ्च कल्पयेत् ५९
वामदेवेन मन्त्रेण नृत्तमूर्तिशयेद्बुधः
सकूर्चं वस्त्रसंवेष्ट्य प्राक् च्छिरश्चोर्ध्ववक्त्रकम् ६०
तदूर्ध्वे रक्तवस्त्रेण वेष्टयेद्देशिकोत्तमः
गन्धादिभिः समभ्यर्च्य हृदयेन तु मन्त्रतः ६१
प्रधानकुम्भं तस्यैव शिरोभागं तु विन्यसेत्
तस्यै चोत्तरदिग्भागे वर्धनीं चैव विन्यसेत् ६२
तत्तन्मूर्त्तिसमादाय तत्तत्कुम्भेषु विन्यसेत्
तत्तच्छक्तिसमादाय तत्तद्देवीं समाचरेत् ६३
सकूर्चं सापिधानं च सवस्त्रं हेमरत्नकम्
फलपल्लवसंयुक्तं सर्वगन्धसमायुतम् ६४
कुम्भमध्ये न्यसेद्बीजं तन्तमत्रसमं कुरु
त्रिणेत्रं च चतुर्बाहुं बालेन्दुमकुटोज्वलम् ६५
वरदाभयहस्तं च कृष्णं परशुसंयुतम्
सर्वाभरणसंयुक्तं बद्ध पद्मासनस्थितम् ६६
एवं रूपं स्मरेन्मध्ये शिवमन्त्रमनुस्मरन्
वर्द्धन्यां वर्द्धनी बीजं ध्यात्वा चैव मनोन्मनीम् ६७
द्विभुजां चारुवदनां पिनोद्धतपयोधराम्
सर्वाभरणसंयुक्तां द्वौ हस्तौ पद्मसंयुताम् ६८
एवं मनोन्मनीं देवीं वर्धन्यां विन्यसेद्बुधः
व्यक्ताव्यक्तमहाबाहुं नीलग्रीवमहाद्युतिः ६९
जटामकुटमाणिक्कबालेन्दुकृतभूषणम्
त्रयक्षं चतुर्भुजं चैव व्याघ्रचर्माम्बरप्रभुम् ७०
वरदाभयहस्तं च कृष्णं परशुधारिणम्
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ७१

इन्द्रशङ्कर द्देवमुमासृष्टिश्च कारणम्
दिव्याम्बरधरं देवीं द्विनेत्रा द्विभुजोज्वलाम् ७२
ललाटतिलकोपेतं पिनोन्नतपयोधाराम्
मध्यक्षामविलासां च रक्तोत्फलकरा शुभाम् ७३
सर्वरत्नसमोपेतमकुटेन विभूषिताम्
ग्रीवे मङ्गलसूत्रेण सर्वभूषणभूषिताम् ७४
शकटद्वामपार्श्वे तु देवीं लक्षणसंयुताम्
कुमारं मनोन्मा कुर्यात्सर्वलक्षणसंयुतम् ७५
ईश्वराभिमुखो लिल उमया सह लि+कम्
एकासनसमासीनं द्विभुजा लोचनद्वयम् ७६
बालरूपं तु कर्तव्यं मौसलं प्रियदर्शनम्
कुमारं रमणैर्युक्तं देवसेनापतिं तथा ७७
ध्यात्वा चण्डेश्वरं देवं द्विभुजं शान्तरूपिणम्
टङ्कहस्तसमायुक्तं न्यसेत्कुम्भस्य मध्यमे ७८
कुण्डोदरं बृहत्कायं रक्तमाल्याधरं वरम्
नीलजीमूतसंकाशं दण्डहस्तं त्रिकोचनम् ७९
गजवक्त्रं त्रिणेत्रं तु कारयेद्विघ्ननायकम्
तत्तद् बीजेन मन्त्रेण तत्तद् बीजं सुपूजयेत् ८०
अभितः कलशानं षौ अष्टविद्येश्वरैर्युतम्
द्रोणार्धतोयसंपूर्णान् सहैमान् वस्त्रसंयुतान् ८१
सकूर्चान् सापिधानांश्च फलपल्लवसंयुतान्
तत्तन्म कै बिबै पूजयेत्परमेश्वरम् ८२
नैवेद्यं दापयेत्पश्चात्ताम्बूलं दापयेत्ततः
वेदिबाह्ये तु परितः अष्टमङ्गलिविन्यसेत् ८३
इन्द्रादीशानपर्यन्तं दर्पणादीनि पूजयेत्
दशायुधानि पर्यन्तं स्वे स्वे स्थानेषु विन्यसेत् ८४
पूर्वादीशानपर्यन्तं वज्रादीनान्तमर्चयेत्
पूर्वादि सोमपर्यन्तं तोरणादीनि पूजयेत् ८५
अष्टकुम्भानि संस्थाप्य सवस्त्रं हैमसंयुतम्

नन्दिश्चैव महाकालो दण्डिमुण्डितथैव च  ८६
वैजयन्ति च भृङ्गी च किरीटं चै दीशोपदि
पूर्वादीनां चतुर्दिक्षु द्वारकुम्भेषु विन्यसेत्  ८७
तत्तत् स्वनामन्त्रेण गन्धपुष्पादिनार्चयेत्
पालिकादिनपर्यन्तमलङ्कृत्यं विशेषतः  ८८
स्रुक्स्रुवा कारयेद्धीमान् रत्निमात्रप्रमाणतः
पश्चात् शिवाग्निं संस्थाप्य आदिशैवशिवद्विजः  ८९
अनुशैवस्थिताविप्रः आदिशैवशिवद्विजः
उत्सवं च प्रतिष्ठां च आदीशैवेन कारयेत्  ९०
गर्भादानादिकं सर्वं  पञ्चब्रह्मषडङ्गकैः
नवसंस्कारमाद्येन प्रत्येकं पञ्चविंशतिः  ९१
जुहुयात्तु क्रमेणैव पश्चाद् होमं समाचरेत्
समिधाज्यचरून्लाजान् सर्षपाश्च यवातिलान्  ९२
मुद्गमाषगुलस्तत्र दद्याद्रव्यमिहोच्यते
अश्वत्थोदुम्बरप्लक्षो वटपूर्वादिदिक्षु च  ९३
पलाशं तु प्रधानस्य सर्वेषामि मुच्यते
भूताग्निं वा गुणाग्निं वा पलाशेनैव होमयेत्  ९४
पञ्चब्रह्मषडङ्गैश्च क्रमेणैव तु होमयेत्
अस्त्रमन्त्र विशेषेण पूर्णाहुतिमथाचरेत्  ९५
अष्टोत्तरशतं वापि पञ्चाशत्पञ्चविंशति
प्रत्येकं जुहुयाद्धीमान् दीप्यं तेषु च संस्पृशेत्  ९६
प्रधानहोमं शिवाग्निं कारयेद्देशिकोत्तमः
तस्मात् कुण्डेषु सर्वत्र निक्षिपेद्धृदयेन तु  ९७
पूर्वोक्त मन्त्रैः समिधैः कुर्याद्वै मूर्तिधारकः
सद्यादिपञ्चमूर्तीनां पञ्चकुण्डेषु होमयेत्  ९८
ईशानश्च भवश्चैव शिव सर्वो विदुक्ष च
सद्यादीशानपर्यन्तं पञ्चाग्नौ पञ्चमूर्तयः  ९९
भवश्चैव शिवश्चैव सर्वश्चैव गुणाग्निषु
अधिदेवासमभ्यर्च्य स्वस्व मन्त्रैर्विशेषतः  १००

देशिकास्त्रेण मन्त्रेण सर्वे पूर्णाहुतिं हुनेत्
रात्रावेवं प्रकर्तव्यं मुहूर्ते स्नानमाचरेत्  १०१
आचार्यपूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
पटे वा भित्तिचित्रे वा एकहोमसमाचरेत्  १०२
एकाचार्यसमायुक्तं कारयेद्बुद्धिमान्नरः
बिम्बानां बहुरूपाणां आचार्य बहुरूपकः  १०३
प्रत्येकं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
उत्तमं शतनिष्कं स्यान्मध्यमं तु तदर्थकम्  १०४
पञ्चविंशति निष्कं तु अधमं त्वथिकथ्यते
विंशन्निष्कं समारभ्य दशनिष्कवसानकम्  १०५
मध्यमत्रयमेवोक्तमधमं च तत शृणु
नवनिष्कात्समारभ्य गुणनिष्कवसानकम्  १०६
अधमत्रयमेवोक्तं देशिकस्य तु दक्षिणा
आचार्यादर्धरात्रं तु साधकस्य तु दक्षिणा  १०७
साधकस्यर्धमात्रं तु मूर्तिपानां तु दक्षिणा
तदर्द्धमन्त्रपत्कृणां तस्यार्द्धं परिचारकेत्  १०८
आचार्यो सकलीकृत्य कृत्वा शेषं विशेषतः
ग्रामप्रदक्षिणं कृत्वा कुम्भानि च विशेषतः  १०९
अथवा प्रदक्षिणं धामं सर्वालङ्कारसंयुतम्
स्नानश्वभ्रस्य पूर्वे तु स्थापनक्रमतो न्यसेत्  ११०
गन्धपुष्पादिसंयुक्तं आचार्यो देशिकोत्तमः
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासेन बुद्धिमान्  १११
अभिषेकं ततः कृत्वा शास्त्रदृष्टेन कर्मणा
प्रभूतहविषं दत्वा ताम्बूलं च हदा ददेत्  ११२
ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम्  ११३

इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे सकलप्रोक्षणं नाम
एकोनचत्वारिंशत्पटलः

महाशान्तिमहं वक्ष्ये शृणुध्वं तत्प्रभञ्जन
शिवलोकप्रदं नित्यं शिवप्रीतिकरं शुभम् १
सर्वशत्रुक्षयकरं सर्वपातकनाशनम्
प्रजावृद्धिकरं पुरायं भोगमोक्षप्रदायकम् २
श्रावरो श्रोरानक्षत्रे प्राष्ठे तु पूर्वभाद्रके
श्राश्वने मासि चाश्वर्क्षे कार्त्तिके मास कार्त्तिके ३
श्रार्द्राक्षे श्रार्द्रमासे तु पुष्ये पुष्यप्रशस्यते
माघमासे मघर्क्षे तु फल्गुने मासिचोत्तरे ४
चित्तमासे तु चैत्रेर्क्ष वैशाखे मासि सूर्पभे
मूलर्क्षे ज्येष्ठमासे तु श्राषाढे चोत्तरादके ५
श्रथवा पूर्वपञ्चम्यां मासे मासे व्रतं चरेत्
नद्यब्धिवापि कुले वा नगाग्रे वा महावेने ६
ग्राममध्ये सभास्थाने देवागारसमीपके
भूमि संशोध्य विधिवत्प्रपां कृत्वा तु सुन्दरम् ७
शिवलिङ्गसमीपाद्य सहस्त्रं वा तदर्थकम्
तदर्धं वा शतं वापि तदर्धार्द्धमथापि वा ८
मृत्दारुशैललोहैर्वधातुजै क्षरिकैस्तु वा
रत्नजैश्च विशेषेरा पूजार्थं संप्रकल्पयेत् ९
यवत्रयं समारभ्य यवै केन विवर्द्धनात्
यवाद्विशतसङ्ख्यान्तं मृल्लिङ्गेस्योदयं भवेत् १०

क्षरिकलिङ्गम्

एकाङ्गुलसमारभ्य श्रर्द्धार्द्धं गुल्विवर्द्धनात्
चतुर्विं शाङ्गुलं यावद्दारुलिङ्गप्रकल्पयेत् ११
यथालाभप्रमारोन रत्नलिङ्गं प्रकीर्तितम्
माषत्रयं समारभ्य माषैकेन विवर्द्धनात् १२
यावदष्टसहस्रान्तं शैललिङ्गोदयं भवेत्
कल्पयेत्क्षरिकं लिङ्गं यथाकामं प्रमाराकम् १३
मृन्दारुशैललोहानां विशेषं किञ्चिदस्ति हि
लिङ्गयामे तु वेदांशे एकाङ्गं लिङ्गविस्तृतम् १४

अथवा गुणभागैकं पञ्चांशे द्व्यंशविस्तृतम्
लिङ्गयामे गुणांशेंशं तन्मूले चतुरश्रकम्  १५
अर्चभागमिदं वृद्धि शेषं सुवृत्तरूपं वा सर्वं  सुवृत्तमेव वा
सूत्रोपेतविहीनं वा छत्रकारशिरोन्वितम्  १६
एवं लक्षणसंयुक्तं प्रत्येकं लिङ्गमाहरेत्
एकलिङ्गेऽथवा कुर्यात्सर्वलिङ्गविशेषतः  १७
लिङ्गयामत्रधा कृत्वा व्योमांश भूगतं भवेत्
एकांशं पीठबन्धं स्यादेकांशमर्चनार्हकम्  १८
अथवा पञ्चभागे तु द्व्यंशं पीठे निवेशयेत्
पूजाभागं त्रिभागं स्यात्सप्तभागे त्रिकोलकम्  १९
अर्चभागमिदं वृद्धिशेषं पिण्डप्रवेशनम्
पूजांशोदयतुङ्गं तु पञ्चविंशतिभाजिते  २०
एकैकं विभजेद्धीमान् चत्वारि शतसङ्ख्यकम्
सहस्रलिङ्गमेवं हि अयुतस्य विधि शृणु  २१
लिङ्गोदये तु पञ्चाशद्भागं कृत्वा विचक्षण
चत्वारिंशेंशपञ्चांशं कृत्वा लिङ्गयुतं भवेत्  २२
पूजांशोदयं तुङ्गं तु दशभागविभाजिते
एकपञ्चादशेन लिङ्गपञ्चशतं भवेत्  २३
शिवोदयेत्तु वेदांशे त्वेकनक्षत्रभावये
अष्टोत्तरशतं लिङ्गं परितः संप्रकल्पयेत्  २४
शिवोदये तु पूजांशे त्वेके पञ्चविभाजिते
पञ्चविंशतिलिङ्गस्यात्पञ्चाशद्विभजे सति  २५
लिङ्गद्विजशतपञ्चांशं लिङ्गस्य परिकल्पितः
अल्पलिङ्गस्य ताराधं  पादं वाष्टांशमेव वा  २६
महालिङ्गस्य विस्तारं दूर्ध्वे संयोज्य पार्श्वयो
तन्मानमल्पलिङ्गस्य महालिङ्गाद्विनिर्गतः  २७
लिङ्गोपरि भवेल्लिङ्गं न कर्तव्यं कदाचन
अन्तराल भवेल्लिङ्गं मध्यसङ्कल्पयेत्क्रमात्  २८
शिरोवर्त्तनयुक्तं वा हीनं वा कल्पयेद्बुधः

महालिङ्गशिरोमानं मध सङ्कल्पयेत्क्रमात्  २९
रत्नलिङ्गशिरोमानमध सङ्कल्पयेत्क्रमात्
लिङ्गानामपि सर्वेषां सूत्रहीनं प्रकल्पयेत्  ३०
नन्द्यावर्तशिलापीठं शिवलिङ्गं विधानवत्
एवं लक्षणसंयुक्तं लिङ्गं सङ्ग्राहयेद्बुधः  ३१
एवं संस्थाप्य पूर्वेद्युर्नवमे सप्तमेऽपि वा
निश्चित्य दिवसात्पूर्वसायान्नसमयेद्बुधः  ३२
स्नानं कृत्वा विधानेन यजमानसमन्वितम्
प्रपामण्डपमाविश्य भूतशुद्धिं समाचरेत्  ३३
सकलीकरणं कृत्वा प्रदक्षिणमथाचरेत्
लिङ्गसङ्ख्यजपेन्मूलं यजमानसमन्वितम्  ३४
जपान्ते प्राङ्मुखो भूत्वा क्षीरं भुक्त्वा जितेन्द्रियः
मण्डपस्योत्तरे पार्श्वे शाययेत्सैकतोपरि  ३५
ब्राह्मि मुहूर्ते उद्धाया पादप्रक्षालनं कुरु
मुखं शुद्धिं ततः कृत्वा श्राचम्ये देशिकोत्तमः  ३६
भस्मना तिलकं दत्वा मूलमन्त्रजपेत्ततः
यजमानसमोपेतो स्नानं कृत्वा यथाविधिः  ३७
सन्ध्यादिवन्दनं कृत्वा नित्यकर्म समाप्य च
प्रपामण्डपमाविश्य सकलीकृतविग्रहः  ३८
मण्डपं पूजयेद्विद्वान् मण्डपे कल्पयेत्तु वा
चतुर्द्वारसमभ्यर्च्य पूर्वेण विधिना सह  ३९
पूजयेदथ रक्षार्थमस्त्रराजं सशक्तिकम्
प्रपामण्डपमध्ये वा पश्चिमे वापि चक्षण  ४०
विन्यसेत्तु महा ++ मन्तैर्दारुमयैस्तु वा
उपर्यस्तरणं कल्प्य शुद्धवस्त्रादिकैर्यथा  ४१
शिवासनं च तस्योर्द्ध्वे लिङ्गसङ्ख्या प्रकल्पयेत्
पुण्याहं वाचयेत्तत्र पञ्चगव्यमृतं तथा  ४२
सङ्कल्पलिङ्गात्सङ्गृह्य स्नानवेद्युपरिन्यसेत्
प्रक्षाल्य चास्त्रमन्त्रेण पञ्चगव्यमृतादिकैः  ४३

लिङ्गमन्त्रेण संस्नाप्य स्थापयेच्च शिवासने
तत्तन्मन्त्रेण चाभ्यर्च्य गन्धपुष्पं सुधूपकम् ४४
दीपं नैवेद्यताम्बूलं दापयेत्तदनन्तरम्
नीलोत्पलैर्वा कल्हारै पत्रैर्वा श्वेतपङ्कजैः ४५
अर्कैरारग्वधैर्वाथ चम्पकैर्वा विचक्षणः
रत्नैर्वा कनकैर्वाथ कल्पुरशकलेन वा ४६
अथवा बिल्वपत्रेण पूजयेल्लिङ्गमन्त्रतः
पूजार्थमाहृतं पुष्पं सङ्गृह्य शुद्धपात्रके ४७
निरीक्षणादिभिः शोद्ध्य धूपदीपं प्रदापयेत्
यजमानमधाभूय संप्रोक्ष्याध्यजलेन च ४८
भस्मना तिलकं कल्प्य शिवमन्त्रेण देशिकः
शिवहस्तं च सङ्कल्प्य यजमानस्य मूर्द्धनी ४९
त संस्थाप्य जले पद्ममूलमष्टोत्तरं शतम्
पूजार्थमाहुतं पुष्पं शङ्खध्वनिसमन्वितम् ५०
यजमानकरे दद्यादर्चयित्वा विचक्षणः
अङ्गं प्रतिददेत्पुष्पं तत्तन्मात्र समुच्चरन् ५१
एकलिङ्गविशेषोऽस्ति परितो पीठबाह्यके
त्रिहस्तं वा तदर्धं वा स्थलमानं व्यपोह्य च ५२
पूजांशोदयमानं तत्तन्मानं व्याप्यमण्डलम्
तद्बाह्ये वेदिकामानं सप्ततालसमुन्नतम् ५३
उत्सेधसमविस्तारतदर्द्धार्द्धमथापि वा
त्रिमेखलयुतं वापि द्विमेखलयुतं तु वा ५४
चतुरश्रं सुवृत्तं वा परितः कल्पयेत्क्रमात्
सुधायासिकतैस्तत्र पूरये शुद्धवारिणा ५५
तद्वारिमण्डले दृष्ट्वा लिङ्गं सहस्रकं बुधः
पूर्ववत्पूजयेद्विद्वान् लिङ्गस्य परितः क्रमात् ५६
अग्रादि मूलपर्यन्तं भक्तिमुक्तिप्रदायकम्
मूलादि चाग्रपर्यन्तं पूजामुक्तिफलप्रदम् ५७
लिङ्गं च वरणं यत्तत्क्रमेण वारिमण्डले

यजमानेन चाभ्यर्च्य पूर्ववद्देशिकोत्तमः ५८
लिङ्गं प्रत्याढकार्द्धेन नैवेद्यं परिकल्पयेत्
धूपदीपं ततो दत्वा लिङ्गवरणमार्गतः ५९
नृत्तान्तां पूजयेद्विद्वान् लिङ्गस्य वरणं प्रति
गीतनृत्तादिकं सर्वं लिङ्गस्य परितः क्रमात् ६०
संकल्प्य लिङ्गपूजान्ते शिवमन्त्रं शतं जपेत्
इष्टबन्धुजने सार्थं यजमानसमन्वितम् ६१
तद्वारिमण्डले स्नात्वा यद्देवदेवमन्त्रतः
अनेन विधिमार्गेण स्नात्वा तद्वारिमण्डले ६२
सोऽपि पापैर्विनिर्मुक्तः शिवसायुज्यमाप्नुयात्
महाशान्तिव्रत दृष्ट्वा नत्वा लिङ्गसहस्रकम् ६३
यः कुर्वच्छिवलोकेऽपि शिवेन सह मोदते
आचार्यपूजयेत्तत्र गोभूमिकाञ्चनादिकैः ६४
अस्य व्रतोपकाराणां नववस्त्रं प्रदापयेत्
महाशान्तिव्रतं प्रोक्तं गौरि व्रतमथ शृणु ६५
इति सूक्ष्मशास्त्रे क्रियापादे महाशान्तिव्रतं नाम एकचत्वारिंशत्पटलः

मत्स्यलीलविधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन
प्रणिनां भोगमेवं स्याद्भवतीनां सुखं भवेत् १
मिनादिकन्यपर्यन्तं मस्यलीला प्रशस्यते
एवं त्रिविधमाख्यातं उत्तमायथ मध्यमे २
समुद्रे वापि नद्यां वा तटाके कूपकोऽपि वा
अब्धिश्रेयान् समस्य स्यानदिमध्यं च मध्यमे ३
तटाके वापि मस्यं च अधमं तु प्रकीर्तितम्
अभिषेककृतं बेरं उत्तमन्तु प्रशस्यते ४
पौराणयायतनं बेरं मध्यमं तु प्रकीर्तितम्
सद्यनिष्कृतिबेरं तु अधमं चोच्यते मया ५
उत्तमं बेरमेवं तु समुद्रादर्शनं मतम्
मध्यमबेरमेवं तु नद्यादीन्दर्शनं मतम् ६

अधमे बेरमेवं स्यात्तटाकं वापिमेव च
शतकोशविधिर्यावदुत्तमे दर्शनं मतम् ७
पञ्चाशत्कोशमेवं तु मध्यमे दर्शनं मतम्
द्वादशं कोशमेवं तु अधमे दर्शनं मतम् ८
एवं कृतयुगं प्रोक्तमन्यत्सर्वप्रयत्नतः
देवदांशविहीनं स्यात्क्रमेण परिकल्पयेत् ९
अन्य सदिनमेव स्यान्मध्यमं त्रिदिनं भवेत्
शसुख्य चोत्तमञ्चैव दिन सङ्ख्यक्रमेण तु १०
ग्रामादि स्थानसंयुक्तं एतत्सर्वं समाचरेत्
तल्लिला द्विगुणविधं प्रोक्तं वा सायनं च कथ्यते ११
यानञ्चेदालयं कार्यनयेदास्थानमण्डपे
सर्वालङ्कारसंयुक्ते मण्डपं प्रति भूषयेत् १२
सुवारे सुदिने चैव रात्रौ पूजावसानके
देवदेव जगन्नाथ जगदार्त्तिविनामुना १३
देवं न नु गृहीतोस्त्रि इति विज्ञापनं क्रमात्
स्वर्णादि सूत्रसंगृह्य रक्षाबन्धं पुरोक्तवत् १४
अपरेद्युर्दिवाकाले नयेदास्थानमण्डपे
प्रातस्सन्ध्यावसाने तु सुरिबृन्दैश्च सेवितम् १५
राजोपचारैस्सर्वैश्च तोषयेत्परमेश्वरम्
मद्ध्यान्ने पूजये नान्ते तु सर्वालङ्कारसंयुतम् १६
सर्ववाद्यैरलङ्कृत्य सर्वघोषैरलङ्कृतम्
मत्स्यस्थानं समुद्दिश्य यानं पूर्ववदाचरेत् १७
तत्काले तु विशेषेण भूपतिर्देशिकैः सह
कर्पूररजनी चूर्णं रागवल्लिदलैरपि १८
निकरै सर्ववर्णैश्च तत्र स्थाने प्रविश्य च
उत्तरे पश्चिमे वापि पूर्वो वा दक्षिणेऽपि वा १९
तत्र स्थाने प्रपां कृत्वा वितानाद्यैरलङ्कृतम्
देवं मध्ये तु विन्यस्य तदग्रे मत्स्यपूजनम् २०
ओदनादीनि विन्यस्य ओदनस्येति पूजयेत्

तराडुलैः तिललाजैश्च मत्स्यं सम्यक्समर्चयेत् २१
मलिकाय महामत्स्यो दीपरूपोहहोदरे
एवं मन्त्रसमुच्चार्य मत्स्यानं भोजनं नयेत् २२
मत्स्यलीला समालोक्य सयान्नपूर्वमाचरेत्
तदन्ते यानकार्ये तु लिम्लागनं च गाधकम् २३
विनोदवाद्यसंयु पूर्वस्थाने प्रवेशयेत्
स्नपनं शान्तिहोमं च स्नापयेत्परमेश्वरम् २४
तदन्ते सायरक्षा तु पूर्वादर्चनं प्रति
पूर्ववन्नित्यपूजां च विशेषोत्पूजदन्तके २५
तदन्ते स्नपनं कृत्वा रक्षाबन्धं विसृ च
आलयस्य समीपं चेध्यानमेवं विधीयते २५
एवं यानं समाख्यातं वासं चैव ततः शृणु
रात्रौ पूजावसाने तु कर्त देशिकसंयुतम् २६
महेशाग्रे तु कर्तव्यं प्रार्थयित्वा विचक्षणः
एकमूर्त्ति स्वरूपं तु पञ्चधा परिकल्पयेत् २७
लोकरक्षार्थमेवं हि श्रूयतां तत्प्रभञ्जन
अम्बिकासहितो देवो जगदुत्पत्तिकारणात् २८
मत्स्यलीलसमुद्दिश्य गम्यतामिति शंकरा
एवं प्रार्त्थ तु तत्काले भगवानुज्ञय सहा २९
पूर्ववत्प्रतिसरं बद्ध्वा वाहनं प्रति सन्नयेत्
ततः प्रभाते कर्तव्यं सर्वालङ्कारशोभितम् ३०
सर्ववाद्यैरलङ्कृत्य जयघोषसमन्वितम्
राजोपचारसहितं यानं बन्धः शनैःशनैः ३१
कर्पूररजनीलाजं विकिरेत्समलङ्कृतम्
मनोरम्येऽन्यदेशेव भक्ष्यादीनि निवेदयेत् ३२
ताम्बूलानि विचित्राणि दापयेच्छिवसन्निधौ
दिनं प्रति विशेषेण स्नपनं शान्तिहोमकम् ३३
नित्यपूजाविधानेन नित्यमेवं समाचरेत्
उद्दिश्य स्थानदेशे तु प्रपां कृत्वा सलक्षणम् ३४

मध्ये वेदिकया युक्ता ऊर्ध्वे सिंहासनं नयेत्
महेशं तत्र विन्यस्य लीलागानमथ शृणु ३५
वसन्तलीलां कृत्वा तु या सूरि बृन्दैश्च सेवितम्
मत्स्यभोजनमग्रे तु तण्डुलं दि पृथक्पृथक् ३६
ॐ दनस्योति मन्त्रेण ओदनादीनि विन्यसेत्
मत्स्यलीला समालोक्य मत्स्यानां भोजनं क्षिपेत् ३७
एवं प्रतिदिनं कुर्यान्निश्चित्य दिवसान्तकम्
नित्यपूजाविहीनं चेत्प्रायश्चित्तं तथा चरेत् ३८
अज्ञातहोमतो वापि प्रायश्चित्तविहीनकम्
प्रायश्चित्तविहीनं चेद्राजाराष्ट्रस्य दोषकृत् ३९
तस्मात्सर्वप्रयत्नेन नित्यपूजां समाचरेत्
लीलावसाने कर्तव्यं विमुखं यानमुच्यते ४०
राजा सत्कारमार्गेण पूर्वस्थाने निवेशयेत्
स्नपनं शान्तिहोमं च प्रभूतहविषं ददेत् ४१
राजा च राजापत्नि च देशिकेन सहैव तु
मेलां मन्त्रसमुच्चार्या पुष्पमूर्द्ध्नि निदापयेत् ४२
मनसा चिन्त्य यत्कार्यं प्रार्थयित्वापि विचक्षणः
एवमेव प्रकारेण मत्स्यलीला समाचरेत् ४३
मत्स्यलीलाविधिं प्रोक्तं मौत्तिकग्रहणं शृणु
इति सूक्ष्मशास्त्रे मत्स्यलीलाविधिं नाम पञ्चत्वारिंशत्पटलः

अथातः संप्रवक्ष्यामि गौरीणामर्चनं तथा
गौरि चैव मनोन्मन्या भवानि त्रिविधं भवेत् १
श्याम द्विनेत्रां द्विभुजां त्रिभङ्गि सव्यापसव्यस्थिति कुञ्चिताङ्घ्रि
सव्योत्पला सत्कटकास्तनो च हस्तावलम्बा परमेश्वरिं स्यात् २
शम्भुशक्ति समभङ्गमुच्यते द्विनेत्रप्रकृतिं च सुस्थितम्
लम्बमेककर दक्षिणोत्पलं या भमनुसारवक्त्रकम् ३
कल्याणदायि भवतोस्तु पिनाकपाणि पाणिग्रहे भुजकङ्कणभाषिताङ्गम्
सभान्तदृष्टिसहसैव ++ नयत्यद्धोक्त सुमुखमम्बिकायाम् ४

द्विनेत्र द्विभुजाः श्यामा गौरि दक्षकरोत्पल
करएडमकुटोपेता सर्वलक्षणसंयुता ५
गौरिलक्षणमेवोक्तं मनोन्मन्या स्वरूपकम् ।
श्यामभव वेदकरवन्निनयनं स्यात्पद्मवराभय जपाक्षवलयोक्तकम् ।
पीतवरसाञ्चितजटामकुटयुक्तं रक्तकमलासनमनोन्मनिस्वरूपम् ६
इन्दुनिभवेदकरवह्निनयनं स्यात्पङ्कजपताकवरदोत्पलचतुष्कम् ।
अङ्गहिमभूषणविचित्रवदनं स्यात्तुङ्गकुटोज्वलमनोन्मनिस्वरूपम् ७
अभयवरदहस्तं चाक्षमालाब्जकं स्यापरकर्णि तु देव्यमामक्रमेण ।
जटधरशशिसर्पं चाकधूर्धूरचूडा सकल ++ पि कृतं स्यात्
श्यामवर्णञ्च गौरिम् ८
पद्माक्षमालाभय दूरुहस्तां श्यामाङ्गनेत्रत्रयसुन्दराड्यम्
किरिटवक्त्रेन्दुजटावचूडां श्रीकामकोटिं शिवशान्ति रूपाम् ९
शङ्खनिभमङ्गमरुणं वृषमधास्यात्पङ्कजप्रसार्यकरतुङ्गभुजगहस्तम्
अघ्रितलकृष्णवति नेत्रमतिधूम्रं ++ नि पररूपधररूपम् १०
वेदस्यवामभागेन सव्यभासव्यभागके
प्रकाराभ्यन्तरे वापि ऐशान्ये वा विशिष्यते ११
स्वतन्त्रालयसंकल्प्य वायुसोमे च ईशके
अथवान्यप्रकारेण दक्षनैर्ऋतपावके १२
प्रासादे चैव कर्तव्यं शक्ति संस्थापयेत्सुधीः
स्वतन्त्राल संकल्प्य नचित्तेस्तु प्रतिष्ठयेत् १३
पूर्वस्याभिमुखे गौरि शान्तिकं तु समर्चयेत्
दक्षिणाभिमुखं कृत्वा सर्वसम्पत्करं तथा १४
पश्चिमाभिमुखं देवि धनधान्यसमृद्धिदम्
उत्तराभिमुखं देवि सौख्यकं च ततः परम् १५
वृत्तपीठस्थितं गौरिभद्रपीठस्थितं तु वा
शयनं पद्मपीठं स्यात्पीठशक्तिरिहोच्यते
यद्वक्त्रं द्वारं संकल्प्य प्राकारादीनि कल्पयेत् १६
योगं भोगं च वीरं च शक्तिरेव त्रिधा भवेत्
योगे लिङ्गसमायुक्तं भोगं वामे समन्वितम् १७

वीरं स्वतन्त्रमित्युक्तं शक्तिरेवं त्रिधा भवेत्
उत्तरे तु यजेद्गौरीं वायुदेशे मनोन्मनी १८
भवानीमीशदिग्भागे स्थापयेत्तु विधानतः
गौरि दक्षिणदिग्भागे पावके तु मनोन्मनी १९
भवानी नैर्ऋते देशे अथवा कल्पयेद्बुधः
स्थानं संयुक्तदस्थाने शक्तिनां जीर्णनष्टके २०
आलयं तु विसृज्याथा लक्षणोक्तनिकेतनम्
भक्तांश्च परिवारांश्च कर्त्तभक्त्यानुकूलके २१
जनानुग्रहसंयुक्तं तच्छीघ्रं सुकृतं तु वा
न्यूनाधिक्यं न कर्तव्यं पूर्ववत्परिकल्पयेत् २२
पुनस्थापन शक्त्यानां ग्रामशान्तिकरं शुभम्
स्वतन्त्राल संकल्प्य स्थापयेत्पूजयेत्ततः २३
शक्तीनां कल्पयेद्धीमान् भूमदेविं तदग्रतः
द्विभुजां च द्विनेत्रां च पीतवस्त्रां सुयौवनाम् २४
एकवक्त्रसमायुक्तां कृताञ्जलिपुटान्विताम्
करण्डमकुटोपेतां भूमदेविं सलक्षणाम् २५
द्वाराग्रं तु तथा पूज्य द्वारपूजां विधीयते
द्वारदक्षिणपार्श्वे तु गङ्गायमर्चयेत्ततः २६
योगिनीं तस्य वामे तु अर्चयित्वा विधीयते
द्वारस्य वामपार्श्वे तु यमुनामर्चयेत्तथा २७
डाकिनीं सव्यतः पूज्य अर्चयित्वा क्रमेण तु
ऊर्ध्वे पतङ्गमध्ये तु महालक्ष्मी प्रपूजयेत् २८
तस्य दक्षिणपार्श्वे तु नर्मदामर्चयेत्तथा
वामपार्श्वे सरस्वत्यां पतङ्गोपरि पूजयेत् २९
पतङ्गं च भुवङ्गं च ऊर्ध्वतः परिपूजयेत्
विमलं च सुबाहुं च पूजयेत्तु कवाटयोः ३०
तस्याग्रे वृषभं पूज्य अस्त्रदेवं समर्चयेत्
द्वारपूजविधिप्रोक्ता गौर्यार्चनं विशेषतः ३१
गर्भगृहं प्रविश्याथ गौरीं चैव समर्चयेत्

निर्माल्यं च विसृज्याथ चण्डेश्वर समर्चयेत्  ३२
देशिकशक्तिरूपत्व देशिकान्मशिवस्य तु
शिवशक्तिस्वरूपत्वाच्छिवशक्तिं प्रपूजयेत्  ३३
शैवेष प्रथिविजाता पार्वतीपरमेश्वरम्
+++ प संबन्धं तसच्छेलजलोहजम्  ३४
निष्कलं शैलजाकत्तुं सकलं भार्यरूपकम्
भावरूपं तु संबन्धं लोहजानि शिलान्वितम्  ३५
गौरिस्नानं च कृत्वा तु सवगन्धोक्तमाचरेत्
साङ्गोपाङ्गं च प्रत्यङ्गं पूजयेत्त्रिविधं स्मृतम्  ३६
स्नानतोयं च पाद्यं च तथा च मिनीयकम्
वस्त्रमाभरणं चैव सुगन्धालेपनं तथा  ३७
अर्घ्यं च मन्त्रपुष्पं च साङ्गं च त्रिप्रकीर्तिता
उपाङ्गं धूपदीपं स्यात्सायं रक्षा तु भस्मना  ३८
छत्र चामरकं चैव दर्पणदर्शनं तथा
नृत्तगेयसमायुक्तं उपाङ्गं चेति कीर्तितम्  ३९
नैवेद्यं बलिदानं च होमं कृत्वा समाचरेत्
नित्योत्सवचुलुकोदं च प्रत्यङ्गं चेति कीर्तितम्  ४०
वामायां पूर्वदिग्भागे ज्येष्ठायां पावके यजेत्
रौद्रिणव दक्षिणे देशे कलिन्या नैर्ऋते तथा  ४१
कलवकरणि प्रतीच्यां बलविकरणीति वामके
ब्रलप्रमधनि सौम्ये सर्वभूतदमनिशके  ४२
मनोन्ममध्यमे पूज्य ॐकारादि नमोन्तकम्
तत्तत्स्वनाममन्त्रेण तत्तत्स्थानेषु पूजयेत्  ४३
प्रथमावरणं प्रोक्तं द्वितीयवरणं शृणु
ब्राह्मी पूर्वे तु संपूज्य महेशिमग्निगोचरे  ४४
कौमारि दक्षिणेऽभ्यर्च्य राक्षसि वैष्णवि तथा
वाराहि पश्चिमे पूज्य इन्द्राणि वायुगोचरे  ४५
चामुण्डि चोत्तरे पूज्य दुर्गायामीशगोचरे
वीरभद्रं च विघ्नेशं ऐशान्यां नैर्ऋते यजेत्  ४६

द्वितीयावरणे प्रोक्तं तृतीयवरणं शृणु
वृषभं पूर्वतः पूज्य गणेशं चाग्निगोचरे ४७
स्कन्दं च दक्षिणे पूज्य महाशस्तं च नैर्ऋते
शनैश्चरं पश्चिमे तु वायव्यां वीरमेव च ४८
क्षेत्रपालं तु सौम्ये तु ऐशान्या भस्करं यजेत्
तृतीयवरणे प्रोक्तं चतुर्थावरणं शृणु ४९
जम्भिनि पूर्वदिग्भागे स्थम्भिनिमग्निगोचरे
शान्तिहोमराक्षाणये भेदिनि नैर्ऋते तथा ५०
रमणिं वारुणे पार्श्वे भद्रकामिति वायुके
दुर्गायां सौम्यदिग्भागे चण्डीशिमिश गोचरे ५१
बलिपीठे तथाग्रे तु सर्वशक्तिमयि तथा
बलिपीठे तु पूर्वायामाकाशमातरि तथा ५२
भूतमातरदक्षिणयो लोकमातारि पश्चिमे
देवमातरि सौम्ये यां मतुमातमूध्यतः ५३
सर्वशक्तिमयं पीठं बलदेव्यः प्रकीर्तिता
वृषादिबलिपीठान्तं कुङ्कुटाण्ड प्रमाणतः ५४
प्रातर्मध्यान्नसमयेषु बलितन्त्र विनिक्षिपेत्
सर्वभूतविहीने तु बलिनां तत्र तृप्तये ५५
बलिहीनं समभ्यर्च्य पूजायां निष्फलं भवेत्
तस्मात्सर्वप्रयत्नेन बलिदानं समाचरेत् ५६
आयुश्रीयङ्गलब्धामामैश्वर्यारोग्यवर्धनम् ५७

इति सूक्ष्मशास्त्रे गौरि नित्यार्चनविधिं नाम अष्टचत्वारिंशत्पटलः

Reference (Pages 401-502) :
*Sūkṣmāgama*, Manuscript No. T1003 of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry. This transcript is copied from a MS belonging to the French Institute of Pondicherry, No. RE 10779.

शिवदानविधिः

अथातस्संप्रवक्ष्यामि शिवदानविधिक्रमम्
षोडशप्रतिमायात्रा यात्रदानं तु कथ्यते १
यक्षाश्च द्वादशादित्या किन्नरो मूर्तिभिस्सह
रुद्राश्च लोकपालाश्च आचार्याश्चेतरस्तथा २
काश्यपादि मुनिश्चैव द्वात्रिंशद्वाह्यदेवता
स--नेतान्समावाह्य देवाग्रे परिवेष्टिते ३
रजनिमाषमुद्गं च शालितण्डुलमेव च
दूर्व++लवणं चैव ताम्बूलं तिलमेव च ४
गोघृते ++ च तैलेन वत्सगोहेम संयुतम्
त्रिडकि गुलखण्डं च सर्वापोमधुशर्करा ५
ए+ शिवपात्रे तु पूरयेद्देशिकोत्तमः
रजनिपूर्वदिग्भागे आग्नेयाँ माषकं तथा ६
याम्ये मुद्गं तथा शालि नैर्ऋत्यं तण्डुलं तथा
दूर्वा च लवणं चैव पश्चिमे तु दिशिस्तथा ७
ताम्बूलं वायुदिग्भागे तिलतैलं तथोत्तरे
ऐशान्यां मधुसंयुक्तं मध्यमे गुलखण्डकम् ८
आ ++ ध्ये तथानिष्कं निष्कार्धमर्धमेव वा
वत्स गो दक्षिणे भागे स्थापयेत्स्थापकोत्तमः ९
शेषद्रव्यसमायुक्तं विदुक्षुदेशिकोत्तमः
देवकस्य क्रमेणैव दातव्यं शिवगोचरे १०
शिवदानक्रमं प्रोक्तं यागे यागे तथैव च ११
इति सूक्ष्मशास्त्रे शिवदानविधिं नाम सप्तसप्तति पटलः

प्रकारलक्षणम्

अतः परं प्रवक्ष्यामि सालानां लक्षणं परम्
प्रथमं भूतसाला च द्वितीयं मूर्तिसालकम् १
तृतीयं गणसाल च लोकपाल चतुर्थकम्
पञ्चमं शास्त्रशाल षष्टं पन्नगसालका २

सप्ताङ्गं सप्तसाला च सालानमधिदेवत
तासां हि पूजनार्थाय प्राकारं कल्पयेद्बुधः ३
प्रासादलक्षणार्थाय मङ्गलार्थाय बुद्धिमान्
प्रासादस्य तु विस्तारं चतुरंशैर्विभाजयेत् ४
एकांशेनैव परितः प्रथमं सालमुच्यते
द्व्यंशेनैव समं तेन कारयत्नैः पृथक्पृथक् ५
एवं तु त्रिः प्रकारेण कारयेत्प्रथमं बुधः
सार्थं च त्रिगुणेनैव कारयेत्त्रिविधं परम् ६
तस्माद्द्विगुणेनैव चतुर्थगुणितेन वा
पञ्चभिर्गुणितेनैव कारयेद्गणिकापरम् ७
तस्मात्पञ्चगुणेनैव सार्थप ++ गुणम्
कारयेदस्त्रकं सालतस्मात्सप्तपञ्चकैः ८
एवं विधिप्रकारेण कारयेत्पञ्चकं बुधः
नवभिः गुणितं तस्माद्दश ++ शख्यकैः ९
कारयेत्सप्तमं धीमान्सालान्सालान्पृथक्पृथक्
त्रिचतुपञ्चभिः सप्तै प्रथमं मण्डलं कुरु १०
षध्वस्त ह वस्तु ह + दशहस्तैः स्तः तः परम्
द्वादशैः ++ शैः हस्तैः विंशार्धस्तै तृतीयकम् ११
तस्माच्छेषाणि सालानि द्विगुणेन यथाक्रमम्
वर्धयेत्++स्तेनेकविंशति सालकम् १२
प्रासादस्य समुत्सेधं चतुर्भागैर्विभाजयेत्
अधमं सार्धकेनैव परितः सालमुच्यते १३
द्व्यंशेनाथवा कु +++ यंशे चोत्तमं भवेत्
एवं त्रिविधमार्गेण कारयेत्प्रथमं बुधः १४
द्विपत्त्या च त्रिपत्त्या च कुर्याद्वित्तानुसारतः
पादहिने समुत्से ++ तर्हारं प्रकल्पयेत् १५
आयामेन समं कुर्यादुत्सेधा पादमानकम्
कारयेत्त्रिः प्रकारैश्च यथासंभवमुच्यते १६
चतुर्भिर्गुण +++ दीर्घं षट्सप्तवसुभिः क्रमात्

कारयेत्त्रिप्रकारेण मध्यहारं विशेषतः  १७
प्रत्येकांशाधिकं पूर्वमर्यादिं च पृथक्पृथक्
++++द्वित्रिगुणेनैव कारयेद्धगुणेन वा  १८
एवं विधि प्रकारेण महामायादिकात्मनाम्
द्विगुणार्थं  द्विगुणेन +++++++++++ १९
त्रिध +++ नन कुर्यात्तत्स्मादर्धा विकेन वा
द्विगुणेनाथा वा कुर्यात् त्रिगुणेनोत्तमोत्तमम्  २०
एवं बहुप्रकारेण कारयेदेकविंशति
उपनाम्ना नस + स्यादुपरिष्टादथापि वा  २१
उपपीठेन युक्तं चेत्तस्मादुपरि निश्चितम्
उपपीठं दथ स्तचा कल्पयेदास सूत्रकम्  २२
एवं विधिप्रकारेण उत्सेधं विस्मृतं भवेत्
उप न बाह्यात्कुमुदान्पादबाह्ये तथापि वा  २३
उत्तमादिषु लिङ्गेषु उपाना द्विस्तृतं भवेत्
मध्यमाथमलिङ्गासु कुमुदात्पादपाह्यकम्  २४
हिनाधिकं प्रकुर्यात्तु द्विधि कल्पं न कारयेत्
स्वायम्भुवादिलिङ्गस्य प्राकारभित्तिबाह्यका  २५
भित्तिभ्यन्तरमानेन कारयेत्पौरुषस्य तु
बाणलिङ्गादि लिङ्गाना ++ लानां भित्ति मध्यतः   २६
प्रकारभित्तिविस्तारं प्रवक्ष्यामि विशेषतः
एकविंशाङ्गुला सम्यग्द्वित्रिङ्गुलविवर्धनात्  २७
एकविंशति भित्तिनामष्टाशित्यङ्गुलावि +
++ षिकाभिः शिलाभिर्वा मृदाभिर्वापि कारयेत्  २८
अथवा दारुणा वापि सुस्निग्धं कारयेद्बुधः
तेषां विस्तारमानेन त्रिगुणं वा चतुर्गुणम्  २९
पञ्चभिर्गुणितं वापि हाराणामुदयं क्रमात्
क्षुद्राणामपि सालानां कपोतान्तसमुच्छ्रयम्  ३०
अथवा द्वित्रिहस्+++ कारयेत्प्रस्तरान्तकम्
फत्र द्विरिषकं वापि बुद्बुदाकृतिरेव वा  ३१

अर्धचन्द्राकृतिं यत्तद्वेसरं सम्यगुच्यते
अर्धचन्द्राकृतिं वापि कारयेदुक्तमार्गतः
छत्र चीर्षक +++ न्नागरं चेति कथ्यते ३२
बुद्बुदकृतिकं यत्तत् द्राविडं चेति कीर्तितम्
नागरादिविमाने +++++ कारयेत् ३३
अन्यथाकारयेश्वभ्रं राजाराष्ट्रं विनश्यति
मूलभित्तेस्तु विस्तारं दष्टाङ्गेनाग्रविस्तरम् ३४
तस्मात्क्रमेण +++++ सस्य बाह्यवत्
इष्टिकाभिकृतं यत्तत् ++++ कारयेत् ३५
भित्तीनां पार्श्वयोरेवं कलहं शिरस्कारयेत्
++++++++++ कपोतं शिरस्कारयेत् ३६
पाषाणेन तु कर्तव्यं बाषाणे बलयेत्क्रमात्
पृष्ठे च पार्श्वयोद्विद्वान्समं ये कारयेद्यति ३७
एकस्मिन्कारयेद्धीमान्शास्त्रदृष्टेन कर्मणा
यस्य प्रसादविस्तारमष्टांशैः भाजयेत्समम् ३८
एकांशेनाधिकं शस्तमद्व्यंशेनाधिकं तु वा
त्र्यंशेनाधिकं वापि अर्धे वा चुरधिधवा ३९
वर्धयेद्दक्षणे वापि उत्तरे वा विशेषतः
यस्मिन्दिशि प्रकार्यं च तस्मिन्दिशि वर्धयेत् ४०
एवमेव प्रकारेण कारयेदिष्टदेशके
अग्रपार्श्वे मुखायामं कारयेदुक्तमार्गतः ४१
उत्तमक्रयमानेन पादाधिकमथार्धकम्
पादेन द्विगुणं वापि कारयेस्थापकाज्ञया ४२
द्विगुणं द्विगुणार्धं वा त्रिगुणं मध्यमं त्रिके
गोपुरं तु चतुर्दिक्षु उत्तरे दक्षिणेऽपि वा ४३
मण्डपाकृतिकं वापि शालाकारमथापि वा
एवमेव प्रकारेण त्रिषु कालेषु कारयेत् ४४
गोपुरास्य सालेषु कारयेदुक्तमार्गतः
सालाभ्यन्तरबाह्ये तु परितो मण्टपं कुरु ४५

उपर्युपरि कर्तव्यं यथाशोभं यथादृढम्
तटाकादिषु देशेषो त्ररुषं सम्भवेद्यदि ४६
तेषु देशेष्वालयेषु कारयेदुक्तमार्गतः
अन्तर्मण्डलकादीनां यत्प्राप्तं सङ्कटेषु च ४७
तमेव सालकुर्याद्वा विशाले तु विशालका
एतस्मिन्विषये देशे यथाक्रमं तु कल्पयेत् ४८
सालान्तर न दोषाय एकप्राकारदेशके
सा सङ्कटहे तु ++ क्रमदोषं न दोषभाक् ४९
एवं स्वायम्भुवादीनां प्राकारं कारयेद्बुधः
तेषां जीर्णस्य काले तु पूर्ववत्कारयेद्बुधः ५०
पौरुषस्यैव थामस्य कारयेच्छास्त्रमार्गतः
अन्यथा कारयेद्यस्तु राजाराष्ट्र विनश्यति ५१
मुखेऽपि तद्विकार्यं स्यात्सङ्कटस्मिन्सगृह्यताम्
एवमेव प्रकारेण कारयेल्लक्षणवित्तमः ५२
सात्सरान्तलं तालं हीनाधिक्यं न दोषभाक्
एवं हि चरुषं लिङ्गं वा पौरुषे दोषभाग्भवेत् ५३
मध्यादिभित्तिकं त्यक्त्वा प्रथमं मण्डलं तथा
षष्ठं च सप्तम त्यक्त्वा त्रिप्रकारमिति स्मृतम् ५४
एकप्राकारकं चेत्तु अन्तर्हारयुतं कुरु
एवमेव प्रकारेण कारयेद्विभवानुगम् ५५
आदि प्रासादबाह्ये तु अर्धमण्टपमुच्यते
पादं वापि तदर्थं वा पादोनं तत्समं तु वा ५६
अर्थमण्टप बाह्ये तु बिम्बार्थं मण्टपं कुरु
भद्रं भद्रविहीनं वा प्रासादात्पादमाधिकम् ५७
पादोनद्विगुणं वापि त्रिगुणं वा चतुर्गुणम्
तस्य सौम्यपदे सेवाभद्रार्थं मण्डपं कुरु ५८
तस्य त्रिभागमानेन चतुर्भागेकमेव वा
अथवा त्रिचतुर्हस्तैः पञ्चषट्सप्तभिः करैः ५९
कारयेत्तु विशेषेण सर्वालङ्कारसंयुतम्

एवमेव प्रकारेण कारयेन्मुखमण्टपम्  ६०
तस्य दक्षिणपूर्वे वा स्नपनार्थं हि कारयेत्
मुखात्पादाधिकं वापि समं वा कारयेद्बुधः  ६१
अन्तरालं विना कुर्याद्दक्षिणे पूर्वदेशके
द्वारं कुर्यात्पृथग्धीमान्तस्मिन्सोपानमण्टपम्  ६२
तस्य दक्षिणपूर्वे तु स्नपनार्थं हि कारयेत्
मुखात्पादाधिकं वापि समं वा कारयेद्बुधः  ६३
तस्य त्रिभागमानेन चतुर्भागेन वा पुनः
पञ्चभागेन वा कुर्यात्तैश्च हस्तैश्च कारयेत्  ६४
कर्णभित्तियुतं वापि सान्तरालयुतं यदि
बलिपीठे तस्य बाह्ये अन्तरालयुतेऽन्तरे  ६५
मूलपीठप्रमाणेन कारयेत्तं च बुद्धिमान्
तस्याभ्यन्तरबाह्ये वा नृत्तार्थं मण्डपं कुरु  ६६
त्रिहस्तं पञ्चहस्तं वा चतुर्द्वारसमन्वितम्
वृषभं तस्य मध्ये तु स्थापयेच्छास्त्रमार्गतः  ६७
अन्तर्मण्डलके देशे लोकपालार्थपीठकान्
कल्पयेत्तालमन्त्रेण नागरादिप्रभेदतः  ६८
आग्नेयां विघ्नराजं तु नैर्ऋत्यां सप्तमातरः
वायुं भगवतिं विष्णुं सौम्ये ज्येष्ठां विशेषतः  ६९
चण्डेशमीशदिग्भागे तस्यैशे क्षेत्रपालकम्
इन्द्र ईशानयोर्मध्ये भास्करं स्थापयेद्बुधः  ७०
उक्षादिभास्करान्तं च स्थापयेत्पादमार्गतः
तत्तद्ग्रामादिकान्सर्वान्कल्पयेत्कल्पवित्तमः  ७१
अथवा दक्षिणे पर्णे ब्रह्माविष्णुश्च कल्पयेत्
एकस्मिन्विषये काले क्षेत्रेशं भास्करं विना  ७२
एवं विधिप्रकारेण अन्त ++ रान्तरे कृतम्
मध्यहारान्तरे वाथा कल्पयेत्कल्पवित्तमः  ७३
गोपुरा बाह्यदेशे तु महापीठं प्रकल्पयेत्
अथवा वृत्तपाषाणं कल्पयेदारुषादिके  ७४

तस्य पूर्वे त्रिशूलं तु तस्य पूर्वे महोक्षकम्
तस्य बाह्ये महामय्यां कल्पयेत्षोडशात्क्रमात् ७५
अनुक्तं यद्भवेत्किञ्चित्परिवारविधानके
कारयेदुक्तमार्गेण सप्तसालान्तरं यदा ७६
स्वायंभुवस्य लिङ्गस्य किञ्चिदस्मिन्विशेषतः
सूत्रेभ्यः सूत्रके वापि पूर्वे संस्थापितास्तु ये ७७
तेपि सर्वे सदापूजाश्चालानां नैव कारयेत्
पौरुषस्य तु देशे तु अनुक्ते स्थानके स्थिता ७८
ते सर्वेप्युक्तदेशे तु स्थापयेच्चलकर्मणा
आरुषे पौरुषे स्थाने सर्वेषु देवत + ता ७९
कारणं किं विशेषोऽस्ति स्वयमुद्भूतलिङ्गके
लिङ्गमानप्रमाणेन थामगर्भगृहादिकान् ८०
कारयेत्तु विशेषेण तेषां मानादिभि बुधः
कुर्याश्चे बृषभादीनि तस्माश्च चलना चेत् ८१
स्वयंभुवस्य लिङ्गस्य अङ्गहीनं यदि भवेत्
तमेवपूजयेद्विद्वान्मोहेनोद्धारणं न चेत् ८२
तस्यमानेन कुर्याच्चेत्सर्वधा तु न चालयेत्
लिङ्गमानेन विज्ञेयं कार्यं धामादि देवता ८३
वृषभाद्याश्च ये देवास्ते देवाश्च न चालयेत्
पौरुषस्य विधाने तु उद्धारं क्रयते सदा ८४
एवमेव प्रकारेण कारयेत्स्थापकाज्ञया
एवं प्राकारमाख्यातं परिवारमथ शृणु ८५

इति सूक्ष्मशास्त्रे प्राकारविधिं नाम एकोनशीति पटलः

## आसनभेदविधिः

अथात संप्रवक्ष्यामि आसनाभेदमुच्यते
सर्वलोकहितार्थाय सर्वपापकराय च १
अथ आसनमाभूय योऽर्चयन्ति सदाशिवम्
तेन तत्फलमाप्नोति जन्मकोटिशतैरपि २

अखराडखराडतुराडं हि त्रिविधं भेदमुच्यते
पातालादीपारान्तयद्खराडमतिकीर्तितम् ३
स्वयम्भुवादिलिङ्गासं त्रिखराडं कल्पयेद्बुधः
मानुषे स्थापितं लिङ्गं खराडं कुर्याद्विशेषतः ४
लोहजे शैलजे लिङ्गं स्पटिके बाणलिङ्गके
दारवे रत्नलिङ्गं तु तुराडं कुर्याद्विशेषतः ५
स्थरिडलं मराडले चाग्नौ पटे वा भित्तिचित्रके
जले वा प्रतिमाया तु हृदये क्षणिकेऽपि च ६
अन्ये स्थानोत्तरे चैव तुराडमेवं प्रकल्पयेत्
पूजाभागस्य मूले तु अथवा पीठमूलके ७
अनन्तं योगसिंहं च पद्मं विमलमेव च
उपय्यं परिसंकल्प्य स्वानमाद्यैः प्रपूजयेत् ८
एवं स्वयम्भुवाद्येषु मानुषे सूत्रमूलके
अनन्तादि क्रमेणैव कल्पयेद्देशिकोत्तमः ९
स्थावरे तु समाख्यातं जङ्गमेष्वासनं शृणु
मनोरमे तु देशे तु पूजास्थानं प्रकल्पयेत् १०
पीठे वा फलकायां वा आथारादि क्रमं न्यसेत्
अनन्तप्रथमं कल्प्य योगं चैव द्वितीयकम् ११
तृतीयं पद्ममेवोक्तं चतुर्थं विमलं स्मृतम्
तत्तदेव स+युक्तं उपर्युपरि विन्यसेत् १२
गन्धपुष्पादिभिश्चैव आसनं प्रति पूजयेत्
पूजास्थानस्य चैशान्यां न दूरं न समीपतः १३
दशहस्तान्तरे चैव स्नानदेशं प्रकल्पयेत्
सिंहासनं तु संकल्प्य देवं तस्योपरि न्यसेत् १४
पश्चादावाहनादीनि कुर्या सद्यादि मत्रकैः
पाद्यादिभिः समभ्यर्च्य प्रासादेन तु मन्त्रतः १५
अभिषेकं पुनः कृत्वा शास्त्रदृष्टेन कर्मणा
तस्माद्देवं समानीय आसनोपरि विन्यसेत् १६
पश्चाच्छिवार्चनं कुर्याद्गन्धपुष्पादिभिर्बुधः

अथवान्यप्रकारेण प्रवक्ष्यामि समासतः १७
सिंहासनं तु प्रथमं पद्मासनं द्वितीयकम्
आसनद्वयमेवं तु पूजास्थानं तु विन्यसेत् १८
स्नानं सिंहासनं कुर्यात्++ पद्मासने स्थितः
जङ्गमेष्वेवमाख्यातं स्थ+लादिषु वै शृणु १९
शुद्ध स्नानेषु संप्राप्य शुद्धिं कृत्वा तु भूतले
तत्र वै पद्मपीठं तु संकल्प्या च विशेषतः २०
अथवा दारुणं पीठं द्वादशाङ्गुलमानतः
भूतलेन तु संस्थाप्य अस्त्रेणैव तु मन्त्रतः २१
आसनं कल्पयेत्तत्र अनन्तादि क्रमेण तु
अथवा त्रीणि संकल्प्य अथवा एकमेव वा २२
आधादानादि क्रमेणैव कल्पयेत्तु स्वनामतः
गन्धपुष्पादिभिः पूज्य पश्चादावाहन क्रिया २३
कुर्यात्सद्यादिमि मन्त्रै हृदयेनाथवा पुनः
स्थण्डिले मण्डलेप्येवं अग्नौ सम्यग्विधीयते २४
लौकिकाग्नौ तो संकल्प्य शिवाग्नेरुपरिन्यसेत्
उपर्युपरि संकल्प्य आसनं पञ्च विन्यसेत् २५
अग्नेनैव समाख्यातं पटे चैव विधि शृणु
देवस्य पादमूले तु अथवा पद्ममूलके २६
अनन्तसिंत्म पद्मं च योगं विमलमेव च
उपर्युपरि संकल्प्य स्वनामाद्यैः प्रपूजयेत् २७
पटेपेवं समाख्यातं भित्ति चित्रे विधि शृणु
भित्तिचित्रस्य पुरतः तालत्रयं विसृज्य च २८
पीठं प्रकल्पयेत्तत्र षोडशाङ्गुलमानतः
आसनं कल्पयेत्तत्र विमलान्तं क्रमेण तु २९
एवं भित्तिविधानं स्यात्तदर्थं चित्रविध्यतः
अर्धचित्रस्य पुरतो वेदिं कृत्वा सलक्षणम् ३०
त्रितालं पञ्चतालं वा सप्ततालविशेषतः
त्रिमेखलसमायुक्तं ऊर्ध्वे पद्मसमालिखेत् ३१

शेषं च कल्पयेद्विद्वान्देवपाद समूलके
अर्धचित्रसमावाह्य वेदिकोपरि विन्यसेत् ३२
अर्चनोक्तक्रमेणैव उपचाराणि कारयेत्
एवं स्यादर्धचित्रस्य यश्चाञ्जलविधि शृणु ३३
नद्यां वापि तटाके वा अन्ये वा जलसञ्चये
गत्वा तु देशिकस्तत्र प्राङ्मुखो वाप्युदङ्मुखे ३४
जलस्य पश्चिमे भागे पूर्वे वा चोत्तरेऽपि वा
नाभिमात्रोदके स्थित्वा त्रिपादीन्विन्यसेत्ततः ३५
त्रिपादिमध्यमे चैव उत्तरादिमुखस्थितः
स्थितस्य पूर्वदेशे त्वादासनं कल्पयेद्बुधः ३६
प्रथमं सप्तपातालं पश्चाद्योगासनं न्यसेत्
गङ्गादि विन्यसेद्योगे तस्योर्ध्वे पद्मकं न्यसेत् ३७
विमलं चैव तस्योर्ध्वे पश्चाद्गन्धादिभिर्यजेत्
अनन्तं चैव सिंहं च वर्जयेत्तु विशेषतः ३८
जलेप्येवं समाख्यातं प्रतिमायां ततः शृणु
आवाहनमनन्ते तु स्नानं सिंहासने मतम् ३९
वस्त्रमाभरणं गन्धं धूपयोगासनं मतम्
पद्मासने नैवेद्यं जपं वै विमलासनम् ४०
एवं स्यात्प्रतिमायां तु महतिस्तेकदेशिके
उपर्युपरिसंकल्प्य अ + सनक्रमेण तु ४१
पश्चाद्गन्धादिभिः पूज्य प्रासादेन तु मन्त्रतः
महतस्त्वेवमाख्यातं हृदयस्यासनं शृणु ४२
हृदयेस्ये तु मध्ये तु पञ्च वै चतुरङ्गुलम्
तस्य मूले तु मतिमानासनं कल्पयेत्ततः ४३
अनन्तं विमलं योगं सिंहं चैव ततः परम्
हृदये संयुतं पद्मं तस्मात्पद्मासनं विना ४४
एवं हृदयमाख्यातं क्षणिकस्य ततः शृणु
नासिकाय स्तु परितः द्वादशाङ्गुलमानके ४५
सदाशिव सितो नित्यं तस्मात्तस्थं प्रपूजयेत्

क्षणिकं पूर्वदेवे तु तालुमात्रप्रमाणतः ४६
आसनं कल्पयेत्तत्र पद्मं चैव विशेषतः
शेषं न कल्पयेद्विद्वान्स्थित्वा गत्वा तु पूजयेत् ४७
क्षणिकस्यैवमाख्यातं अन्यस्थानान्तरे शृणु
गोमयालेपनं चैव गन्धपुष्पैश्च धान्यके ४८
फले चन्दनपत्रे च अन्येषु ++ केषु च
तेषामुपरिसंस्थाप्य आसनं पञ्चविन्यसेत् ४९
अथ सिंहासनं कुर्यादशक्तश्चेद्विशेषतः
पश्चाद्गन्धादिभिः पूज्यश्चैव पूजयेत्तु स्वनामकैः ५०
पश्चादावाहनं कुर्यात्सद्योजातादिमत्रकैः
पश्चाच्छिवर्चनं कुर्याद्विधिदृष्टेन कर्मणा ५१
एवं स्थानान्तरे चान्ये कुर्याद्वै मन्त्रवित्तमः
किञ्चिद्विशेषं वक्ष्यामि आत्मार्थे च परार्थके ५२
स्वयम्भुवादि लिङ्गेषु सर्वेषु स्थावरेषु च
पञ्चासनं कुर्यात्तु तद्धीनं तु न कारयेत् ५३
तस्मात्सर्वप्रयत्नेन आसनं पञ्चकल्पयेत्
पञ्चासनात्परं नास्ति यत्त्रिशास्त्रस्य निश्चयाः ५४
पञ्चावरणपूजायां पञ्चासनं प्रकल्पयेत्
एकवरणपूजायां एकासनं प्रकल्पयेत् ५५
पञ्चावरणादूर्ध्वं आसहस्रान्तकं क्रमात्
पञ्चासनं प्रकल्प्ये वा पश्चाद्वै पूजयेद्धनम् ५६
एवं स्वयम्भुवाद्येषु कुर्याद्वै देशिकोत्तमः
परार्थपूजयेत्तुषाराजाराष्ट्रसुखाय वैः ५७
लोहजातिषु सर्वेषु आत्मार्थं पूजयेत्सदा
विप्रः पञ्चासनं कल्प्य चतस्त्रकल्पये नृप ५८
वैश्यस्तु त्रीणि संकल्प्य द्वावेव तु चतुर्थकम्
एकासनं तु संकल्प्य स्त्रीणामपि तथैव च ५९
सामन्ताश्च चमूपाश्च वैश्यवद्वासमन्यसेत्
आवरणान्तदेवं स्यात् आसनादिक्रमेण तु ६०

ब्रह्मचारि त्रयोवर्णान् तदुक्तानि च कारयेत्
विप्रादिनां विधानां तु चतुर्थं चैव कारयेत् ६१
शूद्रं चैव विथानान्तु विप्रं चैव न कारयेत्
पञ्चमावरणादूर्ध्वं आत्मार्थे च न कारयेत् ६२
दुष्टवस्तु यथाग्नौ तु तापयित्वा पुनः पुनः
तद्वास्तु शुद्धिमाप्नोति अथरच्छोर्ध्वकं शृणु ६३
पश्चादूर्ध्वं त्वमाधात्य अथरश्चै विशेषतः
अनुलोमास्तु सर्वेषां वैश्यवत्कारयेत्सुधीः ६४
एवमेव विधानेन कारयेद्यर्चको बुधः
आसनं भेदमाख्यातं पश्चाद्वै यजनं कुरु ६५
इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे आसनभेदविधिं नाम अशीति पटलः

## प्रदक्षिणविधि

मेरुमध्ये सुखासीनं देवदेव महेश्वरम्
प्रणम्य शिरसा पादौ देवि वचनमब्रवीत् १
भगवं देवदेवेश पन्नागेद्रविभूषणम्
प्रदक्षिणविधानं च देशकालफलप्रभो २
श्रोतुमिच्छाम्यहं शंभो जगां रक्षणाय च
ब्रूहि मे देवदेवेश भक्तानां भक्ति नाशनम् ३
ईश्वरः
शृणु देवं परं भक्त्यं प्रदक्षिणविधिं परम्
तीर्थानि यानि पुण्यानि तपो यज्ञफलादया ४
प्रदक्षिणसमो नास्ति प्रत्यक्षफलसिद्धिदम्
यानि कानि च पापानि जन्मान्तरकृतानि च ५
तानि तानि विनश्यन्ति प्रदक्षिण पदे पदे
त्रिवृत्प्रदक्षिणं प्रोक्तं नित्यकर्मपरायणे ६
सव्यापसव्यमार्गं च अङ्गमार्गं तथैव च
शान्तिकं पौष्टिकं काम्यं त्रिभेद्वक्ष्य वरानुने ७
शान्तिकं सर्वशान्त्यर्थं पौष्टिकं पुत्रपौत्रकम्

काम्यं काम्यार्थसिद्धिं स्याद्भक्तियुक्ता ततो बुधैः ८
त्रिविधानि त्रिकालेषु नित्यकर्ममिति स्मरन्
कर्तव्यं कायशुद्धिं च कालं वक्ष्य विशेषतः ९
सूर्योदयं समारभ्य यावत्तत्दशनाडिका
प्रातः कालमिति प्रोक्तं मध्याह्ने दशनाडिक १०
सायं द्वादशनाडीनां कर्तव्यं च प्रदक्षिणम्
शान्तिकं प्रातः काले तु सायं काले तु पौष्टिकम् ११
काम्यमध्यं दिने कुर्यात्त्रिकालं तु विशेषतः
अमावास्यैष्टमि चैव आदित्यवारमेव च १२
विषुवे ग्रहणे चैव संक्रान्तेषु तथैव च
येवं योगदिनं चैव नैमित्यकमुदाहृदम् १३
उदयास्तमनं चैव सर्वव्याधिहरं परम्
अकलमृत्यु जयदं अणिमाद्यष्टसिद्धिदम् १४
उदयास्तमने सिद्धिरहोरात्रं ततः शृणु
सूर्योदयेणमारभ्य सूर्यस्योदयमन्तकम् १५
यावत्कालं चरेद्विद्वात्म +++ क्तन वै बुधः
प्रदक्षिणं प्रकर्तव्यं फलान्सङ्ख्यान्प्रमाणतः १६
ममकाय प्रवेशं च ममसिद्धिमहान्मनः
अहोरात्रं सहस्त्रं च सत्यं प्रत्यक्षसिद्धिदम् १७
काम्यं काम्यप्रसिद्धिं च प्रदक्षिणसमाप्तये
यावत्प्रदक्षिणं नित्यं सर्वशान्तिकरं परम् १८
एकप्रदक्षिणमङ्गं केवलं च शतं भवेत्
एकं सव्यापसव्यं च केवलं द्विशतं भवेत् १९
दिशां देवं नमस्कृत्य विमान्च्छायां नलंघयेत्
रुद्राक्षेण जपं कुर्यात्प्रासादं तु विशेषतः २०
सव्यापसव्यमार्गं तु प्रासादं तु प्रदक्षिणम्
लिङ्गं सव्यापसव्येन प्रासादं तु प्रदक्षिणम् २१
प्रदक्षिणत्रयं कृत्वा नमस्कारदण्डवच्छिरम्
प्रदक्षिणं सव्यमार्गे कुर्यात्काम्यप्रदक्षिणम् २२

विप्र क्षत्रियविट्शूद्रैः पुष्पैश्च स्त्रीभिरेव वा
संस्नातैरुपलिप्ताङ्गैः संवृत्तैः साक्षसूत्रकैः २३
मौनव्रत थरैर्युक्तं शिवस्तुति विचित्तकैः
शिवं वन्दे मृतुङ्ग वा कर्तव्यं तु शिवालये २४
अन्तर्हार समायुक्तं म + हर समन्वितम्
महामय्यादिभिस्ते तु यच्चे यति प्रदक्षिणम् २५
यच्चो यति विरूपाक्षं विमाने सर्वकामिके
त्रिसप्तकुलमुद्धृत्य शिवेन सह मोदते २६
विमानं बलिपीठं च प्रदक्षिणसमारभेत्
महापातकनाशस्ते रुद्रत्वं समवाप्नुयात् २७
प्राकारं गोपुरं वापि समानं परिकीर्तितम्
केवलं तु सदा चैव प्रदक्षिणं समाचरेत् २८
ब्रह्महाब्रह्मणा चैव गोघ्नश्च गुरुतल्पकः
एतैर्दोषै र्णलिप्यन्ते पद्मपत्रनिपांभसा २९
विमानाच्यां सकृत्स्पृष्ट्वा धावद्धवद्दिनेदिने
तावत्तवदीने चैव सर्व पापहराय च ३०
पीठप्रदक्षिणं कुर्यात्तस्य छायां नलङ्घयेत्
प्रदक्षिणं तथा कृत्वा महापातकनाशनम् ३१
गोब्राह्मणनृपश्चायां लङ्घयेत्तु शिवप्रयम्
लङ्घेन तद्दिनं पुण्यं नष्टं भवति वै बुधः ३२
सर्वमाहूयचोर्च्यन्ते देवदानवराक्षसा
अष्टोत्तरशतं श्रेष्ठं तदर्थं मध्यमं भवेत् ३३
तदर्थमधमं प्रोक्तं सङ्ख्योपरि समाप्तकम्
काम्य प्रदक्षिणं चैव शिवमन्त्रसमुच्चरन् ३४
सव्यापसव्यमार्गेण मृदुङ्गत्वाशनैः शनैः
सोमस्य सोमदिग्भागे सोमसूत्रं न लङ्घयेत् ३५
अन्तर्मण्डलपर्यन्तं सोमसूत्रप्रमाणकम्
ज्ञानार्थं वा जपार्थं वा धनार्थं भूम्यमेव वा ३६
अणिमाद्यैश्वर्यार्थं वा एहिकामुष्ठिकेषु च

यान्यान्पार्थनं यतेकामानर्थिभिः शक्तिपूर्वकम् ३७
पूर्ववत्पर्वसङ्ख्याभि काम्यमेवं प्रकारयेत्
षाण्मासिसिद्धिदे शान्तिकेन महत्फलम् ३८
पौष्टिकं चाष्टमासे तु फलदं परिकीर्तिदम्
संवत्सरं तु काम्यार्थं तस्यान्ते सिद्धिदं भवेत् ३९
आयुष्यं बलमारोग्यमपमृत्यं जयं तथा
ऐहिके सर्वसंपन्नं रुद्रलोके स्वमुष्मिके ४०
सव्यं तु भोगदं विद्यादपसव्यं तु मोक्षदम्
सव्यापसव्यमेवं तु भोगमोक्षफलप्रदम् ४१
यानिकानि च पापानि जन्मान्तरकृतानि च
तानितानि विनश्यन्ति प्रदक्षिणपदेपदे ४२
अद्य मे सफलं जन्म अद्य मे सफलं तपः
अद्य में सफलं ज्ञानं शम्भो त्वत्पाददर्शनात् ४३
उत्सवे बलिकाले च यः करोति प्रदक्षिणम्
पदेपदेऽश्वमेधं स्यात्फलमाप्नोति मानवः ४४
शंभु प्रदक्षिणं कृत्वा सोमसूत्रं न लङ्घयेत्
लङ्घयेदेकमेकं स्याद्लङ्घयमयुतत्रयम् ४५
एवं प्रदक्षिणं प्रोक्तं पुष्पभेदं ततः शृणु ४६
इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे प्रदक्षिणविधिं नाम एकाशीतिपटलः

## जलसंप्रोक्षणम्

अथातः संप्रवक्ष्यामि जलसंप्रोक्षणं विधम्
द्विविधं प्रोक्षणं चैव भद्रयोगं तथैव च १
प्रासादकरणे चैव पीठबन्धविधौ तथा
बालस्थानं ततः कृत्वा प्रोक्षणं भद्रमुच्यते २
पतिते दूषिते बेरे चण्डालैः शिल्पिभिस्तथा
पूजाहीने तथा मासे प्रोक्षणं योगमुच्यते ३
प्रासादस्याग्रतः कुर्यान्मण्टपं चतुरश्रकम्
चतुद्वारसमायुक्तं चतुस्तोरणभूषितम् ४

वितानदर्भमालाभिः मुक्तादामेरलङ्कृतम्
अष्टमङ्गलसंयुक्तं मङ्गलाङ्कुरशोभितम् ५
कृत्वा नवपदमध्ये पदमेकं तु पीठिका
रत्निमात्रमुत्सेधं मुष्टिमात्रमथापि वा ६
कुर्यात्कुण्डानि परितः दिशासु विदिशासु च
चतुरश्राणि वृत्तानि दिशासु विदिशासु वै ७
कुण्डानि कल्पयेत्तत्र पूर्वोक्तानि वरानने
गोमयालेपनं कृत्वा शोषणं पाचनं तथा ८
पुण्याहं वाचयेत्तत्र पर्यग्निकरणं तथा
गन्धाद्यै लिङ्गमालिप्य वस्त्रेणाच्छादयेत्ततः ९
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन्
शुद्धैरद्भिरथ प्रोक्ष्य शुद्धैरुध्यैरतिबृवन् १०
लिङ्गं दर्भादिरुद्वेष्य हृदयेन विचक्षणः
हेमकौतुकसूत्रं च बन्धयेच्छिरसा शिवम् ११
बालस्थानं ततो गत्वा पूजयित्व विशेषतः
यात्राहोमं प्रकर्तव्यं बालस्थानस्य चाग्रतः १२
स्थण्डिलं तत्र कर्तव्यं निर्दोषैः सिकतैः शुभैः
अग्न्यादानादिकं कृत्वा शिवाग्निं कल्पयेत्ततः १३
अथ ब्रह्मैः षडङ्गैश्च प्रत्येकं षोडशाहुति
स्पृष्ट्वा स्पृष्ट्वा तु जुहुयात्तदर्थार्थकमेव वा १४
ईशानेन ++ त्वा लिङ्गं स्पृष्ट्वा समस्तकम्
तस्याग्रे शिवकुम्भं तु संस्थाप्य स्थण्डिलोपरि १५
पञ्चरत्नसमायुक्तान्सकूर्चवस्त्रसंयुतान्
पञ्चमूर्तिसमोपेतानष्टत्रिंशत्कलैर्युतान् १६
षडङ्गैरपि संयुक्तान्वृषारूढ वरानने
आवाहयेत्ततो मन्त्रि शृणु देवि यथाक्रमम् १७
सद्येनावहयेद्देवं वामदेवेन स्थापयेत्
अघोरेणावकुण्ड्याथ मुद्राबन्धं तु कारयेत् १८
बीजमुद्रां ततो बध्य मुकुलं पद्ममुद्रका

नमस्काराख्यमुद्रां च बन्ध्वास्त्रं दिक्षु विन्यसेत् १९
योजयेत्पद्ममुद्रां ततो गन्धाद्यैरर्चयेत्क्रमात्
पञ्चगव्येन संप्रोक्ष्य वेदिकां कारयेत्क्रमात् २०
स्थण्डिलं शालिभिः कुर्यादष्टद्रोणैर्विशेषतः
तदर्ध्यैस्तण्डुलै भूष्य तदर्ध्यैश्च तिलैरपि
लाजपुष्पैस्तिलैः दर्भैर्विकिरेत्तु विशेषतः २१
पुरुषेण न्यसेत्तत्र साष्टपत्र सकर्णिकम्
नवशक्तिसमोपेतं गन्धाद्यैरर्चयेत्ततः २२
आवेष्ट्याहतवस्त्रेण शिरसा धारयेत्पटम्
प्रदक्षिणं ततः कृत्वा प्रासादे घोषसंयुतम् २३
वेदिकोपरि संस्थाप्य वामदेवमनुस्मरन्
तस्योर्ध्वोत्तरे न्यासे मन्त्रिवर्धनिं स हिरण्यकाम् २४
गणाम्बिकायै मन्त्रेण पूजयेत्तु समन्त्रकम्
अभितः कलशानष्टौ विद्येश्वरयुतं न्यसेत् २५
हेमं चाष्टसमायुक्तान्प्रत्येकं वस्त्रवेष्टितान्
सकूर्चान्सापिधानाश्च पूजयित्वा स्वनामतः २६
दिशास्वध्यायनं कुर्याद्विधिवद्वेदपारगान्
पटेन महता वेष्ट्य ततो होमं समारभेत् २७
अग्निदानादिकं सर्वं यथाविधिपुरस्सरम्
शिवाग्निपूजयेत्तत्र षडङ्गैरपि संयुतम् २८
हुत्वा ब्रह्मभिरन्यैश्च प्रत्येकं व्याहृतिस्तथा
प्रणिताग्निसमादाय स्वमन्त्रै मूर्त्तिधारकाः २९
सद्यमन्त्रं तु वारुण्यां वामदेवं तु चोत्तरे
अघोरं दक्षिणे चैव वक्रमैन्द्रे तथैव च ३०
आग्नेय्यां हृदयं चैव नैर्ऋत्यां तु शिरस्तथा
शिखां वायव्यदिग्भागे ऐशान्यां कवचेन तु ३१
पञ्चब्रह्मप्रधानस्याद्ब्रह्माण्येवं प्रकल्पयेत्
समिधाज्यचरूंल्लाजान्सर्षपाश्च यवातिलान् ३२
पलाशोदुम्बराश्वत्थवाटं चेति दिशासु वै

शमिखादिरबिल्वाद्विदिक्षु क्रमशस्तथा ३३
घृतमीशानमन्त्रेण पुरुषेण चरुं तथा
लाजाघोरेण मन्त्रेण सद्येन सर्षपं तथा ३४
तिलान्पाशुपतास्त्रेण कवचेन यवस्तथा
द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेल्लिङ्गं स्वमन्त्रतः ३५
हव्यवाहं समूर्चार्य सर्वद्रव्यसमायुतम्
स्वषमग्नेति मन्त्रेण सृच पूर्णाहुतिं हुनेत् ३६
ब्रह्मजज्ञानमन्त्रेण जुहुयात्तु शताहुति
इदं विष्णुर्विति मन्त्रेण आवैराजेति वापि वा ३७
वेदादिंश्च ततो हुत्वा प्रत्येकं तु शताहुतिः
लिङ्गस्य मूलमध्यान्तं संस्पृश्य च ततोपरि ३८
प्रभाते पूजनं कृत्वा रात्रिबन्धं व्यपोह्य च
सद्यादि पञ्चमन्त्रेण पञ्चगव्याभिषेचनम् ३९
कृत्वा शुद्धिमथाद्भिस्तु लिङ्गपीठं स्थलं क्रमात्
हैमपङ्कजसंयुक्त पुष्पं शिरसि धारयेत् ४०
आचार्यपूजयेत्तत्र वस्त्राङ्गुलियकादिभिः
कटकं कुण्डलं चैव यज्ञसूत्रं च हैमकम् ४१
यथाशक्त्या तु दातव्यं गृहभूमिथनैः सह
सूहूते ततो ध्यात्वा देवदेवं त्रयम्बकम् ४२
आत्मानमर्चयित्वा तु गन्धाद्यैः सकली कृतः
लिङ्गं वै मूर्तिसंयुक्तं कलान्वङ्गानि विन्यसेत् ४३
शिवकुम्भं ततो धृत्वा स्नापयेत्परमेश्वरम्
वर्धनीं तु मनोन्मन्यां पिण्डिकायां न्यसेत्क्रमात् ४४
वर्धनी तोयमादाय पिण्डिकामभिषेचयेत्
स्वस्वै मन्त्रैश्च कलशानभिषिच्य यथाक्रमम् ४५
गन्धाद्यैरर्चयेद्देवं यथोक्तमन्त्रवित्तमम्
पञ्चावरणमभ्यर्च्य परिवारान्प्रपूजयेत् ४६
नैवेद्यबलिदानं च नृत्तगेयसमाकुलम्
भद्रमेवसमाख्यातं शृणु योगं वरानने ४७

योगेन तु विशेषेण प्रोक्षयेत्त्रिदशेश्वरान्
रक्षाबन्धं ततः कृत्वा कारयेत्तु पृथक्पृथक् ४८
सप्ताष्टनवहस्तं तु वेदिविस्तरमुच्यते
मुष्टिमात्रसमुत्सेधं दर्पणोदरसन्निभम् ४९
अथवा स्थण्डिलं कृत्वा स्थापयेत्प्रोक्षणक्रियाम्
देवदेवीं विशेषेण अष्टद्रोणेन शालिना ५०
प्रतिमानां तु सर्वेषां स्थापयेत्तु पृथक्पृथक्
तदर्धं तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि ५१
वस्त्रकूर्चेन संवेष्ट्य स्थापयेत्तु पृथक्पृथक्
स्थापनं तु विशेषेण जलसंप्रोक्षणक्रियाम् ५२
गन्धाद्यैरर्चयेद्विद्वान्हृदयेन शु+क्षणः
नवकुम्भैककुम्भ वा वर्धन्यां तु तथा भवेत् ५३
देवानां तु पृथक्प्रोक्तं स्नापयेत्तु वरानने
शिवं महेशकुम्भं तु षट्प्रस्थ वर्धनिस्पृता ५४
कलशानाढकं श्रेष्ठं त्रिप्रस्थं मध्यमं भवेत्
द्विप्रस्थमधमं प्रोक्तं कलशान्स्थापयेत्पृथक् ५५
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
लाजपुष्पैश्च दर्भैश्च विकिरेत्तु विशेषतः ५६
साष्टपत्रसकर्णं तु पश्चात्कुम्भान्न्यसेद्बुधः
पञ्चरत्नसमायुक्तं सकूर्चं वस्त्रवेष्टितम् ५७
शिवमन्त्रस्मरेत्तत्र पूजयेत्तु विशेषतः
वर्धनि तस्य वामे तु हेमयुक्ताम्बुपूरिताम् ५८
कूर्चवस्त्रेण संवेष्ट्य भवानि स्थापयेत्ततः
सकूर्चसापिधानाश्च सवस्त्र सहिरण्यकान् ५९
गन्धाद्यैरर्चयेद्विद्वान्कलशानि पृथक्पृथक्
स्थापयेत्तु विशेषेण विद्येश्वरसमायुतान् ६०
गन्धादिभिः समभ्यर्च्य स्वैस्वैर्मन्त्रैर्विशेषतः
होमं कृत्वा विशेषेण पश्चाद्देविं शृणु प्रिये ६१
दिशाहोमं च कर्तव्यं यात्राहोमं तथापि वा

पूर्वे च दक्षिणे चैव पश्चिमे चोत्तरे तथा ६२
दिशाहोममिति प्रोक्तं यात्राहोम शृणु प्रिये
वेदिबाह्ये तु पुरतः यात्राहोमविशेषतः ६३
समिधाज्यचरून्लाजान्सर्षपांश्च यवा तिलान्
ब्रह्मादिशिरसान्तस्युर्मत्रमेवं प्रकीर्तितम् ६४
द्रव्यान्ते व्याहृतिं हुत्वा शिरस्पूर्णाहुतिं हुनेत्
अन्तेस्विष्टाहुतिं हुत्वा शिवमन्त्रेण वा जपेत् ६५
यात्राहोमं ततः कृत्वा पश्चात्प्रोक्षणमारभेत्
स्नपनं तु ततः कृत्वा प्रोक्षणान्ते समारभेत् ६६
अर्चयित्वा विशेषेण यथाविधिपुरस्सरम्
निवेदयेद्विशेषेण ताम्बूलं दापयेत्ततः ६७
आचार्यपूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
दक्षिणां दापयेत्पश्चाद्यथावित्तानुसारतः ६८
अधमं दशनिष्कं स्यान्मध्यमं द्विगुणं भवेत्
त्रिगुणं चोत्तमं प्रोक्तं साधकस्य तदर्धकम् ६९
मूर्तिपानां तदर्थं स्यात्तदर्थं जपकर्तृणाम्
यागोपकरणं सर्वं देशिकायां प्रदापयेत् ७०
जलसंप्रोक्षणं प्रोक्तं पश्चादुत्सवमारभेत्
इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे जलसंप्रोक्षणं नाम द्व्यशीतिपटलः

## मधूच्छिष्टम्

अथ ऊर्ध्वं प्रवक्ष्यामि मधूच्छिष्टक्रियं प्रति
यथोक्तविधिना कुर्यादङ्कुराणामथार्पणम् १
शुभे दिने च +++ वह्ने रत्नेनैव तु कारयेत्
गर्भप्रक्षेपणं चैव मृते सम्यग्प्रबुद्धिमान् २
सर्वं च देविकं कर्म र च कुर्वीत रात्रिके
देवालये विशेषेण यजमानगृहे वा ३
औपासनाग्निकुण्डे तु मधूच्छिष्टक्रियां तथा
होमकर्माणि विधिवदेकाग्निं चैव कारयेत् ४

स्थण्डिलं कारयेत्तत्र अग्निकार्योक्तमाचरेत्
त्रियम्बकं पुरुषसूक्तं रुद्रसूक्तं जपेत्क्रमात् ५
ब्राह्मणान्भोजयेत्तत्र यथाविभवविस्तरैः
आचार्यपूजयित्वा तु शिल्पिना पूजयेत्ततः ६
मधूच्छिष्टं तु संयोज्य शिल्पिशास्त्रोक्तमार्गतः
मधूच्छिष्टेन तेनैव बिम्बं लक्षणसंयुतम् ७
कारयेद्दर्शनीयश्च प्रभापीठं पृथक्पृथक्
सहजं वाथ कर्तव्यं कारयित्वा विधानतः ८
अङ्गोपाङ्गं च सर्वेषां आचार्यो ध्याययेत्ततः
शिल्पिकर्मपुनः कृत्वा सर्वलक्षणसंयुतम् ९
विधिना कारयेत्तत्र बहिमित्तिकया युतः
आलेपने तु संशोध्य आचार्यशिल्पिभिः सह १०
सप्तदा मृदमालेप्य तद्गर्भमायसग्दिभिः
रक्षार्थं बन्धयित्वा तु मृदमालेप्य शोषयेत् ११
++ रजतं ताम्रं कांस्यं वापिथकारयेत्
पित्तलं सर्वलोहं तु श्रिवत्वा तु स्वशक्तितः १२
शुभवारे च नक्षत्रे शुभयुगे तथैव च
सुमुहूर्ते सुलग्ने च कुण्डं कुर्यात्तु दाहकम् १३
मधूच्छिष्टं विसृज्याथ बिम्बाङ्गभं प्रताप्य च
लोहं सन्ताप्य युक्तेन गर्भं पूर्ण यथाशुभम् १४
पुनश्च सप्तलोहेन बिम्बगर्भं प्रपूरयेत्
लोहपूर्णं तु संक्षेपं यस्यात् च्छितलकदृढम् १५
लोहबिम्बक्रियायां च सर्वत्रैवं न कारयेत्
ततः प्रभाते विमले आचार्य शिल्पिभिः सह १६
मुद्भेदं तु शनैः कृत्वा बिम्बशुद्धि समाचरेत्
सर्वाङ्गमपि संपूर्णं लक्षणैरपि संयुतम् १७
सहकैः भूषणैर्युक्तं यदि बिम्बं समावहेत्
भेदच्छदप्यपूर्णो विखण्डे च स्पटिके तथा १८
लक्षणैश्च विहीनेऽपि तद्बिम्बं लोहवद्भवेत्

पूर्वोक्तं पूर्वलोहं तु पूर्वमानं विधीयते १९
बिम्बं लक्षणसंयुक्तं कारयित्वा समावहेत्
रत्नन्यासं न कुर्याच्चेत्सान्निध्यं न भवेद्यदि २०
पीठयुक्ते तु तत्पद्मे मन्त्रयुक्ते क्रमेण तु
रूपरत्नं तु विन्यस्य शिल्पिना सुस्थितं दृढम् २१
अवक्रमचल +++ पि पद्मपीठो सुयोजयेत्
उक्तलक्षणसंयुक्तं कौतुकं स्थापयेद्यदि २२
अज्ञानादर्थलोभूम्मोहाद्वा कौतुकादिकम्
नगुरं नवदीर्घत्वां ना +++ ह्रस्वं च वर्जयेत् २३
रत्नेन कौतुकं ग्राह्यं यथालाभेन मानतः
रत्नजा प्रतिमा लोके सर्वशान्तिकरं सदा २४
सौवर्णपौष्टिकं प्रोक्तं सर्वलोकसुखावहम्
कित्तिदा रजता प्रोक्त ताम्रा सर्वसिद्धिदा २५
पित्तलाकाससिद्धिं स्यादथवा काम्यजा स्मृताः
सर्वलोकहितार्थाय पुत्रपौत्रविवर्धनात् २६
शैलजायुष्यदा प्रोक्ता दारंवं पुत्रवर्धनि
मृन्मयं न च कुर्वीत कौतुकाद्यं च सर्वदा २७
मृण्मयं कौतुकाद्यं च सर्वलोहभयावहम्
उक्तद्रव्येण विधिना कारयेद्बिम्बमुत्तमम् २८
आयव्ययाधिकं सर्वं तस्मिन्शास्त्रेण लक्षयेत्
आरुषस्यैवमेवोक्तं पौरुषं कारयेद्बुधः २९
नयनं मोक्षतः कुर्याज्जलाधिवासतः परम्
अधिवासनं तु कर्तव्यं स्थापनं तु समाचरेत् ३०
सन्निधिकरणे कुर्यात्प्रतिमानां तु तद्भवेत्
अमन्त्रे स्थापिते काले सान्निध्यं न ++ यम् ३१
तस्मात्सर्वप्रयत्नेन मन्त्रयुक्तेन कारयेत्

इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे मधूच्छिष्टं नाम पञ्चाशीतिपटलः

## प्रतिष्ठोत्सवम्

अथातः संप्रवक्ष्यामि प्रतिष्ठोत्सवमुत्तमम्
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने १
प्रतिष्ठां देशिको कुर्यात्तस्यान्ते चोत्सवं क्रमात्
यजमानस्य जन्मर्क्षे तीर्थं कुर्याद्विशेषतः २
अन्यः पुण्यदिने कुर्याद्यजमानेच्छया सह
तस्य सन्तानवृत्यर्थं ग्रामादीनां हि कारयेत् ३
सुखासनादिबिम्बेषु एककेन च कारयेत्
तीर्थान्तं पूर्वकाले तु नवसप्तह पञ्चकमे ४
त्रियाहे च तथैकाहे आचार्या यजमानकौ
निश्चित्य पूर्वकाले तु अङ्कुरार्पणमारभेत् ५
प्रतिष्ठा वाभृतं रात्रौ ध्वजाङ्कुरसमारभेत्
सौवर्णरजतं वापि ताम्रं वा मृण्मयं तु वा ६
पालिका षोडशा प्रोक्ता यथावित्तानुसारतः
गोमयेनोपलिप्तायां कृप्तायां पिष्ठकैरपि ७
चतुष्पङ्क्तिकृता तत्र पालिकान् स्थापयेत्क्रमात्
आग्नेय्यादिसमारभ्य ऐशान्यां तु समापयेत् ८
अर्चयेद्गन्धपुष्पाद्यै कुर्याद्वै देशिकोत्तमः
व्रीहि प्रियगुनिष्पाव सर्षपानि च सर्वशः ९
शालिमुद्गा ++ जानि पायसो क्षालयेद्बुधः
साधकः प्राङ्मुखो भूत्वा हृदयेन तु मन्त्रतः १०
बीजानि निक्षिपेत्तेषु पुण्याहं वाचयेत्ततः
पुनश्च परिसिध्याथ वासोऽपि परिवेष्टयेत् ११
एवं कृत्वा त्विथानेषु स्वगुप्ते स्थापयेद्बुधः
नैवेद्यं दापयेद्धीमान्सोमबीजेन मन्त्रतः १२
एवमेव प्रकारेण ध्वजाङ्कुरं तु कारयेत्
निर्दिष्टदिवसात्पूर्वे तृतीये द्वितीयेऽपि वा १३
तद्दिने वा समारभ्य ध्वजं भेरीं विशेषतः
येनारम्भप्रतिष्ठान्ते शिवोत्सवं नवादिकम् १४

तेनैव सर्वदाकालं कुर्यादामरणान्तिकम्
पश्चात्तस्यैव सन्धाने कुर्यादिहि विशेषतः १५
सोऽपिदेशान्तरश्चैतत्तस्यैव त्वज्ञया कृतम्
शुभमाज्ञाविना कृत्य तत्कर्मं च शुभं भवेत् १६
तस्मात्सर्वप्रयत्नेन पूर्वारम्भे कृताज्ञया
कुर्याद्भिन्नक्रियायां तु महत्फलमवाप्नुयात् १७
तस्यैव प्रतिकूलं यदभिचारकमाप्नुयात्
कारणं किं विशेषोऽस्ति तस्मात्तस्यैव वक्त्रतः १८
कुर्यादहि विशेषेण अन्यथा तु न कारयेत्
मोहेनान्येन कुर्याश्चेत्ग्रामदेब्जाशनं ध्रुवम् १९
तस्मात्सर्वप्रयत्नेन कुर्यात्पूर्वानुसारतः
एवं विधि प्रकारेण प्रतिष्ठोत्सवं तु कारयेत् २०
अन्यस्मिन् चोस्सवे कालेप्येवमेव हि कारयेत्
ध्वजारोहणपूर्वं तु भेरीताडनपूर्वकम् २१
अङ्कुरार्पणपूर्वं तु त्रिविधं प्रोच्यते मया
ध्वजारोहणपूर्वं तु मासनक्षत्रके कुरु २२
भेरिताडनपूर्वं तु यजमानस्य जन्मभे
अङ्कुरार्पणपूर्वं तु युद्धारम्भादिकल्पयेत् २३
अन्यत्पुण्यदिने कुर्यादङ्कुरार्पणपूर्वकम्
भेरिताडनपूर्वं तु कुर्याद्ग्रामाभिवृद्धयेत् २४
ध्वजारोहणपूर्वं तु क्षत्रियाणां प्रवृद्धये
अङ्कुरार्पणपूर्वं तु वैश्यशूद्रप्रवृद्धये २५
भेरिताडनपूर्वं तु प्रवक्ष्यामि समासतः
बालस्तम्भं च खदिरं देवदारुं च चन्दनम् २६
त्वत्सारे वा समायुक्तं हृदयादिक्रमेण तु
मध्ये ब्रह्मोदरं कुर्यादुभयोश्च समं भवेत् २७
एवं लक्षणसंयुक्तं पार्श्वयोः खिलसंयुतम्
वर्मेण बन्धयेत्सम्यग्युग्मेनैव विशेषतः २८
क्रमुकं वेणुदण्डं वा प्रासादसमदैर्घ्यकम्

द्विगुणं त्रिगुणं वापि वृषस्थलसमन्वितम्  २९
गोपुरान्तसमं वापि पञ्चविंशति हस्तकम्
चतुर्विं शति हस्तं वा त्रयोविंशति हस्तका  ३०
अवक्रन्निव्रणं चैव षोडशाङ्गुलनाहकम्
पञ्चादशाङ्गुलानाह चतुर्दश्याङ्गुलं व वा  ३१
यथालम्भेन नाहेन कुर्याद्दण्डस्य लक्षणम्
दण्डाग्रे ध्वज इष्टिं तु हस्तमात्रप्रमाणतः  ३२
दण्डन्तु नवधा कृत्वा एकभागेष्टियोजयेत्
षोडशाङ्गुलकं व्यासं तस्मादेकैकमङ्गुलम्  ३३
उत्तमं मध्यमं चैव अधमं च क्रमेण तु
षट् पञ्चषट्सप्त पर्वाणि अष्टपर्वाणि बुद्धिमान्  ३४
यष्टिनामग्रते स्थाप्य दण्डाग्रे तु दशाङ्गुलम्
नवाष्टाङ्गुलकं वापि तस्याग्रे कूर्चसंयुतम्  ३५
तस्मिन्वलयसंबन्धमथवा बन्धकक्रिया
दर्भमालाभिरावेष्ट्य पुष्पमालाभिरन्वितम्  ३६
एवमेव प्रकारेण ध्वजदण्डं हि कारयेत्
जलेनैवाभिषेकं तु पावमानेन प्रोक्षयेत्  ३७
यात्रारोहणकाले तु स्थापये ध्वजदण्डकम्
प्रासादपुरतो वापि बाह्यपीठस्य चाग्रतः  ३८
पीठगोपुरयोर्मध्ये वृषाग्रे वृषपृष्ठके
बिलं कृत्वा तु तस्यैव चतुस्तालप्रमाणतः  ३९
गोमयालेपनं कृत्वा सर्वधान्यानि निक्षपेत्
सुवर्णकलशं क्षिप्त्वा प्रासादेन तु मन्त्रतः  ४०
स्थापये ध्वजदण्डं तु दण्डामूले तु वेदिका
सप्तषट्पञ्चवेदीश्च तलैश्चैव तु विस्तरम्  ४१
उत्सेधं तत्समं कृत्वा पादोनं वा तदर्धकम्
तदूर्ध्वे पद्मसंयुक्तं दलाष्टकसमन्वितम्  ४२
पालिकाभिरलङ्कृत्य पादवर्गैश्च शोभितम्
शिलाभिरिष्टकाभिर्वा मृण्मयेनाथकारयेत्  ४३

एवमेव प्रकारेण ध्वजवेदीं तु कारयेत्
स्थान संकटदेशे तु यथालाभं तु वेदिका  ४४
षट् हस्तं सप्तहस्तं वा अष्टहस्तमथापि वा
नवहस्तसमायुक्तं ब्राह्मणादिक्रमेण तु  ४५
विस्तारं पञ्चभागैकं षट्सप्तचतुरोऽपि वा
विस्तारेण समायुक्तं पुच्छतस्यार्धं शिखरं भवेत्  ४६
कटिकद्वयसंयुक्तं पार्श्वयोः कर्णसंयुतम्
श्वेतं रक्तं तथा पीतं श्यामं चैव यथा क्रमम्  ४७
अश्छिन्नमुत्तमं प्रोक्तं सच्छिन्नं भूषणान्वितम्
ध्वजं पटस्य तन्मध्ये वृषभं च मनोरमम्  ४८
शिल्पिकर्मवसाने तु पुण्याहं तत्र वाचयेत्
प्रासादपुरतो वापि स्नानमण्टपमध्यमे  ४९
स्थण्डिलक्रममार्गेण स्थण्डिलानि च विन्यसेत्
अस्त्रं तु पश्चिमे स्थाप्य अस्त्रमन्त्रेण चार्चयेत्  ५०
तस्याग्रे कलशं स्थाप्य सकूर्चा सापिधानकान्
सवस्त्राश्च हिरण्यंश्च गन्धपुष्पादिभिर्यजेत्  ५१
तस्याग्रे कौतुकं स्थाप्य गन्धपुष्पादिभिर्यजेत्
लोकपालान्समभ्यर्च्य मध्ये वृषभसंयुतम्  ५२
वृषगायत्रिमन्त्रेण वृषकुम्भं समर्चयेत्
तस्याग्रे वृषभं पूज्य वृषगायत्रिमन्त्रतः  ५३
तस्याग्रे भेरिमभ्यर्च्य नन्दिगायत्रिमन्त्रतः
अष्टौ गणेश्वरान्सम्यग्भेर्यास्तु परितो न्यसेत्  ५४
चरून्निवेदयेत्तत्र नन्दिगायत्रिमन्त्रतः
आचार्यस्ताडयेत्पूर्वं पूर्वाभिमुखसंस्थितम्  ५५
वाद्यकस्ताडयेत्पश्चाद्देवाभिमुखसंस्थितम्
वृषतालादिसंयुक्तं नन्दिगायत्रमन्त्रतः  ५६
भेरिभिर्मर्दलैश्चैव काहलै जधघण्टकैः
मुहुर्मुहुश्च वाद्यानि ताडयेद्देवसन्निधौ  ५७
सर्वालङ्कारसंयुक्तं ध्वजं चास्त्रविशेषतः

विमानप्रदक्षिणं कृत्वा पश्चाद्ग्रामप्रदक्षिणम्  ५८
ब्रह्माद्यैशयनपर्यन्तं ब्रह्मतालादिकं क्रमात्
ताडयेत्तेन मन्त्रेण वाद्यकश्च विशेषतः  ५९
ग्रामाग्राहरयेद्विद्वान् दिवाताडनकं यदि
तयो होमं बलिन्नैव नगरादिषु योजयेत्  ६०
ध्वजारोहणपूर्वं तु रात्रिभेरिं तु ताडयेत्
अङ्कुरार्पणपूर्वं तु तद्दिने सकलं नयेत्  ६१
प्रतिष्ठोत्सवकाले तु बलिहोमादिकं विना
पश्चात्प्रासादमावेश्य पूर्वस्मिन्स्थण्डिलं नयेत्  ६२
अस्त्रं चैव पटं चैव अर्चयेद्गन्धपुष्पकैः
स्थलिकायां पटं ग्राह्यं कुर्याद्ग्रामप्रदक्षिणम्  ६३
सर्वमङ्गलसंयुक्तं जयशब्दसमन्वितम्
पुण्याहशब्दसंयुक्तं ध्वजदण्डस्य पार्श्वके  ६४
वृषगायत्रिमन्त्रेण पटं वै रोपयेत्क्रमात्
अथवा बन्धमार्गेण दण्डं वै कारयेत्क्रमात्  ६५
पश्चाद्वेदिं प्रकल्प्याथ पूर्वोक्तविधिना सह
स्नपनं कारयेद्वेद्यां स्वस्वैः नामादिभिः बुधः  ६६
पञ्चवर्णहविर्दद्याद्वृषगायत्रिमन्त्रतः
नारीणां च विशेषेण श्राद्धा पूर्वा हि कारयेत्  ६७
अधिवासनपूर्वे तु नवमे सप्तमे निशि
पञ्चमे वा तृतीये वा अङ्कुरं यागमण्टपे  ६८
प्रासादपुरतो वापि शङ्करे सोमदेशके
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्  ६९
तन्मध्ये वेदिकां कुर्यान्नवाहे भागेकभागिकम्
त्रिहस्तं तु त्रिहस्तं वा वेदिकाव्यसमुच्यते  ७०
रत्निमात्रसमुत्सेधं अथवा द्वादशाङ्गुलम्
अष्टाङ्गुलसमुत्सेधं दर्पणोदरसन्निभम्  ७१
वेदिकाबाह्यदेशे तु नवपञ्चैकमेव वा
वृत्तं च्च चतुरश्रं वा कुण्डानि कारयेत्क्रमात्  ७२

हस्तमात्रप्रविस्तारं खान्तं तत्सममुच्यते
त्रिमेखलसमायुक्तं द्विमेखलमथापि वा ७३
कुण्डं पत्तनमार्गेण कुण्डं कुर्यात्तु देशिकः
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पावमानकैः ७४
तोरणादि चतुर्दिक्षु दर्भमालाभिरावृतम्
वितानध्वजसंयुक्तं फलपल्लवशोभितम् ७५
अष्टमङ्गलसंयुक्तं दशायुधानि विन्यसेत्
एवं विधिप्रकारेण कुर्याद्वै यागमण्डपम् ७६
मूलप्रासावद्वारं यागशालां विधीयते
अस्तमानात्परे काले अङ्कुरार्थं मृदं गृहेत् ७७
पालिका घटिका चैव शरावां च त्रिधा भवेत्
वितानध्वजसंयुक्तं कौतुकं चास्त्रमेव तु ७८
ग्रामप्रदक्षिणं कृत्वा पूर्वे वा पश्चिमोत्तरे
शुद्धस्थानं तु संग्राह्य हृदयेन समर्चयेत् ७९
पुण्याहं वाचयेत्तत्र कुन्दाल्यां खनयेन्मृदम्
सर्वालङ्कारसंयुक्तं प्रासादं तु प्रवेशयेत् ८०
नित्यकर्मवसाने तु अङ्कुरार्पणमारभेत्
स्थण्डिलं कारयेत्तत्र अङ्कुरानर्पयेद्बुधः ८१
यागार्थं दीक्षितं बिम्बं अस्त्रं चैव विशेषतः
त्रयं वापि द्वयं वापि एकं चैव विधीयते ८२
रक्षाबन्धं ततः कृत्वा यागस्थाने प्रवेशयेत्
स्थण्डिलं क्रममार्गेण स्थण्डिलादीन्समर्चयेत् ८३
मध्यमे शिवकुम्भं तु सकूर्चं सापिधानकम्
सहिरण्यं सवस्त्रं च स्थापयेच्छिवमन्त्रकम् ८४
शिवकुम्भस्य वामे तु वर्धनि स्थापयेत्तदा
अष्टौ कुम्भानि परितः स्थापयेद्विधिमार्गतः ८५
पुण्याहं वाचयेत्तत्र पावमानेन प्रोक्षयेत्
मूललिङ्गान्समावाह्य दशकुम्भेषु योजयेत् ८६
दशकुम्भान्समादाय गन्धादिभिरलङ्कृतम्

धामप्रदक्षिणं कृत्वा यागस्था निवेशयेत्  ८७
आवाहनक्रमेणैव देशिकेनैव स्थापयेत्
वेदिका वायुदिग्भागे अस्त्रं चैव समर्चयेत्  ८८
कुण्डस्य दक्षिणे भागे यागकुम्भं तु विन्यसेत्
पश्चाद्धोमं प्रकुर्वीत ईशान्यां दिशिमाश्रितः  ८९
शिवाङ्गं शक्तिभिर्मत्रै विद्याङ्गै क्षुरिकोपरि
एकैकाष्टादशां हुत्वा तिलसर्षपलाजकैः  ९०
माषमुद्गगुणं चैव होमयेद्देशिकोत्तमः
होमकर्मसमाप्ते तु प्रोक्षयेन्मूलदेवता  ९१
हविर्निवेदयेत्तत्र अस्त्रदेवादिषु क्रमात्
होममाद्यै होममध्ये होमान्ते बलिमुद्धरेत्  ९२
अस्त्रं चैवान्नलिङ्गं च चन्द्रशेखर संयुतम्
वीरशान्तिकमेवोक्तं योगं षौष्टिकमुच्यते  ९३
ग्रामप्रदक्षिणं कुर्यात्सर्वालङ्कारसंयुतम्
ब्रह्माद्यै शयनपर्यन्तं स्वैस्वैर्मन्त्रैर्बलिं ददेत्  ९४
ईशानट्यस्त्रपर्यन्तं पूर्वमन्त्रैर्बलिं ददेत्
प्रथमं भूतरात्रं तु द्वितीयं पवित्रकं भवेत्  ९५
तृतीयं यक्षरात्रं तु नागरार्थं  चतुर्थकम्
पञ्चमं राक्षसं देवं षष्टं गान्धर्वमुच्यते  ९६
सप्तमं तु पिशाचानां रात्रिभेदं प्रकीर्तितम्
शुद्धान्नं दधिसंयुक्तं सर्वस्मिन्दिवसे ददेत्  ९७
प्रातः सायं बलिं दद्यात्सर्वालङ्कारसंयुतम्
यागशालां प्रविश्याथ पश्चाद्बिम्बं प्रतिनिग्रहेत्  ९८
एकं वापि त्रयं वापि कुर्याद्ग्रामप्रदक्षिणम्
नृत्तगेयसमायुक्तं नानावाद्यसमायुतम्  ९९
परिवेषक्रमं कुर्यात्सर्वालङ्कारसंयुतम्
आस्थानमण्टपे सम्यक्कौतुकादीनि स्थापयेत्  १००
रङ्गमण्टपमावेष्ट्य स्नानद्रव्यं तु सङ्ग्रहेत्
यात्रश्रमविनाशार्थं  बिम्बसंस्नापयेत्क्रमात्  १०१

गन्धपुष्पादिभिः पूज्य देवं देवि विशेषतः
हविन्निवेदयेत्पश्चात्पूर्वोक्तविधिना क्रमात् १०२
अन्यथा पूजयेत्तत्र वाभिचारय चैव हि
एवमेव प्रकारेण कारयेत्तु दिनं प्रति १०३
तीर्थानि पूर्वरात्रौ तु नृत्तबिम्बं विशे ++
तिलदानादिकान्सर्वान्दापयेन्नृतसन्निधौ १०४
घृतं च दर्शयेत्तत्र शुद्धहोमसमन्वितम्
देशिकायाप्रदातव्यं घृतपात्रसमायुतम् १०५
पुण्याहं वाचयेत्तत्र ब्रह्मघोषसमन्वितम्
ब्रह्माण्यभ्यर्च्य दातव्यं दूर्वाय सहितेन च १०६
शिवमार्गविधिस्तत्र पञ्चवर्णं हविर्ददेत्
पश्चात्ताम्बूलदत्वा तु हृदयेन तु मन्त्रतः १०७
अलङ्कारादिभिः भूष्य नृत्तबिम्बविशेषतः
सर्वगन्धसमायुक्तं गन्धं वै स्थापयेत्क्रमात् १०८
हृदयेन तु मन्त्रेण सर्वाङ्गेषु च लेपयेत्
अम्बिकायां ददेत्पश्चात्गौरिगायत्रिमन्त्रतः १०९
पश्चाद्भक्तजनानां तु गन्धं दद्यात्पृथक्पृथक्
एवमेव विधानेन कुर्याद्वै देशिकोत्तमः ११०
सर्वालङ्कारसंयुक्तं सर्वतोद्यसमन्वितम्
सहिते सहितं कुर्याद्भिन्ने भिन्नं तु कारयेत् १११
रथेवा शिबिकाया वा देवदेवं नयेत्क्रमात्
ब्रह्मस्थानसमीपे तु यात्रा नृत्तं समीपतः ११२
ग्रामस्याभिमुखं सम्यग्देवदेवं निवर्तनम्
पश्चाद्धोमं बलिं कुर्याद्यागार्थं कौतुकं नयेत् ११३
परिवेषक्रमं साम्ये प्रभूतं च हविर्ददेत्
ग्रामप्रदक्षिणं रात्रौ सूर्योदयात्परातद ११४
एवं हि नृत्तयात्रं च अपरे वनयात्रकम्
कौतुकं बन्धयेद्रात्रौ यागार्थं कौतुकं नरा ११५
पूर्वस्मिन्कौतुकं कृत्वा तीर्थाह्नश्वस्तने नयेत्

होमं बलिविना सम्यक्तीर्थानश्च स्तने बुधः  ११६
तीर्थाह्नपूर्वकाले तु होमं बलिं प्रकारयेत्
यागार्थं  तीक्षितं बिम्बं वनयात्रं समारभेत्  ११७
उत्सवभ्रमणान्ते +++ ग्रामबाह्ये नयेत्क्रमात्
किञ्चिदूरसमीपं वा वनयात्रार्थमण्टपम्  ११८
कारयेत्तु विशेषेण यथाविभवविस्तरम्
+++ स्मिन्देशे तु बिम्बं तु निर्माल्यविसृजेत्ततः  ११९
स्नापनं कारयेत्तत्र गन्धोदकं विशेषतः
प्रभूतं च हविर्दत्वा जनात्सर्वांश्च भोजयेत्  १२०
नानानटसमायुक्तं ना++लासमायुतम्
एवं दिवैव काले स्याराात्रौ बल्यन्तके क्रमात्  १२१
ग्रामप्रदक्षिणं कुर्याद्वनयात्रार्थबिम्बकम्
सर्वालङ्कारसंयुक्तं नानानटसमायुतम्  १२२
एवमेव प्रकारेण उत्सवं कारयेत्तदा
तीर्थसङ्ग्रहणार्थाय कौतुकं बन्धयेद्बुदा  १२३
ब्राह्मे मुहूर्ते तत्काले तीर्थसङ्ग्रहणं नयेत्
नद्यां वापि तटाके वा नवकुम्भानि विन्यसेत्  १२४
गन्धैः पुष्पादिभिः पूज्य स्वस्वैन्नामादिभिर्बुधः
अस्त्रं च स्नापयेत्तत्र अस्त्रगायत्रिमन्त्रतः  १२५
शङ्खध्वनिसमायुक्तं अस्त्रं यागे निवेशयेत्
पश्चाद्धोमं बलिं कुर्याद्बिम्बं सम्यक्परिभ्रमेत्  १२६
मुसलं लुखलं ग्राह्यं क्षालयेदम्भसा पुनः
गोमयालेपनं कृत्वा बिम्बाग्रे चतुर्हस्तकम्  १२७
विस्ताराय मतं तुल्यं चूर्णैनैव तु शोभितम्
धूपदीपाङ्कुरैर्युक्ते मध्ये यामं च निक्षिपेत्  १२८
लुखलं स्थापयेद्विद्वान्वस्त्रैः संवेष्टयेत्ततः
हरिद्राङ्गुलिकैर्युक्तं निक्षिपेल्लुखले पुनः  १२९
तस्य पश्चिमदेशे तु वस्त्रार्थं  स्थण्डिलं न्यसेत्
गन्धपुष्पादिभिः पूज्य अस्त्रबिम्बविशेषतः  १३०

ब्रह्मचारि गृहस्थो वा शिवभक्तगणादिभिः
चत्वाराष्टौ दशश्चैव धारयेत्समलङ्क्रमात् १३१
विद्याङ्गानि समुच्चार्य मुसलोर्ध्वे तु निक्षिपेत्
चूर्णं कुर्या महाप्रज्ञा पृथक्पात्रे विनिक्षिपेत् १३२
तैलचूर्णं पृथक्स्थाप्य गन्धपुष्पादिभिर्यजेत्
गन्धचूर्णं तदा तौ तु निक्षिपेल्लिङ्गमूर्धनि १३३
लिङ्गादिपरिवारान्तं तैलचूर्णं तु दापयेत्
घृतं शिरोर्पणं कुर्यादस्त्रबिम्बविशेषतः १३४
पश्चाच्चूर्णोत्सवं कुर्याद्ग्रामादिषु विशेषतः
अस्त्रं च कौतुकं चैव तीर्थयात्रं व्रजेत्क्रमात् १३५
बिम्बाभावे तु शूलं स्यात्तीर्थस्नानं समाचरेत्
तीरे समतलं कृत्वा स्थण्डिलं कल्पयेत्ततः १३६
स्थण्डिलोपरि संस्थाप्य त्रिशूलं च दशायुधम्
तदग्रे स्थण्डिलं कृत्वा स्थापयेत्कलशं नव १३७
मध्यमे शिवकुम्भं तु सकूर्चं सापिधानकम्
इन्द्रादि लोकपालाश्च इन्द्रादिदिक्षु विन्यसेत् १३८
गन्धादिभिः समभ्यर्च्य त्रिशूलं च दशायुधम्
कलशादीन्समभ्यर्च्य सवैः स्वैर्नामे विशेषतः १३९
पुण्याहं वाचयेत्तत्र सेचयेत्स्थापितोदकैः
गन्धादिभिः समभ्यर्च्य जलमध्ये प्रवेशयेत् १४०
अवगाह्य जले मध्ये त्रिशूलं च दशायुधम्
बिम्बं तु स्नपनं कृत्वा महाहवि निवेदयेत् १४१
पुनः प्रवेशयेत्तीरे शूलगन्धादिभिर्यजेत्
सर्वालङ्कारसंयुक्तं प्रासादं तु प्रवेशयेत् १४२
पूर्णाहुतिं ततो दद्यात्प्रासादेन तु मन्त्रतः
आचार्यो मूर्तिपैः सार्थं यागकुम्भां धरेत् क्रमात् १४३
मूलस्थाने ततो गत्वा लिङ्गं बाह्ये न्यसेत्क्रमात्
आवाहनक्रमेणैव स्वस्वैर्नामैश्च पूजयेत् १४४
प्रभूत हविषं दत्वा आचार्यं पूजयेत्ततः

अङ्कुरादि च तीर्थान्तं पूर्वाचार्येण कारयेत् १४५
अ ++ था कारयेत्तत्र कर्ता +++
स्नपनं कारयेत्तत्र यथाविभवविस्तरम् १४६
ध्वजवारोहणं कुर्याद्भक्तोत्स्वमधः परम्
पुषयागं ततः कृत्वा गुरुयागं ततः परम् १४७
प्रतिष्ठोत्सवमित्युक्तं स्नपनं च ततः शृणु
इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे प्रतिष्ठोत्सवविधिं नाम षडशीति पटलः

## कङ्कालप्रतिष्ठे

अतः परं प्रवक्ष्यामि परं कङ्काललक्षणम्
सर्वलोकहितार्थाय सर्वव्याधिहराय च १
सर्वशत्रुविनाशाय कङ्कालस्थापयेद्बुधः
सकलप्रतिमा चैव बिम्बबेरं तु जङ्गमम् २
एतानि बिम्बनामानि पर्यायवचनानि च
तेषां चलाचलं चैव द्विविधं स्थापनक्रमम् ३
चलं लोहादिभिः कुर्यादचलं शैलजादिषु
यानार्थमत्सवार्थं च लीलार्थं च छलं स्मृतम् ४
अचलं स्थापनार्थाय रूपलावण्यकारयेत्
चलानां द्विगुणं पुण्यं तस्मादचलमुच्यते ५
येन्यदप्यविशेषेण छलं चास्ति विशेषतः
आयुष्यं वर्धनि शैलसौभाग्यं च प्रयच्छिति ६
मणिजा सुखदाज्ञेय पुष्टि हैमजातया
रजता कीर्ति नृणां श्रिप्रदा सा तु पुत्रदा ७
श्रीकरि वृक्षसंभूता मृण्मयि सर्वकामदा
सुवर्णं रजताम्रां मारकूटं च पित्तलम् ८
शैलं वृक्षिमिद्रव्यं प्रति द्रव्यं वशात्फलम्
वृक्षादि हैमपर्यन्तं सहस्रं चोत्तरोत्तरम् ९
चित्रं च चित्रव्यर्धचित्रं च चित्रभासमिति त्रिधा
मानो मानप्रमाणस्तु युक्तं चित्रमिति स्मृतम् १०

अर्धावयवसंदृश्यं अर्धचन्द्रमिति स्मृतम्
वर्णकैः पटकाकुर्यादालिख्यां भासमुच्यते ११
ब्राह्मणानां हितां चित्रं नृपाणमर्धचित्रकम्
वैश्यानां भित्तिलोहं तु शूद्राणां पटलेध्यकम् १२
सर्वेषामेव जातीनां चित्रं प्रधानमुच्यते
सौम्यं रौद्रे तथा मिश्रं त्रिविधं भेदमुच्यते १३
सौम्यं त्रिभागिकं विद्याद्दाभङ्गं रौद्रमुच्यते
समभङ्गं तु मिश्रं स्यात्त्रिविधं चाकृतिं भवेत् १४
यानक्रमं तथा चैव उत्क्रान्तौ शीघ्रयानकम्
किञ्चिद्वेगमनाकारं सर्वेषां प्राणिना समम् १५
सौम्यं ग्रामे तु संस्थाप्य रौद्रं तु नगरे बुधः
मिश्रं पुरादिके स्थाप्य सौम्यं सर्वत्र देशके १६
रौद्रं ग्रामे न कर्तव्यं सौम्यं सर्वत्र देशके
रौद्रं ग्रामे न कर्तव्यं कर्तव्यं चेन्महद्भयम् १७
तस्मात्सर्वप्रयत्नेन + र ग्रामे न कारयेत्
चतुर्भुजसमायुक्तं श्वेतरूपं तु सौम्यके १८
रौद्रं तु मुक्तवर्णं स्याद्भिन्नाञ्जनमथापि वा
व + हस्तसमायुक्तं युद्धं विजयकृत्सदा १९
मिश्रं तु कृष्णवर्णं तु षट्करैश्च समन्वितम्
प्रत्येकमायुधं वक्ष्ये सर्वकामार्थसाधनम् २०
प्रद++दक्षिणे हस्ते वामहस्ते पृथक्पृथक्
ब्रह्मकङ्कालवीणां तु वामभागे तु विन्यसेत् २१
तस्य यष्टिं तु तेनैव दक्षिणे मृगलीलया
एवं सौम्य समाख्यातं रौद्रकं त्वधुनो शृणु २२
ऋज्वागतस्थितं देवं गमनोन्मुखकारणम्
डमरुं दक्षहस्ते वा वामहस्ते कपालधृक् २३
पिच्छं वै वामहस्ते तु दक्षिणे डुण्डुभं भवेत्
सौम्यमार्गेण संयुक्तं प्रभामण्डलसंयुतम् २४
ए + विधि प्रकारेण रौद्रं वै कारयेद्बुधः

प्रहारं चैव धृक्चैव कङ्कालं कृष्णरूपकम्  २५
डमरुकं च कपालं च मिश्रमार्गेण कारयेत्
त्रिणेत्रं चतुर्भुजबाहुं जटामकुटसंयुतम्  २६
कुण्डलं दक्षिणे कर्णे चित्रपिण्डं तु वामके
व्याघ्रचर्माम्बरधरं सर्वाभरणभूषितम्  २७
नागावलयसंयुक्तं पुष्पमाल्यैरलङ्कृतम्
दक्षिणं वाममुद्धृत्य षड्विंशाङ्गुलमुद्धृते  २८
तस्माद्दशाङ्गुलं हीनं तस्माद्वै सप्तमङ्गुलम्
एवं त्रिभङ्गिकारं तु दक्षिणस्योद्धृतं क्रमम्  २९
उत्क्रान्तिके ततः कृत्वा नानामेव विधीयते
अपरं पादुकोत्सर्गं गायनं तु व्रजेद्ध -- म् ३०
दक्षिणाङ्गुष्टपुरतो यथास्तु पुरतस्थ्तिम्
एकविंशाङ्गुलं चैव पञ्चदश्याङ्गुलं तथा  ३१
दशाङ्गुलक्रमेणैव पुरस्ता++ जमंतथा
एवं क्रमेण कर्तव्यमुत्क्रान्तेर्यानमार्गतः  ३२
अन्यथा कारयेद्यानस्थाननाशन्धनक्षयम्
अङ्गारबिलिदानार्थं पार्श्वयोः पुरतस्थिताः  ३३
विलासिभिमसेनित्य विराञ्जि मोहिनि तथा
सुमुखि देवसेना च करिटिभूमघोषणि  ३४
एताभिर्योषितार्थाय्यं बलिपात्राणि चोधितम्
तासां शिरसि धाय्यान्ते नानावेषसमन्वितम्  ३५
त्रिणेत्राश्चतुर्भुजबाहुं देवतावर्णसन्निभम्
हस्ताभ्यां बलिधाय्यान्ते हस्ताभ्यां हृदयेञ्जलि  ३६
नमस्कारं च तान्कुर्वान् चञ्चलासनसंयुतम्
एवं विधिप्रकारेण कारयेदक्षको बुधः  ३७
तासां द्वित्रि च हीनास्तु बल्यर्थं कलितास्तु ता
आदावन्ते च हीनस्तु विराद्यास्तु विशेषतः  ३८
एवं सौम्यादिके स्थाप्य क्रमेणैव तु हीयते
समस्तजाया रुद्रेभ्यः मिश्रे जायेत कुर्वताम्  ३९

सौम्ये तु तद्वत्स्थानं स्यात्तासां वर्णानि दिग्वशात्
कुराडोदरं महाभूतं बृहद्भूतान्नभूतिकम् ४०
कालभूतं महद्भूतं दरिडभूतं च मुरिडकम्
एतानि चाष्टभूतानि पार्श्वयोः पुरतस्थिता ४१
त्रिणेत्रश्च चतुर्बाहुं बृहत्कायमहाबलम्
हस्ताभ्यां बलिपात्रं तु प्रत्येकं शिरसि स्पृशेत् ४२
अपरद्वयहस्ताभ्यां कृताञ्जलि पुटास्तुति
श्वेतं रक्तं तथा पीतं कृष्णं धूम्रर्कर्बुरम् ४३
हरिद्रं श्यामवर्णं तु प्रथमाभूतवर्णका
नानावक्त्रसमायुक्ता नानाभूषणसंयुता ४४
नानानागसमायुक्ता सौम्यादे पूर्ववत्क्षयम्
देवस्योपरि पार्श्वे तु यो नानापर्वतसंयुता ४५
नानावृक्षसमायुक्ता नानावाहनसंयुता
एवमेव प्रकारेण लक्षणं प्रविचारयेत् ४६
स्थान+दं प्रवक्ष्यामि समसाच्छृणु सांप्रताम्
पूर्वद्वारविमाने तु ऐन्द्रे वै पश्चिमानतः ४७
तदा वै जयकं कुर्याद्ग्रामे वैद्यज्ञवान्भवेत्
ऐशान्यां पुत्रवृत्यर्थं याम्यें वै चोत्तरानन ४८
ग्रामे तथैवमुद्दिष्टं ब्राह्मणानां हिताय वै
ऐशान्यां स्थापनीयं चेद्दक्षिणे नानमुच्यते ४९
पश्चिमाभिमुखं चेत्तु सर्वकामार्थसाधनम्
पावके पश्चिमं वक्त्रं स्थापयेद्वावहनप्रियम् ५०
ग्रामे च सस्यवृध्यर्थं याम्ये वै चोत्तराननम्
पूजानां फलमाप्नोति ग्रामे वै व्याधिनाशनम् ५१
ग्रामे शुभकरं सौख्यं सुभिक्षं पत्तनादिके
पश्चिमे पूर्ववक्त्रं तु धनधान्यसमृद्धिदम् ५२
ग्रामे वै वृष्टिसंभूतं वायव्यां तद्वदेव तु
फलं तथैवमाख्यातं ग्रामे च नगरेऽपि च ५३
यथोक्तं कारयेद्विद्वान्पत्तनादि यथार्हकम्

अन्यथा कारयेत्तत्र आचार्याय तथैव हि ५४
सौम्ये तु दक्षिणं वक्त्रं नृपाणां पुत्रवृद्धिदम्
ग्रामे सौभाग्यदं कुर्यात्सर्वारिष्टविनाशनम् ५५
किञ्चिद्विशेषं वक्ष्यामि पश्चिमद्वारगेहके
ऐशे महेन्द्र चाग्नौ तु पश्चिमाननमुच्यते ५६
पूर्वोक्तवत्फलं विद्याद्ग्रामादिषु विशेषतः
दक्षिणोत्तरयोर्वक्त्रं पूर्वद्वारेण मार्गतः ५७
पूर्वोक्तवत्फलं विद्याद्ग्रमादिषु निवासिनाम्
नैर्ऋत्यां स्थापयेद्देवं उत्तराननमुच्यते ५८
फलं तु पूर्ववद्विद्याद्वारुणे पूर्वतो मुखम्
वायव्यां दक्षिणे वक्त्रं तयो पूर्वत्रसिद्धिदम् ५९
अन्यथा स्थापयेद्वक्त्रं राजाराष्ट्रविनश्यति
प्राकारं भित्तिमाश्रृत्य तृतीयावरणाद्बहि ६०
एते दुक्तेषु देशेषु स्थापये स्थापयेकात्तमः
लोहद्यैश्च कृतं बिंबं प्रथमे मण्डले न्यसेत् ६१
द्वितीये मण्डले वापि मध्य पार्श्वे तु विन्यसेत्
अर्धमण्डलदक्षिण्यां उत्तरे वाधि पूजयेत् ६२
पञ्चानामपि सालानां अन्तर्द्देशे मनोरमे
नृत्तादिमण्डपे मध्ये पार्श्वे वा परिवेष्टके ६३
तलोपरि न्यसेद्बिम्बं नृत्तार्थं स्वामि पञ्चया
जलदेशे समानीय पुरा मे विन्यसेद्बुधः ६४
एवमेव प्रकारेण चलं सर्वत्र पूजयेत्
मध्यमस्य तु हारायां मध्यादायामथापि वा ६५
महामय्यादि पार्श्वे वा स्थापयेदचलं बुधः
मण्डपं मालिकाकारं शालाकारं विमानकम् ६६
शैलेष्टका मृदावापि कारये मण्डपादिकम्
सप्तहस्तनवाहस्तदशद्वादशहस्तकैः ६७
ब्राह्मणादिक्रमेणैवा सप्तमात्रतलादथ
उक्तप्राकारबाह्ये तु कारयेन्नं तु बुद्धिमान् ६८

कारयेद्यदि भेदेन कर्ता भर्त विनश्यति
तस्मात्सर्वप्रयत्नेन सूत्रमध्ये तु स्थापयेत् ६९
सूत्रान्तरे प्रतिष्ठा चेत्सर्वदोषं प्रकल्पयेत्
एवं विधिप्रकारेण कारयेदालयस्य तु ७०
अचलस्योत्तरे देशे चलचेतिष्टदेशके
अथवान्यप्रकारेण सूत्रमध्ये समार्गतः ७१
मध्यहाराय परितो मध्यसूत्रं तु पातयेत्
मध्यमस्याच्चतुर्दिक्षु कारयेत्सूत्रपातनम् ७२
तेषां तु मध्यमे स्थाप्य द्वारपार्श्वे न कारयेत्
द्वारगोपुरभित्तिस्तु वासानस्य तु पार्श्वके ७३
सालाभित्तिं समाश्रृत्य देवमानुषयोः पदे
स्थापयेत्पश्चिमं वक्त्रं प्राग्द्वारे गोपुरे बुधः ७४
पश्चिमे पूर्ववक्त्रं तु स्थापयेद्देशिकोत्तमः
कूटमण्टपशालानां मुखं ज्ञात्वा तु विन्यसेत् ७५
बिम्बस्य तु मुखं तद्वदन्यथा दोषकं विदुः
स्थानं शरीरमित्युक्तं बिम्बमात्मविधीयते ७६
अन्तराले न कर्तव्यं कर्तव्यं चेन्महद्भयम्
तस्मात्सर्वप्रयत्नेन प्राकारे सह योजयेत् ७७
परिवारचक्रवत्स्थाप्य कङ्कालं निश्चलं यदि
अन्यथा स्थापनं चेत्तु सर्वदोषकरं नृणाम् ७८
अचलं लिङ्गमानेन प्रासादस्य वशेन वा
कारयेद्वृषभैय्युक्तं दैविका ऋृषयोरपि ७९
स्वायम्भुवं प्रमाणस्य इति शास्त्रस्य निश्चियम्
पौरुषेणैव धामस्य कारयेत्तु चलं यदि ८०
आयादिन्लक्षयेत्तस्मिन् अचलस्य चलस्य तु
लिङ्गमानप्रमाणेन अचलस्य विधीयते ८१
गर्भमानादिभिर्मनै चलबिम्बं तु कारयेत्
अचलस्थापनकाले आयव्ययक्षयं क्रमात् ८२
लक्षयेत्तु विशेषेण कारयेच्चलमानके

प्रभूतमाने नेष्टस्तु चलाचलविधानयोः ८३
एवं परीक्ष्य बहुधा कारयेद्देशिकोत्तमः
उत्तमत्रयलिङ्गस्य मध्यमत्रयमार्गतः ८४
तेषामानप्रभूतेस्तु अधमानन्तकल्पयेत्
प्रासादमानदवश देवमेवं हि लक्षयेत् ८५
षट्सप्तत्र्यङ्गुलादूर्ध्वं महतो मानमुच्यते
अतो हीनं तु यामानं तम्मानं चाल्पमुच्यते ८६
एवमेव प्रकारेण महदल्पाभिलक्षयेत्
लिङ्गमानादिमानैश्च अल्पमानक्रियास्त्य च ८७
आयव्यय क्षकान्सर्वान्तस्मिन्काले तु लक्षयेत्
अथवान्यप्रकारेण लक्ष्यदोषशुभावहम् ८८
स्वायम्भुवस्य लिङ्गस्य मानं कुर्यात्तथार्हकम्
आयव्ययक्षकारादीन् चलबिम्बे तु नेष्यति ८९
अचले तु षट् शुभं वीक्ष्य कारयेदधिकं शुभम्
स्वायम्भुवस्य धामस्य मानेनैव विधीयते ९०
मूज्लबेरानुकर्मञ्चा उत्सवार्थं चलस्य तु
गृहार्चनायारम्भे तु आयादीनां तु दोषभाक् ९१
तस्मात्सर्वप्रयत्नेन यत्तदोषं हि लक्षयेत्
स्थानमाकारकं वर्णं दीर्घाकारं तु वाहनम् ९२
हस्तभेदविधानं च आगमोक्तेन कारयेत्
प्रमाणादिचतुर्मानं भूषणादीनि सर्वशः ९३
शिल्पिशास्त्रोक्तमार्गेण स्थापयेत्स्थपति बुधः
आगमाद्व्यतिरिक्तं तु सर्वधा कारणं न कृत् ९४
शिल्पिशास्त्राणि सर्वाणि समान्यमिति कथ्यते
तस्मिन् च्छैवोक्तमार्गेण स्थानादीन्कारयेद्बुधः ९५
अन्यथा कारयेत्तत्र राजा राजाष्ट्रं विनश्यति
एवमेव प्रकारेण पाशुपदादि सर्वशः ९६
ततः शास्त्रोक्तमार्गेण कारयेत्तद्देशिकः
देशिकस्यानुसारेण कारयेच्छिवतक्षक ९७

पूजाभागसमं दैर्घ्यमधमं प्रतिमं भवेत्
द्विगुणमध्यमा प्रोक्ता त्रिगुणा चोत्तमा स्मृता ९८
तेषां तु त्रित्रिधो मानं लिङ्गं स्वायम्भुवस्य तु
कर्णमानेन वा कुर्या नाहमानेन वा बुधः ९९
स्वायम्भुवादिरेव स्यात्पौरुषस्य स+साकम्
एवमेव प्रकारेण कारयेदचलस्य तु १००
लिङ्गप्रमाणस्याभावे गर्भगृहप्रमाण तु
तस्य प्रमानभावे तु धामादिभिर्विधीयते १०१
धामादीनामभावे तु मानाङ्गुलविधानतः
मानाङ्गुलस्य भावे तु यजमानस्य मानतः १०२
एकैकं नवधामानं भाजयेत्तत्समं बुधः
शिवालयादन्यदेशे कङ्कालं स्थापयेद्यति १०३
तस्य प्रदादमाना ++ कारयेत्तं विशेषतः
पूर्वदेवं प्रतिष्ठाप्य यजमाने + शेव तु १०४
कारयेत्तु विशेषेण दशतालक्रमेण तु
ग्रामे चैव चतुर्दक्षुनागरे चाष्टदिक्षु च १०५
स्थापयेत्तद्विशेषेण पत्तनादिषु तत्वहि
ग्रामे सौम्यं तु संस्थाप्य रौद्रं तु नगरे बुधः १०६
मिश्रं तु पत्तनाद्येषु स्थापयेच्छैलजादिभिः
लोहजाद्यैर्न कर्तव्यं कर्तव्यं चेत्तु दोषदम् १०७
कालान्तरस्य दोषेण शत्रुणारम्भणाय च
तस्मान्मोहादिभिर्नेष्ट ग्रालये तु न दोषभाक् १०८
ग्रामे पृष्ठमाशृत्य नगरे चननाश्रतम्
पत्तन+ दें नगर वाक्सौम्यादीनां यथाक्रमम् १०९
पूर्वोक्तफलमाप्नोति ग्रस्मिन्षड्यवमार्गतः
शिल्पिशास्त्रोक्तमार्गेण ग्रामादिषु विशेषतः ११०
सामान्यं तदाकुर्याद्ग्रामद्यास्तद्वदे ++
ग्रामस्याभिमुखं सौम्यं ग्रामाग्ने तु वथान्तरे १११
नगरादिषु यद्वत्स्यादेवमेवं विधीयते

चित्रस्याप्यर्धचित्रस्य शूलकर्म समाचरेत् ११२
चित्रभावस्य रूपस्य नास्तिशूलक्रिया ततः
चन्दनं चंपकं चैव स्रासनं देवदारुकम् ११३
खदिरस्तम्बकं चैव शूलवृक्षः प्रकीर्तितः
देवाग्नित्वक्रमाद्यादि दूषितं पतितं स्वयम् ११४
स्वयं कृष्कं च वक्रं च विद्युदा वा गजेन वा
हस्तं चापि विरूपं च वर्जयेद्यत्नतः कुरु ११५
जानसन्धि च स्थाने स्यादन्यत्राय च सन्धया
शूलस्य सन्धिकस्ये तु शखिभिन्ने च योजयेत् ११६
शरीरसन्धिवत्सन्धि कुर्याच्छिल्पिविचक्षणः
दारुशूलपरीहहं द्वादशाङ्गुलमेव तु ११७
उपाङ्गशूलाभित्तौ तु दण्डार्थमुपकल्पयेत्
अन्यच्छेदेन संधार्यात्सर्वसन्धि च योजयेत् ११८
मपशूलाग्रपृष्ठे तु विन्यसेत्तक्षको बुधः
स्थितस्य जानुसन्धिं तु कर्तव्यं न कदाचन ११९
दण्डास्त्रयोर्दशा प्रोक्ता तेषु द्वौ पाददण्डकौ
कटिदण्डं च वंशं च क्षो दण्डस्तथैव च १२०
बाहुदण्डौ च चत्वारौ प्रकोष्ठस्तावदेव तु
वृत्तानां तु तलं कुर्याद्दाम्रेणैव विचक्षणः १२१
श्वेतं रक्तौ तथा पीतं कृष्णं चैव चतुर्विधम्
ब्राह्मणादि क्रमेणैव मृदे विद्याविचक्षणः १२२
शूलानि सप्तद्रव्याणि सप्तधातुरिति स्मृता
गृहितोत्सेधश्रावं तु विंशते कूतकं भवेत् १२३
अष्टादशांशकं शूलमुत्सेधं अृतु क++कः
शेषांशेन च रज्वादीन्बन्धयेद्देशिकोत्तमः १२४
अस्य शूलस्य चोत्सेधं पञ्चविंशतिभाजयेत्
एकांशपूर्ववत्कुर्यात् शेषांशैः शूलदैर्घ्यकम् १२५
गृहीतोत्सेधमानं तु त्रयोविंशति भाजयेत्
एकांशेन तु रज्वादीन्बन्धयेत्तु क्रमेण तु १२६

एवं तु परितो वेष्ट्य पटेनैव समावृतम्
तस्मान्मृदा च लिप्याध वर्णाद्यैर्लेपयेत्क्रमात् १२७
एवं भागक्रमेणैव सौम्यादीनां विधीयते
गृहितोत्सेधमानं तु चतुर्विं शच्छताङ्गुलम् १२८
कारयेत्तु विशेषेण कङ्कालस्यैव बुद्धिमान्
अष्टौ मुखानि संकल्प्य भागाश्चत्वार एव तु १२९
मानमायादिमित्युक्तं प्रमाणं विस्मृतं भवेत्
उम्मानोन्नतं कुर्यात्परिणां नाहमुच्यते १३०
विष्कभं सोमपानं स्यात्सूत्रं तु लम्बमानकम्
मानहीने महाव्याधि अधिके शत्रुवर्धनम् १३१
उम्मानहिन्धनं हानि सर्वदोषकरं नृपाम्
परिन्ने हीने दारिद्रं विष्कम्भस्यात्तथा भवेत् १३२
सूत्रमानस्य हीने तु कर्तृनाशमवाप्नुयात्
देहलस्थाङ्गुलेनैव एकाङ्गुलाधिकं भवेत् १३३
हीनं वा तत्र कर्तव्यं अन्यथा दोषदं भवेत्
तस्मात्सर्वप्रयत्नेन एकाङ्गुलं च दोषभात् १३४
स्थापिते नो चनात्पूर्वे गुणदोषं विचारयेत्
दोषाधिक्ये तु यद्वेरं तद्वेरं तु न कारयेत् १३५
अनुत्तमलक्षणं बिम्बं प्रतिष्ठां न समाचरेत्
तस्मिन्देशैश्च वै तस्मात्तस्मात्परिहरे सदा १३६
एवं कङ्कालमाख्यातं प्रतिष्ठाकालमुच्यते
शिवबिम्बानि सर्वाणि प्रतिष्ठाकाललक्षणम् १३७
लक्षणैस्थापितं बिम्बं किञ्चिद्दोषं न लक्षयेत्
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने १३८
फाल्गुने ब्राह्मणास्योक्तं चैत्रमासे नृपस्य तु
वैशाखे वैश्यजातीनां ज्येष्ठायां शूद्रजन्मना १३९
सर्वेषामेव जातीनां पुष्यमासप्रशस्यते
त्रीण्युत्तराणि पुष्याश्च ब्राह्मणानां प्रशस्यते १४०
हस्ता श्रवणमूलानि क्षत्रियाणां विशिष्यते

स्वाति पौष्यानुराधाश्च वैश्यानां संप्रकीर्तिता १४१
अश्वनी शूद्रजातीनां शुभांशे तु प्रशस्यते
सर्वेषामेव जातीनां रोहिणी श्रवणं स्मृतम् १४२
पूर्वपक्षे तृतीय च द्वितीया ब्राह्मणस्य तु
पञ्चमी सप्तमी चैव क्षत्रियाणां विधीयते १४३
दशमी चैव वैश्यस्य शूद्रस्यैव त्रयोदशि
विथियतेति विप्राणां वारं हि गुरु शुक्रयोः १४४
आदित्यसोमयोर्वारं क्षत्रियाणां विधीयते
वैश्यस्य बुधवारं स्याच्छूद्राणां शनिरुच्यते १४५
विप्राणां क्षत्रियाणां च शक्तीनां स्थिरराशयः
वैश्यानां चैव शूद्राणामुच्यते युग्मराशयः १४६
शुभग्रहसमायुक्ता शुभयोगसमन्विता
नक्षत्राणि च राश्यन्ते उक्तमार्गेण कारयेत् १४७
प्रतिष्ठां कारयेत्तस्मिन्तेन तन्त्रेण देशिकः
कङ्कालस्थापनं प्रोक्तं भिक्षाटनमथ शृणु १४८

इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे काङ्कालस्थापनविधिं नाम एकोननवति पटलः

## त्रिशूलस्थापनम्

अथ वक्ष्ये त्रिशूलस्य लक्षणं स्थापनं तथा
सर्वलोकहितार्थाय सर्वशत्रु क्षयाय च १
धर्म्मोशस्करमायुष्य स्वर्गमुक्तफलप्रदम्
सर्वदेवमयं शूलं महाशस्त्रपरं हितम् २
यः शूलमर्चयेन्नित्यं स रुद्रत्वमवाप्नुयात्
आत्मार्थं च परार्थं च त्रिशूलं सम्यगर्चयेत् ३
सौवर्णं रजतं ताम्रं मृणमया दारुजं तु वा
लिङ्गमानेन वा गर्भमानेन द्वारतुङ्गतः ४
अस्ताङ्गुलेन मानेन यजमानप्रमाणतः
लिङ्गायामसमश्रेष्ठं चतुर्भागं त्रिभागतः ५

मध्यम द्वित्रिविख्यातं लिङ्गतुङ्गार्धमानतः
कन्यसं त्रिविधैकैक नवधामानमादिशेत् ६
नवांशे गर्भतारे तु समस्तैरुत्तमोत्तमम्
एकैकांशतमानेन नवधा समुदीरितम् ७
द्वारमानं तथैवं स्यात्स्तम्भमान तथैव च
सप्तहस्तपरं प्रोक्तं पञ्चहस्तं तु मध्यमम् ८
त्रिहस्तमधमं प्रोक्तं ++ कैकं त्रिविधा कृतम्
हस्तमानमिदं प्रोक्तमनाङ्गुलवशाच्छृणु ९
पञ्चांशं ++ गुलेनैव नवाङ्गुलसमन्वितम्
कन्यसं नवविंशश्च पूर्ववत्त्रित्रिधा भवेत् १०
पञ्चाङ्गुलात् + मारभ्य अङ्गुलाङ्गुलवर्धनात्
त्रयोविंशान्तकं यावन्नवधा क्षुद्रमानकम् ११
क्षुद्रमाने च आत्मार्थे विधानं कारयेद्बुधः
मात्राङ्गुलेन वा कुर्यात्पूर्वोक्तेनैव सङ्ख्यया १२
यजमानप्रमाणं तु नवधा कल्पयेद्बुधः
आयादि +++ सम्यग्यजमानानुकूलकम् १३
तस्मात्सर्वप्रयत्नेन आयाधिक्यं तु कारयेत्
तत्तदुक्तेर्चमानं तु त्रिद्व्येकाङ्गुलिभिस्तथा १४
हिनं वाप्यधिकं ++ तत्र ++ पुरातनैः
गृहितोच्चे तु चांशे तु चतुरंशके १५
एकभागेन पत्रं स्यादूर्ध्वभागे विशेषतः
तस्मादथाङ्गुलाधिक्यं म+ पत्रा ++ ते १६
पत्रोत्सेधष्टभागेशं पत्रविस्तारमुच्यते
पत्रमध्ये लिखेत्पन्नं मुखान्तद्विद्यते बुधः १७
उभयोः पार्श्वयोश्चैव अर्धचन्द्राकृतिर्भवेत्
संपूर्ण ++ वापि आयता वृत्तमेव वा १८
मध्यपत्रप्रमाणेन पार्श्वयोश्च विशेषतः
पश्चादुत्सेधपञ्चांशं फलकां शूलमूलके १९
गण्डिकाभिरलङ्कृत्य अङ्गुलेन यवेन वा

दराडमूले तु कर्तव्यं पादं वै लक्षणान्वितम्  २०
मध्यपत्रस्य द्विगुणं त्रिगुणं वा चतुर्गुणम्
पादस्य नाहमेवं स्यात् ++ पादे विशेषतः  २१
चतुरश्रे तदर्धेन पादपृष्ठे तु निम्नकम्
दराडमूले तु पद्मं स्याद्दशांशेनैव चोच्छ्रयम्  २२
षोडशाङ्गुलकं नाहं एकैकाङ्गुलहीनहकम्
यवद्वयलं तस्या ++++ हतः  २३
दारुजै नतु बन्धश्चे निर्वृणेन समन्वितम्
क्षुद्रशूले तु कर्तव्यं लोहजेन विशेषतः  २४
अन्तरालसमायुक्तं महतश्च विधीयते
यान्यान्य न च मानानि शिल्पिशास्त्रेण कारयेत्  २५
एवं लक्षणतः कृत्वा स्थापनं तु समारभेत्
आषाढे भद्रमासे च माघमासे विवर्जितः  २६
शेषेसु सर्वमा+ षु कारयेद्देशिकोत्तमः
येन मोक्षणं कुर्यात्स्नपनं नवकुम्भके  २७
अथवा कलशैर्वापि स्थापयेच्छलबिम्बकम्
पश्चाद्वै पञ्चगव्येन प्रोक्षयेत्पञ्चमन्त्र कः  २८
प्रतिष्ठा पूर्वकाले तु सप्तमे पञ्चमेऽपि वा
अङ्कुरानर्पयेद्विद्वान् शास्त्रदृष्टेन कर्मणा  २९
स्थापनात्पूर्वकाले तु जलेनै ++ वासयेत्
नद्यावाथा तटाके वा अन्ये वा जलसंचयेत्  ३०
ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम्
धामप्रदक्षिणं वापि कूपे चैवाधिवासयेत्  ३१
नववस्त्रेण संवेष्ट्य कूर्चेनैव समन्वितम्
जलमध्ये प्रपां कृत्वा गङ्गदीन्कलशेषु च  ३२
++मभिः समभ्यर्च्य शूलं चैवाधिवासयेत्
जलद्रोरायां गृहार्चयां क्षुद्रशूलं विशेषतः  ३३
पूजास्थानस्य चैशान्यां स्थरिडलं चतुरश्रकम्
गन्धपुष्पादिभिः पूज्य कुशैश्चैव परिस्तरेत्  ३४

तस्य मध्ये न्यसेद्भाण्डं शूलगायत्रिमन्त्रतः
तस्य भाण्डस्य मध्ये तु शूलं चैव तु विन्यसेत् ३५
परितः कलशानष्टौ स्थापयेद्देशिकोत्तमः
विन्यसेत्पद्मगङ्गादीन्पूजयेद्धृदयेन तु ३६
एकरात्रं द्विरात्रं वा त्रिरात्रं पञ्चर++
+++ तच्छलं मुक्तस्थाने विशेषतः ३७
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम्
दशद्वादशहस्तं वा नवहस्ताष्टहस्तकम् ३८
षोडशस्तम्भ +++++ मव च
द्विहस्तं वा त्रिहस्तं वा मध्ये वेदीं प्रकल्पयेत् ३९
रत्निमात्रमुत्सेधं दर्पणोदरसन्निभम्
कुण्डानि परितः कुर्या +++ तः ४०
वृत्तं वा चतुरश्रं वा सर्वकुण्डानि कारयेत्
एक कुण्डेन कर्तव्यं क्षुद्रशूलं विशेषतः ४१
वेदिका पू ++ भ +++++
गोमयालेपनं कृत्वा पञ्चचूर्णैरलङ्कृतम् ४२
दर्भमालाभिरावेष्ट्य वितानध्वजशोभितम्
एवं संकल्प्य विधिवज्जल+++ ४३
तीरे समतले चैव त्रिशूलं स्थापयेद्बुधः
शालिभिः स्थण्डिलं कृत्वा अष्टद्रोणैश्च शालिभिः ४४
अथवा च तदर्धैश्च तण्ड ++++
गन्धपुष्पादिभिः पूज्य शूलेनैव तु मन्त्रतः ४५
कृत्वा तु शयनं तत्र अण्डजाति क्रमेण तु
अथवा शुद्धवस्त्रेण शयनं तत्र का ++ ४६
+++ सच्छाद्य त्रिशूलं हि विशेषतः
गन्धपुष्पादिभिः पूज्य शयने विन्यसेत्ततः ४७
परितश्चाष्टकुम्भानि व+ दि शूलकान्तकान्
मध्यमे शू ++ न्यां शूलकुम्भकम् ४८
सवस्त्रान्कूर्चसंयुक्तान्सहैमान्वारिपूरितान्

मध्यादीशानपर्यन्तं यथाक्रमेण स्थापयेत्  ४९
गन्ध ++ वक्त्रमन्त्रेण देशिकः
दशायुधानि परितः मङ्गलानि विशेषतः  ५०
तोरणादि चतुर्दिक्षु पूर्णकुम्भैरलङ्कृतम्
पुण्याहं वाचये ++++त्  ५१
पलाशखादिराश्वत्थप्लक्षाश्च समिधा स्मृताः
चरुश्चैव तथालाजान्तण्डुलाश्च यवान्तिलान्  ५२
समिधा सद्यमन्त्रेण चरुवामेन +++
++रेण दान्तव्यं वक्त्रेण तण्डुलां हुनेत्  ५३
ईशानेन यवां हुत्वा प्रत्येकं चाष्टविंशति
द्रव्यान्ते व्याहृतिं हुत्वा त्रिशूलेनैव मन्त्रतः  ५४
++++++ शिरदादिविशेषतः
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्  ५५
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत्
स +++++ शूलसमुद्धरेत्  ५६
घृतच्छिरोर्पणं कृत्वा शूलगायत्रिमन्त्रतः
पूर्ववद्धोमं कृत्वा तु द्रव्यान्ते व्याहृतिं हुनेत्  ५७
+++++ त्वा त्रिशूलेनैव मन्त्रतः
सर्वालङ्कारसंयुक्तं शङ्खध्वनिसमन्वितम्  ५८
ब्रह्मघ्पोषसमायुक्तं स्तोत्रमङ्ग +++
+++ क्षिणं कृत्वा त्रिशूलं हि विशेषतः  ५९
वेदिका पश्चिमे भागे स्नानवेदीं प्रकल्पयेत्
तस्यास्तु मध्यमे शूलं पूर्वा + मु ++++  ६०
++++ यां वा शूलमन्त्रेण विन्यसेत्
आसनं कल्पयेत्तत्र पद्मासनं विशेषतः  ६१
वर्णन्यासं कलान्यासं शूलबिम्बे विशेषतः
पञ्च +++++ दादिं तु प्रदक्षिणम्  ६२
स्थापयेन्मूलबिम्बे तु स्वनामाभिर्विशेषतः
शुद्धोदकं पुनस्थाप्य त्रयम्बकेन तु मन्त्र +  ६३

गन्धपुष्पादिभिः पूज्य शूलगायत्रिमन्त्रतः
आनीय्यमण्डपे सम्यक्शुद्धवस्त्रेण वेष्टयेत् ६४
गन्धपुष्पादिभिः पूज्य शूलगायत्रिमन्त्रतः
प्रभूतं च हविर्दत्वा ताम्बूलं च निवेदयेत् ६५
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
ब्राह्मणान्भोजयेत्पश्चाद्यथाविभवविस्तरम् ६६
एवं यत्कुरुते मर्त्यः शिवलोके महीपते
अस्त्रवीर्यमवाप्नोति इह लोके विशेषतः ६७
अस्त्रगायत्रिमन्त्रेण नित्यं संपूजयेत्सुधीः
अचलस्थापने काले रत्नन्यासं तु कारयेत् ६८
प्रासादाग्रे तु संस्थाप्य शैलजं तु विशेषतः
उत्सवादिषु कालेषु यागस्थानं समानयेत् ६९
यागान्ते पूर्वदेशे तु त्रिशूलं पूजयेत्सुधीः
आत्मार्थे चैव देशे तु त्रिशूलं पूजयेत्सुधीः ७०
सर्वेषामेव चास्त्रेणां प्रधानं शूलमुच्यते
तस्माच्छूलं समभ्यर्च्य आत्मार्थे च परार्थके ७१
अस्त्राभावे सिंह्वापि अङ्कुशं शक्तिमेव वा
पूजान्ते तत्समभ्यर्च्य युद्धे विध्यमवाप्नुयात् ७२
तेभ्यो वीर्यत्वमाप्नोति पूजकश्च विशेषतः
व++ न्परार्थे आत्मार्थे शूलमर्चयेत् ७३
प्रथमावरणे विंशंति येनन्तमर्चयेत्
नन्दिनं तु तृतीये तु चतुर्थे इन्द्रमर्चयेत् ७४
पञ्चमे शूलम ++ तत्तद्देशे विशेषतः
इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे शूलस्थापन विधिं नाम नवति पटलः

पादुकास्थापनम्
अथातः संप्रवक्ष्यामि पादुकास्थापनं विधिः
कथयामि विशेषेण शृणुष्वेकाग्रमानसः १
सर्वेषामपि पूजार्थं पादुकास्थापनं विधिः

उत्तरायणकाले तु शुक्लपक्षे शुभे दिने २
++++ रजिते ताम्रैरन्यैर्लोहमयेस्तु वा
द्वादशाङ्गुलमानेन पादुकायाममुत्तमम् ३
अष्टसप्ताङ्गुलं चैव मध्यमं तु कनीयसम्
अष्टाङ्गुलं पञ्चम++ चतुरङ्गुलमुच्यते ४
कर्तुरङ्गुलमानेन षण्माने इच्छया युतम्
आयामद्विगुणं तारं पादाग्रस्य तु विस्तरम् ५
कुर्यात्तु पादुकां तत्र अयामद्धं तु विस्तरम्
पादुकाग्रस्य तु विस्तारं पदग्रं पृष्ठविस्तरम् ६
कारयेत्पादुका तत्र सर्वसंपत्करं भवेत्
अथवान्यप्रकारेण लिङ्गमानविधि शृणु ७
पूजाभागं चतुर्था शं पञ्चांशं अष्टमांशकम्
सप्ताष्टांशं नवांशं वा दशांशं द्वादशांशकम् ८
त्रयोदशांशकं वापि उत्तमादिस्त्रयस्त्रयम्
द्वयोः पादुकयोर्वापि ब्रह्मविष्णवाधिदेवता ९
पादुकाराधनं यस्माद्ब्रह्मविष्णवाधिपूजनम्
तस्मात्सर्वप्रयत्नेन पादुकास्थाप्य पूजयेत् १०
शिल्पिकर्मान्तरे वापि नेत्रोन्मीलं तु कारयेत्
शिल्पिनं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ११
इदं विष्णवेति मन्त्रेण क्षालयेत्पञ्चगव्यकैः
प्रतिष्ठारम्भपूर्वे तु सप्ताहे चाङ्कुरार्पणम् १२
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम्
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् १३
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
दर्भमालासमावेष्ट्य पुष्पमाल्योपशोभितम् १४
मण्टपस्य त्रिभागैकं वेदिकाविस्तरं भवेत्
रत्निमात्रसमुत्सेधं तालमात्रमथापि वा १५
वेदिकोपरि संकल्प्य स्थण्डिलं चतुरश्रकम्
तदूर्ध्वेदिति संयुक्तं दलाष्टकसमन्वितम् १६

दलस्योपरि संस्थाप्य पादुकं दक्षिणोत्तरम्
दक्षिणं पादुकं ब्रह्मा उत्तरे विष्णुदेवता १७
घृतं शिरोर्पणं कुर्यात्पावमाने + प्रोक्षयेत्
पार्श्वयोः स्थापयेत्कुम्भान्ब्रह्माणं तु वैष्णवम् १८
अर्चयेद्गन्धपुष्पाद्यै वस्त्रै वेष्ट्य पृथक्पृथक्
++ रितोष्ट घटान्स्थाप्य लोकपालान्समर्चयेत् १९
सकूर्चान्सापिधानाश्च सहिरण्य सवस्त्रकान्
वेदिकायास्तु परित++ ण्डं प्रकल्पयेत् २०
वेदाश्रं पूर्वदिग्भागे सम्यक्कृत्वा विशेषतः
अर्धचन्द्रं च याम्ये तु वारुणे वृत्तकुण्डकम् २१
पद्मकुण्डं ततस्सोमे चतुष्कुण्डं त्रिकुण्डं वा
चतुरं वृत्तमेव वा +++ र्योक्तमाचरे+ २२
कुण्डानि परितः कुर्यादोमया न तु लेपयेत्
शालिपिष्टकचूर्णाद्यैः पञ्चवर्णै सुलेखयेत् २३
अग्न्याधानादिकं सर्व ++ र्योक्तमाचरेत्
समिधाज्य चरूश्चैलाांजांश्च सर्षपं तिलम् २४
यवमाषकसंयुक्तं प्रत्येकं चाष्टविंशति
समिद् हृदयमन्त्रेण आज्यं हुत्वा ++ मन्त्रतः २५
आप्यायनेन मन्त्रेण चरुं हुत्वा विचक्षणः
लाजं हुत्वा तु घोरेण यवं हुत्वा तु नेत्रतः २६
सर्षपं सद्यमन्त्रेण तिलं हुत्वा तु वामतः
माषं हुत्वा शिखायां तु द्रव्यान्ते व्याहृतिं हुनेत् २७
ब्रह्माविष्णो स्वनामाद्यै जुहुयात्तु पृथक्पृथक्
पूर्णाहुतिक्रमादद्याद्दुद्धाप्य पादुकद्वयम् २८
वेदिकादुत्तरे भागे स्नानवेदि दुकारयेत्
रत्निमात्रं तु विस्तारं चतुरङ्गुलमुच्छ्रयम् २९
प्रोक्ष्याभिषेचनं कृत्वा स्वैस्वैः न्नामादिभिक्रमात्
गन्धादिभिः समभ्यर्च्य तथा होमान्तकर्मणि ३०
प्रभाते विमले चैव स्थापयेत्स्थापकोत्तमः

आचार्यं पूजयेत्तत्र स्वष्टान्तं होममाचरेत् ३१
नैवेद्यं दापयेत्तत्र ताम्बूलं दापयेत्ततः
ईश्वराग्रे तु संस्थाप्य नित्यपूजा समारभेत् ३२
ब्रह्म जिज्ञानमन्त्रेण इदं विष्णुक्रमे ++
++++ द्यै शिवपूजा समारभेत् ३३
तस्मात्सर्वप्रयत्नेन पूजयेत्पादुकां पुनः ३४

इति सूक्ष्मशास्त्रे प्रतिष्ठातन्त्रे पादुका +++ नवति पटलः

Reference (Pages 503-553) :
*Sūkṣmāgama*, Manuscript No. T1016 of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry. This transcript is copied from a manuscript with No. RE 10780 of the French Institute of Pondicherry.

## सूक्ष्मागमे उत्तरभागे

## क्रियापादः

श्रीजगद्गुरवः पञ्चाचार्याः प्रसीदन्तु

## प्रथमः पटलः

## कैलाशवर्णनम्

श्रीमत्कैलासशिखरे नानाद्रुमविराजिते
नानापक्षिसमाकीर्णे नानामृगसमाकुले १
सिद्धचारणगन्धर्वयक्षरक्षोगणैर्वृते
ब्रह्मादिभिर्देवगणैरिन्द्राद्यैर्लोकपालकैः २
योगिभिः सनकाद्यैश्च मुनिवर्यैः शुकादिभिः
नन्द्यादिप्रमथानां च गणैः संसेविते शुभे ३
सारूप्यादिपदं प्राप्तैर्महाभागैर्विराजिते
नानारत्नमये दिव्ये सुखैकफलदायके ४
विभ्राजते महाशृङ्गं सौवर्णं दिव्यमन्दिरम्
रत्नस्तम्भसहस्राढये तत्रस्थे मणिमण्टपे ५
सिंहासने समासीनं ब्रह्मेन्द्रादिसुरैर्वृतम्

पप्रच्छ पार्वती देवी शङ्करं लोकशङ्करम् ६
देव्युवाच
भगवन् देवदेवेश सर्वज्ञ परमेश्वर
त्वमेव श्रुतितन्त्राणां तत्त्वं जानासि शङ्कर ७
त्वन्मुखाम्भोजनिष्यन्दिसूक्तिधारामृतं प्रभो
पीत्वा श्रोत्रपुटाभ्यां तु तृप्तिर्मे नहि जायते ८
विविधानि च तन्त्राणि श्रुतानि बहुधा मया
तथापि चञ्चलं चित्तं बहुश्रवणकारणात् ९
तस्मात् संगृह्य सारांशं मोक्षमार्गैककारणम्
सम्यक् तत्त्वं विनिश्चित्य कारुण्याद्वद मे प्रभो १०
महेश्वर उवाच
सत्यमेतन्महादेवि यदुक्तं हि त्वयाऽनघे
अनन्ता निगमाः प्रोक्ताः शास्त्राणि विविधानि च
अमितानि पुराणानि विरुद्धानि परस्परम् ११
आगमा बहुधा प्रोक्ताः समस्तार्थावबोधकाः
एतैरन्योन्यभिन्नैश्च ज्ञानं सम्यङ् न जायते १२
तस्मात् सर्वार्थसंयुक्तं परमार्थावबोधकम्
सूक्ष्मतन्त्रमहं वक्ष्ये शिवज्ञानैकसाधनम्
समाहितेन मनसा तन्त्रं गोप्यमिदं शृणु १३
अस्ति कश्चित्स्वतः सिद्धः सच्चिदानन्दलक्षणः
नित्यो निरञ्जनः शुद्धो निर्मलो निरुपप्लवः १४
निर्गुणो नित्यसम्पन्नो निर्मायो निरुपाधिकः
अकायो भक्तकायश्च परात्परतरः शिवः १५
एको रुद्रः परंज्योतिः परमात्मा सनातनः
पुरुषः शाश्वतः स्थाणुरूर्ध्वरेतास्त्रियम्बकः १६
सादाख्यपञ्चकातीतो वेदवेदान्तगोचरः
षडध्वकर्ता देवेशः सर्वतत्त्वोपरि स्थितः १७
एवंरूपः परात्मा हि पशुपाशविमोचकः
शम्भुः कदाचिन्निजया प्रकृत्या लीलया स्वयम् १८

सृष्ट्यर्थं सर्वतत्त्वानां जगदुत्पत्तिकारणम्
योगिनामुपकाराय स्वेच्छयाऽचिन्तयच्छिवः १९
ध्यायमानात्ततो देवि पराशक्तिरजायत
आदिशक्तिस्ततो जाता पराशक्त्यंशभेदतः २०
आदिशक्त्यंशतः साक्षादिच्छाशक्तिरजायत
इच्छाशक्त्यंशभेदेन ज्ञानशक्तिरजायत २१
ज्ञानशक्त्यंशभेदेन क्रियाशक्तिरजायत
एकैव पञ्चधा भिन्ना निर्मला शिवचिन्तया २२
शिवस्तु सच्चिदानन्दलक्षणः परमेश्वरः
पूज्यपूजकभावेन निर्गुणः सगुणोऽभवत्
स च पञ्चविधः प्रोक्तः सादाख्यादिप्रभेदतः २३
पराशक्त्यादिशक्त्योश्च बिन्दुनादस्वरूपयोः
मेलने शिवतत्त्वस्य सादाख्यं समजायत २४
प्रथमं शिवसादाख्यममूर्तं तु ततोऽभवत्
ततः समूर्तसादाख्यं ततो वै कर्तृनामकम्
कर्मसादाख्यमपरं पञ्चसादाख्यमीरितम् २५
सदाशिवेशब्रह्मेश-ईश्वरेशानभेदतः
मूर्तयोः वै मता देवि सादाख्यापरनामकाः २६
तदेतत्त्रिविधं ज्ञेयं स्थूलं सूक्ष्मं परं तथा
लिङ्गमूर्त्यादिभेदेन दृश्यं स्थूलमिति स्मृतम्
योगिभिर्ज्ञानदृष्ट्या यद्ध्येयं तत्सूक्ष्ममुच्यते २७
नित्यं सत्यं चिदानन्दमव्ययं केवलं सुखम्
यद्रूपं तत्परं ज्ञेयं भक्तैः षट्स्थलवर्त्मभिः २८
निर्गुणः शिव इत्युक्तः सगुणस्तु सदाशिवः
सादाख्यश्च स एवोक्तो ध्यानपूजादिकारणम् २९
देही निर्गुण इत्युक्तो देहः सगुण उच्यते
एवमेव विजानीयाद् द्वयोर्भेदो न विद्यते ३०
नादरूपः शिवः प्रोक्तो बिन्दुरूपः सदाशिवः
नादबिन्दुयुतं रूपं ध्यानपूजादिकारणम् ३१

ततश्च पञ्चसादाख्यभेदं शृणु वरानने
देतत्सर्वं तत्स्वरूपं दृश्यादृश्यं विशेषतः ३२
शान्त्यतीतकलायुक्तं पराशक्तिसमुद्भवम्
प्रसन्नं सूक्ष्मरूपं च विद्युत्प्रभमनूपमम्
शुद्धं च शिवसादाख्यं सर्वतत्त्वालयं परम् ३३
शान्त्याख्यकलया युक्तमादिशक्तिसमुद्भवम्
अमूर्तं केवलं लिङ्गं भानुकोटिप्रकाशकम् ३४
तेजःस्तम्भायमानं स्यादमूर्तत्वादगोचरम्
ज्योतिर्लिङ्गं परं साक्षाद् ध्येयं शुद्धेन चेतसा ३५
विद्याकलासमायुक्तमिच्छाशक्तिसमुद्भवम्
मूर्तं मूर्तिधरं दिव्यं ज्वलदग्निसमप्रभम् ३६
लिङ्गरूपं चैकवक्त्रं नेत्रत्रयविराजितम्
सर्वावयवसम्पूर्णमेवं ध्येयं शुभावहम् ३७
प्रतिष्ठाकलया युक्तं ज्ञानशक्तिसमुद्भवम्
दिव्यलिङ्गं महादीर्घं स्फटिकाभं सदोज्ज्वलम् ३८
तन्मध्ये संस्थिता मूर्तिरीश्वरः सर्वकारणम्
चतुःशीर्षं चतुर्वक्त्रं चतुर्वर्णसुशोभितम् ३९
नेत्रैर्द्वादशभिर्युक्तं श्रोत्रैरष्टभिरञ्चितम्
अष्टभिर्बाहुभिर्युक्तं पादद्वयविराजितम् ४०
त्रिशूलं परशुं चैव खड्गं चाभयमेव च
दीप्यमानं स्वतेजोभिर्दधतं दक्षिणैः करैः ४१
पाशं नागं तथा घण्टां वरदं वामतः प्रिये
हस्तैश्चतुर्भिर्दधतं सर्वावयवसुन्दरम्
एवं तदैश्वरं रूपं लिङ्गं कर्त्रभिधानकम् ४२
निवृत्तिकलया युक्तं क्रियाशक्तिसमुद्भवम्
नादबिन्दुसमायुक्तं लिङ्गं सृष्ट्यादिकारणम् ४३
सर्वमन्त्रैकनिलयं पूज्यं देवासुरादिभिः
क्रियाविशेषतत्त्वाख्यं कर्मरूपमुदीरितम् ४४
कुन्देन्दुस्फटिकाभासं जटाजूटविराजितम्

शिरोभिः पञ्चभिर्युक्तं पञ्चाननसमन्वितम्  ४५
प्रत्याननं विशेषेण त्रिनेत्रं चन्द्रभूषणम्
दशभिर्बाहुभिर्युक्तं पादद्वयसुशोभितम्  ४६
पद्मसंस्थं महादेवं सर्वाभरणभूषितम्
दिव्यवस्त्रपरीधानं दिव्यायुधधरं शुभम्  ४७
शूलं च परशुं चैव खड्गं वज्राभये तथा
दधतं दक्षिणैर्हस्तैस्तथा वामकरैः शुभैः
नागं पाशं चाङ्कुशं च घण्टां वह्निं तथैव च  ४८
सर्वलक्षणसंयुक्तं चतुर्वर्गफलप्रदम्
नानारूपधरं देवं विविधैर्लक्षणैर्युतम्  ४९
अनेकलीलानिलयं कल्पितस्थानवाहनम्
नृत्तगीतविनोदाढ्यं देवदेवं महेश्वरम्  ५०
जटाजूटसमायुक्तं त्र्यम्बकं नीललोहितम्
पद्मासनसमासीनं ध्यायेदेवं महेश्वरम्  ५१
आदौ तस्य स्वयं लीलाः पञ्चविंशतिभेदतः
सृष्टिस्थित्यन्तकरणास्ताः शृणु क्रमशोऽधुना  ५२
शशिचूडमुमाकान्तं वृषारूढं च ताण्डवम्
वैवाहं च तथा भिक्षाटनं कामाङ्गनाशनम्  ५३
कालसंहरणं चैव पुरत्रयविनाशनम्
जलन्धरवधं चैव ब्रह्मदर्पनिवारणम्  ५४
वीरभद्रावतरणं हरिध्वंसमतः परम्
अर्धनारीश्वरं चैव किराताकारधारणम्  ५५
कङ्कालधारणं चैव चण्डेशानुग्रहं तथा
विषापहरणं चैव चक्रदानं ततः परम्  ५६
विघ्नेशवरदानं च सोमास्कन्दं तथैव च
एकपादं ततो ज्ञेयं सुखावहमतः परम्  ५७
दक्षिणामूर्तिरूपं च लिङ्गोद्भवमतः परम्
पञ्चविंशतिलीलाभिर्देवदेवो महेश्वरः
सृष्टिस्थितिलयाद्यैश्च विहारैः क्रीडतेऽनिशम्  ५८

अयमेव सदा ध्येयो यमाद्यष्टाङ्गसाधकैः
पूज्यः सदा भक्तिनिष्ठैर्भवाम्बुधितितीर्षुभिः
मन्तव्यो मननासक्तैर्मुमुक्षुभिरहर्निशम् ५९
किमत्र बहुनोक्तेन स एव परमेश्वरः
ततोऽधिकस्तत्समो वा देवो नास्ति वरानने ६०
एवमुक्तं समासेन तत्त्वं सिद्धान्तगोचरम्
तव प्रीत्या महादेवि किं पुनः परिपृच्छसि ६१
इति श्रीसूक्ष्मागमे क्रियापादे सदाशिवस्वरूपनिरूपणं नाम प्रथमः पटलः

## द्वितीयः पटलः

देव्युवाच
देवदेव विरूपाक्ष सर्वज्ञ करुणानिधे
अहमेव महादेवो मत्तोऽन्यो नहि विद्यते १
इति सर्वेषु तन्त्रेषु पूर्वमुक्तं त्वयाऽनघ
महेश्वर इति प्रोक्त इदानीं जगतांप्रभुः २
को वा देवः स विश्वेशस्तस्य वै केन हेतुना
रूपाणीमानि चित्राणि सञ्जातानि महात्मनः
एतत्सर्वं समासेन श्रोतुमिच्छामि तत्त्वतः ३
महेश्वर उवाच
अथोच्यते महादेवि यत्त्वया परिशङ्कितम्
संक्षिप्य कथ्यते सर्वं सादरं श्रूयतां प्रिये ४
यो वै महेश्वर इति प्रोक्तः सर्वजगत्प्रभुः
निर्गुणः सगुणश्चैव स एवाहं न संशयः ५
रूपाणि सन्ति बहुशो देवस्य परमात्मनः
तथाप्येतानि मुख्यानि तेषां कारणमुच्यते ६
व्योमकेशः शिवः प्रोक्तश्चन्द्रो व्योमाश्रितः सदा
चन्द्रधारणमेतस्य नियतं खलु भामिनि ७
पुरा कल्पान्तरे चन्द्रोऽप्रीतो दक्षसुतासु च

तदा दक्षेण चन्द्रस्तु शप्तो वै रोहिणीकृते ८
शापग्रस्तस्ततश्चन्द्रस्तपस्तेपेऽतिदारुणम्
शङ्करस्तपसा तस्य सन्तुष्टः प्राह चादरात् ९
वरं वरय भद्रं ते वरदोऽस्मि निशापते
शापभीर्माऽस्तु ते लोकं प्रकाशय पुनः करैः १०
कृतार्थोऽस्मि महादेव दर्शनादेव ते प्रभो
वरमन्यं न याचे मां भूषणत्वेन योजय ११
एवं सम्प्रार्थितं चन्द्रं दधार शिरसा शिवः
अनेन कारणेनासौ सोमधारीति गीयते १२
सृष्ट्यर्थं जगतां देवो निष्कलः सकलोऽभवत्
उमासहायतां प्राप्तस्तेन सोमः शिवः स्मृतः १३
स शिवोऽहमुमा शक्तिस्त्वमेव परमेश्वरि
त्वया सहाविनाभावात्सोमं मां परिचक्ष्यते १४
पुरा कल्पावसाने हि सर्वं संहृत्य शङ्करः
कृत्वोमां साक्षिणीं तस्मिन्नेक एव चचार ह १५
दृष्ट्वा धर्मस्तथाभूतं सर्वसंहारकारणम्
नाशयेन्मामिति भयात्तं रुद्रं शरणं गतः १६
अनुगृह्य तु तं देवो वाहनत्वे नियुक्तवान्
तस्य नित्यत्वमाज्ञाप्य तेनाहं वृषवाहनः १७
कल्पान्ते संहृतं कृत्वा जगत्स्थावरजङ्गमम्
ननर्त च महादेवः सुचिरं नृत्यलीलया
तेन ताण्डवमूर्तित्वं जातं देवस्य शूलिनः १८
पुरा लोकहितार्थाय उमायाः परमेश्वरः
हिमवद्दुहितुश्चक्रे पाणिग्रहणमादरात्
तया च लीलया लोके वैवाहीत्युच्यते शिवः १९
पुरा कल्पान्तरे ब्रह्मा मायया परिमोहितः
अहमेव परंब्रह्म मत्तोऽन्यो नहि विद्यते २०
इत्याद्यथर्ववाक्यानि जजल्पाऽहङ्कृतो विधिः
तं दृष्ट्वा शङ्करः क्रुद्धो नखाग्रैरच्छिनच्छिरः २१

शिरसस्तरसा तस्मात्प्रसम्ने रुधिरं बहु
तेनैवाजकपालेन धृत्वा तद्रुधिरं पुनः २२
ललाटशिखिना चैतच्छोषयित्वा ततः शिवः
तद्दाहशमनार्थं वै भिक्षाटनमथाऽकरोत्
ततो वै परमेशस्य लीला भिक्षाटनं गता २३
पुरा शक्त्या विरहितो ज्ञाननिष्ठोऽम्बिकापतिः
तपश्चचार तत्काले देवैः सम्प्रेषितः स्मरः २४
आगत्य तपसो विघ्नमारेभे पुष्पसाधकः
तं दृष्ट्वा कुपितो देवो ललाटाग्निकणेन वै
ददाह तेन लोकेऽभूत् कामारिरिति शङ्करः २५
पुरा मृकण्डुतनयः स्वकीयायुःक्षयाद्भयात्
सर्वदेवान् परित्यज्य जगाम शरणं शिवम् २६
अन्तकस्तमथो हन्तुमाजगामातिभीषणः
कर्णमाबध्य पाशेन मार्कण्डेयस्य धीमतः
चकर्ष किल तत्कालं देवः प्रत्यक्षतां गतः २७
शिक्षयित्वाऽन्तकं क्रूरं मार्कण्डेयमपालयत्
कालारिरिति विख्यातो लोके तल्लीलया शिवः २८
त्रिपुरो नाम दैत्यस्तु पुराऽसीदतिदारुणः
मायया निर्मितं तस्य विषमं च पुरत्रयम् २९
त्रिपुरं विष्णुबाणेन मेरुणा कार्मुकेण च
निगमाश्वयुजा सूर्यचन्द्रचक्रवता तथा ३०
ब्रह्मसारथ्ययुक्तेन रथेन जितवान् शिवः
त्रिपुरारीति तेनायं कथ्यते परमेश्वरः ३१
पुरा जलन्धरो नाम राक्षसोऽभूत्सुदारुणः
लोकत्रयं महादेवि बबाधे वरदर्पितः ३२
तथाविधं महादैत्यं पादाङ्गुष्ठकृतेन वै
चक्रेणानाशयद्देवो ररक्ष च जगत्त्रयम्
ततो हि प्रथितो लोके जलन्धरहरः शिवः ३३
ब्रह्मा कदाचित्कामान्धः स्वसुतामेव कामयन्

अन्यायवर्तनेनैव मृगो भूत्वाऽन्वधावत ३४
तथाविधमजं दृष्ट्वा व्याधरूपो हरस्तदा
विव्याध च महातीक्ष्णैस्तरसा तच्छिरः शरैः
तस्मादजारिरित्येवमभूत्सर्वेश्वरो हरः ३५
दक्षः प्रजापतिः पूर्वं शिवं त्यक्त्वाऽतिमोहितः
हयमेधेन वै विष्णुं यष्टुं समुपचक्रमे ३६
वीरभद्राकृतिर्भूत्वा भद्रकालीप्रियः शिवः
तथाविधस्य यज्ञस्य वैकल्यमकरोत् तदा
वीरभद्रावतरणं तस्मात्प्रोक्तं पिनाकिनः ३७
मस्त्यकूर्मवराहादिनारसिंहादिकान्पुरा
अवतारान्महाविष्णोः संहृत्य परमेश्वरः ३८
तत्तत्कल्पेषु भूषां च तत्तदङ्गान्यकल्पयत्
हरिध्वंसीति लोकेषु ततः ख्यातिं गतः शिवः ३९
शरीरार्धं मया दत्तं प्रीत्या ते वरवर्णिनि
ततो मामर्धनारीशं प्रवदन्ति विपश्चितः ४०
अनुग्रहाय शिष्टानां दुष्टानां निग्रहाय च
अर्जुनस्य च रक्षार्थं किरातवपुषा शिवः
चचार भुवि तेनायं किरातो रुद्र इत्यभूत् ४१
पुरा त्रैविक्रमं रूपं स्वीकृत्य परमाद्भुतम्
जित्वा बलिं महादैत्यमतिदृप्तोऽभवद्धरिः ४२
निरुन्धन् ववृधे सोऽयं सूर्यचन्द्रगतिं तथा
विजित्य तं महादेवः कङ्कालं तस्य सन्दधे
तस्मात्कङ्कालधारीति विश्रुतः परमेश्वरः ४३
पूर्वं चण्डाभिधं विप्रं पापिष्ठं पितृघातिनम्
तमनन्यगतिं देवि रक्षयित्वा सदाशिवः ४४
ददावस्य गणेशत्वं सारूप्यं च ततः प्रिये
चण्डेशानुग्राहकं च प्रवदन्ति शिवं बुधाः ४५
समुद्रमथनोद्भूतं गरलं चातिभीषणम्
कृत्स्नं जगत्त्रयं दग्धुं ववृधे प्रलयाग्निवत् ४६

तद्विषं चापि देवेशः कण्ठे धृत्वाऽखिलान्सुरान्
ररक्ष च जगत्कृत्स्नं सदेवासुरमानुषम्
कृपया शङ्करस्तेन विषसंहारकोऽभवत् ४७
जलन्धरवधार्थाय सृष्टं चक्रं सदाशिवः
स्वपूजां कुर्वते नित्यं सहस्रकमलैः शुभैः ४८
तथैकपुष्पलोपेन नेत्रार्पणविधायिने
विष्णवे तद्ददौ चक्रं तस्माच्छक्रप्रदो हरः ४९
विघ्नेशाय वरं दातुं प्रसादाभिमुखः शिवः
आविर्भूतस्ततो देवो विघ्नेश्वरवरप्रदः ५०
हिरण्याक्षसुतः पूर्वं बलवानन्धकासुरः
दर्पितो वरदानेन बाधते स्म जगत्त्रयम् ५१
भीता ब्रह्मादयो देवास्तुष्टुवुः परमेश्वरम्
तदा प्रसन्नो देवेशः पार्वतीस्कन्दसंयुतः ५२
अन्धकं तु विनिर्जित्य ररक्ष भुवनत्रयम्
सोमास्कन्दस्ततः प्रोक्तः परमात्मा सदाशिवः ५३
पुरा कल्पान्तरे रुद्रो जगत्स्थावरजङ्गमम्
संहृत्य लीलया देवश्चचारैकपदा प्रिये
तेनैकपादरुद्रोऽभूत् सर्वात्मा परमेश्वरः ५४
अथ सर्वगतः शम्भुर्दयालुर्भक्तवत्सलः
जगदाह्लादजनकं सर्वावयवसुन्दरम् ५५
रत्नकङ्कणकेयूरमकुटाद्यैरलङ्कृतम्
सर्वाभरणसंयुक्तं दिव्यमङ्गलविग्रहम् ५६
दधार परमं रूपं सुखैकनिलयं शिवः
सुखावहस्ततः प्रोक्तः शङ्करो लोकशङ्करः ५७
योगिनामुपकाराय वीतरागः पुनः शिवः
दक्षिणामूर्तिरूपेण वटमूलं समाश्रितः ५८
करस्फुरत्पुस्तकाक्षमालान्यस्तनिजेक्षणः
ज्ञानोपदेष्टा सर्वेषां मुनीनामभवद् गुरुः ५९
पुरा दिव्यं महालिङ्गं कारणत्रयकारणम्

शक्तिपीठसमायुक्तं नादबिन्दुकलान्वितम् ६०
ध्यानपूजास्पदं चैवमुद्भूतं ज्योतिरात्मकम्
तस्माल्लिङ्गोद्भवः प्रोक्तः शिवस्तु कमलानने
एवमादिप्रभेदैश्च लीला बहुविधाः श्रुताः ६१
स्वतन्त्रशक्तियुक्तस्य तस्य संकल्पमात्रतः
ब्रह्मादयः सुराः सर्वे तदीयाश्चैव शक्तयः
सम्भूताः कोटिसंख्याकास्तदाज्ञापरिपालकाः ६२
तस्मात्सर्वात्मकं देवं महेशं मां विदुर्बुधाः
अहमेव हि मन्तव्यो मन्त्रैः सर्वार्थसाधकैः ६३
एतस्मादधिको देवि समो वा नहि विद्यते
एवं शिवस्वरूपं ते कथितं मुक्तिदं मया
जगदुद्धारनिरते किं पुनः श्रोतुमिच्छसि ६४
इति श्रीसूक्ष्मागमे क्रियापादे शिवलीलास्वरूपनिरूपणं नाम द्वितीयः पटलः २

## तृतीयः पटलः

देव्युवाच
मन्त्राः कतिविधा लोके साधकानां फलप्रदाः
तेषु प्रशस्ता देवेश यावन्तः प्रचरन्ति वै
एतत्सर्वं समासेन कृपया कथयस्व मे १
महेश्वर उवाच
सप्तकोटिमहामन्त्रा विद्यन्ते लोकपावनाः
केचिन्मन्त्रा वैष्णवाश्च केचिच्छक्त्यधिदेवताः
केचिद्वै क्षुद्रदैवत्याः केचिन्मत्प्रतिपादकाः २
तत्तन्मन्त्राभिमानिन्यः साधकानां हि देवताः
फलं प्रददते देवि तद्भुक्त्वाऽयान्ति ते पुनः ३
मदीयानां हि मन्त्राणां ये वै जापकसत्तमाः
तेषामहं समुद्धर्ता जन्ममृत्युमहाभयात्
मदीयानेव मन्त्रांश्च जपेत्तस्माद्विचक्षणः ४

मन्त्राणामपि शैवानां मुख्या एकादश स्मृताः
तत्राघोरो महामन्त्रः सर्वाभीष्टप्रदो नृणाम् ५
तस्मादपि श्रेष्ठतरा मम पञ्चाक्षरी शिवे
अस्य मन्त्रस्य चैवान्ये उपमन्त्राः प्रकीर्तिताः ६
अस्यैव हि प्रभावेण वेदधर्माश्च शाश्वताः
इतिहासपुराणानि समस्ता आगमा अपि
प्रवर्तन्ते हि देवेशि सर्वलोकोपकारकाः ७
ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा
आदित्यादिग्रहाश्चैव लोका वै भूर्भुवादयः ८
गन्धर्वाः किन्नराः सिद्धा ये चान्ये देवयोनयः
पञ्चाक्षरप्रभावेण तिष्ठन्ति हि सनातनाः ९
अल्पवर्णसमायुक्तमधिकार्थमसंशयम्
सारात्सारतरं शैवं मन्त्रं मोक्षैककारणम्
सर्वसिद्धिप्रदं दिव्यं सर्वतत्त्वप्रकाशकम् १०
आद्यबीजमिदं देवि विद्यानामप्यशेषतः
सूक्ष्मात्सूक्ष्मतरं सारं वटबीजं यथा भुवि ११
मन्त्रोऽयं वाचि यस्यास्ति स एवाहं न संशयः
अस्य मन्त्रस्य वक्ष्यामि विधिमुद्धारपूर्वकम् १२
नमः पदं वदेत्पूर्वं यान्तं शिवपदं ततः
प्रणवेन समायुक्तं षडक्षरमिति स्मृतम् १३
वेदागमेषु सर्वेषु संस्थितोऽयं महामनुः
समस्तफलदस्तस्माज्ज्ञेयो वैदिकतान्त्रिकैः १४
यावन्तः शिवमन्त्राः स्युः परार्थैकपराः प्रिये
षडक्षरस्य ते सर्वेऽप्यर्थस्यैव प्रकाशकाः १५
प्रमाणभूतः सर्वेषां वेदोक्तत्वाद्विशेषतः
प्रणवेन युतो देवि मन्त्रराजः प्रकीर्तितः १६
शान्ताः सुशीला धर्मिष्ठाः सत्यव्रतपरायणाः
वेदमन्त्रैकनिरतास्तेषां ध्येयः षडक्षरः १७
कृतघ्नाः पापिनो ये च वेदमन्त्रबहिष्कृताः

श्रद्धामतिविहीनाश्च देयस्तेषां न जातुचित् १८
मदेकशरणा ये च मदाराधनतत्पराः
अपि वेदविरुद्धाश्च त एवात्राधिकारिणः १९
वैदिका अप्यभक्ताश्चेदन्यदेवार्चनापराः
अन्यलाञ्छनयुक्ताश्च ते तु नात्राधिकारिणः २०
येषु येषु महादेवि भक्तिरव्यभिचारिणी
योग्यास्त एव मन्त्रस्य भक्तिरेवात्र कारणम् २१
प्रणवेन विना दद्यात्स्त्रीशूद्राणामिमं मनुम्
यदि दद्यात्सप्रणवमुभयोः पतनं भवेत् २२
अस्य मन्त्रस्य वक्ष्यामि शृणु ऋष्यादिकं प्रिये
वामदेव ऋषिः पङ्क्तिश्छन्दो देवः शिवः प्रभुः २३
बीजं प्रणव एव स्यान्नमः शक्तिरुदाहृता
शिवाय कीलकं मोक्षे विनियोगः प्रकीर्तितः २४
प्रत्यक्षरमिदं गोप्यं शृणुष्वावहिताऽखिलम्
ऋषिश्छन्दो देवताश्च वर्णस्वरमुखानि च २५
गौतमोऽथ ऋषिश्छन्द गायत्री नन्दिदेवता
आद्यस्वरः पीतवर्णः पूर्वस्थं प्रथमाक्षरे २६
अत्रिर्नाम ऋषिश्छन्द उष्णिग् रुद्राधिदैवतम्
कृष्णवर्णोऽनुदात्तश्च द्वितीये दक्षिणाननम् २७
विश्वामित्र ऋषिश्छन्दोऽनुष्टुब्देवो हरिः प्रिये
धूम्रवर्ण उदात्तश्च पश्चिमास्यं तृतीयके २८
अथाङ्गिरा ऋषिश्छन्दो बृहती देवतात्मभूः
प्रचयः स्वर्णवर्णश्च चतुर्थे मुखमुत्तरम् २९
भारद्वाज ऋषिश्छन्दो विराट् स्कन्दोऽधिदेवता
स्वरितो रक्तवर्णश्च मुखमूर्ध्वं च पञ्चमे ३०
ततो न्यासविधिं वक्ष्ये समासाच्छृणु पार्वति
नकाराद्यैर्बिन्दुयुतैः पञ्चभिर्ब्रह्मभिः सह
चतुर्थ्यन्तैः कनिष्ठादिष्वङ्गुलीषु क्रमान्न्यसेत् ३१
एवं कृत्वा करन्यासमङ्गन्यासमथाचरेत्

मुखहृत्पादयुगलगुह्यशीर्षेषु च क्रमात् ३२
चतुर्थ्यन्तैरनन्तादिशक्तिधामादिभिः सह
षड्वर्णपूर्वकैर्न्यस्येत् षडङ्गानि यथाक्रमम्
न्यासमेवं क्रमात्कृत्वा ततो ध्यायेत मां शिवम् ३३
शुद्धस्फटिकसंकाशं चारुचन्द्रार्धधारिणम्
रत्नाकल्पोज्ज्वलं दिव्यं महेशं पार्वतीपतिम् ३४
परश्वेणवराभीतिहस्ताम्बुजमनोहरम्
पद्मासनसमासीनं रुद्रं देवगणैर्वृतम् ३५
व्याघ्रचर्मपरीधानं जटामण्डलमण्डितम्
गङ्गाधरं विरूपाक्षं पञ्चवक्त्रं सदाशिवम् ३६
वृषध्वजं विश्वनाथं सुप्रसन्नमुखाम्बुजम्
एवं ध्यात्वा हृदम्भोजे चिदातपविकासिते ३७
आवाहनादिषण्मुद्रा दर्शयित्वाऽथ साधकः
गन्धादिपञ्चमुद्राभिर्मानसैरुपचारकैः
पञ्चभिः पूजयित्वा तु जपेन्मन्त्रं निराकुलम् ३८
नदीतीरे पर्वताग्रे देवागारे विशेषतः
विविक्तदेशे निर्दोषे निर्भये निरुपद्रवे ३९
पद्मासने समासीनः प्राङ्मुखोदङ्मुखोऽपि वा
समकायशिरोग्रीवस्त्रपालस्यादिवर्जितः
शिवं ध्यायन् जपेद्देवि जीवन्मुक्तो न संशयः ४०
स जपस्त्रिविधः प्रोक्तो वाचिकोपांशुमानसैः
उच्चैस्ताल्वादिकस्पर्शाज्जपेत्स्पष्टपदाक्षरम्
सम्यक् श्रोत्रगतश्चैव स जपो वाचिकः स्मृतः ४१
शनैस्ताल्वादिकस्पर्शात्किञ्चित् स्पष्टपदाक्षरम्
जपेदीषत्कर्णगतमुपांशुः स जपो भवेत् ४२
मन्त्रार्थं मनसा ध्यायन् वर्णाद्वर्णं पदात्पदम्
आवृत्य गणनात्पूर्वं जपेन्मानस उच्यते
त्रयाणामपि चैतेषां वरं स्यादुत्तरोत्तरम् ४३
एवं जप्त्वा जपान्ते च षडङ्गन्यासमाचरेत्

ततो निर्याणमुद्रां वै प्रदर्श्य च समापयेत्  ४४
अथैतस्य प्रवक्ष्यामि पुरश्चरणमुत्तमम्
पञ्चलक्षं जपेद् देवि दीक्षितश्च विशेषतः  ४५
अनन्यतत्परो भूत्वा तावत्संख्यादशांशकैः
क्षीराज्यैस्तर्पयित्वाऽथ जुहुयात्तद्दशांशकम्  ४६
पायसैः शर्कराभिश्च माहेशांस्तु शिवव्रतान्
वेदमार्गैकनिरतान् सदाचारपरायणान्  ४७
स्वधर्मनिरतान् शान्तान् भोजयेत्तद्दशांशतः
एवंकृतो महादेवि पौरश्चरणिको भवेत्  ४८
ततः सिद्धमिमं मन्त्रं जपेन्नित्यमतन्द्रितः
अष्टोत्तरसहस्रं वाऽप्यष्टोत्तरशतं च वा
निर्धूय सर्वपापानि मम लोके महीयते  ४९
साधको यदि कामी स्यादिष्टान्कामान्प्रसाधयेत्
द्विसहस्रं जपं कुर्याद् रोगाणामपनुत्तये
आयुष्कामो जपेद्देवि त्रिसहस्रमिमं मनुम्  ५०
उत्तरोत्तरवृद्ध्यर्थं  जपेन्नित्यं सहस्रशः
मासत्रयं महादेवि सर्वकामानवाप्नुयात्  ५१
शतलक्षजपाद्देवि साक्षाच्छम्भुः स्वयं भवेत्
तस्मादयं सदा जप्यो भुक्तिमुक्तिफलेच्छुना  ५२
मुमुक्षुश्चेच्छिवासक्तचित्तो रागादिवर्जितः
शिवार्पणधिया कुर्याद्यथारुचि जपादिकम्  ५३
मुमुक्षूणां यथा शम्भुः संसारभयमोचकः
तथा षडक्षरो मन्त्रः संसारभयनाशकः  ५४
षडक्षरेण मन्त्रेण भक्त्या परमया युतः
सम्यग्लिङ्गार्चनं कुर्यान्मत्सामीप्यमवाप्नुयात्  ५५
लिङ्गार्चनस्य यावन्तो नियमाः कथितास्तु ते
षडक्षरार्चनविधेः कोट्यंशेनापि नो समाः  ५६
अनेन मनुना लिङ्गं सम्पूज्याष्टशतं जपेत्
तेन सर्वे महामन्त्रा जप्ता एव न संशयः  ५७

अनेन मन्त्रितं भस्म धारयेत्स्नानपूर्वकम्
गङ्गादिसर्वतीर्थेषु स्नातो भवति मानवः ५८
सूक्ष्मा क्रियाऽधिकफलं सर्वसाधारणं शिवे
विनाऽऽयासेन संसिद्धिः पञ्चाक्षरमहामनोः
अस्मादायासबहुलाः सर्वे मन्त्राश्च तत्क्रियाः ५९
अतो मन्त्रानशेषांश्च त्यक्त्वा क्लेशाधिकान् परान्
जपेत् षडक्षरं देवि सुलभं सर्वसिद्धिदम् ६०
अथाक्षमालिकायाश्च लक्षणं सविधानतः
वक्ष्ये शृणु वरारोहे मणीनां च विशेषतः ६१
अभङ्गुरा दृढाः स्निग्धा नवा दृष्टिप्रियाः शुभाः
श्रेष्ठा हि जपमालार्थं रुद्राक्षाः केसरान्विताः ६२
यदुन्नतं मणौ वक्त्रं पृष्ठं निम्नं स्थिरासनम्
मुखं पृष्ठं विदित्वैवं मालिकां घटयेत्सुधीः ६३
त्रिवृता पट्टसूत्रेण कार्पासेनाथवा पुनः
वक्त्रं वक्त्रेण सम्प्रोत्य पृष्ठं पृष्ठेन योजयेत्
मूले स्थूलानि सम्प्रोत्य सूक्ष्माण्यग्रे नियोजयेत् ६४
गोपुच्छवलयाकारां कृत्वा मालां सुशोभनाम्
मणीनामन्तरे ग्रन्थिः कर्तव्या वर्तनद्वयी ६५
न स्यात्परस्परं घर्षो यथा कुर्वीत साधकः
अन्योन्यघर्षणं देवि भवेज्जपविनाशकृत् ६६
मेर्वाख्यं योजयेदेकं मणिं मूलाग्रमन्तरा
परिवृत्य जपेन्मेरुं प्रदक्षिणपरिक्रमात् ६७
पुनर्मूलं समारभ्य न कुर्यान्मेरुलङ्घनम्
एवं कृत्वाऽक्षमालां तु संस्कुर्याद्देशिकोत्तमः ६८
पञ्चामृतैः पञ्चगव्यैरभिषिच्य यथाविधि
जपेत्पञ्चाक्षरं मन्त्रमष्टोत्तरसहस्रकम् ६९
वर्णात्मकं ततो ध्यात्वा दद्याच्छिष्याय देशिकः
एवं कृत्वाऽक्षमालां च जपेन्नित्यं न धारयेत् ७०
न क्षिपेदशुचिस्थाने न स्पृशेद्वामपाणिना

जपकाले जपं कृत्वा गोपनीया प्रयत्नतः ७१
न दर्शयेदक्षमालां दीक्षाहीननृणां प्रिये
प्रमादाद्दर्शनं कुर्यात्पुनः संस्कारमाचरेत् ७२
एवं संस्कृतया चाक्षमालया नियतः शुचिः
संकल्प्य च जपेन्नित्यं यावज्जीवं विधानतः
स एव पुरुषश्रेष्ठो भुक्तिं मुक्तिं च विन्दति ७३
पञ्चाक्षरीजापको हि यत्र तिष्ठति पार्वति
सादरं तत्र तिष्ठामि मम प्रियतरो यतः
तस्मात्सर्वं परित्यज्य जपेत्पञ्चाक्षरं शुभम् ७४
वेदाः साङ्गाः पुराणानि मन्त्राश्च बहवस्तथा
आगमा विविधा देवि विद्यास्थानानि यानि च
पञ्चाक्षरे प्रलीयन्ते निर्गच्छन्ति पुनस्ततः ७५
एतां पञ्चाक्षरीं बिद्यां हृद्यां मम समाश्रिताः
कलावपि प्रमुच्यन्ते महात्मानो दृढव्रताः ७६
पञ्चाक्षरे महामन्त्रे स्थितेऽपि कलिजा नराः
पतन्ति नरकं मूढा मायया परिमोहिताः ७७
महती खलु सा माया दुस्तरा त्रिगुणात्मिका
धर्मार्थकामैस्त्रिविधैर्जगद्व्यामोहकारिणी ७८
मदर्पणधिया येषां कर्मारम्भफलं शिवे
मदेकशरणा लोके मायामेतां तरन्ति ते ७९
अकामचित्तशुद्धानां श्रौतस्मार्तानुवर्तिनाम्
अनेकजन्मनामन्ते मयि भक्तिर्दृढा भवेत् ८०
येषां दृढा भवेद् भक्तिर्मदनुग्रहकारिणी
तेषां संजायते श्रद्धा मन्त्रे पञ्चाक्षरे शुभे ८१
नगानां हि यथा मेरुः सरसां सागरो यथा
सरितां च यथा गङ्गा पशूनां गौर्यथा वरा ८२
मणीनां कौस्तुभो यद्वल्लोहानां काञ्चनं यथा
तथा षडक्षरपरो मानुषेषु वरः प्रिये ८३
तस्मात्सर्वक्रियारम्भान्फलानि च विशेषतः

त्यक्त्वा षडक्षरपरो भवेन्नित्यं विचक्षणः ८४
एतावद्धि शिवज्ञानमेतावत्परमं पदम्
तस्योन्नमः शिवायेति सदा वाचि प्रवर्तते ८५
सकृत् प्रसन्नान्मोहाद्वा शिवायेत्यक्षरत्रयम्
उच्चरेद्यस्तस्य विघ्नाः सर्वे शान्तिं प्रयान्ति हि
प्रणवादिनमोऽन्तं चेत् किम्पुनः सर्वसिद्धिदम् ८६
सविधानं गुरुर्लब्ध्वा जपेद्यः सततं नरः
तस्य हस्तस्थितं विद्धि मत्पदं सम्पदां पदम् ८७
इदं रहस्यं पापघ्नं वेदानां सारमुत्तमम्
गोपनीयं महादेवि तव प्रीत्या प्रकीर्तितम् ८८
नास्तिकाय कृतघ्नाय भक्तिहीनाय जातुचित्
न वक्तव्यमिदं शास्त्रं श्रद्धाहीनाय शाङ्करि ८९
शिवभक्ताय शान्ताय विशेषादास्तिकाय च
वक्तव्यं हि प्रयत्नेन गुरुवाक्यरताय च ९०
एवमुक्तं समासेन पञ्चाक्षरमहामनोः
माहात्म्यं सविधानं ते किं पुनः श्रोतुमिच्छसि ९१
इति श्रीसूक्ष्मागमे क्रियापादे पञ्चाक्षरमन्त्रस्वरूपनिरूपणं नाम तृतीयः पटलः

## चतुर्थः पटलः

देव्युवाच
सर्वसिद्धिप्रदा मन्त्रास्त्वयोक्ता बहवः पुरा
तेषु सर्वेषु देवेश कुतः श्रेष्ठः षडक्षरः १
अस्य षड्वर्णहेतुत्वं सञ्जातं केन हेतुना
एतत्सर्वं समासेन कृपया वद मे प्रभो २
शिव उवाच
सम्यक्पृष्टमिदं देवि मन्त्रगोप्यं सुदुर्लभम्
तत्सर्वं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता ३
सर्वमन्त्रेषु मुखोऽयमाद्यः प्रणव ईरितः

सर्वेषामेव मन्त्राणां मातृस्थानमितीरितम् ४
सोऽयं पञ्चविधः प्रोक्तः साकल्यादिप्रभेदतः
साकल्यं प्रथमं प्रोक्तं शाम्भवं तु द्वितीयकम् ५
सौख्यं तृतीयमित्युक्तं सावश्यं तु चतुर्थकम्
सायुज्यं पञ्चमं प्रोक्तं भेदमेषां शृणु क्रमात् ६
सद्यादिपञ्चवक्त्रेषु जातं प्रणवपञ्चकम्
अकारो दक्षिणो ज्ञेयो वामगः स्यादुकारकः ७
मकारो मध्यगः प्रोक्तस्त्रिवर्णः प्रणवो भवेत्
तन्मध्ये तु हकारः स्यात्साक्षान्मोक्षप्रदः शिवः ८
आद्यस्वरः पञ्चमेन वर्गान्तेन च संयुतः
वियद्बीजसमायुक्तः प्रणवः परिकीर्तितः ९
अकारो ब्रह्मबीजं स्यादुकारो विष्णुबीजकम्
मकारो रुद्रबीजं च तेषां देहात्मकः शिवः १०
अकारः प्रकृतिश्चैवमुकारः पुरुषात्मकः
तन्नियन्ता मकारः स्यान्नादः साक्षात्सदाशिवः ११
इच्छाशक्तिरकारः स्यात्क्रियाशक्तिरुकारकः
ज्ञानशक्तिर्मकारः स्यान्नादः साक्षात्परः शिवः १२
अकारो रक्तवर्णश्च श्यामलः स्यादुकारकः
मकारः स्फटिकाभः स्याद्वर्णातीतः शिवाक्षरः १३
अकारो राजसः प्रोक्त उकारस्तामसात्मकः
मकारः सात्त्विको ज्ञेयो नादः स्यात्त्रिगुणात्मकः १४
अकारो ब्रह्मरूपः स्यादुकारो विष्णुरूपकः
रुद्रात्मको मकारः स्यादोङ्कारस्तु सदाशिवः
नादः परशिवो ज्ञेयः पञ्चदेवात्मकः स्मृतः १५
अकारं बिन्दुरूपं च जाग्रत्स्थमिति भावयेत्
स्वप्नस्थमथ जानीयादुकारं नादरूपकम् १६
सुषुप्तिस्थं मकारं च कलारूपं वरानने
ॐकारं शक्तिरूपं च तुर्यास्थमिति भावयेत् १७
तुर्यातीतस्थितं विद्याच्छिवं सर्वात्मकं परम्

योगिनां साधनमिदमोमित्येकाक्षरं परम् १८
आद्यं पञ्चमसंयुक्तं नादो मान्तेन संयुतः
साकल्यप्रणवो ज्ञेयः पूर्ववक्त्रसमुद्भवः १९
अ उ म ह = इति ।
स्वरादिपञ्चमयुतं षष्ठान्तं नादसंयुतम्
तृतीयसहितं देवि शाम्भवं दक्षिणोद्भवम् २०
अ उ म ह इ = इति ।
वर्गान्तं स्वरवर्णादिपञ्चमं नादसंयुतम्
तथा स्वरयुतं सौख्यं पश्चिमाननसम्भवम् २१
अ उ म ह इ = इति ।
आद्यं पञ्चमयुक्तं च नादो वर्गान्तसंयुतम्
एकादशयुतं प्रोक्तं सावश्यं चोत्तरोद्भवम् २२
अ उ म ह ए = इति ।
अकारः पञ्चमोपेतो वर्गान्तो नादसंयुतः
चतुर्दशस्वरोपेतं सायुज्यं चोर्ध्वसम्भवम् २३
अ उ म ह औ = इति ।
साकल्यं रक्तवर्णं च छन्दोऽनुष्टुप् तथा ऋषिः
सनत्कुमारो भूतं च पार्थिवं समुदीरितम् २४
कर्म तत्त्वं तथेशानः प्रोक्तमस्याधिदैवतम्
मात्राचतुष्कसहितं बीजं सर्वार्थसिद्धिदम् २५
अञ्जनाभं शाम्भवं च त्रिष्टुप्छन्द उदीरितम्
भारद्वाज ऋषिर्भूतं सलिलं कर्तृतत्त्वकम् २६
ईश्वरस्त्वधिदैवं च पञ्चमात्रासमन्वितम्
सर्वसिद्धिप्रदं देवि साधकानामिदं परम् २७
सौख्यं गोक्षीरसदृशं बृहतीच्छन्द ईरितम्
विश्वामित्र ऋषिश्चैव भूतं तेज उदीरितम् २८
तत्त्वं समूर्तमाख्यातं ब्रह्मा चास्याधिदैवतम्
पञ्चमात्रात्मकं बीजमखिलार्थप्रसाधकम् २९
कुङ्कुमाभं तु सावश्यं जगतीच्छन्द उच्यते

ऋषिर्गौतम इत्युक्तो वायुर्भूतमुदीरितम्  ३०
अमूर्तं तत्त्वमाख्यातमीशस्तस्याधिदेवता
पञ्चमात्रासमायुक्तं सर्ववश्यकरं शुभम्  ३१
सायुज्यं स्फटिकप्रख्यं गायत्रीच्छन्द ईरितम्
अगस्त्यो हि ऋषिश्चैव वियद्भूतमुदीरितम्  ३२
शिवतत्त्वं समाख्यातमधिदैवं सदाशिवः
पञ्चमात्रात्मकं बीजं सायुज्यफलसाधकम्  ३३
तस्मादिदं समस्तानामादिबीजमुदीरितम्
अनेन सहितो मन्त्रः सर्वमन्त्रोत्तमोत्तमः  ३४
पञ्चाक्षरो महामन्त्रः प्रणवेन युतः शिवे
षडक्षर इति प्रोक्तो मन्त्रराजाह्वयः परः  ३५
ॐकारो मम देहः स्यान्नकाराद्यास्तथैव च
सद्यादिपञ्चवक्त्राणि क्रमादेवं वरानने  ३६
पञ्चब्रह्मात्मको मन्त्रः प्रणवाद्यः षडक्षरः
अस्य षट्तत्त्वरूपं तु सुसूक्ष्मं श्रूयतां क्रमात्  ३७
निवृत्तिमार्गतो वक्ष्ये सर्वतत्त्वार्थशोभनम्
यकारः पूर्णतायुक्तो वाकारो नित्यवाचकः  ३८
आनन्दः स्याच्छिकारस्तु चिद्रूपो हि मकारकः
सत्यरूपो नकारः स्यान्मिश्रात्मा प्रणवो भवेत्  ३९
यकारः परसंज्ञः स्याद् वाकारो गूढरूपकः
शरीरस्थः शिकारश्च लिङ्गक्षेत्रं मकारकः
अनादिरूपवान् नश्च प्रणवो हि महान्स्मृतः  ४०
यकारस्तु पराशक्तिरादिशक्तिश्च वाक्षरः
इच्छाशक्तिः शिकारः स्याज्ज्ञानशक्तिर्मकारकः
क्रियाशक्तिर्नकारः स्यात्प्रणवो हि चिदात्मकः  ४१
प्रथमं शिवसादाख्यममूर्तं च ततः परम्
ततश्च मूर्तसादाख्यं ततो वै कर्तृनामकम्  ४२
कर्मसादाख्यमपरं महारूपमनन्तरम्
यादिप्रणवपर्यन्तमेवं ज्ञेयं वरानने  ४३

प्रसादश्च चरश्चैव शिवलिङ्गं गुरुस्तथा
आचारश्च महालिङ्गं यादितारान्तगोचरम् ४४
ऐक्यश्च शरणश्चैव प्राणलिङ्गी प्रसादकः
माहेश्वरश्च भक्तश्च षट्स्थलात्मा षडक्षरः ४५
भावो ज्ञानं च सुमनो निरहङ्कार एव च
बुद्धिश्चित्तं च भावादिहस्तरूपः षडक्षरः ४६
ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः
तथा परशिवश्चैव षड्देवात्मा षडक्षरः ४७
स्फटिकाभो यकारश्च वाकारः श्वेतवर्णकः
नीलद्युतिः शिकारः स्याद्रत्नकान्तिर्मकारकः ४८
नकारः पीतवर्णः स्यात्तारो वर्णातिगः परः
भूजलाग्निमरुद्व्योम्नां बीजान्येतानि शोभने ४९
प्रणवः सर्वतत्त्वानां बीजं कारणकारणम्
तस्मादयं महामन्त्रः सर्वस्य जगतः प्रभुः ५०
ईशो महेश्वरश्चैव शिवो विद्या तथैव च
आत्मा परशिवश्चैव यादीनां तत्त्वतः क्रमात् ५१
यार्णं वेदसहस्राढ्यं वार्णं चाथर्वणं स्मृतम्
शिकारः सामवेदः स्यान्मकारो यजुरुच्यते
ऋग्वेदो हि नकारश्च ज्ञानात्मा प्रणवः स्मृतः ५२
तस्मादशेषवेदानां मन्त्राणां च विशेषतः
मूलबीजमयं मन्त्रश्चिन्तारत्नमिवापरम् ५३
षडात्मकं जगत्सर्वं षडक्षरसमुद्भवम्
स्थीयते लीयते चास्मिन् तस्माद्ब्रह्मात्मको मनुः ५४
ॐकारः सर्वमन्त्राणां मन्त्रराजः प्रकीर्तितः
पञ्चाक्षरयुतो देवि साक्षात्सायुज्यकारणम् ५५
सर्वसिद्धिकरं शान्तं सर्वमन्त्रेषु गोपितम्
विद्यानामादिभूतं च षडक्षरमिदं परम् ५६
एवं षड्वर्णरूपं च षडक्षरमहामनुम्
विद्धि गोप्यं वरारोहे दुर्लभं ज्ञातुमात्मनाम् ५७

सर्वाणि पञ्चभूतानि तन्मात्राणां च पञ्चकम्
ज्ञानेन्द्रियाणि पञ्चापि तथा कर्मेन्द्रियाणि च ५८
पञ्चब्रह्माणि कृत्यानि पञ्चपञ्चात्मकानि च
तानि सर्वाणि बोध्यानि पञ्चवर्णैर्महामनोः ५९
लोके हि पञ्चधा यानि प्रसिद्धानि विशेषतः
ज्ञेयानि तानि सर्वाणि पञ्चाक्षरमयानि हि ६०
एवं पञ्चात्मकं सर्वं सुसूक्ष्मं कथितं शिवे
ध्येयो मुमुक्षुभिर्नित्यमनेन मनुना शिवः ६१
चिराभ्यस्तेन योगेन षडक्षरमयेन च
जीवन्मुक्त इति ज्ञेयो मदनुग्रहभाग् भवेत् ६२
इदं रहस्यं परमं गोप्यं कर्मान्तकारकम्
न वक्तव्यं न वक्तव्यं शिवाचारविरोधिने ६३
दाम्भिकाय कृतघ्नाय विषयग्रस्तचेतसे
चञ्चलाय च दुष्टाय व्रतभ्रष्टाय दुःखिने
न दातव्यमिदं शास्त्रं देवान्तरपराय च ६४
अज्ञानादथवा लोभान्मोहाद्वा परमेश्वरि
दीयते यदि मन्त्रोऽयमुभयोः पतनं भवेत् ६५
दातव्यं मयि भक्ताय मुक्तिकान्ताभिलाषिणे
दृढव्रताय शिष्टाय लिङ्गनिष्ठारताय च ६६
विद्याहङ्कारमुक्ताय सदाचाररताय च
आस्तिकाय विशेषेण भक्तियुक्ताय शाङ्करि ६७
इदं रहस्यं पापघ्नमात्मज्ञानप्रकाशकम्
सारात्सारतरं दध्नो नवनीतमिवोद्धृतम्
षडक्षरमनुज्ञानं सर्वज्ञानोत्तमोत्तमम् ६८
इमं मन्त्रं गुरोर्लब्ध्वा शिष्यस्तद्गतमानसः
तदुक्तेनैव मार्गेण जपेन्नित्यमतन्द्रितः ६९
इति सूक्ष्मागमे क्रियापादे षडक्षरमन्त्ररहस्यकथनं नाम चतुर्थः पटलः
४

## पञ्चमः पटलः

देव्युवाच

भगवन्सर्वलोकेश सर्वज्ञ परमेश्वर
गुरोर्लब्ध्वा जपेन्मन्त्रमित्युक्तं भवताऽनघ १
गुरुस्तु कीदृशः प्रोक्तः किं वा शिष्यस्य लक्षणम्
उपदेशः कथं ज्ञेयः सर्वमेतद् वद प्रभो २
शिव उवाच
सम्यगुक्तमिदं देवि निदानमखिलाध्वनाम्
वक्ष्याम्येतद्विशेषेण शृणुष्व सुसमाहिता ३
सत्कलां प्रजपन्शान्तः सत्यवागनहङ्कृतिः
निर्मत्सरो निरुत्सेकः कामादिगुणवर्जितः ४
स्त्रीसङ्गरहितो दान्तः समस्तागमपारगः
वाग्मी गभीरः सन्तुष्टः प्रगल्भः करुणास्पदः ५
अधीतवेदवेदाङ्गः सर्वस्मृतिषु कोविदः
पुराणसंहितावक्ता तदर्थप्रतिपादकः ६
मन्त्रशास्त्रकृताभ्यासो मन्त्रोद्धारविधानवित्
शिवभक्तः शिवध्यानी गुरुभक्तो गुरुप्रियः ७
शिवैकाहितचित्तश्च शिवलिङ्गार्चनापरः
सम्प्रदायविशेषज्ञः शिवभक्तजनप्रियः ८
सदाचारैकनिरतः सर्वत्र समदर्शनः
एवमादिगुणोपेतो गुरुरित्यभिधीयते ९
गुरुरेव महादेवः साक्षात्सर्वजगत्प्रभुः
अन्यथा तं न जानीयात्परतत्त्वावबोधकम् १०
अहमेव गुरुर्भूत्वा दीक्षाशिक्षाविधानतः
भक्तान्मदेकशरणांस्तारयामि भवाम्बुधेः ११
गुरुरूपं समाश्रित्य सोऽहमेव महेश्वरि
गृह्णामि तत्कृतां पूजां यतस्ते मामुपाश्रिताः १२
तस्माद् द्रोहो न कर्तव्यो गुरुमूर्तेर्ममापि च
मत्प्रसादमना देवि गुरुमेव समाश्रयेत् १३

सर्वतत्त्वैकनिलयं सर्वाधारमनूपमम्
षड्भावरहितं दिव्यमुक्तं श्रीगुरुलक्षणम्  १४
निरालम्बं निराधारं निर्विकल्पं निरामयम्
निर्द्वन्द्वं नित्यसंसिद्धमुक्तं श्रीगुरुलक्षणम्  १५
निदानं सर्वविद्यानां सर्वभूतनियामकम्
परात्परतरं सूक्ष्ममुक्तं श्रीगुरुलक्षणम्
तस्मात्तत्पादयुगलमाश्रित्यास्ति जगत्त्रयम्  १६
पादाङ्गुष्ठे समस्तानि तीर्थानि निवसन्ति हि
गुल्फे तस्य महादेवि तिष्ठन्ति गणतारकाः  १७
पादाधश्चाब्धयः सर्वे पादोर्ध्वे कुलपर्वताः
षट्त्रिंशत्तत्त्वनिचयो वसत्येतस्य जानुनोः  १८
एवं सर्वाश्रयीभूतं सर्वकारणकारणम्
गुरुरूपमिदं ध्येयं सर्वतत्त्वोपरि स्थितम्  १९
ब्रह्मादिस्तम्बपर्यन्तं पशवः परिकीर्तिताः
शिवः पतिरिति प्रोक्तः पाशः कर्ममलादिकम्  २०
अतः पशुरसौ सर्वः पाशमुक्तः पतेर्बलात्
समाश्रयेद्गुरुवरं ततो मोक्षमवाप्नुयात्  २१
सङ्गिरत्यखिलं तत्त्वं शिष्याय परमार्थतः
अतो गुरुरिति प्रोक्तो गुरुत्वादपि पार्वति  २२
सूर्योदये तमो यद्वद्विनाशमुपयाति हि
गुरुदर्शनतस्तद्वत्पापजालं प्रणश्यति  २३
संसारदावदहनज्वाला येन विनाशिता
कटाक्षामृतवर्षेण को हि तत्सदृशो भवेत्  २४
तस्मान्मुमुक्षुः सेवेत गुरुमेवातिभक्तितः
स एव वन्दनीयश्च सर्वदा नहि संशयः  २५
अन्धो यथाऽर्थजातं च द्रष्टुं समभिकाङ्क्षति
गुरुं विना तथा मुक्तिं प्राप्तुमिच्छति मूढधीः  २६
सामान्यगुरुमाश्रित्य ज्ञानमिच्छति मूढधीः
भिन्ननावाश्रितः सोऽपि महाब्धिं सन्तरिष्यति  २७

अतो हि सद्गुरुं प्राज्ञो ज्ञानार्थी संश्रयेन्नरः
एतादृशं गुरुं ज्ञात्वा शुश्रूषां वै समाचरेत् २८
पितृभ्रातृकलत्राणां पुत्रादीनां तथैव च
दीक्षाशिक्षाविधानार्थमेक एव गुरुर्भवेत् २९
गुरवो यत्र बहवो भवन्त्यन्योन्यभेदतः
वीरशैवसदाचारस्तत्र नास्तीति निश्चयः ३०
अथ शिष्यस्वरूपं च वक्ष्ये संक्षेपतः शृणु
शुचिः सुशीलो धर्मिष्ठः सत्यवाग्विजितेन्द्रियः
अहङ्कारविनिर्मुक्तो रागद्वेषादिवर्जितः ३१
गुरुभक्तो जितक्रोधो गुर्वाज्ञापरिपालकः
विषयासङ्गनिर्मुक्तो विनिर्जितमदाष्टकः ३२
का वा गतिर्ममेत्येवं ध्यायमानो दिवानिशम्
एवं गुणान्वितं शिष्यं परीक्ष्य गुरुरादरात्
शिक्षयेत्तस्य वै चित्तं यथा भवति निर्मलम् ३३
ततः प्रसन्नमनसं शिष्यमालोक्य देशिकः
समादिशेच्छिवाचारं भूतिधारणपूर्वकम् ३४
दत्त्वा विभूतिं भक्तेभ्यो गन्धपुष्पाक्षतैः सह
ताम्बूलानि च वस्त्राणि यथायोग्यं प्रदापयेत् ३५
ततः शिष्यस्य फालादिस्थानेषु च यथाक्रमम्
विभूतिधारणं कुर्यात्स्वयमेव गुरूत्तमः ३६
रुद्राक्षान्धारयित्वाऽथ शिवज्ञानैकसाधकान्
शास्त्रोक्तविधिना देवि शिरोग्रीवाकरादिषु ३७
निषिञ्चेत् पञ्चकलशपूरितैस्तीर्थवारिभिः
तथाऽभिमन्त्रितैः शैवैर्मन्त्रैः पञ्चाक्षरेण च ३८
गुरुः पूर्वमुखो भूत्वा शिष्यं प्रत्यङ्मुखस्थितम्
कृपादृष्ट्या समालोक्य ततो न्यासं समाचरेत् ३९
प्रथमं मातृकान्यासमध्वन्यासमतः परम्
कलान्यासं ततः कुर्यान्मन्त्रन्यासमतः परम् ४०
एवं न्यासविधिं कृत्वा प्राणायामं समाचरेत्

उपादिशेन्महामन्त्रं तथा शैवं षडक्षरम् ४१
एवं मन्त्रमुपादिश्य शिष्याङ्गमपि देशिकः
शिवाङ्गमिति संचिन्त्य लिङ्गसंस्कारमाचरेत् ४२
लिङ्गं हस्ते गृहीत्वा तु भावदृष्ट्या च देशिकः
संस्थाप्य लिङ्गे शिष्यस्य मस्तकस्थां कलां पराम् ४३
लिङ्गे प्राणं विनिक्षिप्य प्राणे लिङ्गं च शाम्भवम्
तल्लिङ्गं स्थापयेच्छिष्ये सम्यग्ध्यात्त्वैकभावतः ४४
ध्यात्रे शिष्याय तल्लिङ्गं धारयित्वा निरूपयेत्
वीरमाहेश्वराचारनिष्ठां परमदुर्लभाम् ४५
दत्तं लिङ्गमिदं वत्स न कदाचिद्वियोजय
प्राणवद्रक्षणीयं हि प्राणलिङ्गमिदं तव ४६
उत्तमाङ्गे गले कक्षे तथा वक्षःस्थलेऽपि वा
करस्थलेऽपि वा नित्यं सावधानेन धारय ४७
प्रमादात्पतिते लिङ्गे भिन्ने चोरादिभिर्हृते
पीठादुत्क्रमिते वापि तूर्णं प्राणं परित्यज ४८
मया नियमिताचारे प्रसादे पादवारिणि
जङ्गमे निजलिङ्गैक्ये वर्ततामप्रमादतः ४९
वीरशैवव्रते लुप्ते येन केनापि हेतुना
प्रायश्चित्तं तदा वत्स प्राणत्यागो विधीयते ५०
एवं वदेद्वीरशैवनिष्ठां शिष्याय देशिकः
तदाप्रभृति शिष्यस्तु तदुक्तं चैव साधयेत् ५१
न लङ्घयेद्गुरोराज्ञां तत्पादार्पितमानसः
शरीरमर्थं प्राणं च देवि तस्मै निवेदयेत् ५२
मल्लिङ्गधारिणो ये च भूतिरुद्राक्षसंयुताः
ये वै मदेकशरणास्तान् दृष्ट्वा प्रणमेन्मुदा ५३
उपचर्य च तान् भक्तो यथाशक्ति समर्चयेत्
तोषयेत्सततं भक्त्या भोजनाच्छादनादिभिः ५४
वीरशैवः क्रमेणैवमाचरेद्गुरुशासनम्
प्राप्नोति सुखमारोग्यमिहामुत्र सुदुर्लभम् ५५

अनेकजन्मसम्प्राप्तं कर्म चागामि सञ्चितम्
प्रारब्धमपि चैतस्य तत्क्षणादेव नश्यति ५६
ब्रह्मराक्षसवेतालकूष्माण्डाद्याः सुदारुणाः
वीरमाहेश्वरं दृष्ट्वा पलायन्ते भयातुराः ५७
यस्तु लब्ध्वा गुरोर्मन्त्रं जपेल्लिङ्गं च पूजयेत्
वीरशैवपरो देवि स धन्यः पुरुषो भुवि ५८
एवमुक्तं समासेन लक्षणं गुरुशिष्ययोः
उपदेशविधानं च ततः किं प्रष्टुमिच्छसि ५९

इति श्रीसूक्ष्मागमे क्रियापादे गुरुशिष्यस्वरूपनिरूपणं नाम पञ्चमः पटलः ५

षष्ठः पटलः

देव्युवाच
गुरुशिष्यस्वरूपं तु श्रुतं देव दयानिधे
लिङ्गं तु कीदृशं देव तस्य पूजां कथं भवेत्
फलं वा किमिति प्रोक्तं तत्सर्वं ब्रूहि मे प्रभो १
शिव उवाच
साधु साधु महाप्राज्ञे यत्त्वया परिचोदितम्
तसर्वं हि समासेन वक्ष्यामि शृणु पार्वति २
नादरूपः शिवः साक्षाल्लिङ्गमित्यभिधीयते
तत्पीठिका महाशक्तिः सा च वै बिन्दुरूपिणी
तयोः सम्मेलनाद्देवि कला तत्र प्रतिष्ठिता ३
सा कला परमा सूक्ष्मा व्याप्ता सर्वत्र सर्वदा
तस्माल्लिङ्गमिति ख्यातं नादबिन्दुकलात्मकम् ४
लिकारो लयबुद्धिस्थो बिन्दुना स्थितिरुच्यते
गकारात्सृष्टिरित्युक्ता लिङ्गं सृष्ट्यादिकारणम् ५
लीनं प्रपञ्चरूपं हि सर्वमेतच्चराचरम्
सर्गादौ गम्यते यस्मात्तस्माल्लिङ्गमुदीरितम् ६
लिङ्गं शैवमिदं साक्षाच्छिवशक्त्युभयात्मकम्

ध्यातव्यमर्चनीयं च भुक्तिमुक्तिफलेच्छुना ७
अतो यजेत्सदा लिङ्गं सर्वकारणकारणम्
निरामयं निराकारं निर्गुणं निर्मलं शिवम्
ज्योतिर्मयं निरालम्बं सर्वाधारमनूपमम् ८
तस्यैव तेजसा देवि चन्द्रादिग्रहतारकाः
प्रकाशन्ते नियमिताः कालक्लृप्त्या दिवानिशम् ९
अस्य भीत्या महान्वायुः सदा वाति जगत्त्रये
सूर्यश्चोदेति नियतो वह्निरुष्णकरः सदा
चन्द्रश्च शीततां याति यमश्च परिधावति १०
तस्माल्लिङ्गं परं ब्रह्म सच्चिदानन्दलक्षणम्
ध्यायते यः सदा देवि स मुक्तो नात्र संशयः ११
अव्यक्तं व्यक्तिमापन्नमनन्तं विश्वतोमुखम्
सूरयस्तत्प्रपश्यन्ति निर्मलं परमं पदम् १२
देवदानवगन्धर्वा वेदाः साङ्गाः सनातनाः
उत्पद्यन्तेऽत्र कल्पादौ कल्पान्ते च लयं गताः १३
दक्षिणाङ्गात्ततो ब्रह्मा विष्णुर्वामाङ्गतस्तथा
समस्तवेदजननी गायत्री हृदयादभूत् १४
वेदाः शिरःसमुद्भूताः साङ्गोपाङ्गाः सहस्रशः
उत्पद्यते लीयते च लिङ्गेऽस्मिन् सचराचरम् १५
यल्लिङ्गमपरिच्छेद्यमादिमध्यान्तवर्जितम्
परानन्दं चिदाकारं पुरुषं कृष्णपिङ्गलम् १६
हिरण्यपतिमीशानं पशूनाम्पतिमीश्वरम्
ऊर्ध्वरेतमुमाकान्तं सर्वविद्याधिनायकम् १७
ब्रह्मादिपतिमद्वन्द्वं नीलकण्ठं सदाशिवम्
विश्वाधिकं महादेवं जगद्व्यापकमच्युतम् १८
परात्परतरं तत्त्वमक्षरं सदसच्च तत्
अप्रतर्क्यममेयं च व्योमकेशं दुरासदम् १९
भर्गं वरेण्यं यद्रूपं तल्लिङ्गमिति कीर्तितम्
तस्माल्लिङ्गं परं ब्रह्म सदा ध्यायन्ति योगिनः २०

त्रैगुरायविषयान्देवान्त्यक्त्वा लिङ्गं च निर्गुणम्
भजन्ति परमं धाम शैवं विश्वादिकारणम्  २१
सर्वमन्यत्परित्यज्य तृणवद्देवतान्तरम्
शैवं लिङ्गं सदा ध्यायेत्सर्वसिद्धिषु संस्थितम्  २२
अथ वक्ष्ये महादेवि लिङ्गार्चनविधिं परम्
आदौ ध्यात्वा महादेवं त्रियम्बकमुमापतिम्
प्रसन्नवदनं शान्तं दिव्यलिङ्गोपरि स्थितम्  २३
सर्वव्यापकमीशानं पवित्रं पुष्टिवर्धनम्
अर्चयेदान्तरैः पुष्पैर्मानसैरुपचारकैः  २४
अहिंसा चेन्द्रियजयः सर्वभूतदया परा
क्षमा ध्यानं तपो ज्ञानं सत्यं चैव तथा परम्
एभिः पुष्पैरहिंसाद्यैर्मानसैः शिवमर्चयेत्  २५
कर्मयज्ञस्तपोयज्ञो जपयज्ञस्तथापरः
ध्यानयज्ञो ज्ञानयज्ञः पञ्चयज्ञा इमे स्मृताः
एतेषामपि पञ्चानां श्रेयः स्यादुत्तरोत्तरम्  २६
कर्मयज्ञो द्विधाः ज्ञेयः सकामाकामभेदतः
सकामे तु फलं भुक्त्वा जायते भुवि पूर्ववत्
निष्कामेऽपि वरं ज्ञानं लब्ध्वा मोक्षमवाप्नुयात्  २७
हिंसादिदोषरहितो रागादिगुणवर्जितः
तपोयज्ञो महादेवि मोक्षैकफलसाधकः  २८
अष्टैश्वर्यप्रदा पूजा योगाद्यं स्वर्गसाधनम्
पापहारी जपः प्रोक्तो ज्ञानं ध्यानं च मोक्षदम्  २९
निष्कामकर्मकर्तॄणां श्रौतस्मार्तानुसारतः
बहूनां जन्मनामन्ते ज्ञाने ध्याने भवेन्मतिः
केवलं कर्मनिष्ठानां तद्वार्ताऽपि न जायते  ३०
बहिर्यज्ञरतानां तु देवाः पाषाणमृण्मयाः
अन्तर्यागवतां देवि हृदयस्थः सदाशिवः  ३१
ज्ञानं ध्यानं न यस्यास्ति स न वेत्ति परं शिवम्
यद्वदर्थां स्तु जात्यन्धो नहि पश्यति पार्वति  ३२

तस्माद्यज्ञादिकं बाह्यं त्यक्त्वा स्वर्गादिसाधनम्
गुरोर्लब्ध्वा परं ज्ञानं ध्यानयोगरतो भवेत्  ३३
अश्वमेधसहस्राणि वाजपेयशतानि च
ध्यानयोगस्य चैकस्य कलां नार्हन्ति षोडशीम्  ३४
शिवज्ञानामृतं पीत्वा भक्त्या परवशं गतः
निवेशयेच्छिवे चित्तं संयतात्मा निराकुलः  ३५
पूजादौ तु शिवं ध्यात्वा जप्त्वा पञ्चाक्षरं मनुम्
ततः सम्पूजयेद्देवं वीरशैवक्रमो भवेत्  ३६
सञ्जिकान्तःस्थितं लिङ्गं स्पृष्टा मन्त्रं त्रिरुच्चरन्
तत्र ध्यात्वा महादेवं पुष्पं मूलेन निक्षिपेत्  ३७
शिवो रुद्रः पशुपतिर्नीलकण्ठो महेश्वरः
हरिकेशो विरूपाक्षः पिनाकी त्रिपुरान्तकः
शम्भुः शूली महादेवो नामान्येतानि वै क्रमात्  ३८
प्रणवादिनमोऽन्तानि समुच्चार्य पृथक्पृथक्
पुष्पैः सम्पूज्य तल्लिङ्गं करपीठे निवेशयेत्  ३९
अरणिस्थो यथा वह्निर्मथनादवगम्यते
तथाऽभिव्यज्यते लिङ्गे ध्यानयोगाच्छिवः स्वयम्  ४०
लिङ्गसंस्थो भवेन्मन्त्रो मन्त्रसंस्थः सदाशिवः
उभयोरैक्यभावस्तु वीरशैवे विधीयते
ज्ञात्वैवं प्राणलिङ्गं च कुर्यादष्टविधार्चनम्  ४१
जलगन्धाक्षतैः पुष्पैर्धूपदीपोपहारकैः
ताम्बूलसहितैः प्रोक्तमष्टधा च समर्चनम्  ४२
करस्थलगतं लिङ्गं वामतः कृतगोमुखम्
कनिष्ठानामिकाग्राभ्यां शिवलिङ्गं च गोमुखम्
अङ्गुष्ठाग्रेण चैवं हि संस्पृशेदर्चनाविधौ  ४३
भावप्राणेष्टलिङ्गानि पूजयेदेकभावतः
पृथग्भावं न कुर्वीत प्राणलिङ्गपरो यतः  ४४
स्नापनं प्रथमं कृत्वा ततो गन्धानुलेपनम्
अक्षतांश्च समर्प्याथ पुष्पैः सम्पूजयेत्ततः  ४५

निवेदयित्वा नैवेद्यं ततस्ताम्बूलमर्पयेत्
एवं समर्चनं कुर्यादिष्टलिङ्गस्य पार्वति ४६
तद्ध्यानं मनसा यत्र प्राणलिङ्गार्चनं मतम्
मनोवृत्तिलयस्तत्र भावलिङ्गस्य पूजनम् ४७
स्नानं पुष्पं च नैवेद्यं प्रदक्षिणनमस्क्रिये
एभिः पञ्चोपचारैर्वा पूजयेल्लिङ्गमन्वहम् ४८
स्नानमुद्वर्तनं चैव वस्त्रभूषाश्च चन्दनम्
भक्ष्यभोज्यादिकं वापि फलं पुष्पं च सौरभम् ४९
एवमादीनि वस्तूनि शिवायादौ निवेद्य च
स्वयं ततोऽनुभुञ्जीत प्रसादग्राहको मतः ५०
एककालं द्विकालं वा त्रिकालं वापि शाङ्करि
पूजयेन्नियतं लिङ्गं प्राणलिङ्गपरायणः ५१
एवं यः कुरुते भक्त्या प्राणलिङ्गार्चनं सदा
वीरशैवः स विज्ञेयः सर्वशैवोत्तमोत्तमः ५२
अनभ्यर्च्य न भुञ्जीत लिङ्गरूपं सदाशिवम्
यस्त्वेवं निर्वहेद्भक्तः स वै शिष्टो मम प्रियः ५३
इदमत्र रहस्यं वै श्रूयतां षट्स्थलात्मकम्
भक्तस्थलं समासीनो भूतिरुद्राक्षसंयुतः
षडक्षरजपं कृत्वा ततो माहेश्वरस्थले ५४
हस्ते कृत्वा लिङ्गमूर्तिं प्रसादिस्थलमाश्रितः
लिङ्गं च भक्त्या सम्पूज्य प्राणलिङ्गिस्थले ततः ५५
कृत्वा शिवार्पणं देवि सानन्दं शरणस्थले
ऐक्यस्थले प्रसादोपभोगतृप्तिमवाप्नुयात् ५६
एवं समरसाद्भावादङ्गषट्स्थलयोगतः
यः पूजयति मां देवि वीरशैवः स उच्यते ५७
तस्माल्लिङ्गार्चनं कुर्याद्यथायोगमतन्द्रितः
लिङ्गे सम्पूजिते तस्मिन्पूजिताः सर्वदेवताः ५८
कृत्वा षोडश दानानि यत्फलं लभते नरः
तत्फलं समवाप्नोति लिङ्गन्यस्तैकपुष्पकः ५९

महापातकयुक्तो वा युक्तो वा सर्वपातकैः
जपेत्पञ्चाक्षरं मन्त्रं लिङ्गं स्पृष्ट्वा विमुच्यते ६०
दर्शनात्सर्वपापघ्नं स्पर्शनादखिलार्थदम्
अर्चनान्मोक्षदं देवि लिङ्गं को वा न पूजयेत् ६१
समर्चितमिदं लिङ्गं दृष्ट्वा यस्त्वनुमोदते
स वै शिवपुरं प्राप्य भक्त्वा भोगान्यथेप्सितान्
पुनर्भूमिं समासाद्य शिवभक्तो भवेद् ध्रुवम् ६२
निन्दन्ति ये च संमूढा दृष्ट्वा लिङ्गं समर्चितम्
तेषां पूर्वार्जितं पुण्यं तत्क्षणादेव नश्यति ६३
दृष्ट्वा हसन्ति ये मूढा देवि मल्लिङ्गधारिणः
ते ब्रह्मकल्पपर्यन्तं पच्यन्ते नरकेषु वै ६४
शैवशास्त्रस्य वक्तारमाक्षिपन्ति विमोहिताः
छिद्यन्ते क्रकचैस्तेषां जिह्वाश्च यमकिङ्करैः ६५
ततो भूमौ प्रजायन्ते मूकाश्च गलरोगिणः
श्वानयोनिशतं प्राप्य जायन्ते क्रिमयस्ततः ६६
ममापरावताराणां लिङ्गाङ्गानां विशेषतः
निन्दां कुर्वन्ति ये मोहात्तेषां तु निरयो गतिः ६७
शक्तश्चेदसतां जिह्वां छिन्द्याद्यः स्वयमेव हि
न तस्य दोषलेशोऽस्ति शिवलोकं स गच्छति ६८
अशक्तश्चेत्तदाऽन्यत्र गच्छेत्तत्र न संवसेत्
तत्संसर्गान्महादोषं प्राप्नोति हि न संशयः ६९
शिवनिन्दा भक्तनिन्दा निन्दा रुद्राक्षभस्मनोः
यत्र प्रवर्तते देवि न तत्र दिवसं वसेत् ७०
यद्गृहे भविसंसर्गस्तद्गृहं परिवर्जयेत्
यत्रान्यदेवपूजा स्यान्न तिष्ठेत्तत्र भक्तिमान् ७१
यस्त्वेवमाचरन् पूजां कुर्यान्मे लिङ्गरूपिणः
स एव पुरुषश्रेष्ठः पूज्यः सर्वजनैरपि ७२
एवं लिङ्गस्वरूपं च समर्चनविधानतः
तत्फलं च तव प्रोक्तमितः किं श्रोतुमिच्छसि ७३

इति श्रीसूक्ष्मागमे क्रियापादे लिङ्गस्वरूपनिरूपणं नाम षष्ठः पटलः
६

## सप्तमः पटलः

देव्युवाच
देवदेव महादेव सर्वज्ञ परमेश्वर
त्वत्प्रसादादभिव्यक्तः शिवपूजाविधिक्रमः १
शैवाः कति कथं तेषु वीरशैवस्तु मोक्षदः
मोक्षोत्पादकमाचारं तत्सर्वं ब्रूहि शङ्कर २
शिव उवाच
साधु साधु महाभागे सम्यक् पृष्टमिदं त्वया
विस्तरात्कथितुं श्रोतुं नालं वर्षायुतं शिवे ३
तस्मात्संक्षिप्य तत्सर्वं वक्ष्यामि तव पार्वति
शैवाः सप्तविधा ज्ञेयास्तेषां भेदान्शृणु क्रमात् ४
अनादिशैवः प्रथम आदिशैवस्ततः परम्
महाशैवस्ततो ज्ञेयस्त्वनुशैवस्ततः परम् ५
अवान्तरस्ततो ज्ञेयः प्रवरस्तदनन्तरम्
अन्त्यशैवस्ततो ज्ञेयस्तेषां लक्षणमुच्यते ६
अनादिशैवो मत्तोऽन्यो नास्ति लोकेषु कश्चन
आदिशैवास्तु विज्ञेयाः कौशिकाद्या नगात्मजे ७
कौशिकः कश्यपश्चैव भरद्वाजात्रिगौतमाः
आदावेते महादेवि पञ्चवक्त्रेषु दीक्षिताः ८
तद्वंश्यानां पुनर्दीक्षा नास्ति सा चेत्तु तत्फलम्
किन्तूपनयनादूर्ध्वं मण्डले पूज्य शङ्करम्
पित्रादिभिश्चोपदेश्या मम मन्त्रादिकाः क्रियाः ९
दत्वा तु भस्म ताम्बूलं मद्भक्तानां च भोजनम्
दक्षिणां च ततो दद्याद् वित्तशाठ्यं न कारयेत् १०
एते शिवद्विजाः प्रोक्ताः लोकपूज्या भवन्ति हि
एभिरेव प्रकर्तव्यं यजनं स्वपरार्थकम् ११

शैवदीक्षोक्तमार्गेण दीक्षिता ब्राह्मणाः शिवे
महाशैवास्तु ते ज्ञेया महान्तो लोकपूजिताः १२
अनुशैवा इति प्रोक्ता नृपा वैश्याश्च दीक्षिताः
अवान्तराख्यशैवास्तु शूद्राश्चेद्दीक्षिता यदि १३
कुलालपार्श्वकाद्यश्च प्रवरः शैव उच्यते
अन्यासामन्त्यजातीनामन्त्यशैवं विधीयते १४
एवं प्रोक्ताः शैवभेदा जात्यनुक्रमशो मया
आचारभेदाच्छैवस्य भेदः संकथ्यतेऽधुना १५
सामान्यशैवं प्रथमं मिश्रशैवं ततः परम्
शुद्धशैवं ततो ज्ञेयं वीरशैवं ततः परम्
एतेषां लक्षणं वक्ष्ये शृणु देवि यथाक्रमम् १६
यदा यदा शिवं पश्येत्तदा कुर्याच्छिवार्चनम्
प्रदक्षिणनमस्कारौ दर्शनं वा समाचरेत्
नास्ति पूजादिनियमो यथासम्भवमाचरेत् १७
शिवचिह्नेषु भक्तेषु शिवकार्येषु पार्वति
भक्तिं कुर्वीत सततं मनोवाक्कायकर्मभिः
सामान्यशैवमाख्यातं मिश्रशैवमथ शृणु १८
शिवं विष्णुं च ब्रह्माणं कुमारं गणनायकम्
आदित्यमम्बिकां चैव मिश्रीकृत्य समर्चनम् १९
सर्वत्र देवताबुद्धिर्माहात्म्यं शिव एव हि
शिवधर्मान्यधर्माणां समाचरणमादरात् २०
अन्यपूजामिश्रितत्वाद् मिश्रशैवमुदीरितम्
अतः परं शुद्धशैवं वक्ष्यामि शृणु पार्वति २१
शुद्धः शिव इति प्रोक्तस्तद्भवं शैवमुच्यते
उभयोः सम्पुटीभावाच्छुद्धशैवमिति स्मृतम् २२
एक एव महादेवः साम्बः सत्यादिलक्षणः
तदन्यदेवास्तद्भक्तास्तदुद्भूतास्तदाश्रिताः २३
शिवस्य पूजावेलायां ये चान्ये देवसत्तमाः
तेषामावरणत्वेन पूजां कुर्यान्न चान्यथा २४

गुरुणा दत्तलिङ्गं तु करपीठेऽपि वा यजेत्
गुरूपदिष्टनियमान् सावधानं समाचरेत् २५
प्रमादात्पतिते लिङ्गे नष्टे दग्धे हृतेऽपि वा
विनिर्गते तथा पीठाद् येन केन च दूषिते २६
गुरुपादाम्बुजं स्मृत्वा जप्त्वाऽघोरं तदाज्ञया
तल्लिङ्गमेव वाऽन्यद्वा धारयेत्पूजयेत्पुनः २७
प्रमादान्नियमे लुप्ते मूलपञ्चाक्षरीं जपेत्
प्रायश्चित्तमिदं देवि व्रताचारादिलोपने
शुद्धशैवमिदं प्रोक्तं वीरशैवमथ शृणु २८
वीतरागादिदोषत्वादात्मतत्त्वविचारणात्
विकल्पाकल्पशून्यत्वाद्वीरशैवमिति स्मृतम् २९
सामान्यं प्रथमं प्रोक्तं विशेषं च द्वितीयकम्
निराभारं तृतीयं स्यात्क्रमाल्लक्षणमुच्यते ३०
गुरूक्तेनैव मार्गेण भूतिरुद्राक्षधारणम्
पञ्चाक्षरजपं देवि कुर्यान्नित्यमतन्द्रितः
गुरुणा दत्तलिङ्गं तु सावधानेन धारयेत् ३१
इष्टलिङ्गं प्राणलिङ्गं भावलिङ्गं च पार्वति
एकीकृत्यार्चनं कुर्याद्वीरशैवो न भेदतः ३२
जङ्गमे निजलिङ्गैक्ये निर्भावे निर्मले परे
भक्तिं कुर्यान्महादेवि स्वयं दारसुतादिभिः
मम लिङ्गाङ्गसङ्गानां वञ्चनान्नरकं ध्रुवम् ३३
तस्माद्यत्नेन मद्भक्तैर्वीरमाहेश्वरात्मनाम्
सेवा कार्या महादेवि मनोवाक्कायकर्मभिः ३४
गोत्रं च शिवगोत्रं च नामापि शिवनाम च
सदाशिवौ च पितरौ बान्धवाः शिवकिङ्कराः ३५
शिवार्थार्पितदेहाद्याः सुहृदः परिकीर्तिताः
शिवकार्याभिमानश्च स्वदेशो भुवनत्रयम् ३६
कराब्जपीठे यजनं धारणं सज्जिकान्तरे
यद्वा कराब्जे वक्त्रे वा धारणं मोक्षकारणम् ३७

एककालं द्विकालं वा त्रिकालं वापि शाङ्करि
लिङ्गस्य यजनं कुर्याल्लिङ्गाचारपरायणः ३८
इत्येवमाचरन् धर्मान्विशेषं शैवमाचरेत्
विशिष्टधर्मानुष्ठानाद्विशेष इति कथ्यते ३९
एकं माहेश्वरं वापि द्वौ वा त्रीन् वा महेश्वरि
भोजयित्वा तत्प्रसादं भुञ्जीत प्रतिवासरम् ४०
द्रोणपुष्पं बिल्वपत्रं करवीरमथापि वा
मल्लिकोत्पलपुन्नागजात्यादिकुसुमानि वा ४१
एष्वेकं कुसुमं नित्यमर्पयेन्नियमान्वितः
नैवेद्यधूपदीपांश्च तथा नित्यं समर्पयेत् ४२
इत्यादिनियमान् यस्तु निर्वहेज्जीवितावधि
स एवाहं महादेवि विशिष्टशिवपूजकः ४३
आत्मानं वा सुतान्वापि सदनं च धनादि वा
भूषणं सर्ववस्तूनि वाहनानि पशूनपि
यत् स्वकीयमभिप्रेतं तत्कुर्याज्जङ्गमार्पितम् ४४
अनुभूतं तु तैः पश्चादादाय स्वयमादरात्
कुर्यात्प्रसादबुद्ध्या यः स विशिष्ट इति स्मृतः ४५
भक्ष्यभोज्यादिवस्तूनि यो भुङ्क्ते चरवर्जितः
स भुङ्क्ते मलमांसादि श्वपाकागारसम्भवम् ४६
शिवकार्यविरुद्धाश्चेद् भर्तृभार्यात्मजादयः
परित्याज्यास्ते विशेषवीरशैवपरायणैः ४७
लिङ्गभक्तिर्लिङ्गपूजा लिङ्गसेवा तथा शिवे
लिङ्गध्यानं लिङ्गमनो लिङ्गचर्यापरौ करौ ४८
लिङ्गश्रुतिपरे श्रोत्रे लिङ्गार्पितरसादयः
लिङ्गनिर्माल्यसुरभिलाभो घ्राणस्य पार्वति ४९
लिङ्गालङ्कारसन्दर्शनासक्ते लोचनेऽपि च
लिङ्गप्रदक्षिणपरौ पादौ च गिरिसम्भवे ५०
लिङ्गस्य पुरतो नित्यं तदर्थं चाङ्गचेष्टनम्
लिङ्गार्थं दत्तसर्वस्वं लिङ्गनिष्ठेति गीयते ५१

लिङ्गं पतिः सती चाहं भावोऽयं वीरशैविनाम्
तस्माल्लिङ्गात्यये देवि सद्यः प्राणान्परित्यजेत् ५२
दीक्षायां गुरुणा लिङ्गं धारितं गिरिजे यदा
तदाप्रभृति लिङ्गाङ्गसम्बन्धी स्यान्निरन्तरम् ५३
इष्टलिङ्गे परे लुप्ते लिङ्गमयन्न धारयेत्
पुनस्तदेव लब्धं चेद्धारयेद्देव्यशङ्कितः ५४
जले वा पतितं लिङ्गं पुनर्दृष्टं तदेव हि
धारयेदवधानेन वीरशैवो न दुष्यति ५५
यवमात्रं यदि च्छिन्ने तदर्धार्धमथापि वा
लिङ्गे पीठादिके वापि प्रायश्चित्तं न विद्यते ५६
दैवाद्विनिर्गतं शक्तिपीठाल्लिङ्गमखण्डितम्
पुनर्बद्ध्वा धारयितुं न केनाप्यलमद्रिजे ५७
नादबिन्दुकलारूपं कर्मसादाख्यमुच्यते
बिन्दोर्विनिर्गते नादे कला ह्यन्यत्र गच्छति
तत्पुनः पूरणं कर्तुं पुनः संस्कारमर्हति ५८
पुनर्दिक्षादिसंस्कारः शुद्धशैवे विधीयते
वीरशैवे पुनर्दीक्षा नेति भेदो वरानने ५९
लिङ्गलोपादिदोषेषु व्रतचर्यादिलोपने
प्राणान्धत्ते प्राणलिङ्गी सोऽन्धे तमसि मज्जति
तस्मात्तत्प्राणलिङ्गं तु सावधानेन धारयेत् ६०
लिङ्गार्थमेव यः प्राणांस्त्यजेदैक्यं दृढं मयि
स प्राप्नोति न सन्देहः सत्यं सत्यं वरानने ६१
लिङ्गार्थं वापि गुर्वर्थमाचारार्थं तथैव च
चरार्थं वा प्रसादार्थं तनुत्यागो विधीयते
एवं निष्ठा तु यस्यास्ति गृहस्थोऽपि विमुच्यते ६२
इति प्रोक्तं मया देवि विशेषं वीरशैवकम्
निराभारमतो वक्ष्ये समाहितमनाः शृणु ६३
जन्तोः पुण्यं पापमिति कर्म द्विविधमुच्यते
निवृत्तकर्मभारत्वान्निराभार इति स्मृतः ६४

जटी मुण्डी शिखी वापि काषायवसनान्वितः
निस्पृहो निजलिङ्गैक्यो भिक्षाशी भयवर्जितः
मौनी भूतदयायुक्तो निराभार इति स्मृतः ६५
कन्थाकमण्डलुधरो भूतिरुद्राक्षसंयुतः
दण्डकौपीनधारी च निराभार इति स्मृतः ६६
माहात्म्यं जटिनां यत्स्यान्मुण्डिनां च तदेव हि
वन्यैः पत्रैश्च पुष्पैश्च फलैर्लिङ्गं प्रपूजयेत् ६७
कामक्रोधादिरहितः शिवज्ञानी जितेन्द्रियः
जङ्गमस्तु चरेद्भिक्षां यावत्स्वोदरपूरणम् ६८
चरेन्माधुकरीं भिक्षां निराभारो दयापरः
एकान्नं तु न चाश्नीयाद्देवि तद्दोषकृद् यतः ६९
यथा मधुकरः पुष्पान्मधु गृह्णाति पार्वति
तथा गृहस्थाद् भिक्षेत उपवाससमो विधिः ७०
भक्तैर्गृहस्थैः सम्पूज्या एते माहेश्वरा जनाः
एतान् विना कृता पूजा नितरां निष्फला भवेत् ७१
न वस्तुसंग्रहं कुर्याद्यत्र कुत्रापि जङ्गमः
दत्तं दद्याच्च भक्तेभ्यो दरिद्रेभ्यो दयान्वितः ७२
सुवर्णरत्नधान्यादिवस्तुवृद्ध्युपजीवनात्
अत्याश्रमी यदि चरेत् सोऽयं पातकिनां वरः ७३
जटाधारी शिखी मुण्डी पञ्चमुद्रासमन्वितः
स्त्रीसङ्गं कुरुते यस्तु स मद्द्रोही न संशयः ७४
अतिवर्णाश्रमी मुण्डी प्राणलिङ्गाङ्गयोगभाक्
न धारयेच्छिरोवस्त्रमुष्णीषं वा न धारयेत् ७५
छिन्नभिन्नादिदुष्टं च यद्वल्लिङ्गं न पूज्यते
लिङ्गाचारव्रतभ्रष्टो जङ्गमस्तु न पूज्यते ७६
जङ्गमो जङ्गमं दृष्ट्वा न प्रणामं करोति यः
स एव जङ्गमद्रोही मद्द्रोही च न संशयः ७७
जङ्गमं द्वेष्टि यो मोहात्स तु मां द्वेष्टि शाङ्करि
तस्मादन्योन्यमपि च पूज्याः स्युर्जङ्गमस्थले ७८

शिवभक्तिः शिवज्ञानं शिवमुद्रा शिवव्रतम्
शिवलिङ्गार्चनश्रद्धा वृत्त्यन्तरनिरोधनम्
एते धर्मा यत्र सन्ति स भाराभारवर्जितः ७९
षट्स्थलज्ञानसम्पन्नः षडङ्गाङ्गसमाधिमान्
आत्मवत् परद्रष्टा च स एवाहं न संशयः ८०
वीरशैवः परो यस्तु यत्र तिष्ठति पार्वति
तत्तीर्थं तत्तपः शान्तिस्तत्र तिष्ठामि सर्वदा ८१
तीर्थयात्रादिकं तेषां नास्ति चान्यत्र पार्वति
कैलासादिपदापेक्षां त्यजेल्लिङ्गाङ्गयोगभाक् ८२
यत्रान्यदेवतापूजा तत्स्थानं परिवर्जयेत्
शिवभक्तिविहीनं च जनं चैव समाश्रयेत् ८३
आदातृदातृदेयानां शिवचिह्नं सुशोभनम्
शिवचिह्नाङ्कितं ग्राह्यमन्यच्चण्डालविट्समम् ८४
सर्वं शिवमयं पश्येदन्यभावो न विद्यते
लिङ्गाङ्गसम्बन्धपदार्थज्ञानं मोक्षसाधनम् ८५
तदेकमेव मोक्षः स्यान्मम लिङ्गाङ्गयोगिनः
तस्मात्सर्वैः सदा कार्यं लिङ्गाराधनमादरात् ८६
श्रीलिङ्गधारणं हित्वा यदीच्छेत् सिद्धिमात्मनः
सूर्याचन्द्रमसौ जन्तोरायुष्यक्षयकारकौ ८७
तस्माल्लिङ्गार्चनं कुर्यात्सर्वधर्मोत्तमोत्तमम्
यावत्करणसामर्थ्यं जरा यावन्न संस्पृशेत्
स्थिरत्वं मनसो यावत्तावत्कुर्याच्छिवार्चनम् ८८
इदं रहस्यं परमं सारात्सारतरं महत्
न वक्तव्यमभक्ताय कृतघ्नाय च मायिने ८९
वक्तव्यं हि प्रयत्नेन श्रद्धाभक्तियुताय च
सदादारे व्रते चापि निरताय महेश्वरि ९०
इदं प्रोक्तं हि संक्षेपाद्वीरशैवं महोत्तमम्
मोक्षैकफलदं देवि किमन्यच्छ्रोतुमिच्छसि ९१
इति श्रीसूक्ष्मागमे क्रियापादे शैववीरशैवभेदस्वरूपनिरूपणं नाम

सप्तमः पटलः ७

## अष्टमः पटलः

देव्युवाच
भगवन्सर्वलोकेश करुणाकर शङ्कर
शैवभेदस्वरूपं च वीरशैवं विशेषतः १
तदाचारविशेषं च श्रुतं त्वत्कृपया विभो
तत्र लिङ्गाङ्गसम्बन्धज्ञानं मोक्षैकसाधनम्
इत्युक्तं भवता देव तज्ज्ञानमुपदिश्यताम् २
शिव उवाच
सम्यक्पृष्टं त्वया देवि रहस्यमिदमुत्तमम्
षट्स्थलात्मकमेतत्तु श्रूयतां सावधानतः ३
आदावाचारलिङ्गं स्यात्ततश्च गुरुलिङ्गकम्
शिवलिङ्गं ततो ज्ञेयं चरलिङ्गमतः परम् ४
ततः प्रसादलिङ्गं स्यान्महालिङ्गमतः परम्
एवं षड्विधलिङ्गानां स्वरूपं शृणु शाङ्करि ५
स्थलमाचारलिङ्गस्य त्रिविधं श्रूयतां क्रमात्
सदाचारस्तु नियतो गणाचारस्तथापरः ६
सज्जनः शिवभक्तश्च येन मार्गेण सर्वदा
तोष्यते च महादेवि सदाचारः स वै स्मृतः ७
यस्तु स्वकृतमाचारं न त्यजेच्च तदत्ययात्
त्यजेदसून् महादेवि नियताचार ईरितः ८
गुरुलिङ्गादिविषये न श्राव्यं दूषणं यदि
श्रुतं तान्शिक्षयामीति गणाचारः स हि स्मृतः ९
दीक्षा शिक्षाऽनुभावश्च गुरुलिङ्गं त्रिधा भवेत्
कुण्डमण्डलहोमाद्या अध्वशुद्धिः कलात्मिका
मन्त्रोपदेशसहिता या सा दीक्षेति कथ्यते १०
दीयते लिङ्गसम्बन्धः क्षीयते कर्मसञ्चयः
दीयते क्षीयते साक्षाद्यया दीक्षेति कथ्यते ११

गुरुलिङ्गचराख्यानां लिङ्गानामेकरूपकम्
यद्ज्ञानं बोधितं सद्भिः सा शिक्षेति निगद्यते १२
संस्कारैः प्राक्तनैर्देवि स्वकीयसुकृतार्जिनैः
ज्ञानाधिक्यं भवेद्यत्तु स्वानुभावः स उच्यते १३
शिवलिङ्गस्वरूपं ते वक्ष्यामि शृणु पार्वति
इष्टलिङ्गं प्राणलिङ्गं भावलिङ्गमिति त्रिधा १४
दीक्षाविधानाद्गुरुणा यल्लिङ्गं दत्तमादरात्
मन्त्रोपदेशसहितम् इष्टलिङ्गमुदाहृतम् १५
त्यक्तदेहेन्द्रियगुणः शिवार्पितनिजान्तरः
शिव एव मनो लीनं प्राणलिङ्गं तदुच्यते १६
जाग्रदादिष्ववस्थासु ज्योतिर्लिङ्गैक्यमानसम्
अज्ञानविनिवृत्तं च भावलिङ्गं तदुच्यते १७
चरलिङ्गस्थलस्यास्य स्वरूपं कथयामि ते
स्वयं चरं परं चेति त्रैविध्यं समुपागतम् १८
लिङ्गलाञ्छनसंयुक्तं बाह्यकर्मविवर्जितम्
केवलानन्दरूपं यत्तत् स्वयलिङ्गमीरितम् १९
स्वच्छन्दचारी स्वाभिन्नलिङ्गरूपो निराकुलः
भेदभ्रान्तिविहीनो यश्चरलिङ्गं स उच्यते २०
निर्द्वन्द्वो हि सदा स्थाणुर्गमागमविवर्जितः
ज्योतिर्लिङ्गस्वरूपोऽयं परलिङ्गमुदाहृतम् २१
प्रसादलिङ्गत्रैविध्यमपि शृणु वरानने
शुद्धं सिद्धं प्रसिद्धं च भेदश्चैषामथोच्यते २२
पूर्वसर्वगुणत्यागः कामक्रोधादिवर्जनम्
गुरुभक्तप्रसादो यः स शुद्धः परिकीर्तितः २३
ज्ञात्वा लिङ्गत्रयं सम्यक् तदैक्यं च वरानने
लिङ्गार्पितप्रसादोऽयं सिद्ध इत्यभिधीयते २४
शिवोऽहम्भावनायुक्तो निश्चलीकृतमानसः
चरार्पितप्रसादोऽयं प्रसिद्धः परिकीर्तितः २५
महालिङ्गस्थलं चापि त्रिधा भिन्नं शृणु क्रमात्

पिराडजं प्रथमं प्रोक्तमराडजं च ततः परम्
बिन्द्वाकाशं ततो ज्ञेयमेषां लक्षरामुच्यते २६
देहो देवालयः प्रोक्तो जीवो देवः सदाशिवः
इति निश्चितसद्भावः पिराडजं लिङ्गमुच्यते २७
पीठिका पृथिवी लिङ्गमाकाशः सृष्टिकाररणम्
निस्सन्देहमिदं ज्ञानमराडजं लिङ्गमीरितम् २८
ध्यात्वात्मानमथाकाशे ध्यात्वाकाशं तथात्मनि
ग्रात्माकाशमयं लिङ्गं बिन्द्वाकाशमुदाहृतम् २९
देव्युवाच
एषु लिङ्गेषु देवेश कथं पूजादिकं भवेत्
समाचारस्तु को वात्र प्रसादः कीदृशो भवेत्
एतत्सर्वं समासेन कृपया वद मे प्रभो ३०
शिव उवाच
ग्रङ्गस्थलं समासेन वक्ष्ये षड्विधमादितः
यस्मिन् ज्ञाते महादेवि ज्ञायते चाधिकं ततः ३१
भक्तो माहेश्वरश्चैव प्रसादी प्रारालिङ्गकः
शरराः शिवलिङ्गैक्यः षट्स्थलानि हि पार्वति ३२
ग्रथैषां लक्षरां वक्ष्ये शृरगुष्व सुसमाहिता
त्यक्ताभिमानो देहादौ भक्त इत्युच्यते बुधैः ३३
तच्चित्तममलं यस्य स वै माहेश्वरः स्मृतः
चित्तं स्थिरं भवेद् यस्य स प्रसादी भवत्यसौ ३४
त्यक्त्वा जीवभ्रमं भूयो लिङ्गात्मा प्रारालिङ्गकः
शिवनित्यत्वनिश्चिन्तः सानन्दः शररगो भवेत्
शिवजीवोभयभ्रान्तिरहितश्चैक्य उच्यते ३५
गुरुभक्तो लिङ्गभक्तश्चरभक्तस्तथैव च
एवं भेदसमायुक्तो भक्तस्तु त्रिविधो भवेत् ३६
मोही भक्तः पूजकश्च तथा वीरः प्रसादवान्
प्रारगी चाचारलिङ्गादिः स वै भक्तोऽपि षड्विधः ३७
मोहं त्यजेत्कलत्रादौ मोही ह्याचार एव हि

शिवाचारविरुद्धांश्च त्यजेदपि सुतादिकान्
स एवाचारमोही स्यादन्याचारविवर्जितः ३८
पूर्वाचारं परित्यज्य शिवाचारं समाश्रितः
आचारलिङ्गभक्तः स्याद् विरुद्धाचारवर्जितः ३९
अन्यपूजां परित्यज्य लिङ्गपूजैकतत्परः
शिवाचारपरो यस्तु स स्यादाचारपूजकः ४०
अपि प्राणात्यये देवि स्वाचारं न परित्यजेत्
आचारलिङ्गवीरः स्यादाचारैकपरायणः ४१
शुचित्वमशुचित्वं चेत्यादिसन्देहवर्जितः
ग्राह्याग्राह्यादिरहितः स्यादाचारप्रसादकः ४२
परैः कृतामीशनिन्दां शृणुयान्न च कुत्रचित्
इति योऽस्ति स आचारलिङ्गप्राणीति कथ्यते ४३
एवमाचारलिङ्गैकतत्परो मां समाश्रयेत्
प्रतिपद्य स नित्यत्वं गाणपत्यमवाप्नुयात् ४४
एवं च गुरुलिङ्गेऽपि षड्भेदाः सम्भवन्ति हि
त्यक्तपित्रादिमोहः सन्गुरुलिङ्गैकमोहवान्
एवं यो वर्तते देवि गुरुमोही स उच्यते ४५
लौकिकान्बान्धवान् त्यक्त्वा गुरुलिङ्गैकबान्धवः
हर्षपूर्णो महादेवि गुरुभक्त इति स्मृतः ४६
पूजामन्यां परित्यज्य गुरुलिङ्गैकपूजकः
इति निष्ठापरो यस्तु गुरुपूजक उच्यते ४७
गुरूपदिष्टमेवाथ समाचरणमाचरन्
यश्च त्यक्तेतराचारो गुरुवीरः स उच्यते ४८
यो वै न लङ्घयेद्देवि कदाचिद्गुरुशासनम्
स वै गुरुप्रसादी स्यान्निवृत्तेतरशासनः ४९
सेवामन्यां परित्यज्य गुरुलिङ्गैकसेवकः
वर्तते यः सदा देवि गुरुप्राणी स हि स्मृतः ५०
एवं भेदैश्च मां देवि गुरुमूर्तिधरं शिवम्
भजतेऽनन्यचित्तो यः स मुक्तः स्यान्न संशयः ५१

शिवलिङ्गस्थलेऽप्येवं षड्विधं व्रतमाचरेत्
शिवलिङ्गैकमोही स्यादन्यमोहविवर्जितः
शिवलिङ्गैकभक्तः स्यादन्यभक्तिविवर्जितः ५२
अनन्यदेवपूजः स्याच्छिवलिङ्गैकपूजकः
शिवलिङ्गैकवीरः स्यात् पुण्यक्षेत्रादिनिस्पृहः ५३
शिवलिङ्गप्रसादी स्यात् सुखदुःखविवर्जितः
यः सदा शिवलिङ्गैकप्राणी स्त्रीभोगवर्जितः ५४
एवं भेदेन मां देवि पूजयेल्लिङ्गरूपिणम्
गाणपत्यं भवेत्तस्य दुर्लभं प्राकृतात्मनाम् ५५
चरलिङ्गस्थलेऽप्यवं भक्तस्याचरणं शृणु
चरलिङ्गमेव सर्वस्वमिति संभावयन् हृदि
चरलिङ्गैकमोही स्यादन्यमोहविवर्जितः ५६
त्यक्त्वाऽभिमानं देहादौ जङ्गमैकाभिमानवान्
चरलिङ्गैकभक्तः स्यादन्यभक्तिविवर्जितः ५७
अन्यपूजां परित्यज्य चरलिङ्गं प्रपूजयेत्
अयं च चरलिङ्गस्य पूजको नान्यपूजकः ५८
अर्थप्राणादिकं सर्वं प्रीत्या कुर्याच्चरार्पितम्
चरलिङ्गैकवीरः स्यात् पुनः स्वप्नेऽपि न स्मरेत् ५९
सर्वं चरार्पितं कृत्वा तत्प्रसादं विशेषतः
यो भुङ्क्ते चरलिङ्गस्य प्रसादी नान्यलोलुपः ६०
शिवरूपान् चरान्पूज्यान्प्राणवत्परिभावयन्
अयं च चरलिङ्गैकप्राणी स्यान्नान्यमानसः ६१
एवं मद्रूपतापन्नं चरलिङ्गं समर्चयेत्
गणत्वं प्राप्य सुचिरं मोदते सुखलीलया ६२
एवं प्रसादलिङ्गस्य स्थलं च शृणु तत्त्वतः
अन्यद्रव्यरुचिं त्यक्त्वा पूर्वपूजादिवर्जितः
प्रसादलिङ्गमोही स्यादन्यमोहविवर्जितः ६३
प्रसादलिङ्गभक्तस्तु पूर्वाहारनिरासकः
प्रसादपूजको देवि परमैत्र्यादिवर्जितः ६४

करेण परवित्तं तु कदापि नहि संस्पृशेत्
स तु प्रसादलिङ्गैकवीरः स्यान्निस्पृहः सदा ६५
आदानार्थं च दानार्थं करं नैव प्रसारयेत्
नान्यत्किञ्चित्प्रसादस्य प्रसादी क्वापि संस्पृशेत् ६६
न कुर्याज्जीवहिंसां च परैर्वा नापि कारयेत्
प्रसादलिङ्गप्राणी स्यात्स भवेदात्मबोधकः ६७
इत्थं प्रसादलिङ्गैकपरो भूतदयान्वितः
यः पूजयति मां देवि मत्सायुज्यमवाप्नुयात् ६८
महालिङ्गस्थलेऽप्येवं भेदः संकथ्यतेऽधुना
त्यक्तलोकसमाचारो लिङ्गनिष्ठैकमानसः
स महालिङ्गमोही स्यादन्यमोहविवर्जितः ६९
पूर्वभक्तस्थलं त्यक्त्वा पूर्वकर्मादि वर्जयेत्
स महालिङ्गभक्तः स्यादन्यभक्तिविवर्जितः ७०
त्यजेत्संसर्गमज्ञानां त्यजेद्वै भाषणादिकम्
शुद्धसत्त्वाश्रयो यस्तु स महालिङ्गपूजकः ७१
सृष्टिस्थितिलयाद्यं हि जीवकृत्यं न च स्मरेत्
स महालिङ्गवीरः स्यान्नान्यचित्तसमाश्रयः ७२
पूर्वकर्मादिकान् सर्वानन्तर्लिङ्गे निवेदयेत्
महालिङ्गप्रसादी स्यात् पङ्क्तिभोजनवर्जितः ७३
बाह्यार्चनादि सन्त्यज्य भवेदान्तरपूजकः
आत्मार्पको महालिङ्गप्राणी भवति पार्वति ७४
महालिङ्गस्थले त्वेवं मानसैरुपचारकैः
अर्चयेद् यस्तु मां नित्यं मत्सायुज्यमवाप्नुयात् ७५
एवं लिङ्गस्थलं देवि तदङ्गस्थलयोगतः
एकैकं षड्विधं प्रोक्तं तेन षट्त्रिंशतां गतम्
पूर्वपूजासमायोगाद् उत्तरोत्तरमाश्रयेत् ७६
तस्मादेकं परं लिङ्गं नामरूपक्रियात्मना
संस्थितं ज्ञानकर्मभ्यामङ्गेऽस्मिन् षट्स्थलात्मके ७७
इष्टलिङ्गं तु बाह्याङ्गे प्राणलिङ्गं तथाऽऽन्तरे

आत्मनिष्ठं भावलिङ्गमेवं ज्ञेयं नगात्मजे ७८
आचारो नासिकाङ्गे स्याज्जिह्वाङ्गे गुरुलिङ्गकम्
दृगङ्गे शिवलिङ्गं स्यात्त्वगङ्गे चरलिङ्गकम् ७९
प्रसादलिङ्गं श्रोत्राङ्गे महालिङ्गं हृदि स्थितम्
एवं कर्मेन्द्रियाङ्गेषु लिङ्गयोगो विधीयते ८०
आचारलिङ्गं तत्रोक्तं शिवलाञ्छनसंयुतम्
आचारलिङ्गसम्बन्धि गुरुलिङ्गमुदाहृतम् ८१
गुरुलिङ्गोपदिष्टं यच्छिवलिङ्गं तदीरितम्
शिवलिङ्गमुखं यत्तत् चरलिङ्गमुदाहृतम् ८२
चरलिङ्गोपलब्धं यत्तत्प्रसादाख्यलिङ्गकम्
प्रसादानुग्राहकं स्यान्महालिङ्गमिति क्रमात् ८३
आचारलिङ्गमुख्यानां सम्बन्धं चोत्तरोत्तरम्
ज्ञात्वा लिङ्गाङ्गयोरर्थं तत्सम्बन्धं च पार्वति
गुरूक्तेनैव मार्गेण जानीयात्सूक्ष्मभावतः ८४
एवं लिङ्गाङ्गसम्बन्धज्ञानं गोप्यं सुदुर्लभम्
उपदिष्टं तव प्रीत्या मोक्षमार्गैकसाधनम् ८५
इति लब्ध्वा परं ज्ञानं गुरुकारुण्यतः प्रिये
वीरशैवपरो भूत्वा यजेन्मां लिङ्गरूपिणम् ८६
स एव सर्वतत्त्वज्ञो ज्ञेयः सर्वोत्तमोत्तमः
तस्य दर्शनमात्रेण मुक्तो भवति मानवः ८७
एवमुक्तं शिवज्ञानं वीरशैवप्रबोधकम्
तस्मादेतन्न वक्तव्यं यस्मै कस्मै वरानने
वक्तव्यं हि प्रयत्नेन भक्ताय प्राणलिङ्गिने ८८
इतोऽधिकारं ज्ञानं नास्ति सर्वार्थसाधनम्
प्रोतमेवं तव प्रीत्या किं पुनः श्रोतुमिच्छसि ८९
इति श्रीसूक्ष्मागमे क्रियापादे लिङ्गाङ्गस्थलस्वरूपनिरूपणं नामाष्टमः पटलः ८

## नवमः पटलः

देव्युवाच
भगवन्परमेशान सर्वानुग्रहतत्पर
लिङ्गाङ्गस्थलसम्बन्धस्वरूपं हि श्रुतं मया १
इदानीं श्रोतुमिच्छामि भक्तमाहात्ममुत्तमम्
तत्स्वरूपं च मे स्वामिन्कृपया तद्वद प्रभो २
शिव उवाच
साधु पृष्टमिदं देवि सर्वलोकहितं परम्
यज्ज्ञात्वा मुच्यते जन्तुर्घोरसंसारबन्धनात्
संक्षिप्यैतत्प्रवक्ष्यामि शृणुष्व सुसमाहिता ३
भक्ताश्चतुर्विधा लोके नानालक्षणसंयुताः
कनिष्ठा मध्यमाश्चैवमुत्तमा उत्तमोत्तमाः
प्रख्याता भुवने देवि तत्तदाचारभेदतः ४
सिद्धविद्याधरादीनां लोकान् वै समुपाश्रिताः
वसन्ति तत्र भक्तास्ते कनिष्ठा मदनुज्ञया ५
भक्ताश्च मध्यमा देवि त्रिविधा लोकपूजिताः
ते च राजर्षयः केचित्केचिद्ब्रह्मर्षयः परे ६
अन्ये देवर्षयः प्रोक्ताः शापानुग्रहकारकाः
चरन्त्यखिललोकेषु मदाज्ञापरिपालकाः ७
उत्तमास्त्रिविधाः प्रोक्ता भक्ताश्च परमेश्वरि
उत्तमाचारभेदात्तु तत्तद्योग्यपदे स्थिताः ८
सालोक्यमास्थिताः केचित्सामीप्यं च तथा परे
सारूप्यं चापरे प्राप्तास्तत्तद्भक्त्यनुसारतः
मदाज्ञया पदेष्वेषु वसन्ति हि निराकुलाः ९
उत्तमोत्तमभक्तास्तेऽप्युत्तमोत्तमवृत्तयः
प्राप्नुयुः स्वेच्छया देवि पदमप्युत्तमोत्तमम् १०
ये वीरशैवनिरताः प्राणलिङ्गपरायणाः
ये च धर्मैकनिरता भक्तास्ते चोत्तमोत्तमाः ११
येन केनापि मार्गेण येन केन च कर्मणा

शिवैकनिष्ठमनसो भक्तास्ते चोत्तमोत्तमाः १२
देव्युवाच
किमाकारा हि भक्ताश्च किंकर्माश्रितवृत्तयः
कथंभूतगुणा ज्ञेयास्तत्सर्वं ब्रूहि शङ्कर १३
शिव उवाच
शिवभक्ता महात्मानः कामादिगुणवर्जिताः
त्यक्तलोकसमाचारा निरस्तभवबन्धनाः १४
निर्माया निरहङ्कारा शान्ताः सर्वत्र पूजिताः
रागादिगुणनिर्मुक्ता न वाक्पाणिवशंगताः १५
न चक्षुः श्रोत्रवशगाः क्षुत्तृड्भयविवर्जिताः
तत्त्वनिष्ठाः सदा दान्ताः पुत्रदारादिनिस्पृहाः १६
शिवज्ञानरता नित्यं शिवज्ञानैकतत्पराः
शिवधर्मरताः कर्मनिष्ठाः शिवपरायणाः १७
शिवाश्रितेषु मर्त्येषु शिवज्ञाने शिवव्रते
शिवाचारे च सर्वत्र शिवोत्सवपरेषु च १८
मम लिङ्गाङ्गसङ्गेषु चरेषु च विशेषतः
भक्ताः कृताभिमानाश्च कृतकृत्या निराकुलाः १९
अव्यग्राः सत्त्वसम्पन्ना अधिज्ञानाश्च सर्वशः
सत्यवाक्यरता नित्यं सदाचारव्रताः शुभाः २०
सर्वत्र सत्यसंकल्पा दुराचारविरोधिनः
निर्द्वन्द्वा निर्मला नित्या निरानन्दाभिकाङ्क्षिणः २१
स्वदारनिरता नित्यं भूतिरुद्राक्षसंयुताः
गुरुशुश्रूषणासक्ता गुरुकार्यैकतत्पराः २२
महोत्साहा महावीरा महासत्त्वपराक्रमाः
एते भक्ता मया देवि कथिता लोकविश्रुताः २३
ते भक्ता यत्र तिष्ठन्ति तत्तीर्थं तत्तपोवनम्
तस्मात् तद्दर्शनादेव धन्यो भवति मानवः २४
ये पूजयन्ति तान् नित्यं मनोवाक्कायकर्मभिः
तेषामहं समुद्धर्ता संसारभवसागरात् २५

ये पोषयन्ति तान् भक्त्या भोजनाच्छादनादिभिः
ते वै मम प्रियकरास्तव चापि महेश्वरि २६
मासं संवत्सरं वापि यावज्जीवमथापि वा
प्रकल्प्य जीविकां तेभ्यो यो रक्षति यथासुखम्
तस्य पुण्यफलं वक्ष्ये समाहितमनाः शृणु २७
सर्वकर्माणि निर्धूय निर्मलो विरुपद्रवः
कुलैकविंशमुद्धृत्य विमानशतसंकुलः २८
अप्सरोगणसंकीर्णः स्तूयमानो महर्षिभिः
दिव्यं विमानमारुह्य सूर्यकोटिसमप्रभम्
स गच्छेत् परमं स्थानं शिवलोके शिवात्मकम् २९
ततः पृथ्वीं समासाद्य प्राणलिङ्गाङ्गयोगभाक्
तेन संशोधितप्राणो मत्सायुज्यमवाप्नुयात् ३०
पादुकासनशय्यादि दत्त्वा तान् प्रणमेन्नरः
तस्य सिद्धिर्भवत्येव सत्यं सत्यं वरानने
किं पुनर्बहुनोक्तेन स एवाहं न संशयः ३१
लोके हि बहुधा भक्ता नानालाञ्छनधारिणः
तेषु श्रेष्ठा महादेवि शिवलाञ्छनसंयुताः ३२
तेषु लिङ्गाङ्गिनः श्रेष्ठा वीरशैवपरायणाः
तेषु श्रेष्ठा महाभागाः षट्स्थलज्ञानपारगाः
तेभ्योऽधिकस्तत्समो वा नास्ति भक्तो जगत्त्रये ३३
भक्तस्तु तादृशो यत्र देशे वसति पूतधीः
नित्यं वसामि तत्रैव सगुणोऽहं त्वया सह ३४
भक्तो हि मां वशीकर्तुं समर्थः खलु भामिनि
यतो भक्तपराधीनो भक्त्याऽहं विवशीकृतः ३५
ततोऽहं नहि कैलासे न मेरौ न च मन्दरे
यत्र तिष्ठन्ति मद्भक्तास्तत्र तिष्ठामि पार्वति ३६
तस्मात्सर्वाणि तीर्थानि पुण्यक्षेत्राणि पर्वतान्
भौतिकानि च सन्त्यज्य भक्तमेव भजेत्सुधीः ३७
अज्ञानादथव लोभात् तेषामपकृतं यदि

कल्पावसानपर्यन्तं सोऽन्धे तमसि मज्जति ३८
लोकोपकारनिरताः सर्वत्र समदर्शिनः
तान् द्विषन्ति हि ये मोहात्ते वै निरयगामिनः
अतस्तेषां प्रकर्तव्या परिचर्या सदा नरैः ३९
भकाराद्भव इत्युक्तः ककारात्कलुषं भवेत्
ततः सन्त्रायते तस्माद्भक्त इत्युच्यते बुधैः ४०
भक्तसेवासमं पुण्यं नास्ति नास्ति नगात्मजे
भक्तद्रोहसमं पापं न भूतं न भविष्यति ४१
एवमुक्तं मया सर्वं भक्तमाहात्म्यमुत्तमम्
वदतां शृण्वतां चैव सर्वसम्पत्प्रदायकम्
एतस्मादधिकं किञ्चिन्नहि सम्पत्प्रकाशकम् ४२
एतावत्परमं तत्त्वमेतावत्परमं पदम्
एतावत्परमं ज्ञानं किमन्यच्छ्रोतुमिच्छसि ४३
इति श्रीसूक्ष्मागमे क्रियापादे भक्तमाहात्म्यकथनं नाम नवमः पटलः

## दशमः पटलः

देव्युवाच
श्रुतं सर्वं मया देव मोक्षमार्गैकसाधनम्
स्तोतुमिच्छामि देव त्वामनुजानीहि मां प्रभो १
शिवस्तुतिः
नमस्ते देवदेवेश नमस्ते भक्तवत्सल
नमस्ते करुणासिन्धो परमेशाय ते नमः २
ईशानाय नमस्तुभ्यं नमस्तत्पुरुषाय च
अघोराय नमो देव वामदेवाय ते नमः
सद्योजाताय देवाय पञ्चब्रह्मात्मने नमः ३
षट्त्रिंशत्तत्त्वरूपाय तत्त्वातीताय शम्भवे
परतत्त्वस्वरूपाय तत्त्ववेद्याय ते नमः ४
कालान्तक महादेव कालार्चितपदाम्बुज
कालकल्पितमार्गाय कालरूपाय ते नमः ५

किरातरूपमास्थाय विधेरन्यायवर्तिनः
शिरोहराय दुष्टानां शासकाय च ते नमः ६
दक्षाध्वरविनाशाय दक्षशीर्षापहारिणे
भूयो रक्षितदक्षाय स्वयं दक्षाय ते नमः ७
त्यक्तेश्वराणां शिप्राणां दर्शयित्वा स्वकं महः
तद्रक्षणं कृतं येन तस्मै ते प्रभवे नमः ८
समुद्रमथनोद्भूतहालाहलमहाभयात्
त्रिजगद्रक्षितं येन विषकण्ठाय ते नमः ९
कृतापराधं कन्दर्पं दग्ध्वा फालेक्षणाग्निना
सोऽप्यनङ्गः कृतो येन तस्मै कामजिते नमः १०
मेरुकार्मुकशेषज्याविष्णुसायकभूरथः
अजयत्त्रिपुरं यस्तु तस्मै ते जिष्णवे नमः ११
व्याघ्रासुरमहादर्पदलनं वै विधाय च
दध्रे तच्चर्म यस्तस्मै व्याघ्रामित्राय ते नमः १२
त्रिलोकभीकरं घोरमन्धकाख्यमहासुरम्
यो जघान नमस्तस्मै अन्धकासुरवैरिणे १३
जलन्धरमहादैत्यं पादाङ्गुष्ठकृतेन च
चक्रेण योऽहरत्तस्मै जलन्धरजिते नमः १४
नारसिंहजिते तस्मै ब्रह्मशीर्षकपालिने
तन्मालालङ्कृताङ्गाय हरिब्रह्महृते नमः १५
जित्वा त्रिविक्रमं भूयस्तत्कङ्कालधराय च
शिरोवेष्टितमत्स्याय स्वतन्त्राय च वै नमः १६
महावराहदंष्ट्राभिर्भूषिताय महात्मने
सोमसूर्याग्निनेत्राय महादेवाय ते नमः १७
बाणासुरस्तव प्रीत्या दत्तबाहुसहस्त्रिणे
निवार्य तत्तमस्तस्मै वरदाय च ते नमः १८
पुरा चतुर्मुखं सृष्ट्वा तस्मै विश्वसृजे मुदा
ददौ यश्चतुरो वेदांस्तस्मै वेदात्मने नमः १९
विष्णवे लोकरक्षार्थं शङ्खं चक्रं च यो ददौ

सर्गादौ कृपया तस्मै नमो विष्णुपराय ते  २०
कल्पान्ते संहृतं कृत्वा जगत्स्थावरजङ्गमम्
एको ननर्त यस्तस्मै महानाट्याय ते नमः  २१
ब्रह्मणा हंसरूपेण विष्णुना क्रोडरूपिणा
अनिर्देश्यमहालिङ्गमूर्तये ज्योतिषे नमः  २२
सर्वभूताधिपतये सर्वविद्याधिपाय च
सदाशिवाय ते देव ब्रह्माधिपतये नमः  २३
विश्वतः पाणिपादाय विश्वतोऽक्षिमुखाय च
विश्वतो व्याप्यरूपाय नमो विश्वात्मकाय ते  २४
अव्यक्ताय पुराणाय बहुरूपैकरूपिणे
संस्थिताय तमःपारे तेजोरूपाय ते नमः  २५
वेदाः समस्मा अपि मुखवृत्त्या भवन्तमेव प्रतिपादयन्ति
कर्तारमेकं जगतां तथापि मायावृतास्त्वां नहि जानते हि  २६
इन्द्रोऽनलो दण्डधरोऽथ नैर्ऋतिः पाशी च वायुर्धनदश्च शूली
कुर्वन्ति नित्यं निजकृत्यजातं यत्प्रेरितास्तं शरणं व्रजामि  २७
विष्णुर्जगत्पाति सृजत्यजश्च रुद्रो हरत्येव लयावसाने
यदाज्ञया ते निजकार्यदक्षास्तं शङ्करं त्वां शरणं व्रजामि  २८
ददाति लक्ष्मीः श्रियमम्बिकाऽपि ज्ञानं च दिव्यं परमात्मनिष्ठम्
वाणी च वाचं जनसंहतीनां यदाज्ञया तं शरणं व्रजामि  २९
आपश्च भूतान्यपि जीवयन्ति वायुश्च वाति ज्वलतीह वह्निः
धत्ते च धात्रीमपि पन्नगेशो यदाज्ञया तं शरणं व्रजामि  ३०
इन्द्रादयः सर्वसुराश्च नित्यं त्वच्छासनेन प्रभवन्ति भूयः
अन्ते च यान्ति स्वपदं पुराणं त्वामेव तस्माच्छरणं गताऽस्मि  ३१
त्वन्मायया मोहितमेव जातं त्वत्प्रेरितं चित्तमिदं हि नित्यम्
करोति कृत्यं नियतं त्वदुक्तं तस्माच्छरण्यं सततं भजे त्वाम्  ३२
ब्रह्माण्डसङ्घास्त्वयि संस्थिता हि यथा महाब्धौ जलबुद्बुदौघाः
ब्रह्माण्डकोट्याश्रितदिव्यरूपं तस्मादहं त्वां प्रणता भवामि  ३३
गृहं स्मशानं भसितं त्वदङ्गे भृत्याश्च ते घोरपिशाचसङ्घाः
भूषा तवास्थीनि करोटिमाला चित्रं तथापीश्वर ते शिवत्वम्  ३४

वस्त्रं च ते व्याघ्रकठोरचर्म हाराश्च सर्पा विषपूर्णवक्त्राः
करस्थशूलाग्निकपालपाशा तथापि चित्रं शिवरूपमेतत् ३५
त्यक्त्वा सतां वर्त्म पितुश्च पादौ छित्वा भवन्तं शरणं गताय
विप्राय नित्यत्वफलप्रदाय तस्मै नमस्ते नतवत्सलाय ३६
येनावृते खं च मही च भानुर्यत्तेजसा निस्तपति प्रभावान्
विश्वाधिकं रुद्रमृषिं महान्तं वदन्ति तस्मै पुरुषाय ते नमः ३७
वेदाश्च यं स्तोतुमशक्नुवन्तस्त एव भूयो मनसा निवृत्ताः
अप्राप्य चानन्दनिधिं महेशं तं नौम्यवाङ्मानसगोचरं त्वाम् ३८
उत्पद्यन्ते विलीयन्ते यथाऽब्धौ वीचयस्तथा
त्वयि सर्वमिदं दृश्यं जगदेतच्चराचरम् ३९
स्वतन्त्रशक्तिमान् देव त्वमेव पुरुषोत्तमः
त्वदधीनमिदं विश्वं विश्वनाथाय ते नमः ४०
समस्तसाधनोपाय सर्वसिद्धिप्रदायक
सर्वाधार विरूपाक्ष भक्तवत्सल ते नमः ४१
शैवसिद्धान्तमार्गस्थभक्तकायस्थ शङ्कर
नमस्ते दीनसुजनपरित्राणपरायण ४२
नमश्चापत्प्रतीकारकरणाय महात्मने
सर्वान्तरात्मने तुभ्यं नमस्ते परमात्मने ४३
अखिलाम्नायसंस्तुत्य भक्तिग्राह्य स्तवप्रिय
सर्वव्यापक देवेश नमस्ते भद्रदायक ४४
उपमातीत सर्वेश समस्तामरपूजित
समस्तशक्तिसंकाश परब्रह्मन् नमोऽस्तु ते ४५
अनन्तकोटिमार्तण्डचण्डतेजःस्वरूपिणे
सच्चिदानन्दरूपाय निर्गुणाय नमोऽस्तु ते ४६
ज्ञातृज्ञानज्ञेयरूप कर्तृकृत्यक्रियात्मक
भूतभव्यभवन्नाथ नमस्ते त्रिगुणात्मने ४७
नित्य निर्मल निर्द्वन्द्व निरामय निरञ्जन
देवाचार्य नमस्तुभ्यं भूयो भूयो नमो नमः ४८
महिमानं महादेव ज्ञातुं स्तोतुं तव प्रभो

श्रुतयोऽप्यसमर्था हि मादृशानां कुतो मतिः ४९
सर्वापराधान् मे स्वामिन् क्षमस्व जगतां प्रभो
यतोऽहं देवदेवेश त्वदाज्ञावशवर्तिनी ५०
मया चापल्यभावेन यद्यदुक्तं तवाग्रतः
तत्सर्वं क्षम्यतां देव कृपादृष्ट्याऽवलोक्य माम् ५१
शिव उवाच
स्तोत्रेणानेन तुष्टोऽस्मि तव भक्त्या च पार्वति
वरं वरय दास्यामि यत्ते मनसि रोचते ५२
देव्युवाच
वरमन्यं न याचेऽहं तव भक्तिं विना प्रभो
तामेव सुदृढां देहि सैव मे परमा गतिः ५३
शिव उवाच
तथैव सततं भूयात् किमलभ्यं तव प्रिये
पुनर्भक्तहितार्थाय वरमन्यं ददामि ते ५४
त्वया कृतमिदं स्तोत्रं भक्तिभावेन भावितः
यः पठेन्नियतो भूत्वा स याति परमां गतिम् ५५
अभ्यसेदन्वहं देवि संवादमिममावयोः
षट्स्थलज्ञानसम्पन्नः प्राप्नुयान्मुक्तिमुत्तमाम् ५६
एवमुक्तं मया देवि मोक्षमार्गैकसाधनम्
वेदागमपुराणानां सारभूतं तव प्रिये ५७
गोपनीयमिदं शास्त्रं वीरमाहेश्वरप्रियम्
तेषामेव हि वक्तव्यं वीरमार्गानुसारिणाम् ५८
लिङ्गत्रयैकनिष्ठानां तत्प्रसादानुवर्तिनाम्
अन्येषां तु न वक्तव्यं कदाचिद् भिन्नवर्त्मनाम् ५९
इति श्रुत्वा महाज्ञानं पावनं शिवशासनम्
ध्यायमाना शिवं देवी तस्थौ सन्तुष्टमानसा ६०
इति श्रीसूक्ष्मागमे क्रियापादे शिवस्तोत्रनिरूपणं नाम दशमः पटलः
१०

Reference (Pages 553-607) :
Pt. Vrajavallabha Dwivedi, ed., *Sūkṣmāgamaḥ Kriyāpādaḥ, Translation with Notes*,Shaiva Bharati Shodha Pratishthanam: Varanasi, 1994 (168pp.).

Summary of sources:
Manuscripts from the Muktabodha on-line digital library, based on the paper transcripts of the French Institute of Indology at Pondicherry, India:

http://muktabodha.org/
http://muktalib5.org/digital_library.htm
http://muktalib7.org/IFP_ROOT/access_page.htm

| | |
|---|---|
| 1-240 | T0036 (complete) |
| 240-334 | T0038 (excerpts) |
| 334-346 | T0191 (excerpts) |
| 346-399 | T0955 (excerpts) |
| 399-400 | T0988c (excerpts) |
| 401-502 | T1003 (excerpts) |
| 503-552 | T1016 (excerpts) |

published text:
553-607 Pt. Vrajavallabha Dwivedi, ed., *Sūkṣmāgamaḥ Kriyāpādaḥ, Translation with Notes*,Shaiva Bharati Shodha Pratishthanam: Varanasi, 1994 (168pp.).